स ह व्याधिनाऽनशितुं दध्रे । तमाचार्यजायोवाच - ब्रह्मचारिन् अशान ; किं नु नाश्नासीति । स होवाच - बहव इमेऽस्मिन् पुरुषे कामाः नानात्ययाः । व्याधिभिः प्रतिपूर्णोऽस्मि ; नाशिष्यामीति ।। ३ ।।

अथ हाग्नयः समूदिरे - तप्तो ब्रह्मचारी कुशलं नः पर्यचारीत् । हन्तास्मै प्रब्रवामेति तस्मै होचुः ।। ४ ।।

प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति । स होवाच - 'विजानाम्यहं यत् प्राणो ब्रह्म ; कं च तु खं च न विजानामीति । ते होचुः, यद्वाव कम् , तदेव खम् , यदेव खम् तदेव कम्' इति । प्राणं च हास्मै तदाकाशं चोचुः ।। ५ ।।

।। इति चतुर्थप्रपाठके दशमः खण्डः ।।

## एकादशः खण्डः

अथ हैनं गार्हपत्योऽनुशशास-'पृथिव्यग्निरन्नमादित्यः' इति । य एष आदित्ये पुरुषो दृश्यते, सोऽहमस्मि ; स एवाहमस्मीति ।। १ ।।

स य एतमेवं विद्वानुपास्ते ; अपहते पापकृत्याम् लोकी भवति ; सर्वमायुरेति ; ज्योग्जीवति ; नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ।। २ ।।

।। इति चतुर्थप्रपाठके एकादशः खण्डः ।।

## द्वादशः खण्डः

अथ हैनमन्वाहार्यपचनोऽनुशशास - आपो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते, सोऽहमस्मि, स एवाहमस्मीति ।। १ ।।

स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम्, लोकी भवति, सर्वमायुरेति, ज्योग्जीवति, नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ।। २ ।।

।। इति चतुर्थप्रपाठके द्वादशः खण्डः ।।

## त्रयोदशः खण्डः

अथ हैनमाहवनीयोऽनुशशास - प्राण आकाशो द्यौर्विद्युदिति । य एष विद्युति पुरुषो दृश्यते ; सोऽहमस्मि, स एवाहमस्मीति ।। १ ।।

स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम्, लोकी भवति, सर्वमायुरेति, ज्योग्जीवति, नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ।। २ ।।

।। इति चतुर्थप्रपाठके त्रयोदशः खण्डः ।।

## चतुर्दशः खण्डः

ते होचुः - उपकोसल ! एषा सोम्य तेऽस्मद्विद्या चात्मविद्या च । आचार्यस्तु ते गतिं वक्तेति ।। आजगाम हास्याचार्यः । तमाचार्योऽभ्युवाद, उपकोसला ३ इति ।। १ ।।

भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं भाति । को नु त्वाऽनुशशासेति । को नु माऽनुशिष्यात् भो इतीहापेव निह्नुते, इमे नूनमीदृशा अन्यादृशा इति ह अग्नीन् अभ्यूदे । किं नु सोम्य किल तेऽवोचन्निति ।। २ ।।

इदमिति ह प्रतिजज्ञे । लोकान् वाव किल सोम्य ! तेऽवोचन् । अहं तु ते तद्वक्ष्यामि, यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै होवाच ।। ३ ।।

।। इति चतुर्थप्रपाठके चतुर्दशः खण्डः ।।

## पञ्चदशः खण्डः

य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच ; एतदमृतमभयम्, एतत् ब्रह्मेति । तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी ह्येव गच्छति ।। १ ।।

एतँ संयद्वाम इत्याचक्षते । एतँ हि सर्वाणि वामान्यभिसंयन्ति । सर्वाण्येनं वामान्यभिसंयन्ति, य एवं वेद ।। २ ।।

एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । सर्वाणि वामानि नयति, य एवं वेद ।। ३ ।।

एष उ एव भामनीः । एष हि सर्वेषु लोकेषु भाति । सर्वेषु लोकेषु भाति, य एवं वेद ।। ४ ।।

अथ यदु चैवास्मिन् शव्यं कुर्वन्ति, यदि च न अर्चिषमेवाभिसम्भवन्ति, अर्चिषोऽहः, अह्नः आपूर्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षड्डुदङ् एति मासाँस्तान्, मासेभ्यः संवथ्सरम्, संवथ्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्, तत्पुरुषो अमानवः ।। ५ ।।

स एनान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ।। ६ ।।

।। इति चतुर्थप्रपाठके पञ्चदशः खण्डः ।।

## षोडशः खण्डः

एष ह वै यज्ञो योऽयं पवते । एष ह यन् इदँ सर्वं पुनाति । यदेष ह यन्निदँ सर्वं पुनाति, तस्मादेष एव यज्ञः । तस्य मनश्च वाक् च वर्तनी ।। १ ।।

तयोरन्यतरां मनसा सँस्करोति ब्रह्मा, वाचा होताऽध्वर्युरुद्गाताऽन्यतराम् । स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यवदति ।। २ ।।

अन्यतरामेव वर्तनीँ सँस्कुर्वन्ति, हीयतेऽन्यतरा । स यथा एकपात् व्रजन्, रथो वैकेन चक्रेण वर्तमानो रिष्यति - एवमस्य यज्ञो रिष्यति, यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति, स इष्ट्वा पापीयान् भवति ।। ३ ।।

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यवदति, उभे एव वर्तनी सँस्कुर्वन्ति न हीयतेऽन्यतरा ।। ४ ।।

स यथोभयपात् व्रजन्, रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठति, एवमस्य यज्ञः प्रतितिष्ठति ; यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति, स इष्ट्वा श्रेयान् भवति ।। ५ ।।

।। इति चतुर्थप्रपाठके षोडशः खण्डः ।।

## सप्तदशः खण्डः

प्रजापतिर्लोकानभ्यतपत् । तेषां तप्यमानानाँ रसान् प्राबृहत्-अग्निं पृथिव्याः, वायुमन्तरिक्षात् । आदित्यं दिवः ।। १ ।।

स एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानाँ रसान् प्राबृहत् - अग्नेः ऋचः, वायोर्यजूँषि, सामान्यादित्यात् ।। २ ।।

स एतां त्रयीं विद्यामभ्यतपत् । तस्यास्तप्यमानाया रसान् प्राबृहत् - भूरिति ऋग्भ्यः, भुवरिति यजुर्भ्यः, सुवरिति सामभ्यः ।। ३ ।।

तत् यदृक्तो रिष्येत्, भूः स्वाहेति गार्हपत्ये जुहुयात् । ऋचामेव तद्रसेन ऋचां वीर्येण ऋचां यज्ञस्य विरिष्टँ सन्दधाति ।। ४ ।।

अथ यदि यजुष्टो रिष्येत्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टँ सन्दधाति ।। ५ ।।

अथ यदि सामतो रिष्येत्, सुवः स्वाहेत्याहवनीये जुहुयात् । साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टँ सन्दधाति ।। ६ ।।

तद्यथा लवणेन सुवर्णँ सन्दध्यात् सुवर्णेन रजतँ, रजतेन त्रपु त्रपुणा सीसँ, सीसेन लोहं लोहेन दारु दारुचर्मणा ।। ७ ।।

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टँ सन्दधाति । भेषजकृतो ह वा एष यज्ञः, यत्रैवंवित् ब्रह्मा भवति ।। ८ ।।

एष ह वा उदक्प्रवणो यज्ञः, यत्रैवंविद् ब्रह्मा भवति । एवंविदँ ह वा एषा ब्रह्माणमनु

गाथा -

यतो यत आवर्तते तत्तद्गच्छति मानवः ।
ब्रह्मैवैक ऋत्विक् कुरूनश्वाऽभिरक्षति ।। ९ ।।

एवंविद्ध वै ब्रह्मा यज्ञं यजमानँ सर्वांश्चर्त्विजोऽभिरक्षति । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत, नानेवंविदम्, नानेवंविदम् ।। १० ।।

।। इति चतुर्थप्रपाठके सप्तदशः खण्डः ।।

।। चतुर्थः प्रपाठकः समाप्तः ।।

## पञ्चमः प्रपाठकः

### प्रथमः खण्डः

यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ।। १ ।।

यो ह वै वसिष्ठं वेद, वसिष्ठो ह स्वानां भवति । वाग् वाव वसिष्ठः ।। २ ।।

यो ह वै प्रतिष्ठां वेद, प्रति ह तिष्ठत्यस्मिँश्च लोकेऽमुष्मिँश्च, चक्षुर्वाव प्रतिष्ठा ।। ३ ।।

यो ह वै संपदं वेद, सँ हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च । श्रोत्रं वाव सम्पत् ।। ४ ।।

यो ह वा आयतनं वेद, आयतनँ ह स्वानां भवति । मनो ह वा आयतनम् ।। ५ ।।

अथ ह प्राणा अहँश्रेयसि व्यूदिरे, 'अहँ श्रेयानस्म्यहँ श्रेयानस्मि' इति । ते ह प्राणाः प्रजापतिं पितरमेत्योचुः 'भगवन् ! को नश्श्रेष्ठ' इति ।। ६ ।।

तान् होवाच, 'यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत, स वः श्रेष्ठः' इति ।। ७ ।।

सा ह वागुच्चक्राम । सा संवत्सरं प्रोष्य पर्येत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा कला अवदन्तः, प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसैवमिति । प्रविवेश ह वाक् ।। ८ ।।

चक्षुर्होच्चक्राम । तत् संवत्सरं प्रोष्य पर्येत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा अन्धा अपश्यन्तः, प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा - एवमिति । प्रविवेश ह चक्षुः ।। ९ ।।

श्रोत्रँ होच्चक्राम । तत् संवत्सरं प्रोष्य पर्येत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा बधिरा अशृण्वन्तः, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, ध्यायन्तो मनसा - एवमिति । प्रविवेश ह श्रोत्रम् ।। १० ।।

मनो होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा बाला अमनसः, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण एवमिति प्रविवेश ह मनः ।। ११ ।।

अथ ह प्राण उच्चिक्रमिष्यन्, स यथा सुहयः पड्वीशशङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदत् । तँ हाभिसमेत्योचुः, 'भगवन् ! एधि । त्वं नः श्रेष्ठोऽसि, मोत्क्रमीः' इति ।। १२ ।।

अथ हैनं वागुवाच, 'यदहं वसिष्ठाऽस्मि, त्वं तद्वसिष्ठोऽसि' इति । अथ हैनं चक्षुरुवाच, 'यदहं प्रतिष्ठास्मि, त्वं तत्प्रतिष्ठोऽसि' इति ।। १३ ।।

अथ हैनँ श्रोत्रमुवाच, 'यदहँ सम्पदस्मि, त्वं तत्सम्पदसि' इति । अथ हैनं मन उवाच । 'यदहमायतनमस्मि, त्वं तदायतनमसि इति ।। १४ ।।

न वै वाचो, न चक्षूँषि, न श्रोत्राणि, न मनाँसीत्याचक्षते । प्राणा इत्येवाचक्षते । प्राणो ह्येवैतानि सर्वाणि भवति ।। १५ ।।

।। इति पञ्चमप्रपाठके प्रथमः खण्डः ।।

## द्वितीयः खण्डः

स होवाच 'किं मेऽन्नं भविष्यति' इति । 'यत् किञ्चिदिदमाश्वभ्यः आशकुनिभ्यः' इति होचुः । तद् वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षम् । न ह वा एवंविदि किञ्चनानन्नं भवतीति ।। १ ।।

स होवाच, 'किं मे वासो भविष्यति' इति । 'आप' इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवति, अनग्नो भवति ।। २ ।।

तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वा उवाच, 'यद्यप्येनच्छुष्काय स्थाणवे ब्रूयात्, जायेरन्नेवास्मिन् शाखाः, प्ररोहेयुः पलाशानि' इति ।। ३ ।।

अथ यदि महज्जिगमिषेत् अमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य, 'ज्येष्ठाय श्रेष्ठाय स्वाहा' इत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ।। ४ ।।

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् । प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् । संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् । आयतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।। ५ ।।

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति, 'अमो नामास्यमा हि ते सर्वमिदँ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः । स मा ज्यैष्ठ्यँ श्रैष्ठ्यँ राज्यमाधिपत्यं गमयत्वहमेवेदं सर्वमसानि' इति ।। ६ ।।

अथ खल्वेतयर्चा पच्छ आचामति 'तत् सवितुर्वृणीमहे' इत्याचामति, 'वयं देवस्य भोजनम्' इत्याचामति, 'श्रेष्ठँ सर्वधातमम्' इत्याचामति । 'तुरं भगस्य धीमहि' इति सर्वं पिबति ।। ७ ।।

निर्णिज्य कँसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः । स यदि स्त्रियं पश्येत्, समृद्धं कर्मेति विद्यात् ।। ८ ।।

तदेष श्लोकः -

"यदा कर्मसु काम्येषु स्त्रियँ स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" ।। तस्मिन् स्वप्ननिदर्शने ।। ९ ।।

।। इति पञ्चमप्रपाठके द्वितीयः खण्डः ।।

## तृतीयः खण्डः

श्वेतकेतुर्हारुणेयः पञ्चालानाँ समितिमेयाय । तँ ह प्रवाहणो जैबलिरुवाच, कुमारानु त्वाऽशिषत् पितेति । अनु हि भगव इति ।। १ ।।

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । न भगव इति । वेत्थ यथा पुनरावर्तन्ता३ इति । न भगव इति । वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति । न भगव इति ।। २ ।।

वेत्थ यथाऽसौ लोको न सम्पूर्यता३ इति । न भगव इति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । नैव भगव इति ।। ३ ।।

अथ नु किमनुशिष्टोऽवोचथाः । यो हीमानि न विद्यात्, कथँ सोऽनुशिष्टो ब्रुवीतेति । स हाऽऽयस्तः पितुरर्धमेयाय, तँ होवाच, 'अननुशिष्य वाव किल मा भगवानब्रवीत्' 'अनु त्वाशिषम्' इति ।। ४ ।।

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् एषां नैकञ्चनाशकं विवक्तुमिति । स होवाच, "यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्चन वेद, यद्यहमिमानवेदिष्यं, कथं ते नावक्ष्यम्" इति ।। ५ ।।

स ह गौतमो राज्ञोऽर्धमेयाय । तस्मै ह प्राप्तायार्हां चकार । स ह प्रातः सभाग उदेयाय । तँ होवाच, 'मानुषस्य भगवन् गौतम! वित्तस्य वरं वृणीथाः' इति । स होवाच, तवैव राजन्! मानुषं वित्तम् यामेव कुमारस्यान्ते वाचमभाषथाः, तामेव मे ब्रूहीति ।। ६ ।।

स ह कृच्छ्रीबभूव । तँ ह चिरं वसेत्याज्ञापयाञ्चकार । तँ होवाच, 'यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति, तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूत्' इति ।। तस्मै होवाच ।। ७ ।।

।। इति पञ्चमप्रपाठके तृतीयः खण्डः ।।

## चतुर्थः खण्डः

असौ वाव लोको गौतमाग्निः । तस्यादित्य एव समित् । रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा सम्भवति ।। २ ।।

।। इति पञ्चमप्रपाठके चतुर्थः खण्डः ।।

## पञ्चमः खण्डः

पर्जन्यो वाव गौतमाग्निः ; तस्य वायुरेव समित् अभ्रं धूमो विद्युदर्चि अशनिरङ्गाराः ह्रादुनयो विस्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वति । तस्या आहुतेर्वर्षँ सम्भवति ।। २ ।।

।। इति पञ्चमप्रपाठके पञ्चमः खण्डः ।।

## षष्ठः खण्डः

पृथिवी वाव गौतमाग्निः, तस्याः संवत्सर एव समित् आकाशो धूमो रात्रिरर्चिः दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नँ सम्भवति ।। २ ।।

।। इति पञ्चमप्रपाठके षष्ठः खण्डः ।।

## सप्तमः खण्डः

पुरुषो वाव गौतमाग्निः, तस्य वागेव समित् प्राणो धूमो जिह्वार्चिः चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुते रेतः सम्भवति ।। २ ।।

।। इति पञ्चमप्रपाठके सप्तमः खण्डः ।।

## अष्टमः खण्डः

योषा वाव गौतमाग्निः ; तस्या उपस्थ एव समित्, उपमन्त्रयते स धूमो योनिरर्चिः, यदन्तः करोति तेऽङ्गाराः अभिनन्दा विस्फुलिङ्गाः ।। १ ।।

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेः गर्भः सम्भवति ।। २ ।।

।। इति पञ्चमप्रपाठके अष्टमः खण्डः ।।

## नवमः खण्डः

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । स उल्बावृतो गर्भो दश वा मासान् अन्तः शयित्वा यावद्वाऽथ जायते ।। १ ।।

स जातो यावदायुषं जीवति । तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ।। २ ।।

।। इति पञ्चमप्रपाठके नवमः खण्डः ।।

## दशमः खण्डः

तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते-तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः, अह्नः आपूर्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासाँस्तान् ।। १ ।।

मासेभ्यः संवत्सरँ, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति । एष देवयानः पन्था इति ।। २

अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसम्भवन्ति, धूमाद्रात्रिम्, रात्रेरपरपक्षम्,अपरपक्षाद्यान् षड्दक्षिणैति मासाँस्तान् नैते संवत्सरमभिप्राप्नुवन्ति ।। ३

मासेभ्यः पितृलोकम्, पितृलोकादाकाशम्, आकाशाच्चन्द्रमसम् । एष सोमो राजा, तद् देवानामन्नम्; तं देवा भक्षयन्ति ।। ४ ।।

तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाशम्, आकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति, धूमो भूत्वाऽभ्रं भवति ।। ५ ।।

अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरं, यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति ।। ६ ।।

तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ।। ७ ।।

अथैतयोः पथोर्न कतरेण च न, तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति-एतत् तृतीयँ स्थानम् । तेनासौ लोको न सम्पूर्यते । तस्माज्जुगुप्सेत । तदेष श्लोकः ।। ८ ।।

'स्तेनो हिरण्यस्य सुरां पिबँश्च गुरोस्तल्पमावसन् ब्रह्महा च । एते पतन्ति चत्वारः पञ्चमश्चाचरँस्तैरः' इति ।। ९ ।।

अथ ह य एतानेवं पञ्चाग्नीन् वेद, न सह तैरप्याचरन् पाप्मना लिप्यते । शुद्धः पूतः पुण्यलोको भवति, य एवं वेद य एवं वेद ।। १० ।।

।। इति पञ्चमप्रपाठके दशमः खण्डः ।।

## एकादशः खण्डः

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनश्शार्कराक्ष्यो बुडिल आश्वतराश्विः ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाँसाञ्चक्रुः - को न आत्मा किं ब्रह्मेति ।। १ ।।

ते ह सम्पादयाञ्चक्रुः, 'उद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति, तँ हन्ताभ्यागच्छाम' इति । तँ हाभ्याजग्मुः ।। २ ।।

स ह सम्पादयाञ्चकार, 'प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः । तेभ्यो न सर्वमिव प्रतिपत्स्ये । हन्ताहमन्यमभ्यनुशासानीति' इति ।। ३ ।।

तान् होवाच, 'अश्वपतिर्वै भगवन्तोऽयं कैकयः सम्प्रतीममात्मानं वैश्वानरमध्येति, तँ हन्ताभ्यागच्छाम' इति । तँ हाभ्याजग्मुः ।। ४ ।।

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार । सः ह प्रातः संजिहान उवाच, 'न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान् न स्वैरी, स्वैरिणी कुतः । यक्ष्यमाणो वै भगवन्तोऽहमस्मि । यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावत् भगवद्भ्यो दास्यामि । वसन्तु भगवन्तः' इति ।। ५ ।।

ते होचुः, 'येन हैवार्थेन पुरुषश्चरेत्, तँ हैव वदेत् । आत्मानमेवेमं वैश्वानरँ सम्प्रत्यध्येषि, तमेव नो ब्रूहि इति ।। ६ ।।

तान् होवाच, 'प्रातर्वः प्रतिवक्तास्मि इति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान् हानुपनीयैवैतदुवाच ।। ७ ।।

।। इति पञ्चमप्रपाठके एकादशः खण्डः ।।

## द्वादशः खण्डः

'औपमन्यव! कं त्वमात्मानमुपास्से' इति । 'दिवमेव भगवो राजन्' इति होवाच । 'एष वै सुतेजा आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से' । तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ।। १ ।।

अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । 'मूर्धा त्वेष आत्मनः' इति होवाच, 'मूर्धा ते व्यपतिष्यत्, यन्मां नागमिष्यः' इति ।। २ ।।

।। इति पञ्चमप्रपाठके द्वादशः खण्डः ।।

## त्रयोदशः खण्डः

अथ होवाच सत्ययज्ञं पौलुषिम्, 'प्राचीनयोग्य ! कं त्वमात्मानमुपास्से' इति । 'आदित्यमेव भगवो राजन्' इति होवाच । 'एष वै विश्वरूप आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् तव बहु विश्वरूपं कुले दृश्यते ।। १ ।।

प्रवृत्तोऽश्वतरीरथो दासीनिष्कः, अत्स्यन्नम्; पश्यसि प्रियम् । अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । चक्षुष्ट्वे तदात्मनः' इति होवाच, अन्धोऽभविष्यत्, यन्मां नागमिष्य' इति ।। २ ।।

।। इति पञ्चमप्रपाठके त्रयोदशः खण्डः ।।

## चतुर्दशः खण्डः

अथ होवाच इन्द्रद्युम्नं भाल्लवेयं, 'वैयाघ्रपद्य ! कं त्वमात्मानमुपास्से' इति । 'वायुमेव भगवो राजन् इति होवाच । एष वै पृथग्वर्त्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् त्वां पृथग्बलय आयन्ति, पृथग्रथश्रेणयोऽनुयन्ति ।। १ ।।

अत्स्यन्नम्, पश्यसि प्रियम् । अत्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । प्राणस्त्वेव आत्मनः' इति होवाच, 'प्राणस्त उदक्रमिष्यत्, यन्मां नागमिष्यः' इति ।। २ ।।

।। इति पञ्चमप्रपाठके चतुर्दशः खण्डः ।।

## पञ्चदशः खण्डः

अथ होवाच जनँ शार्कराक्ष्यम्, 'शार्कराक्ष्य ! कं त्वमात्मानमुपास्से इति । आकाशमेव भगवो राजन्' इति होवाच । 'एष वै बहुल आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ।। १ ।।

अत्स्यन्नम्, पश्यसि प्रियम्, । अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । सन्देहस्त्वेष आत्मनः इति होवाच - 'सन्देहस्ते व्यशीर्यत्; यन्मां नागमिष्यः' इति ।। २ ।।

।। इति पञ्चमप्रपाठके पञ्चदशः खण्डः ।।

## षोडशः खण्डः

अथ होवाच बुडिलमाश्वतराश्विं, 'वैयाघ्रपद्य ! कं त्वमात्मानम् उपास्से' इति । 'अप एव भगवो राजन्' इति होवाच । 'एष वै रयिरात्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात्त्वँ रयिमान् पुष्टिमानसि ।। १ ।।

अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरसुपास्ते। 'वस्तिस्त्वेष आत्मनः' इति होवाच 'वस्तिस्तो व्यभेत्स्यत् यन्मां नागमिष्यः' इति ।। २ ।।

।। इति पञ्चमप्रपाठके षोडशः खण्डः ।।

## सप्तदशः खण्डः

अथ होवाचोद्दालकमारुणिं, 'गौतम ! कं त्वमात्मानमुपास्से' इति । 'पृथिवीमेव भगवो राजन्' इति होवाच । 'एष वै प्रतिष्ठात्मा वैश्वानरः, यं त्वमात्मानमुपास्से, तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ।। १ ।।

अत्स्यन्नम् , पश्यसि प्रियम् । अत्यन्नम्, पश्यति प्रियम् । भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते 'पादौ त्वेतावात्मनः' इति होवाच, 'पादौ ते व्यम्लास्येताम्, यन्मां नागमिष्यः' इति ।। २ ।।

।। इति पञ्चमप्रपाठके सप्तदशः खण्डः ।।

## अष्टादशः खण्डः

तान् होवाच, 'एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति ।। १ ।।

तस्य ह वा एतस्यात्मनो वैश्वानरस्य-मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मा, सन्देहो बहुलो, वस्तिरेव रयिः पृथिव्येव पादौ । उर एव वेदिर्लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ।। २ ।।

।। इति पञ्चमप्रपाठके अष्टादशः खण्डः ।।

## एकोनविंशः खण्डः

तद्यद् भक्तं प्रथममागच्छेत्, तद्धोमीयम् । स यां प्रथममाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति । प्राणस्तृप्यति ।। १ ।।

प्राणे तृप्यति चक्षुस्तृप्यति । चक्षुषि तृप्यत्यादित्यस्तृप्यति । आदित्ये तृप्यति द्यौस्तृप्यति । दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतः तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

।। इति पञ्चमप्रपाठके एकोनविंशः खण्डः ।।

## विंशः खण्डः

अथ यां द्वितीयां जुहुयात्, तां जुहुयात् व्यानाय स्वाहेति । व्यानस्तृप्यति ।। १ ।।

व्याने तृप्यति श्रोत्रं तृप्यति । श्रोत्रे तृप्यति चन्द्रमास्तृप्यति । चन्द्रमसि तृप्यति दिशस्तृप्यन्ति । दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

।। इति पञ्चमप्रपाठके विंशः खण्डः ।।

## एकविंशः खण्डः

अथ यां तृतीयां जुहुयात् तां जुहुयात् अपानाय स्वाहेति । अपानस्तृप्यति ।। १ ।।

अपाने तृप्यति वाक् तृप्यति । वाचि तृप्यन्त्यामग्निस्तृप्यति । अग्नौ तृप्यति पृथिवी तृप्यति। पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतः तत् तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

।। इति पञ्चमप्रपाठके एकविंशः खण्डः ।।

## द्वाविंशः खण्डः

अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति । समानस्तृप्यति ।। १ ।।

समाने तृप्यति मनस्तृप्यति । मनसि तृप्यति पर्जन्यस्तृप्यति । पर्जन्ये तृप्यति विद्युत् तृप्यति । विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतः तत् तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

।। इति पञ्चमप्रपाठके द्वाविंशः खण्डः ।।

## त्रयोविंशः खण्डः

अथ यां पञ्चमीं जुहुयात् तां जुहुयात् उदानाय स्वाहेति । उदानस्तृप्यति ।। १ ।।

उदाने तृप्यति वायुस्तृप्यति । वायौ तृप्यति आकाशस्तृप्यति । आकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतः तत् तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

।। इति पञ्चमप्रपाठके त्रयोविंशः खण्डः ।।

## चतुर्विंशः खण्डः

स य इदमविद्वानग्निहोत्रं जुहोति, यथाङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ।। १ ।।

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ।। २ ।।

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवँ हास्य सर्वे पाप्मानः प्रदूयन्ते, य एतदेवं विद्वानग्निहोत्रं जुहोति ।। ३ ।।

तस्मादु हैवंवित् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेत्, आत्मनि हैवास्य तद्वैश्वानरे हुतँ स्यादिति । तदेष श्लोकः ।। ४ ।।

यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासते ।। इति ।। ५ ।।

अग्निहोत्रमुपासते इति ।

।। इति पञ्चमप्रपाठके चतुर्विंशः खण्डः ।।

।। पञ्चमः प्रपाठकः समाप्तः ।।

# षष्ठः प्रपाठकः

## प्रथमः खण्डः

श्वेतकेतुर्हारुणेय आस । तँ ह पितोवाच, 'श्वेतकेतो वस ब्रह्मचर्यम् । न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति इति ।। १ ।।

स ह द्वादशवर्षः उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय । तँ ह पितोवाच ।। २ ।।

श्वेतकेतो ! यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि, । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतँ भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ।। ३ ।।

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातँ स्यात् ; वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।। ४ ।।

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातँ स्यात् । वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ।। ५ ।।

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातँ स्यात् ; वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम् - एवँ सोम्य स आदेशो भवतीति ।। ६ ।।

न वै नूनं भगवन्तस्त एतदवेदिषुः, यद्ध्येतदवेदिष्यन्, कथं मे नावक्ष्यन्निति । 'भगवाँस्त्वेव मे तद्ब्रवीतु इति । 'तथा सोम्य' इति होवाच ।। ७ ।।

।। इति षष्ठप्रपाठके प्रथमः खण्डः ।।

## द्वितीयः खण्डः

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुः, 'असदेवेदमग्र आसीदेकमेवाद्वितीयम् तस्मादसतः सज्जायत ।। १ ।।

'कुतस्तु खलु सोम्यैवँ स्यात् इति होवाच 'कथमसतः सज्जायेत' इति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।। २ ।।

तदैक्षत, बहु स्यां प्रजायेयेति । तत् तेजोऽसृजत । तत्तेज ऐक्षत, बहु स्यां प्रजायेयेति । तदपोऽसृजत । तस्मात् यत्र क्वचन शोचति स्वेदते वा पुरुषः, तेजस एव तदध्यापो जायन्ते ।। ३ ।।

ता आप ऐक्षन्त । बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त । तस्मात् यत्र क्वचन वर्षति, तदेव भूयिष्ठमन्नं भवति । अद्भ्य एव तदध्यन्नाद्यं जायते ।। ४ ।।

।। इति षष्ठप्रपाठके द्वितीयः खण्डः ।।

## तृतीयः खण्डः

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ।। १ ।।

सेयं देवतैक्षत, हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ।। २ ।।

तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति । सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ।। ३ ।।

तासां त्रिवृतं त्रिवृतमेकैकामकरोत् । यथा तु खलु सोम्येमास्तिस्रो देवताः त्रिवृत्त्रिवृदेकैका भवति, तन्मे विजानीहीति ।। ४ ।।

।। इति षष्ठप्रपाठके तृतीयः खण्डः ।।

## चतुर्थः खण्डः

यदग्ने रोहितँ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लं, तदपाम् । यत्कृष्णं, तदन्नस्य । अपागादग्नेरग्नित्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ।। १ ।।

यदादित्यस्य रोहितँ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लं, तदपाम् । यत्कृष्णम् तदन्नस्य । अपागादादित्यादादित्यत्वम् । वाचारम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ।। २ ।।

यच्चन्द्रमसो रोहितँ रूपम्, तेजसस्तद्रूपम् यच्छुक्लं, तदपाम् यत्कृष्णं, तदन्नस्य अपागाच्चन्द्राच्चन्द्रत्वम् वाचारम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ।। ३ ।।

यद्विद्युतो रोहितँ रूपम् तेजसस्तद्रूपम् । यच्छुक्लं, तदपाम् । यत्कृष्णम् तदन्नस्य । अपागाद्विद्युतो विद्युत्त्वम् । वाचारम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ।। ४ ।।

एतद्ध स्म वै तद्विद्वाँस आहुः पूर्वे महाशाला महाश्रोत्रिया, 'न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यति' इति ह्येभ्यो विदाञ्चक्रुः ।। ५ ।।

यदु रोहितमिवाभूदिति, तेजसस्तद्रूपमिति तद्विदाञ्चक्रुः । यदु शुक्लमिवाभूदिति, अपाँ रूपमिति तद्विदाञ्चक्रुः । यदु कृष्णमिवाभूदिति, अन्नस्य रूपमिति तद्विदाञ्चक्रुः ।। ६ ।।

यद्वविज्ञातमिवाभूदिति, एतासामेव देवतानाँ समास इति तद्विदाञ्चक्रुः । यथा तु खलु सोम्येमास्तिस्त्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहीति ।। ७ ।।

।। इति षष्ठप्रपाठके चतुर्थः खण्डः ।।

## पञ्चमः खण्डः

अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति ; यो मध्यमस्तन्माँसम् ; योऽणिष्ठस्तन्मनः ।। १ ।।

आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रम् भवति; यो मध्यमः तल्लोहितम्; योऽणिष्ठः स प्राणः ।। २ ।।

तेजोऽशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुः तदस्थि भवति; यो मध्यमः स मज्जा ; योऽणिष्ठः सा वाक् ।। ३ ।।

अन्नमयँहि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ४ ।।

।। इति षष्ठप्रपाठके पञ्चमः खण्डः ।।

## षष्ठः खण्डः

दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत् सर्पिर्भवति ।। १ ।।

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ।। २ ।।

अपाँ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ।। ३ ।।

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवति ।। ४ ।।

अन्नमयँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति ।। भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ५ ।।

।। इति षष्ठप्रपाठके षष्ठः खण्डः ।।

## सप्तमः खण्डः

षोडशकलः सोम्य पुरुषः । पञ्चादशाहानि माऽशीः; काममपः पिब ; आपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ।। १ ।।

स ह पञ्चदशाहानि नाऽऽश । अथ हैनमुपससाद, किं ब्रवीमि भो' इति । ऋचः सोम्य यजूँषि सामानीति । स होवाच, 'न वै मा प्रति भान्ति भो' इति ।। २ ।।

तं होवाच - यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः स्वद्योतमात्रः परिशिष्टः स्यात् ; तेन ततोऽपि न बहु दहेत् - एवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् ; तयैतर्हि वेदान्नानुभवसि । अशान । अथ मे विज्ञास्यसीति ।। ३ ।।

स हाऽऽश । अथ हैनमुपससाद । तँ ह यत् किञ्च पप्रच्छ, सर्वं ह प्रतिपेदे । तँ होवाच ।। ४ ।।

यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशि़ष्टं तं तृणैरुपसमाधाय प्राज्वालयेत् ; तेन ततोऽपि बहु दहेत् । एवँ सोम्य ते षोडशानां कलानामेका कलातिशिष्टा अभूत् सा अन्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवसि । अन्नमयँ हि सोम्य मन आपोमयः प्राणः तेजोमयी वागिति । तद्धास्य विजज्ञाविति - विजज्ञाविति ।। ५ ।।

।। इति षष्ठप्रपाठके सप्तमः खण्डः ।।

## अष्टमः खण्डः

उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच-स्वप्रान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति । स्वमपीतो भवति । तस्मादेनँ स्वपितीत्या चक्षते, स्वँ ह्यपीतो भवति ।। १ ।।

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते । प्राणबन्धनँ हि सोम्य मन इति ।। २ ।।

अशनायापिपासे मे सोम्य विजानीहीति । यत्रैतत्पुरुषोऽशिशिषति नाम, आप एव तदशितं नयन्ते । तत् यथा गोनायोऽश्वनायः पुरुषनाय इति, एवं तदप आचक्षतेऽशनायेति । तत्रैतच्छुङ्गमुत्पतितँ सोम्य विजानीहि, नेदममूलं भविष्यतीति ।। ३ ।।

तस्य क्व मूलँ स्यादन्यत्रान्नात् । एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छ, अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ । तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।। ४ ।।

अथ यत्रैतत्पुरुषः पिपासति नाम, तेज एव तत् पीतं नयते । तत् यथा गोनायोऽश्वनायः पुरुषनाय इति, एवं एतत् तेज आचष्ट उदन्येति । तत्रैतदेव शुङ्गमुत्पतितँ सोम्य विजानीहि । नेदममूलं भविष्यतीति ।। ५ ।।

तस्य क्व मूलँ स्यादन्यत्राद्भ्यः । अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ।

सन्मूलाः सोम्येमाः सर्वा प्रजाः सदायतनाः सत्प्रतिष्ठाः ।

यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तदुक्तं पुरस्तादेव भवति ।

अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम् । स य एषोऽणिमा ।। ६ ।।

ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ७ ।।

।। इति षष्ठप्रपाठके अष्टमः खण्डः ।।

## नवमः खण्डः

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाँ रसान् समवहारमेकताँ रसं गमयन्ति ।। १ ।।

ते यथा तत्र न विवेकं लभन्ते, अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति - एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः, सति सम्पद्यामह इति ।। २ ।।

त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ।। ३ ।।

स य एषोऽणिमा । ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ४ ।।

।। इति षष्ठप्रपाठके नवमः खण्डः ।।

## दशमः खण्डः

इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते । पश्चात् प्रतीच्यः । ताः समुद्रात् समुद्रमेवापियन्ति । समुद्र एव भवन्ति । ता यथा तत्र न विदुः, इयमहमस्मि, इयमहमस्मीति ।। १ ।।

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः आगच्छामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ।। २ ।।

स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।

।। इति षष्ठप्रपाठके दशमः खण्डः ।।

## एकादशः खण्डः

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवान् स्रवेत्, यो मध्येऽभ्याहन्यात्, जीवन् स्रवेत्; योऽग्रेऽभ्याहन्यात्, जीवन् स्रवेत् । स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ।। १ ।।

तस्य यदेकाँ शाखां जीवो जहाति, अथ सा शुष्यति; द्वितीयां जहाति, अथ सा शुष्यति; तृतीयां जहाति, अथ सा शुष्यति; सर्वं जहाति, सर्वः शुष्यति - एवमेव खलु सोम्य विद्धीति होवाच ।। २ ।।

जीवापेतं वाव किलेदं म्रियते; न जीवो म्रियते इति । स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । यथा सोम्येति होवाच ।। ३ ।।

।। इति षष्ठप्रपाठके एकादशः खण्डः ।।

## द्वादशः खण्डः

न्यग्रोधफलमद आहरेति । इदं भगव इति । भिन्धीति । भिन्नं भगव इति । किमत्र पश्यसीति । अण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्धीति । भिन्ना भगव इति । किमत्र पश्यसीति । न किञ्चन भगव इति ।। १ ।।

तँ होवाच - यं वै सोम्यैतमणिमानं न निभालयसे, एतस्य वै किल सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति ।। २ ।।

श्रद्धत्स्व सोम्येति । स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।

।। इति षष्ठप्रपाठके द्वादशः खण्डः ।।

## त्रयोदशः खण्डः

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति । स ह तथा चकार । तँ होवाच यद्दोषा लवणमुदकेऽवाधाः, अङ्ग! तदाहरेति । तद्धावमृश्य न विवेद । यथा विलीनमेवाङ्ग ।। १ ।।

अथास्याऽऽदावाचामेति; कथमिति । लवणमिति । मध्यादाचामेति; कथमिति । लवणमिति । अन्तादाचामेति; कथमिति । लवणमिति । अभिप्रास्यैतत् अथ मोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत् संवर्तते । तँ होवाच - अत्र वाव किल सत् सोम्य न निभालयसे अत्रैव किलेति ।। २ ।।

स य एषोऽणिमा ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।

।। इति षष्ठप्रपाठके त्रयोदशः खण्डः ।।

## चतुर्दशः खण्डः

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् । स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रध्मायीत - अभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ।। १ ।।

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति; स ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येत । एवमेवेहाऽऽचार्यवान् पुरुषो वेद । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति ।। २ ।।

स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत्सत्यम् । स आत्मा । तत्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।

।। इति षष्ठप्रपाठके चतुर्दशः खण्डः ।।

## पञ्चदशः खण्डः

पुरुषँ सोम्योपतापिनं ज्ञातयः पर्युपासते, जानासि मां जानासि मामिति । तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्, तावज्जानाति ।। १ ।।

अथ यदाऽस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्, अथ न जानाति ।। २ ।।

स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।। ३ ।।

।। इति षष्ठप्रपाठके पञ्चदशः खण्डः ।।

## षोडशः खण्डः

पुरुषँ सोम्योत हस्तगृहीतमानयन्ति, अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति, तत एवानृतमात्मानं कुरुते । सोऽनृताभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यते अथ हन्यते ।। १ ।।

अथ यदि तस्याकर्ता भवति, तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति, स न दह्यते; अथ मुच्यते ।। २ ।।

स यथा तत्र न दाह्येत ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । तद्धास्य विजज्ञाविति विजज्ञाविति ।। ३ ।।

।। इति षष्ठप्रपाठके षोडशः खण्डः ।।

।। षष्ठः प्रपाठकः समाप्तः ।।

# सप्तमः प्रपाठकः

## प्रथमः खण्डः

अधीहि भगव इति होपससाद सनत्कुमारं नारदः तँ होवाच यद्वेत्थ, तेन मोपसीद । ततस्त ऊर्ध्वं वक्ष्यामीति ।। १ ।।

स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं, देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम् । एतद्भगवोऽध्येमि ।। २ ।।

सोऽहं भगवो मन्त्रविदेवाऽस्मि ; नाऽऽत्मवित् । श्रुतँ ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि, तं मा भगवाञ्छोकस्य पारं तारयत्विति । तँ होवाच । यद्वै किञ्चैतदध्यगीष्ठाः, नामैवैतत् ।। ३ ।।

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिः दैवो निधिः वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या । नामैवैतत् । तान्नामोपास्वेति ।। ४ ।।

स यो नाम ब्रह्मेत्युपास्ते, यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति,यो नाम ब्रह्मेत्युपास्ते । अस्ति भगवो नाम्नो भूय इति । नाम्नो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। ५ ।।

।। इति सप्तमप्रपाठके प्रथमः खण्डः ।।

## द्वितीयः खण्डः

वाग्वाव नाम्नो भूयसी । वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थम् इतिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्याम्, दिवञ्च पृथिवीञ्च वायुञ्चाऽऽकाशञ्चाऽऽपश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वयाँसि च तृणवनस्पतीञ्छ वापदान्याकीटपतङ्गपिपीलिकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च । यद्वै वाङ् नाभविष्यत् - न धर्मो नाधर्मो व्यज्ञापयिष्यत् ; न सत्यम्, नानृतम्, न साधु, नासाधु, न हृदयज्ञो, नाहृदयज्ञे वागेवैतत् सर्वं विज्ञापयति । वाचमुपास्स्वेति ।। १ ।।

स यो वाचं ब्रह्मेत्युपास्ते, यावद्वाचो गतम्, तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते । अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके द्वितीयः खण्डः ।।

## तृतीयः खण्डः

मनो वाव वाचो भूयः । यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवति, एवं वाचञ्च नाम च मनोऽनुभवति । स यदा मनसा मनस्यति - मन्त्रानधीयेयेति, अथाधीते ; कर्माणि, कुर्वीयेति, अथ कुरुते; पुत्रांश्च पशूँश्चेच्छेयेति, अथेच्छते ; इमञ्च लोकममुञ्चेच्छेयेति, अथेच्छते । मनो ह्यात्मा । मनो हि लोको मनो हि ब्रह्म । मन उपास्स्वेति ।। १ ।।

स यो मनो ब्रह्मेत्युपास्ते, यावन्मनसो गतम्, तत्रास्य यथा कामचारो भवति, यो मनो ब्रह्मेत्युपास्ते । अस्ति भगवो मनसो भूय इति । मनसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके तृतीयः खण्डः ।।

## चतुर्थ खण्डः

संकल्पो वाव मनसो भूयान् । यदा वै संकल्पयते, अथ मनस्यति, अथ वाचमीरयति, तामु नाम्नीरयति । नाम्नि मन्त्रा एकं भवन्ति । मन्त्रेषु कर्माणि ।। १ ।।

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि । समक्लृपतां द्यावापृथिवी, समकल्पेतां वायुश्चाऽऽकाशञ्च, समकल्पन्तामापश्च तेजश्च । तेषाँ संक्लृप्त्यै वर्षं संकल्पते । वर्षस्य संक्लृप्त्या अन्नँ संकल्पते । अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते । प्राणानाँ संकलृप्त्यै मन्त्राः संकल्पन्ते । मन्त्राणाँ संक्लृप्त्यै कर्माणि संकल्पन्ते । कर्मणाँ संक्लृप्त्यै लोकः संकल्पते । लोकस्य संक्लृप्त्यै सर्वं संकल्पते । स एष संकल्पः । संकल्पमुपास्स्वेति ।। २ ।।

स यः संकल्पं ब्रह्मेत्युपास्ते, संक्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः, प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान् अव्यथमानोऽभिसिद्ध्यति । यावत् संकल्पस्य गतम्, तत्रास्य यथा कामचारो भवति, यः संकल्पं ब्रह्मेत्युपास्ते । अस्ति भगवः संकल्पाद् भूय इति । संकल्पाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। ३ ।।

।। इति सप्तमप्रपाठके चतुर्थः खण्डः ।।

## पञ्चमः खण्डः

चित्तं वाव संकल्पाद्भूयः । यदा वै चेतयते, अथ संकल्पयते ; अथ मनस्यति ; अथ वाचमीरयति ; तामु नाम्नीरयति, नाम्नि मन्त्रा एकं भवन्ति, मन्त्रेषु कर्माणि ।। १ ।।

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि । तस्माद् यद्यपि बहुवित् अचित्तो भवति, नायमस्तीत्येवैनमाहुः, यदयं वेद । यद्वा अयं विद्वान्, नेत्थमचित्तः स्यादिति । अथ यद्यल्पविच्चित्तवान् भवति, तस्मा एवोत शुश्रूषन्ते । चित्तं ह्येवैषामेकायनम्, चित्तमात्मा, चित्तं प्रतिष्ठा । चित्तमुपास्स्वेति ।। २ ।।

स यश्चित्तं ब्रह्मेत्युपास्ते, चित्तान् वै स लोकान् ध्रुवान् ध्रुवः, प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान् अव्यथमानोऽभिसिद्ध्यति - यावच्चित्तस्य गतम्, तत्रास्य यथा कामचारो भवति, यश्चित्तं ब्रह्मेत्युपास्ते । अस्ति भगवश्चित्ताद्भूय इति । चित्ताद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। ३ ।।

।। इति सप्तमप्रपाठके पञ्चमः खण्डः ।।

## षष्ठः खण्डः

ध्यानं वाव चित्तात् भूयः । ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः ।

तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति, ध्यानापादाँशा इवैव ते भवन्ति । अथ येऽल्पाः, कलहिनः पिशुना उपवादिनस्ते । अथ ये प्रभवो ध्यानापादाँशा इवैव ते भवन्ति । ध्यानमुपास्स्वेति ।। १ ।।

स यो ध्यानं ब्रह्मेत्युपास्ते, यावत् ध्यानस्य गतम्, तत्रास्य यथा कामचारो भवति, यो ध्यानं ब्रह्मेत्युपास्ते । अस्ति भगवो ध्यानात् भूय इति । ध्यानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके षष्ठः खण्डः ।।

## सप्तमः खण्डः

विज्ञानं वाव ध्यानात् भूयः । विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम्; दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाँश्च मनुष्याँश्च वयाँसि च तृणवनस्पतीन् श्वापदान्या कीटपतङ्गपिपीलिकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति । विज्ञानमुपास्स्वेति ।। १ ।।

स यो विज्ञानं ब्रह्मेत्युपास्ते, विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिद्ध्यति - यावद् विज्ञानस्य गतम्, तत्रास्य यथा कामचारो भवति, यो विज्ञानं ब्रह्मेत्युपास्ते । अस्ति भगवो विज्ञानाद्भूय इति । विज्ञानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके सप्तमः खण्डः ।।

## अष्टमः खण्डः

बलं वाव विज्ञानाद्भूयः । अपि ह शतं विज्ञानवतामेको बलवानाकम्पयते । स यदा बली भवति, अथोत्थाता भवति, उत्तिष्ठन् परिचरिता भवति ; परिचरन्नुपसत्ता भवति ; उपसीदन् द्रष्टा भवति, श्रोता भवति, मन्ता भवति बोद्धा भवति, कर्ता भवति, विज्ञाता भवति । बलेन वै पृथिवी तिष्ठति, बलेनान्तरिक्षम्, बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाँसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन लोकस्तिष्ठति । बलमुपास्स्वेति ।। १ ।।

स यो बलं ब्रह्मेत्युपास्ते, यावद्बलस्य गतम् तत्रास्य यथा कामचारो भवति, यो बलं ब्रह्मेत्युपास्ते । अस्ति भगवो बलाद्भूय इति । बलाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके अष्टमः खण्डः ।।

## नवमः खण्डः

अन्नं वाव बलाद्भूयः । तस्माद् यद्यपि दश रात्रीर्नाश्नीयात्, यद्युह जीवेत् अथवा, अद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवति । अथान्नस्याऽऽये द्रष्टा भवति, श्रोता भवति, मन्ता भवति, बोद्धा भवति, कर्ता भवति, विज्ञाता भवति । अन्नमुपास्स्वेति ।। १ ।।

स योऽन्नं ब्रह्मेत्युपास्ते, अन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति, यावदन्नस्य गतम् तत्रास्य यथा कामचारो भवति, योऽन्नं ब्रह्मेत्युपास्ते । अस्ति भगवोऽन्नाद् भूय इति । अन्नाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके नवमः खण्डः ।।

## दशमः खण्डः

आपो वा अन्नाद् भूयस्यः - तस्माद् यदा सुवृष्टिर्न भवति, व्याधीयन्ते प्राणाः, अन्नं कनीयो भविष्यतीति । अथ यदा सुवृष्टिर्भवति, आनन्दिनः प्राणा भवन्ति, अन्नं बहु भविष्यतीति । आप एवेमा मूर्ताः येयं पृथिवी, यदन्तरिक्षम्, यद् द्यौः यत् पर्वताः, यद्देवमनुष्याः, यत् पशवश्च व यँसि च ; तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ताः । अप उपास्स्वेति ।। १ ।।

स योऽपो ब्रह्मेत्युपास्ते, आप्नोति सर्वान् कामाँस्तृप्तिमान् भवति, यावदपां गतम्, तत्रास्य यथाकामचारो भवति, योऽपो ब्रह्मेत्युपास्ते । अस्ति भगवोऽद्भ्यो भूय इति । अद्भ्यो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके दशमः खण्डः ।।

## एकादशः खण्डः

तेजो वा अद्भ्यो भूयः । तद्वा एतद्वायुमागृह्याऽऽकाशम् अभितपति । तदाहुः - निशोचति, नितपति, वर्षिष्यति वा इति । तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते । तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिः ह्रादाश्चरन्ति । तस्मादाहुः - विद्योतते, स्तनयति, वर्षिष्यति वा इति । तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते । तेज उपास्वेति ।। १ ।।

स यस्तेजो ब्रह्मेत्युपास्ते ; तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कान् अभिसिद्ध्यति, यावत् तेजसो गतम्, तत्रास्य यथाकामचारो भवति, यस्तेजो ब्रह्मेत्युपास्ते । अस्ति भगवस्तेजसो भूय इति । तेजसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके एकादशः खण्डः ।।

## द्वादशः खण्डः

आकाशो वाव तेजसो भूयान् । आकाशो वै सूर्याचन्द्रमसाबुभौ विद्युन्नक्षत्राण्यग्निः । आकाशेनाऽऽह्वयति, आकाशेन शृणोति, आकाशेन प्रतिश्रृणोति, आकाशे रमते, आकाशे न रमते, आकाशे जायते, आकाशमभिजायते । आकाशमुपास्स्वेति ।। १ ।।

स य आकाशं ब्रह्मेत्युपास्ते, आकाशवतो वै स लोकान् प्रकाशवतोऽसम्बाधान् उरुगायवतोऽभिसिद्ध्यति । यावदाकाशस्य गतम् तत्रास्य यथाकामचारो भवति, य आकाशं ब्रह्मेत्युपास्ते । अस्ति भगव आकाशाद्भूय इति । आकाशाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके द्वादशः खण्डः ।।

## त्रयोदशः खण्डः

स्मरो वा आकाशाद्भूयः । तस्माद् यद्यपि बहव आसीरन् अस्मरन्तः, नैव ते कञ्चन शृणुयुः, न मन्वीरन्, न विजानीरन्, यदा वाव ते स्मरेयुः, अथ शृणुयुः, अथ मन्वीरन्, अथ विजानीरन् । स्मरेण वै पुत्रान् विजानाति; स्मरेण पशून् । स्मरमुपास्स्वेति ।। १ ।।

स यः स्मरं ब्रह्मेत्युपास्ते, यावत्, स्मरस्य गतम् तत्रास्य यथाकामचारो भवति, यः स्मरं ब्रह्मेत्युपास्ते । अस्ति भगवः स्मराद्भूय इति । स्मराद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके त्रयोदशः खण्डः ।।

## चतुर्दशः खण्डः

आशा वाव स्मराद्भूयसी । आशयेद्धो वै स्मरो मन्त्रानधी ते, कर्माणि कुरुते, पुत्राँश्च पशूँश्चेच्छते, इमञ्च लोकममुञ्चेच्छते । आशामुपास्स्वेति ।। १ ।।

स य आशां ब्रह्मेत्युपास्ते, आशयाऽस्य सर्वे कामाः समृद्ध्यन्ति; अमोघा ह्यस्याशिषो भवन्ति, यावदाशाया गतम् तत्रास्य यथाकामचारो भवति, य आशां ब्रह्मेत्युपास्ते । अस्ति भगव आशाया भूय इति । आशाया वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।। २ ।।

।। इति सप्तमप्रपाठके चतुर्दशः खण्डः ।।

## पञ्चदशः खण्डः

प्राणो वाव आशाया भूयान् । यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वं समर्पितम् । प्राणः प्राणेन याति । प्राणः प्राणं ददाति; प्राणाय ददाति । प्राणो ह पिता, प्राणो माता, प्राणो भ्राता, प्राणः स्वसा, प्राण आचार्यः, प्राणो ब्राह्मणः ।। १ ।।

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किञ्चित् भृशमिव प्रत्याह, धिक् त्वाऽस्त्वित्येवैनमाहुः, पितृहा वै त्वमसि, मातृहा वै त्वमसि, भ्रातृहा वै त्वमसि, स्वसृहा वै त्वमसि, आचार्यहा वै त्वमसि, ब्राह्मणहा वै त्वमसीति ।। २ ।।

अथ यद्यप्येनान् उत्क्रान्तप्राणान् शूलेन समासं व्यतिसन्दहेत्, नैवैनं ब्रूयुः पितृहाऽसीति, न मातृहाऽसीति, न भ्रातृहाऽसीति, न स्वसृहाऽसीति, नाचार्यहाऽसीति, न ब्राह्मणहाऽसीति ।। ३ ।।

प्राणो ह्येवैतानि सर्वाणि भवति । स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी भवति । तञ्चेत् ब्रूयुः अतिवाद्यसीति, अतिवाद्यस्मीति ब्रूयात्; नापह्नुवीत ।। ४ ।।

।। इति सप्तमप्रपाठके पञ्चदशः खण्डः ।।

## षोडशः खण्डः

एषं तु वा अतिवदति, यः सत्येनातिवदति । सोऽहं भगवः सत्येनातिवदानीति। सत्यं त्वेव विजिज्ञासितव्यमिति । सत्यं भगवो विजिज्ञास इति ।। १ ।।

।। इति सप्तमप्रपाठके षोडशः खण्डः ।।

## सप्तदशः खण्डः

यदा वै विजानाति, अथ सत्यं वदति । नाविजानन् सत्यं वदति । विजानन्नेव सत्यं वदति । विज्ञानं त्वेव विजिज्ञासितव्यमिति । विज्ञानं भगवो विजिज्ञास इति ।। १ ।।

।। इति सप्तमप्रपाठके सप्तदशः खण्डः ।।

## अष्टदशः खण्डः

यदा वै मनुतेऽथ विजानाति । नामत्वा विजानाति । मत्वैवं विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ।। १ ।।

।। इति सप्तमप्रपाठके अष्टादशः खण्डः ।।

## एकोनविंशः खण्डः

यदा वै श्रद्दधाति, अथ मनुते । नाश्रद्दधन्मनुते । श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति ।। १।।

।। इति सप्तमप्रपाठके एकोनविंशः खण्डः ।।

## विंशः खण्डः

यदा वै निस्तिष्ठति, अथ श्रद्दधाति । नानिस्तिष्ठन् श्रद्दधाति । निस्तिष्ठन्नेव श्रद्दधाति । निष्ठा त्वेव विजिज्ञासितव्येति । निष्ठां भगवो विजिज्ञास इति ।। १।।

।। इति सप्तमप्रपाठके विंशः खण्डः ।।

## एकविंशः खण्डः

यदा वै करोति, अथ निस्तिष्ठति । नाकृत्वा निस्तिष्ठति । कृत्वैव निस्तिष्ठति । कृतिस्त्वेव विजिज्ञासितव्येति । कृतिं भगवो विजिज्ञास इति ।। १ ।।

।। इति सप्तमप्रपाठके एकविंशः खण्डः ।।

## द्वाविंशः खण्डः

यदा वै सुखं लभते, अथ करोति । नासुखं लब्ध्वा करोति । सुखमेव लब्ध्वा करोति । सुखं त्वेव विजिज्ञासितव्यमिति । सुखं भगवो विजिज्ञास इति ।। १ ।।

।। इति सप्तमप्रपाठके द्वाविंशः खण्डः ।।

## त्रयोविंशः खण्डः

यो वै भूमा तत्सुखम् । नाल्पे सुखमस्ति । भूमैव सुखम् । भूमा त्वेव विजिज्ञासितव्य इति । भूमानं भगवो विजिज्ञास इति ।। १ ।।

।। इति सप्तमप्रपाठके त्रयोविंशः खण्डः ।।

## चतुर्विंशः खण्डः

यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यत् विजानाति, स भूमा । अथ यत्रान्यत् पश्यति, अन्यच्छृणोति, अन्यत् विजानाति, तदल्पम् । यो वै भूमा, तदमृतम् । अथ यदल्पम्, तन्मर्त्यम् । स भगवः कस्मिन् प्रतिष्ठित इति । स्वे महिम्नि, यदि वा न महिम्नीति ।। १ ।।

गो अश्वमिह महिमेत्याचक्षते, हस्ति हिरण्यं दासभार्यं क्षेत्राण्यायतनानीति । नाहमेवं ब्रवीमीति होवाच, अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ।। २ ।।

।। इति सप्तमप्रपाठके चतुर्विंशः खण्डः ।।

## पञ्चविंशः खण्डः

स एवाधस्तात्, स उपरिष्टात्, स पश्चात्, स पुरस्तात्, स दक्षिणतः, स उत्तरतः, स एवेदँ सर्वमिति । अथातोऽहङ्कारादेश एव - अहमेवाधस्तात्, अहमुपरिष्टात्, अहं पश्चात्, अहं पुरस्तात्, अहं दक्षिणतः, अहमुत्तरतः, अहमेवेदँ सर्वमिति ।।

अथात आत्मादेश एव - आत्मैवाधस्तात्, आत्मोपरिष्टात्, आत्मा पश्चात्, आत्मा पुरस्तात्, आत्मा दक्षिणतः, आत्मोत्तरतः, आत्मैवेदँ सर्वमिति ।। १ ।।

स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरतिः आत्मक्रीड आत्ममिथुन आत्माऽऽनन्दः, स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति । अथ

येऽन्यथाऽतो विदुरन्यराजानः ते क्षय्यलोका भवन्ति । तेषाँ सर्वेषु लोकेष्वकामचारो भवति ।। २ ।।

।। इति सप्तमप्रपाठके पञ्चविंशः खण्डः ।।

## षड्विंशः खण्डः

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मतः आशाऽऽत्मतः स्मर आत्मत आकाशः आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदँ सर्वमिति ।। १ ।।

तदेष श्लोकः -

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वँ ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ।। इति ।।
सर्वँ एकधा भवति त्रिधा भवति पञ्चधा ।
सप्तधा नवधा चैव पुनश्चैकादश स्मृतः ।।
शतञ्च दश चैकञ्च सहस्राणि च विँशतिः ।
आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।।
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।
तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः ।
तँ स्कन्द इत्याचक्षते तँ स्कन्द इत्याचक्षते ।।

।। इति सप्तम प्रपाठके षड्विंशः खण्डः ।।

।। सप्तमः प्रपाठकः समाप्तः ।।

# अष्टमः प्रपाठकः

## प्रथमः खण्डः

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ।। १ ।।

तं चेद्ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति ।। २ ।।

स ब्रूयाद्यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि । यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितमिति ।। ३ ।।

तञ्चेत् ब्रूयुः - अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितँ सर्वाणि च भूतानि सर्वे च कामाः, यदैनज्जरावाप्नोति प्रध्वँसते वा किं ततोऽतिशिष्यत इति ।। ४ ।।

स ब्रूयात् - नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते ; एतत् सत्यं ब्रह्मपुरम् । अस्मिन्कामाः समाहिताः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः । यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ।। ५ ।।

तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते । तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेष्वकामचारो भवति । अथ य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेषु कामचारो भवति ।। ६ ।।

।। इति अष्टमप्रपाठके प्रथमः खण्डः ।।

## द्वितीयः खण्डः

स यदि पितृलोककामो भवति, संकल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन सम्पन्नो महीयते ।। १ ।।

अथ यदि मातृलोककामो भवति, संकल्पादेवास्य मातरः समुत्तिष्ठन्ति। तेन मातृलोकेन सम्पन्नो महीयते ।। २ ।।

अथ यदि भ्रातृलोककामो भवति, संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन सम्पन्नो महीयते ।। ३ ।।

अथ यदि स्वसृलोककामो भवति, संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति । तेन स्वसृलोकेन सम्पन्नो महीयते ।। ४ ।।

अथ यदि सखिलोककामो भवति, संकल्पादेवास्य सखायः समुत्तिष्ठन्ति । तेन सखिलोकेन सम्पन्नो महीयते ।। ५ ।।

अथ यदि गन्धमाल्यलोककामो भवति, संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः । तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ।। ६ ।।

अथ यद्यन्नपानलोककामो भवति, संकल्पादेवास्य अन्नपाने समुत्तिष्ठतः । तेन अन्नपानलोकेन सम्पन्नो महीयते ।। ७ ।।

अथ यदि गीतवादित्रलोककामो भवति, संकल्पादेवास्य गीतवादित्रे समुत्तिष्ठतः । तेन गीतवादित्रलोकेन संपन्नो महीयते ।। ८ ।।

अथ यदि स्त्रीलोककामो भवति, संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्तिं । तेन स्त्रीलोकेन सम्पन्नो महीयते ।। ९ ।।

यं यमन्तमभिकामो भवति, यं कामं कामयते, सोऽस्य संकल्पादेव समुत्तिष्ठति । तेन सम्पन्नो महीयते ।। १० ।।

।। इति अष्टमप्रपाठके द्वितीयः खण्डः ।।

## तृतीयः खण्डः

त इमे सत्याः कामा अनृतापिधानाः । तेषाँ सत्यानाँ सतामनृतमपिधानम् । यो यो ह्यस्येतः प्रैति, न तमिह दर्शनाय लभते ।। १ ।।

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते, सर्वं तदत्र गत्वा विन्दते । अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः । तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ; अनृतेन हि प्रत्यूढाः ।। २ ।।

स वा एष आत्मा हृदि । तस्यैतदेव निरुक्तँ हृद्ययम् इति । तस्माद्धृदयम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ।। ३ ।।

अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ।। ४ ।।

तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति । तद् यत् सत्, तदमृतम् ; अथ यत् ति, तन्मर्त्यम् ; अथ यद् यम्, तेनोभे यच्छति । यदनेनोभे यच्छति, तस्मात् यम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ।। ५ ।।

।। इति अष्टमप्रपाठके तृतीयः खण्डः ।।

## चतुर्थः खण्डः

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय । नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युः । न शोको न सुकृतँ न दुष्कृतँ सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः ।। १ ।।

तस्माद्वा एतँ सेतुं तीर्त्वाऽन्धस्सन् अनन्धो भवति; विद्धस्सन् अविद्धो भवति; उपतापी सन् अनुपतापी भवति । तस्माद्वा एतँ सेतुं तीर्त्वा अपि नक्तमहरेवाभिनिष्पद्यते । सकृद्विभातो ह्येवैष ब्रह्मलोकः ।। २ ।।

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः, तेषाँ सर्वेषु लोकेषु कामचारो भवति ।। ३ ।।

।। इति अष्टमप्रपाठके चतुर्थः खण्डः ।।

## पञ्चमः खण्डः

अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते । अथ यदिष्टमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ।। १ ।।

अथ यत् सत्त्रायणमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते । अथ यन्मौनमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ।। २ ।।

अथ यदनाशकायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । एष ह्यात्मा न नश्यति, यं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि । तदैरम्मदीयँ सरः; तदश्वत्थः सोमसवनः; तदपराजिता पूर्ब्रह्मणः, प्रभुविमितँ हिरण्मयम् ।। ३ ।।

तद्य एवैतावरञ्च ण्यञ्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः । तेषाँ सर्वेषु लोकेषु कामचारो भवति ।। ४ ।।

।। इति अष्टमप्रपाठके पञ्चमः खण्डः ।।

## षष्ठः खण्डः

अथ या एता हृदयस्य नाड्यः, ताः पिङ्गळस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गळः एष शुक्ल एष नील एष पीत एष लोहितः ।। १ ।।

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्च, एवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छतीमञ्चामुञ्च । अमुष्मादादित्यात् प्रतायन्ते; ता आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते; तेऽमुष्मिन्नादित्ये सृप्ताः ।। २ ।।

तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति । तं न कश्चन पाप्मा स्पृशति । तेजसा हि तदा संपन्नो भवति ।। ३ ।।

अथ यत्रैतदबलिमानं नीतो भवति, तमभित आसीना आहुः, जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति, तावज्जानाति ।। ४ ।।

अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्व आक्रमते । स ओमिति वाहोद्वा मीयते । स यावत् क्षिप्येन्मनः, तावदादित्यं गच्छति । एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ।। ५ ।।

तदेष श्लोकः -

शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति । उत्क्रमणे भवन्ति ।। ६ ।।

।। इति अष्टमप्रपाठके षष्ठः खण्डः ।।

## सप्तमः खण्डः

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ।। १ ।।

तद्धोभये देवासुरा अनुबुबुधिरे । ते होचुः - हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति । इन्द्रो हैव देवानामभिप्रवव्राज; विरोचनोऽसुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ।। २ ।।

तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति । तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते । तमिच्छन्ताववास्तमिति ।। ३ ।।

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति । एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति स होवाच ।। ४ ।।

।। इति अष्टमप्रपाठके सप्तमः खण्डः ।।

## अष्टमः खण्डः

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतमिति । तौ होदशरावेऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच - किं पश्यथ इति । तौ होचतुः, सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ।। १ ।।

तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति । तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच किं पश्यथ इति ।। २ ।।

तौ होचतुः - यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्वः, एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ इति । एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्मेति । तौ ह शान्तहृदयौ प्रवव्रजतुः ।। ३ ।।

तौ हान्वीक्ष्य प्रजापतिरुवाच - अनुपलभ्यात्मानमननुविद्य व्रजतः । यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा, ते पराभविष्यन्तीति । स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम । तेभ्यो हैतामुपनिषदं प्रोवाच - आत्मैवेह महय्य आत्मा परिचर्यः । आत्मानमेवेह महयन्नात्मानं परिचरन् उभौ लोकाववाप्नोतीमञ्चामुञ्चेति ।। ४ ।।

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुः, आसुरो बतेति । असुराणाँ ह्येषोपनिषत् । प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्ति । एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ।। ५ ।।

।। इति अष्टमप्रपाठके अष्टमः खण्डः ।।

## नवमः खण्डः

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श । यथैव खल्वयमस्मिन् शरीरे साध्वलंकृते साध्वलंकृतो भवति, सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवमेवायमस्मिन्नन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णः; अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ।। १ ।।

स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच - मघवन् यच्छान्तहृदयः प्राव्राजीः, सार्धं विरोचनेन, किमिच्छन् पुनरागम इति । स होवाच यथैव खल्वयं भगवोऽस्मिन् शरीरे, साध्वलाते साध्वलतो भवति सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवमेवायमस्मिन्नन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ।। २ ।।

एवमेवैष मघवन्निति होवाच, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिंशतं वर्षाणीति । स हापराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ।। ३ ।।

।। इति अष्टमप्रपाठके नवमः खण्डः ।।

## दशमः खण्डः

य एष स्वप्ने महीयमानश्चरति, एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श । तद्यद्यपीदँ शरीरमन्धं भवति अनन्धः स भवति ; यदि स्राममस्रामः ; नैवैषोऽस्य दोषेण दुष्यति ।। १ ।।

न वधेनास्य हन्यते, नास्य स्रायेण स्रामः । घ्नन्ति त्वेवैनं विच्छादयन्तीव ; अप्रियवेत्तेव भवति ; अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति ।। २ ।।

स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच - मघवन् यच्छान्तहृदयः प्राव्राजीः, किमिच्छन् पुनरागम इति । सहोवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति, यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ।। ३ ।।

न वधेनास्यहन्यते नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनं विच्छादयन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति । स ह अपराणी द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ।। ४ ।।

।। इति अष्टमप्रपाठके दशमः खण्डः ।।

## एकादशः खण्डः

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, एष आत्मेति होवाच - एतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श-नाह खल्वयमेवँ संप्रत्यात्मानं जानात्ययमहमस्मीति ; नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ।। १ ।।

स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच - मघवन् यच्छान्तहृदयः प्राव्राजीः किमिवेच्छन् पुनरागम इति । स होवाच नाह खल्वयं भगव एवँ संप्रत्यात्मानं

जानात्ययमहमस्मीति नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ।। २ ।।

एवमेवैष मघवन्निति होवाच, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात् । वसापराणि पञ्च वर्षाणीति । स हापराणि पञ्च वर्षाण्युवास । तान्येकशतँ संपेदुः । एतत् तत्, यदाहुः, एकशतँ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास । तस्मै होवाच ।। ३ ।।

।। इति अष्टमप्रपाठके एकादशः खण्डः ।।

## द्वादशः खण्डः

मघवन् मर्त्यं वा इदँ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ।। १ ।।

अशरीरो वायुः ; अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि । तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते ।। २ ।।

स उत्तमः पुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनँ स्मरन्निदँ शरीरम् । स यथा प्रयोग्य आचरणे युक्तः, एवमेवायमस्मिन् शरीरे प्राणो युक्तः ।। ३ ।।

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः, स चाक्षुषः पुरुषः; दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति, स आत्मा ; गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति, स आत्मा ; अभिव्याहाराय वाक् । अथ यो वेदेदँ शृण्वानीति, स आत्मा ; श्रवणाय श्रोत्रम् ।। ४ ।।

अथ यो वेदेदँ मन्वानीति, स आत्मा ; मनोऽस्य दिव्यं चक्षुः । स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके ।। ५ ।।

तं वा एतं देवा आत्मानमुपासते । तस्मात् तेषाँ सर्वे च लोका आत्ताः, सर्वे च कामाः । स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्, यस्तमात्मानमनुविद्यविजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ।। ६ ।।

।। इति अष्टमप्रपाठके द्वादशः खण्डः ।।

## त्रयोदशः खण्डः

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये । अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीति । अभिसंभवामीति ।। १ ।।

।। इति अष्टमप्रपाठके त्रयोदशः खण्डः ।।

## चतुर्दशः खण्डः

आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा तद्ब्रह्म तदमृतँ स आत्मा । प्रजापतेः सभां वेश्म प्रपद्ये । यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनु प्रापत्सि । स हाहं यशसां यशः । श्वेतमदत्कमदत्कँ श्वेतं लिन्दु माऽभिगाम् लिन्दु माऽभिगाम् ।। १ ।।

।। इति अष्टमप्रपाठके चतुर्दशः खण्डः ।।

## पञ्चदशः खण्डः

तद्धैतद् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे मनुः प्रजाभ्यः । आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुदुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्या हिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ।। १ ।।

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् अनिराकरणमस्तु अनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।। २ ।।

।। ओं शान्तिः शान्तिः शान्तिः ।।

।। इति अष्टमप्रपाठके पञ्चदशः खण्डः ।।

।। अष्टमः प्रपाठकः समाप्तः ।।

।। छान्दोग्योपनिषत् संपूर्णा ।।

# छान्दोग्योपनिषत्

[सामवेदीयोपनिषत्]

## शान्तिपाठः

ओम् आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मोपनिषदम्, माऽहं ब्रह्म निराकुर्यां, मा मा ब्रह्म निराकरोत् अनिराकरणमस्तु, अनिराकरणं मेऽस्तु, तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु, ते मयि सन्तु ।।

।। ओं शान्तिः शान्तिः शान्तिः* ।।

* * * *

## प्रथमः प्रपाठकः

### प्रथमः खण्डः

[प्रणवोपासनस्य रसतमत्वकामाप्तिसमृद्धिगुणकत्वादिप्रकारवैशिष्ट्यम्]

हरिः ओम्[१] - ओमित्येतदक्षरमुद्गीथमुपासीत ; ओमिति ह्युद्गायति । तस्योपव्याख्यानम् ।। १ ।।

---

* **ममाङ्गानि** - हस्तपादादीनि, **वाक्प्राणश्चक्षुःश्रोत्रमथो बलमिन्द्रियाणि सर्वाणि** - वागादिभिः इन्द्रियैः सह **आप्यायन्तु** - सन्तुष्टानि भवन्तु ; वर्धन्तामित्यर्थः । **सर्वं ब्रह्मोपनिषदम्** - ब्रह्मप्रतिपादिकामुपनिषदं प्रति, ब्रह्मविषये च **अहम्** - उपासकः **न निराकुर्याम्** - नास्तिक्यबुद्धिं न अकार्षम् इत्यर्थः । **मा मा ब्रह्म निराकरोत्** - ब्रह्म मां पुरुषार्थात् न भ्रंशयतु, अनुगृह्णातु इत्यर्थः । **अनिराकरणं मेऽस्तु** - ब्रह्मणः सकाशात् ब्रह्मणोऽपि मत्सकाशात्, परस्परमित्यर्थः । अनिराकरणमस्तु । **तदात्मनि......मयि सन्तु** - आत्मज्ञानिनः **ये धर्माः** - उपनिषत्सु प्रसिद्धाः शमदमादयः **मयि** - उपासके **सन्तु** - भवन्तु इत्यर्थः।

१. **ओम्** - रक्षणगतिकान्त्यर्थक अवधातोः 'अवतेष्टिलोपश्च' इति सूत्रेण मन् प्रत्ययः, तस्य टिलोपश्च, 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा.सू. ६-४-२०) इति सूत्रेण उपधाभूताकारस्य ,वकारस्य च ऊठादेशे 'सार्वधातुकार्धधातुकयोः' (पा.सू. ७-३-८४) इत्यनेन इगन्ताङ्गस्य गुणे ओम् इति रूपसिद्धिः ।

# प्रतिपदार्थदीपिका

**[भारद्वाजरामानुजाचार्यविरचिता]**

**[मङ्गलाचरणम्]**

ब्रह्मरुद्रादिदेवैश्च प्रार्थितोऽवतरद्धरिः ।
तं वन्दे कृष्णनामानं[1] कंसदुर्योधनान्तकम् ।। १ ।।

**[आचार्यवन्दनम्]**

श्रीशं श्रियं शठारातिं भाष्यकारादिदेशिकान् ।
पूर्वानस्मद्गुरून् वन्दे श्रीनिवासावधीनहम्[2] ।। २ ।।
श्रीवेंङ्कटेशघण्टांशं नत्वा वेदान्तदेशिकम् ।
छान्दोग्योपनिषद्व्याख्यां करोमि बुधसम्मताम् ।। ३ ।।

ब्रह्मविद्यौपयिकं कर्माङ्गम् उद्गीथोपासनं प्रथमम् उच्यते । **ओमित्येतदक्षरमुद्गीथमुपासीत** इति । **उद्गीथं** - उद्गीथावयवभूतम् 'ओम्' इत्येतदक्षरम् उपासीतेत्यर्थः । **ओमित्युद्गायति** - लोके 'ओम्' इत्यारभ्य उद्गायति । अतः उद्गीथावयवत्वात् उद्गीथशब्दप्रतिपाद्यत्वं युक्तम् । **तस्य** - 'ओम्' इत्यक्षरस्य **उपव्याख्यानं** - इदम् उपासनम् एवं विभूतिः इति एवं फलम् इत्यादिकथनं क्रियते इति शेषः ।

ओङ्कारस्य उपास्यत्वार्थं श्रेष्ठत्वं वदन्ति सर्ववेदान्तेषु । 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्' (कठ.उ. २-१७) गायत्र्यादिजपे यज्ञादौ कर्मणि स्वाध्यायस्य आदावन्ते च 'ओम्' इति शब्दः प्रयुज्यते ।

"तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्तास्सततं ब्रह्मवादिनाम् ।। (भ.गी. १७-२४)
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यते" ।। (म.स्मृ. २-७४)

इति स्मृतेः । 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह' (तै.उ.शिक्षा. ८) इति श्रुत्यन्तरम् ।

---

१. **कृष्णः** - द्वापरयुगे दुष्टशिक्षणशिष्टपरिपालनार्थं अवतीर्णः भगवतः अवतारविशेषः ।

२. सम्प्रदायसिद्धगुरुपरम्पराक्रमेण स्वाचार्यपर्यन्तं मुख्यानाचार्यान् नामतः निर्दिशन् वन्दते । तत्र श्रीशः इति प्रथमाचार्यः । शठारातिरिति द्रविडदिव्यप्रबन्धप्रवर्तकेषु 'आल्वार्' इति व्यपदिष्टेषु अन्यतमः 'नम्माल्वार्' इति प्रसिद्धः पराङ्कुशमुनिः विवक्षितः । भाष्यकारः भगवद्रामानुजाचार्यः । श्रीनिवास इति स्वाचार्यनामधेयम् ।

# प्रकाशिका

## [श्रीरङ्गरामानुजमुनिविरचिता]

### [मङ्गलाचरणम्]

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ।। १ ।।

### [आचार्यवन्दनम्]

[1]श्रीशैलपूर्णवंशाब्धि कौस्तुभस्य जगद्गुरोः ।
श्रीमतस्तातयार्यस्य चरणौ शरणं वृणे ।। २ ।।
श्रीतातगुरुसेवाप्तवेदान्तयुगलाशयः ।
वात्स्यानन्तगुरुः श्रीमान् श्रेयसे मेऽस्तु भूयसे ।। ३ ।।
यत्सेवावैभवाल्लब्धा मया परमहंसता ।
तमहं शिरसा वन्दे परकालमुनीश्वरम् [1]।। ४ ।।
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
[2]छन्दोगोपनिषद्व्याख्यां[2] करवाणि यथामति ।। ५ ।।

ब्रह्मविद्यौपयिकं कर्माङ्गविषयम् आदौ उपासनम् [3]उपदिश्यते[3] । **ओमित्येतदक्षरमुद्गीथमुपासीत** इति । **उद्गीथं**[१] - उद्गीथभक्त्यवयवभूतम्[१] 'ओम्' इत्येतदक्षरम् उपासीत इत्यर्थः । [4]'ओम्' इत्यक्षरस्य[4] उद्गीथत्वासम्भवेन, सामानाधिकरण्यार्थम् उद्गीथपदस्य वा अक्षरपदस्य वा मुख्यार्थत्यागेन लक्षणायां समाश्रयणीयायाम्, 'एतस्यैवाक्षरस्य उपव्याख्यानम्' इत्युपसंहारानुगुण्यात्, उद्गीथशब्दस्य जघन्यतया च, तस्यैव उद्गीथावयवलक्षकत्वं युक्तम्, न तु मुख्यस्य 'ओम्' इत्येतदक्षरम् इत्यस्य ओङ्कारावयवयुक्तोद्गीथलक्षकत्वं [5]युक्तमिति[5] द्रष्टव्यम् । स्वयमेव श्रुतिः ओङ्कारस्य उद्गीथशब्दप्रतिपाद्यत्वे हेतुमाह - **ओमिति ह्युद्गायति** इति । लोके 'ओम्' इति हि आरभ्यैव उद्गायति । अतः उद्गीथावयवत्वात् उद्गीथशब्दप्रतिपाद्यत्वं युक्तमित्यर्थः । **तस्योपव्याख्यानं । [6]तस्य** - ओमित्यक्षरस्य **उपव्याख्यानं[6]** - इदमुपासनं एवं [7]विभूतिः[7] एवं फलमित्यादिकथनम् [8]क्रियते[8] इति शेषः ।

---

१. साम्नः पञ्चभक्तयः - भागाः - सन्ति हिङ्कारः, प्रस्तावः, उद्गीथः, प्रतिहारः, निधनमिति ।।

1. श्रीशैलपूर्ण इत्यारभ्य मुनीश्वरम् - पर्यन्तम् नास्ति - आ । 2. छान्दोग्योपनिषद्व्याख्यां - आ ।
3. उपदिशति - आ । 4. ओमित्येतदक्षरस्य - अ,आ । 5. एतस्यैवाक्षरस्य उपव्याख्यानं भवतीति उपसंहारे श्रवणाद्वा इति - इत्यधिकः पाठः - अ,आ । 6. तस्याक्षरस्यैव - उपासनं - अ,आ,क ।
7. भूतिः - अ,आ । 8. उपव्याख्यानं क्रियते - अ,आ,क ।

# आनन्दभाष्यम्

## [रामानन्दाचार्यविरचितम्]

### [मङ्गलाचरणम्]

सलीलमखिलं जलं चुलुकयेदयं वारिधेः
जगद्ग्रसितुमुल्बणं कवलयेच्च दावानलम् ।
हरेद्दशनतो हरेर्दशनकोटिमुद्यत्क्रुधो
यदीयकरुणाश्रयस्तमिह राममीशं श्रये ।। १ ।।
आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ।। २ ।।

### [गुरुवन्दनम्]

सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यं गुरुं नमाम्यहम् ।। ३ ।।
कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
छान्दोग्योपनिषदो हि भाष्यमानन्दसंज्ञकम् ।। ४ ।।

ननु 'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहीर्षया' इति वृद्धैः कथनात् काम्यनिषिद्धे कर्मणी वर्जनीये नित्यनैमित्तिके कर्मणी च कृत्वा मुमुक्षोः वर्तमानदेहानन्तरे पुनर्देहान्तरप्रतिपत्तिकारणाभावात् अनायासतो ज्ञानमन्तरेणापि मोक्षसिद्धौ कथं तादर्थ्येन उपनिषदारभ्यते इति चेत्, न । ब्रह्मात्मकत्वज्ञानादृते मोक्षप्राप्तेरसम्भवात् । तदुक्तम् 'अथ येऽन्यथातो विदुः अन्यराजानः ते क्षय्यलोका भवन्ति विपर्यये च स्वराड् भवति' । तस्मात् ब्रह्मज्ञानौपयिकं कर्माङ्गविषयकम् आदौ उपासनस्य उपदेशः एवम् विधीयते - **ओमित्येतत्** इत्यादि । **ओमित्येतदुपासीत** - ओङ्कारस्य उपासनं कुर्यात् । 'तस्य वाचकः प्रणवः' (यो.द. १-२७) इति पातञ्जलोक्तेः । 'ओम्' इत्येतदक्षरं परमात्मनः प्रियं नेदिष्ठम् अभिधानम् । **उद्गीथः** । उद्गीथभक्त्यवयवत्वात् उद्गीथशब्दवाच्यम् 'ओम्' इत्येतदक्षरम् उपासीत । कर्माङ्गावयवभूते परमात्मप्रतीके ओङ्कारे एकाग्रस्वरूपां बुद्धिमुत्पादयेत् । तत्र ओङ्कारस्य उद्गीथशब्दप्रतिपाद्यत्वे श्रुतिः स्वयमेव कारणं दर्शयति । **ओमिति ह्युद्गायति** । लोकेऽपि 'ओम्' इत्यारभ्यैव उद्गानं करोति ।

'तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्' ।। (भ.गी. १७-२४)

'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते' ।। (मनु.स्मृ. २-७४)

'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह' (तै.उ.शिक्षा.८) इत्यादिश्रुतेश्च । अतः ओङ्कारस्य उद्गीथावयवत्वात् उक्तशब्दवाच्यत्वं युक्तमेव इत्यर्थः । **तस्योपव्याख्यानम् । तस्य** - 'ओं'अक्षरस्य ओङ्कारस्य **उपव्याख्यानम्** - एवम्भूतमुपासनम्, एवं विभूतिः, एवम्भूतं फलम् इत्यादि कथनं प्रवर्तते इति शेषः ।

## सुबोधिनी

**[गोपालानन्दस्वामिविरचिता]**

**[मङ्गलाचरणम्]**

ओं नमः सर्वभूतानामादिमध्यान्तभूमये ।
अव्यक्तव्यक्तरूपाय विष्णवे परमात्मने ।। १ ।।
दृश्यते योऽन्तरादित्ये पुरुषोऽयं हिरण्मयः ।
पुण्डरीकं यथाऽस्याक्षि नमस्तस्मै विपाप्मने ।। २ ।।

इयम् उपनिषत् अष्टाध्यायी । यद्यपि इह आदिमो भागः कर्माङ्गभूतोद्गीथादिकम् अवलम्बते; अथापि तदुपासनपरतया विद्यात्वाविशेषात् तस्यापि उपनिषदि गणना । विद्यारूपत्वेऽपि कर्माङ्गविषयत्वात् पूर्वकाण्डेन सहैव तस्य परिगणना समुचिता, नोत्तरेण ब्रह्मकाण्डेन इति चेत् ; किमनौचित्यम् उत्तरकाण्डेन परिगणनायाम् । विद्यात्वाविशेषात् औचित्यमिति तु उक्तमेव । किं वा कर्माङ्गविषयतामात्रम् अस्य पूर्वकाण्डेन सह परिगणनायां विनिगमकम्, न हि उद्गीथस्येव उद्गीथोपासनस्य कर्मणि अङ्गता, यदङ्गनिरूपणभागस्य अङ्गिनिरूपणभागेन सह प्रकरणैक्यं स्यात् । श्रूयते हि अस्य कर्मणः पृथक् फलम् 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छां.उ. १-१-१०) इति । श्रूयते च कर्मस्वरूपनिष्पत्तेः उद्गीथाद्युपासननिरपेक्षता - 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छां.उ. १-१-१०) इति । अथाप्यानुरूप्यम् अस्य कर्मप्रकरण एव, फलतः कर्मभिः एव सारूप्यात् इति चेत् । किं तेन । विषयतः फलतो विभेदेऽपि अस्य ब्रह्मविद्यातः विद्येति स्वरूपे सारूप्यम् अस्तीति ब्रह्मविद्याप्रकरणे समावेशः समुचितः इत्युक्तमेव । किं वा न सन्ति उपनिषदन्तरेऽर्वाचीनफलकानि उपासनानि । कर्माङ्गविषयाण्यपि तानि ब्रह्मदृष्टिरूपाण्यपि विधीयन्ते इति च औचित्यमिह ।

प्रायो विषयः परस्य ब्रह्मणोऽभिधानम् इति च । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति हि श्रूयते । प्रणवो हि परस्य ब्रह्मणोऽभिधा । ननु स्यादेवं [1]अस्य अर्थस्तु [2]नेह लक्ष्यते कश्चित् । मैवम् । पदमाधाप्यते ह्यनेन विद्यायाम् । सहजतया सुकरेण बाह्येन्द्रियवृत्तिरूपेण कर्मणाऽभ्युदयं विन्दन् न प्रवर्तेत मनोवृत्तिविशेषरूपतया दुष्करायां विद्यायाम् । ब्रह्मविद्यायां तु सुतराम् । अधिकम् अभ्युदयम् उद्गीथविद्यायां चेत् विजानीयात्, कर्मनिष्ठोऽपि सान्निध्यात प्रयतेत तत्र । अधिगतविद्यारुचिः ततोऽपि प्रकृष्टायां विद्यायाम् इति पर्वक्रमेण समारोहणं हि सुकरम् । अपरं चैतत् - कर्मसमृद्ध्यर्थस्य अस्य अनभिसंहितफलकर्मद्वारा भवति उपयोगो ब्रह्मविद्यायाम् इति।

**अक्षरमुपासीत,** किं तदक्षरं **ओम् इत्येतत्** । एतेन अक्षरशब्दस्य अवयवार्थम् आश्रित्य परमात्मपरताश्रयणं व्युदस्तम् । **इत्येतत्** इति निर्देशो हि शब्दस्वरूपपरतां ज्ञापयति । यद्यपि इति परतामात्रेण तत्सिद्धिः ; अथापि 'ओमित्यात्मानं युञ्जीत' (महा.ना.उ. ६३) इत्यादाविव अक्षरं ओमिति उपासीत इत्यन्वयः। प्रसजेत् इति तद्व्यावृत्तये **एतदिति** । समभिव्याहारविशेषस्वाभाव्यात् अयमेतच्छब्दः श्रुतौ सन्निहितमेव उपस्थापयेत्, न तु यथाकथञ्चित् बुद्धौ । उपास्यं विशिनष्टि - **उद्गीथम्** इति। कथं प्रणवस्य उद्गीथत्वम् ? तत्र निमित्तं श्रुतिरेव आह - **ओमिति ह्युद्गायति** इति । उद्गाता ओमिति आरभ्य हि उद्गायति । उद्गीथावयवत्वात् उद्गीथः इत्युक्तम् इति यावत् । **तस्योपव्याख्यानम् -** उपास्यतया विहितस्य प्रणवस्य **उपव्याख्यानम् -** सन्निहितविवेचनम्, अपेक्षितविवेचनं क्रियते इति यावत् । उपासने प्रस्तुते कथमुपासनं कस्मै फलाय इति गुणविशेषफलविशेषाकाङ्क्षा हि भवेदेव ।।

**एषां भूतानां पृथिवी रसः, पृथिव्या आपो रसः, अपामोषधयो रसः, ओषधीनां पुरुषो रसः । पुरुषस्य वाक् रसः, वाचः ऋक् रसः, ऋचः साम रसः, साम्नः उद्गीथो रसः ।। २ ।।**

**प्र.दी. - एषाम्** इति। **एषां -** चराचराणां भूतानां, **पृथिवी रसः -** परायणम् । सर्वभूतानां पृथिव्याः आधारत्वात् इत्यर्थः । **पृथिव्या आपो रसः -** पृथिव्याः रसः आपः इति उच्यन्ते । **अपां -** उदकानां **रसः ओषधयः** इति उच्यन्ते । **ओषधीनां रसः पुरुषः** इति

---

१. अस्य - उद्गीथोपासनस्य ।

२. इह - ब्रह्मविद्याप्रकरणे ।

उच्यते । पुरुषशरीरस्य अन्नरसमयत्वात् इति यावत् । **पुरुषस्य रसः वाक्** वाचः इत्यर्थः । वाचाम् अत्युपकारकत्वेन पुरुषरसः वाक् इति उच्यते । **वाचः ऋग्रसः - वाचां रसः ऋक्** । ऋग्वेदः इति उच्यते। ऋग्वेदस्य गम्भीरार्थकत्वात् रसत्वम्। **ऋचः** - ऋग्वेदस्य **रसः साम** - सामवेदः, गीतिप्रधानत्वात् । **साम्नः** - सामवेदस्य **उद्गीथो रसः** - उद्गीथस्य श्राव्यत्वात् । उद्गीथस्य रसत्वं सामवेदस्य । अत्र उद्गीथशब्देन उद्गीथावयवभूतः ओङ्कारो लक्ष्यते ॥

**प्र. - एषां । एषां** - स्थावरजङ्गमात्मक **भूतानां पृथिवीरसः** - परायणम् । भूतानां पृथिव्याधारकत्वात् इति भावः । **पृथिव्या आपो रसः** । तस्याः [1]जलप्रकृतिकत्वात् इति[1] भावः । **अपामोषधयो रसः** । तत्परिणामत्वात् इति भावः । **ओषधीनां पुरुषो रसः** । अन्नपरिणामत्वात् शरीरस्य इति भावः । **पुरुषस्य वाग्रसः** । वाचोऽत्युपकारकत्वात् इति भावः । **वाच ऋग्रसः** । ऋचां गम्भीरार्थकत्वात् इति भावः । **ऋचः साम रसः** । गीतिसारत्वात् साम्नाम् इति भावः । **साम्न उद्गीथो रसः** । श्राव्यत्वात् सारः इत्यर्थः । अत्र उद्गीथशब्देन उद्गीथावयवः ओङ्कारः उच्यते ॥

**आ.भा.** - तदेव ओङ्कारस्योपव्याख्यानम् अनुवर्तयन् अक्षरात्मकौङ्कारस्य रसतमत्वादिगुणम् आधातुमाह - **एषाम्** इत्यादि । **एषां** - परिदृश्यमानानां **भूतानां** - स्थावरजङ्गमात्मकप्राणिनां **पृथिवी** - चराचराधारलक्षणा **रसः** - परायणम्, आधारः । सर्वेषां पृथिव्याधारत्वात् इति । **पृथिव्या आपो रसः** - पृथिव्याः जलप्रकृतिकत्वेन कार्यस्य कारणाश्रितत्वात् । **अपामोषधयो रसः** - जलपरिणामरूपत्वात् ओषधीनाम् । **ओषधीनां पुरुषो रसः** - अन्नजन्यत्वात् पुरुषशरीरस्य इति । **पुरुषस्य वाग्रसः** - पुरुषावयवानां हस्तपादादीनां मध्ये अतिशयेन उपकारकत्वेन सर्वावयवापेक्षया वाचो वाण्याः प्रधानतया वाक् पुरुषस्य रसः कथ्यते । **वाचो ऋग्रसः** - ऋचां गम्भीरार्थत्वेन वाचः सारतया ऋचो व्यपदेशो भवति । **ऋचः साम रसः** - साम्नो गीतिप्रधानत्वेन ऋचः सारतया तस्य साम्नः व्यपदेशो भवति । **साम्न उद्गीथो रसः** - साम्नाम् अपि रसः सारः - श्राव्यत्वात् सारः । अत्र सारतरतयोपात्तोद्गीथशब्देन उद्गीथावयवः 'ओङ्कारः' उच्यते । तेन सर्वापेक्षया 'ओङ्कारः' सारः इति ॥

---

1. जलप्राप्तिकत्वादिति - अ,आ ।

**सु.** - तत्रादौ उद्गीथे रसतमत्वं गुणं विधातुं रसान् उत्तरोत्तरं गरीयसो निर्दिशति **एषाम्** इति । **एषां** - दृश्यमानानां **भूतानां** - तरु-गुल्म-पशु-पक्षिप्रभृतीनां स्थावर-जङ्गमानां पृथिवी रसः। सा हि एषां प्रकृतिः प्रतिष्ठा निलयनं च । **पृथिव्या आपो रसः,** आपो हि पृथिव्याः तथा । **अपामोषधयो हि रसः,** ता हि तत्परिणतिविशेषः । **ओषधीनां पुरुषो रसः - पुरुषः** - शिरःपाण्यादिलक्षणपिण्डविशेषः, स हि ओषधीनां परिणतिविशेषः । **पुरुषस्य वाग्रसः,** विना वाचं पुरुषो हि शुष्यति अविन्दन् जीविकाम् । तदुच्यते **पुरुषस्य वाग्रसः** इति । **वाचः ऋग्रसः** - विद्यमानापि वाक् विहीना ऋचा नीरसा इति न मान्यते लोकैः । अतः उच्यते **वाचः ऋग्रसः** इति । **ऋचः साम रसः,** रस्यते हि साम्ना गीतिप्रधानेन ऋक् । **साम्नः उद्गीथः,** योऽयं प्रस्तुतः ओमिति उद्गीथः स प्रणवः साम्नोऽपि रसः। सामापि विना प्रणवेन न फलाय कल्पते, अफलं हि नीरसम् ।।

**['ओङ्कारः' रसतमः]**

**स एष रसानाँ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ।। ३ ।।**

**प्र.दी. - स** - पूर्वोक्तः **एषः** - उद्गीथावयवभूतः प्रणवः **रसानां रसतमः** - भूतादीनां उत्तरोत्तररसानां अतिशयितो रसः रसतमः इत्युच्यते । अत एव **परमः**- उत्कृष्टः, अस्मात् अधिकं नास्ति इत्यर्थः । **परार्ध्यः** - परस्य परमात्मनः अर्धं स्थानम् अर्हति इति परार्ध्यः । 'छन्दसि च' (पा.सू.५-१-६७) इति सूत्रेण अर्हार्थे यत्प्रत्ययः परब्रह्मवत् ओङ्कारस्यापि उपास्यत्वादिति यावत् । **अष्टमः अयं उद्गीथः** - उद्गीथावयवभूतः ओङ्कारः पृथिवीरसः अपो रस इत्यादिगणनायां कृतायां अयं 'ओङ्कारः' अष्टमः इति उच्यते ।।

**प्र. - स एषः......परमः । स एषः** - 'ओङ्कारः' रसतमः **परमः** - [1]भूतादीनाम्[1] उत्तरोत्तररसानाम् अतिशयितो रसः । इतोऽधिको रसो नास्तीत्यर्थः । **परार्ध्यः** - परस्य ब्रह्मणः **अर्धं** - स्थानम् अर्हति इति परार्ध्यः । 'छन्दसि च' (पा.सू. ५-१-६७) इति यत् । ब्रह्मवत् ओङ्कारस्यापि उपास्यत्वात् इति भावः । **अष्टमः** - अयम् उद्गीथः 'पृथिवी रसः पृथिव्या आपो रस' इति परिगणनायाम् अष्टमः इत्यर्थः। **यदुद्गीथः । यः** उद्गीथ इत्यर्थः ।।

---

1. भूतानाम् - अ,आ ।

**आ.भा. - स एषः -** सर्वत्र प्रसिद्धः उद्गीथावयवभूतः ओङ्कारः **रसानां रसतमः -** तत्र **रसानां** भूतादिसामपर्यन्तरसानां मध्ये **रसतमः -** उत्तरोत्तरम् अतिशयेन रसः । अत एव **परमः -** सर्वरसापेक्षया उत्कृष्टः । एतस्मात् अधिकः अन्यो रसो नास्तीत्यर्थः । **परार्ध्यः -** परस्य रामाख्यब्रह्मणः अर्धं स्थानम् अर्हति इति परार्ध्यः । वाच्यवत् वाचकस्य ओङ्कारस्यापि उपास्यत्वादिति । **अष्टमः -** अयम् उद्गीथावयवः ओङ्कारः अष्टमः । पृथिवी रसः तस्यापो रसः इति रसगणनायाम् अष्टमस्थानभागित्यर्थः ।।

**सु. - सः -** प्रथममन्त्रे उपास्यतया प्रस्तुतः **एषः -** अव्यवहितमन्त्रे साम्नः रसतया प्रोक्तः, **अष्टमोऽयम् ;** इदंशब्देन रसः परामृश्यते । पृथिव्यादिरसापेक्षया अष्टमरसत्वेन रूपितः, **उद्गीथः -** प्रणवलक्षणः, **रसानां रसतमः -** पृथिव्यादीनां **रसानां -** मध्ये अतिशयितो रसः । यत् इतो नान्यो **रसतमः -** तत् परमश्च अयम् । रसतमत्वेन उपास्यः इत्यत्र तात्पर्यम् । **परार्ध्यः -** यस्मात् अयं रसतमत्वेन उपास्यः, अत एव परस्य ब्रह्मणः अर्धं स्थानम् अर्हति इति परार्ध्यः उच्यते । इत्थं च परार्ध्यः इति महिमानुवर्णनम् ।।

[सर्वकामाप्तिगुणकः 'ओङ्कारः']

**कतमा कतमर्क् , कतमत् कतमत् साम, । कतमः कतम उद्गीथ इति विमृष्टं भवति ।। ४ ।।**

**प्र.दी. - कतमा** इति । **कतमा** सा **ऋक् कतमा** सा ऋक् ? द्विरुक्तिः आदरार्था । वाचो ऋग्रसः इत्युक्तं तत्रस्था सा ऋक् कतमा इत्यन्वयः । ऋचः साम रसः इत्यत्र तत् **साम कतमत् -** तत् साम कतमत् । साम्नः उद्गीथो रसः इति । साम्नः रसः उद्गीथः इत्युक्तम् । **सः उद्गीथः कतमः कतमः** इति। सर्वत्र द्विरुक्तिरादरार्था । **इति विमृष्टं भवति -** एवं विमर्शितो भवति ।।

**प्र. -** 'वाच ऋग्रसः, ऋचः सामरसः साम्न उद्गीथोरसः' इति ऋक्सामोद्गीथानां प्रस्तुतत्वात् [1]तानि[1] विमृशति **कतमा** इति । **कतमा कतमा** इति वीप्सा आदरार्था । [2]का ऋग्[2] इत्यर्थः । एवमुत्तरत्रापि **कतमत् कतमत् साम** इत्यादौ द्रष्टव्यम् । **इति विमृष्टं भवति ।** विमर्शः कृतो [3]भवतीत्यर्थः[3] ।।

---

1. तान् - अ,आ । 2. कतमा ऋक् - अ,आ । 3. प्राचीनैः विमर्शः कृतो भवतीत्यर्थः - अ,आ,क ।

**आ.भा. - कतमा कतमर्क् - ऋक् किं** स्वरूपा ? किं लक्षणा ? इति प्रश्नः । वाचः ऋक् रसः इति कथितम् । तत्र जिज्ञास्यते का इयम् ऋगित्यर्थः । वीप्सा आदरार्था द्रष्टव्या । एवं किमिदं साम ? कश्चासौ उद्गीथः ? इति प्रश्नः । यद्यपि ऋगादिजातिबहुत्वाभावात् 'डतमच्' प्रत्ययप्रयोगो न शोभते, तथापि जातौ परिप्रश्नः जातिपरिप्रश्नः इति एतस्मिन् विग्रहे जातौ ऋगादीनां बहुत्वोपपत्त्या डतमचनुपपत्त्यभावादिति । **इति विमृष्टं भवति** - विमर्शो, विचारः कृतो भवतीति मन्त्रार्थः ।।

**सु.** - अथ गुणान्तरविधानाय ऋगादीन् विमृशति - **कतमा** इति। **कतमा कतमा** इति आदरार्थे वीप्सा । प्रस्तुता ऋक् का ? ऋग्जातीया हि बह्व्यः, एवं प्रस्तुतं साम उद्गीथश्च कः? इति अन्यतमावधारणार्था जिज्ञासा इह विवक्षिता, 'डतमच्' स्वारस्यात् । **विमृष्टं भवति** - विमृष्टं विमर्शः, भावे क्तः। प्रस्तुतस्य विशेषप्रतिपत्तये जिज्ञासा विमर्शः ।।

[ओङ्कारः ऋक्सामभ्यां मिथुनरूपः]

**वागेवर्क् प्राणः साम, ओमित्येतदक्षरमुद्गीथः । तद्वा एतन्मिथुनम् , यद्वाक् च प्राणश्च, ऋक् च साम च ।। ५ ।।**

**प्र.दी. - वागेव** इति । विमर्शतो निष्पन्नार्थम् आह - ऋचः वागिन्द्रियव्यापारसाध्यत्वात् **वागेव ऋक्** इति उच्यते । **प्राणः साम** इति उच्यते । साम्नः प्राणनव्यापारसाध्यत्वात् प्राणः साम इत्युक्तं भवति । **ओमित्येतदक्षरं उद्गीथ** इति उच्यते । **यत्** - यस्मात्कारणात् **वाक्च प्राणश्च** - उभौ **एतत्** एकं **मिथुनं** - स्त्रीलिङ्गत्वात् वाचः स्त्रीत्वं, प्राणशब्दस्य पुल्लिङ्गत्वात् पुंस्त्वं प्राणस्य । उभौ मिथुनं भवति । **ऋक् च साम च** उभयोः पूर्ववत् मिथुनत्वम् । ऋचः स्त्रीलिङ्गत्वात् स्त्रीत्वं साम्नः पुंस्त्वं एतद्द्वितयं मिथुनमिति उच्यते । ओमिति एतदक्षरं उद्गीथः इत्युक्तं भवति। एतस्मिन् उद्गीथावयवे प्रणवे - द्वे मिथुने संसृज्यते इति वक्ष्यति, अग्रे इति शेषः ।।

**प्र.** - विमर्शनिष्पन्नम् अर्थम् आह - **वागेव - उद्गीथः** इति । ऋचो वागिन्द्रियोच्चारणसाध्यत्वात् **वागेव ऋक्** सामगानस्य प्राणनरूपश्वासधारणसाध्यत्वात् प्राणः एव साम । उद्गीथ भक्त्यवयवत्वात् ओमित्यक्षरमेव उद्गीथः इत्यर्थः । **तद्वा......प्राणश्च** ।

स्त्रीलिङ्गशब्दवाच्यतया वाचः स्त्रीत्वं प्राणस्य पुल्लिङ्गशब्दवाच्यतया पुंस्त्वम् इति भावः । **ऋक् च साम च ।** अत्रापि तदेतत् मिथुनमिति अनुषज्यते । उक्तरीत्या वाक्प्राणयोः मिथुनत्वेन तदभिन्नत्वेन ऋक्सामयोः अपि मिथुनत्वं द्रष्टव्यम् ।।

**आ.भा. -** विचारजन्यमर्थम् आह श्रुतिः **वागेव** इत्यादि । **वागेव ऋक् ।** या इयं वाक् सैव ऋक् । ऋचः वागिन्द्रियोच्चारणनिष्पन्नत्वात् । तथा सामगानस्य श्वासप्रश्वासात्मकप्राणधारणजनितत्वात् प्राणः एव साम । तथा **ओमित्येतदक्षरमुद्गीथः -** उद्गीथभक्त्यवयवत्वात् । ओमिति अक्षरमेव उद्गीथः इति भावः ।।

**सु. -** एवं विमर्शे कामाप्तिरूपं विशेषं श्रावयन् आह - **वागेव** इति । यद्यपि ऋग्जातीया बह्व्यः, परं तासु या काऽपि **ऋक् वागेव,** ऋचां वाक्साध्यत्वात् साध्ये साधनाध्यासः । **प्राणः साम** इत्यत्रापि एवमेव । **ओमित्येतदक्षरमुद्गीथः ।** उक्तात् अनधिकमपि इदं गुणान्तरप्रापकेऽस्मिन् वाक्यान्तरे अपेक्षितमेव । **तद्वा एतन्मिथुनं यद्वाक्च प्राणश्च ऋक्च साम च ।** वाग्रूपा ऋक् प्राणरूपः साम इत्येतदुभयम् एकं मिथुनम् इत्यर्थः । वाक्प्राणश्च इत्येकं मिथुनं, ऋक्साम च इत्यपरं मिथुनमिति न भ्रमितव्यम् । **वागेव ऋक् प्राणः साम** इति साध्यस्य साधनात्मता ह्यध्यस्ता ।।

**[मिथुनरूपस्य फलम्]**

**तदेतन्मिथुनम् ओमित्येतस्मिन्नक्षरे सँसृज्यते, यदा वै मिथुनौ समागच्छतः, आपयतो वै तावन्योन्यस्य कामम् ।। ६ ।।**

**प्र.दी. - तदेतत्** इति । **तत् -** पूर्वोक्तं **एतन्मिथुनद्वयं** वाक्प्राणरूपं ऋक्सामरूपं **ओमित्येतस्मिन् -** उद्गीथावयवे **अक्षरे -** ओङ्कारे **सँसृज्यते -** संसृज्येयाताम् । **यदा वै मिथुनौ,** पुंस्त्वं छान्दसम् । **समागच्छतः - आपयतो वै तावन्योऽन्यस्य कामम् -** यदा दम्पती मिथुनीभूतौ ग्राम्यधर्माय संसृज्येयातां तदा अन्योऽन्यस्य कामप्रापकत्वं प्रसिद्धम् । तथा च स्वात्मानं प्रविष्टेन मिथुनेन सर्वकामप्रापकत्वरूपगुणवत्त्वं प्रणवस्य सिद्धम् इत्यभिप्रायः । उद्गीथावयवभूतः 'ओङ्कारः' स्वसंसृष्टमिथुनेन उपासकानां सर्वकामफलप्रदः इति यावत् ।।

**प्र. - तदेतत् - संसृज्यते ।** ऋक्सामात्मकं तदेतत् मिथुनं ओमिति एतस्मिन् अक्षरे उद्गीथावयवभूते संसृज्यते । उद्गीथस्य ऋगारूढसामभक्तिरूपत्वेन ऋक्सामरूपतया उद्गीथावयवप्रणवस्य[1]ऋक्सामभ्यां[1] संसृष्टत्वात् तदात्मकमिथुनेन संसृष्टत्वम् इत्यर्थः। वाक्प्राणात्मकमिथुनाध्यासविशिष्टऋक्सामसंसृष्टतया उद्गीथावयवप्रणवोपासनं कर्तव्यम् इत्यर्थः ।

**यदा - कामम् ।** यदा दम्पती मिथुनीभूतौ ग्राम्यधर्माय संसृज्येयाताम् , तदा अन्योन्यकामप्रापकत्वं प्रसिद्धम् इत्यर्थः । मिथुनौ इति पुंस्त्वद्विवचने छान्दसे। ततश्च : ओङ्कारोऽपि [2]स्वसंसृष्ट[2]मिथुनेन कामप्रापकः इति भावः ।।

**आ.भा. - तदेतन्मिथुनं** - यत् वाक् च प्राणश्च । अत्र वाचः स्त्रीलिङ्गशब्दबोध्यतया स्त्रीत्वम् । प्राणस्य च पुल्लिङ्गशब्दप्रतिपाद्यतया पुंस्त्वम् । एवं ऋक् च साम च एतदपि मिथुनम् । तदेतत् मिथुनम् **ओमित्येतदस्मिन्नक्षरे** - अक्षरस्वरूप ओङ्कारे **संसृज्यते** - संबद्धयते। एवं सर्वकामावाप्तिगुणविशिष्टमिथुनम् ओङ्कारसम्बद्धं विद्यते । तस्मात् सर्वकामावाप्तिगुणवत्त्वं प्रसिद्धं भवति । **यदा** - यस्मिन् काले **वै** खलु **मिथुनौ समागच्छतः** - सम्मिलितौ भवतः तदा तौ अन्योऽन्यस्य कामम् **आपयतः** - प्रापयतः । यथा लोके मिथुनावयवौ स्त्रीपुरुषौ **समागच्छतः** - संयुज्येयातां तदा **आपयतः** - प्रापयतः, तदा तौ द्वौ परस्परस्य कामं प्रयच्छतः । तथा च स्वावयवप्रविष्टेन मिथुनेन सर्वकामावाप्तिगुणवत्त्वम् ओङ्कारस्य प्रसिद्धं भवति इति ।।

**सु.** - ननु किमायातं मिथुनभावनायां ? तदुच्यते । **तदेतन्मिथुनं** - वाक्प्राणरूपं ऋक्सामात्मकं मिथुनं संसृज्यते । क्व संसृज्यते ? विभक्ते एव ऋक्सामनी वाक्प्राणौ वा ? तदुच्यते - **ओमित्यस्मिन्नक्षरे** इति । प्रणवस्य वाक्साध्यतया प्राणसाध्यतया च तस्मिन् अंशे वाक्प्राणाख्यमिथुनस्य संसर्गो भवति इति भावः ।

परे तु ऋगारूढसामभक्तिरूपत्वेन उद्गीथस्य उद्गीथावयवे प्रणवे ऋक्सामात्मकमिथुनस्य संसर्गः अस्तीति तदभिन्नतया भाव्यमानस्य वाक्प्राणात्मकमिथुनस्यापि तत्र संसर्गो बोध्यः इत्याहुः ।

---

1. ऋक्सामाभ्यां - अ - आ । 2. स्वात्मसंसृष्ट - अ - क । स्वात्मना संसृष्ट - आ ।

स्यात् अस्य मिथुनस्य क्वचित् संसृष्टिः, किं तेन प्रकृते इत्यत्राह - **यदा वै मिथुनौ समागच्छतः, आपयतो वै तावन्योन्यस्य कामम्** । लोके स्त्रीपुंसौ ग्राम्यधर्माय मिथः सङ्गच्छतः तदाऽन्योन्यस्य कामं प्रापयतः, प्रसिद्धमेतत् । अनेन दृष्टान्तनिरूपणेन दार्ष्टान्तिके कामप्रापकत्वं ज्ञापितं भवति । अयं भावः - लोके मिथुनं मिथः संसृष्टम् अन्योन्यस्य काममिव वाक्प्राणात्मकं मिथुनम् ओमिति अक्षरे संसृष्टं सत् ये वाग्रूपायाः ऋचः कामाः ये च प्राणरूपस्य साम्नः कामाः तान् सर्वान् कामान् सम्पादयति इति । एतेन ऋक् सम्बद्धकर्मनिष्पाद्यसकलफलसाधनत्वं सामसम्बद्धकर्मनिष्पाद्यसकलसाधनत्वं च प्रणवे अस्तीति कामाप्तिसाधनत्वरूप-गुणविशेषान्तरम् अनेन निरूपितं भवति ।।

**[उद्गीथोपासनस्य फलम्]**

**आपयिता ह वै कामानां भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ।। ७ ।।**

**प्र.दी. - आपयिता** इति । **यः** - उपासकः उद्गाता **एतत्** - अक्षरं, सर्वकामप्रापकं **उद्गीथं** - उद्गीथावयवभूतं अक्षरं - ओङ्कारं **विद्वान्** - जानन् **उपास्ते** - उद्गीथोपासनं करोति सः उद्गाता, यजमानस्य इति शेषः । **कामानां** - सर्वकामानां **आपयिता ह वै** - प्रापकः इत्यर्थः ।।

**प्र.** - तदुपासकोऽपि उद्गाता स्वोपास्यौङ्कारवत् यजमानकामप्रापकः इत्याह **आपयिता उपास्ते** । [1]कामाप्त्यादि[1] विशिष्टोद्गीथावयवोपासनस्य यजमानगतकामाप्तिः एव फलमित्यर्थः ।।

**आ.भा.** - उद्गीथावयवौङ्कारस्य उपासकोऽपि उद्गाता ओङ्कारधर्मा भवति । तत्राह - **आपयिता** इत्यादि । ओङ्कारस्योपासकः **आपयिता ह वै कामानां** यजमानस्य भवति । **यो विद्वान्** उद्गाता **एतदक्षरं** - ओङ्कारमेव **एवं** अवाप्तिगुणम् **उद्गीथमुपास्ते** - उद्गीथोपासनं करोति तस्य एतद्यथोक्तं फलं भवति । कामाप्त्यादिविशिष्टोद्गीथावयवोपासनस्य यजमानगतकामप्राप्तिः एव फलं भवति इति भावः ।।

---

1. कामाप्त्य - अ ।

**सु.** - उक्तगुणविशिष्टतया उद्गीथोपासनस्य फलमाह - **आपयिता** इति । यो विद्वान् एतदक्षरम् उद्गीथं एवं कामाप्तिगुणवत्तया उपास्ते, स यजमानस्य कामानां प्रापयिता ह्येव भवति । **वै**शब्दोऽवधारणे । **ह**ेति प्रसिद्धौ । 'प्रसिद्धिश्च तं यथा यथा उपासते तदेव भवति' इति (शत.ब्रा. १०-६-२-२०) श्रुतिसिद्धा ।।

**तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदा हैषो एव समृद्धिर्यदनुज्ञा समर्द्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ।। ८ ।।**

**प्र.दी.** - **तद्वा** इति । **तद्वै** - पूर्वोक्तं ओङ्काराक्षरं **अनुज्ञाक्षरं** लोके **यद्धि** किञ्चित् ओमिति अनुजानाति अनुज्ञां प्रयच्छन् पुरुषः **ओमित्यनुजानाति** - ओमितिशब्देन अनुज्ञां प्रददाति । **एष उ एव** । उशब्दः प्रसिद्धौ । **एषः** - ओङ्कारः समृद्धिगुणवान् **यत्** - यस्मात् **अनुज्ञाप्रदः**, तस्मात् सर्वकामानां यजमानस्य समर्थयिता, **ह वै** - ह वै इति प्रसिद्धिः । **यः** - उद्गीथः **एतदेवं विद्वान्** इति एतदक्षरं ओङ्कारं एतादृशसमृद्धिमत् इति **उपास्ते** - सः ओङ्कारः यजमानस्य सर्वकामसमृद्धिं करोति ।।

**प्र.** - **तद्वा एतदनुज्ञाक्षरम्** । ओङ्कारः अनुज्ञाक्षरमित्यर्थः । तदेव उपपादयति **यद्धि......तदाह** । [1]लोके हि[1] अनुज्ञां प्रयच्छन् पुरुषः ओमिति अनुजानाति इत्यर्थः । **एषो......ज्ञा** । उशब्दः [2]प्रसिद्धौ[2] । लोके [3]समृद्धिमान्[3] हि 'ओम्' इति अनुज्ञां प्रयच्छति । अतः अनुज्ञारूपस्य ओङ्कारस्य समृद्धिमूलत्वात् अनुज्ञारूपः ओङ्कारः एव समृद्धिः इत्यर्थः । एवं समृद्धिगुणविशिष्ट - ओङ्कारोपासनस्य फलमाह - **समर्द्धयिता......उपास्ते** इति । यजमानस्य कामसमृद्धिं करोति इत्यर्थः ।।

**आ.भा.** - सोऽयम् 'ओङ्कारः' समृद्ध्यादिगुणवान् अपि, तत्राह - **तद्वेत्यादि** । **तद्वा एतदनुज्ञाक्षरम्** । अयम् ओङ्कारः अनुज्ञाक्षरमित्यर्थः । तदेव दर्शयति । **यद्धीत्यादि** । **यद्धि किञ्च** - लोके यत्किञ्चित् धनं ज्ञानादिकं वा अनुजानाति धनी विद्वान् वा तत्र अनुज्ञामतिं कुर्वन् पुरुषः **ओमित्येव तदाह** - ओमिति अनुजानाति इत्यर्थः। तथा च लोकेऽपि तव इदं धनादिकं गृह्णामि इत्युक्ते ओमिति आह । अतः **एषा उ एव समृद्धिर्यदनुज्ञा** - लोके

---

1. लोके - अ,आ । 2. एषा उ इति पदच्छेदः - अ,आ । 3. समृद्धो - अ,आ ।

फलं दर्शयति - **समर्द्धयिता** इत्यादि । समर्द्धयिता ह वै यजमानस्य कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथम् उपास्ते इति ।।

**सु.** - अथ एतस्मिन् गुणान्तरं तद्विशिष्टतया उपासनस्य फ़लविशेषं चाह - **तद्वा एतदिति । तदेतत्** - यदुपास्यतया प्रस्तुतम् ओमिति एतत्, **अनुज्ञाक्षरम् ।** कथम् एतत्? धनम् अन्यद्वा यत्किञ्च परेण प्रार्थितः स्वामी तदनुजानन् ओमित्येव हि आह तदा तदनुज्ञापरत्वात् अनुज्ञाक्षरत्वम् अस्य सुप्रसिद्धम् इति भावः । अनुज्ञाक्षरत्वेन सिद्धं गुणमाह - **एषो एव समृद्धिरिति ।** एषा उ इति पदच्छेदः । उशब्दः प्रसिद्धौ । अनुज्ञा इति यत् एषैव समृद्धिः । न ह्यसमृद्धः पुरुषो वसनम्, अशनम्, अन्यद्वा परेण प्रार्थितः अनुजानाति । साध्ये साधनारोपः । **यो विद्वान् एतदक्षरमुद्गीथं एवं** समृद्धिगुणविशिष्टतया **उपास्ते** सः यजमानस्य **कामानां समर्धयिता** समृद्धिसम्पादकः भवति । यद्यपि तत्तद्गुणविधानावसरे तत्तद्गुणविशिष्टतया उपासनस्य फलं पृथक्पृथक् श्रूयते, न एतावता उपासनभेदविवक्षा, उपासीत इत्यादौ एकत्रैव विधिश्रवणात्, वाक्यभेदकल्पनाया अन्याय्यत्वात् । अनेकगुणविशिष्टैकोपासनेन एकेनापि उपास्यतावच्छेदकगुणवैविध्यानुगुणफलवैविध्यस्य सम्भवात् ।।

**[ओङ्कारस्य स्तुतिः]**

**तेनेयं त्रयी विद्या वर्तते, ओमित्याश्रावयति, ओमिति शँसति, ओमित्युद्गायति एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ।। ९ ।।**

**प्र.दी.** - उपास्यभूत ओङ्कारं स्तौति - **तेनेयम्** इति । **तेन** - प्रकृतेन उद्गीथावयवभूतोङ्कारेण **इयं विद्या त्रयी** - ऋग्यजुस्सामवेदप्रतिपादितं कर्म प्रवर्तते । तदेव उपपादयति । **रसेन महिम्ना** - सारभूतमहिमायुक्तस्य **एतस्यैवाक्षरस्य** - ओङ्कारस्य **अपचित्यै** - पूजार्थं **ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायति** - ओङ्कारपूर्वकश्रावणशंसनोद्गानानि कुर्वन्ति ।।

**प्र.** - उपास्यम् ओङ्कारं प्ररोचनार्थं स्तौति - **तेनेयं** इत्यादिना । **तेन** - प्रकृतेन **उपास्येन** औङ्कारेण **त्रयी विद्या**[1] - त्रयीविहितं कर्म प्रवर्तते इत्यर्थः । तदेव उपपादयति -

---

१. त्रयीति - आश्रवणे शंसने उद्गीथे चाध्वर्योर्होतुरुद्गातुश्च क्रमेण कर्तृत्वात् तत्तद्वेदरूपत्रय्याः प्रणवाधीना वृत्तिरिति ।

**ओमिति——उद्गायति ।** ओङ्कारपूर्वकत्वात् आश्रावणशंसनोद्गानानाम् इत्यर्थः । किमिति ओङ्कारपूर्वकमेव आश्रावणादिकं क्रियते इत्यत्राह - **एतस्यैव रसेन । रसेन** - सारभूतेन **महिम्ना** - माहात्म्येन युक्तस्य **एतस्य** - ओङ्कारलक्षणस्य अक्षरस्य **अपचित्यै** - पूजार्थम् इत्यर्थः ।।

**आ.भा.** - उपास्यस्य ओङ्कारस्य प्ररोचनार्थं स्तुतिं करोति - **तेनेयम्** इत्यादि । **तेन** प्रक्रान्तेन उपास्येन ओमित्याकारकाक्षरेण । **इयं** - प्रत्यक्षसन्निहिता **त्रयीविद्या** ऋग्यजुः सामलक्षणा । वेदप्रतिपाद्यं कर्म **वर्तते** - प्रवर्तते भवति इत्यर्थः । एतदेव दर्शयति - **ओमित्यादि । ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति** उद्गाता । आश्रावणशंसनोद्गानानाम् ओङ्कारपूर्वकत्वादित्यर्थः । कथम् ओङ्कारपूर्वकमेवाश्रवणादिकं करोति । तत्राह - **एतस्यैव** इत्यादि । **रसेन** - सारभूतेन **महिम्ना** - माहात्म्येन **युक्तस्य एतस्य** - ओङ्कारस्वरूपस्य अक्षरस्य **अपचित्त्यै** - पूजार्थं सोमयागादिकं कर्म क्रियते इति ।।

**सु.** - अथ स्तूयते प्रणवः प्ररोचनाय तदुपासने । **इयं त्रयी विद्या** - ऋग्यजुःसामरूपा, **तेन** - प्रस्तुतेन प्रणवेन, **वर्तते** - स्थितिम् आप्नोति; तदुपलक्षितैव सती तत्र तत्र अध्ययनमुखेन वर्तत इति यावत् । स्मर्यते च -

"ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यते ।।" (मनु.स्मृ. २-७४)

इति । वैदिकं कर्मापि अनेनैव वर्तत इत्याह **ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति ।** यदा श्रवणादि सोमयागे तदा ओङ्कारपूर्वकमेव प्रवर्तते । परे तु - **त्रयीविद्यां** इत्यनेन वैदिकं कर्म लक्ष्यते, प्रणवेनैव वैदिकं कर्म वर्तते इत्यर्थः; तदिदम् उपपाद्यते ओमिति आश्रावयति इत्यादिना इत्याहुः । आश्रावणादीनाम् ओङ्कारपूर्वकत्वनियमे निमित्तमाह - **एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन** इति । प्रणवस्य ह्ययं महिमा त्रय्या रस इति । स्मर्यते च तथा -

"अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरबृहत् भूर्भुवःस्वरितीति च ।।" (म.स्मृ. २-७६)

इति **तेन महिम्ना** हेतुना **एतस्यैवाक्षरस्यापचित्यै** - पूजार्थं ओमिति आश्रावयति ओमिति शंसति, ओमिति उद्गायति ।।

[उद्गीथविद्याफलं वीर्यवत्तरत्वम्]

**तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद ; नाना तु विद्या चाविद्या च ; यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवति ।। इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ।। १० ।।**

**।। इति प्रथमः खण्डः ।।**

**प्र.दी. -** उद्गीथावयवभूतप्रणवाख्याक्षरज्ञानवता एव कर्म कर्तव्यम् इति प्राप्ते यस्तु अक्षरयाथात्म्यं वेद यश्च न वेद उभाभ्यां कर्म कर्तव्यम् इत्याह - **तेनोभौ कुरुत** इति । **यश्च -** प्रणवोपासकः **एतत् -** अक्षरं, उद्गीथावयवप्रणवस्य सर्वकामप्रदत्वादिरूपम् अर्थम् **एवं -** पूर्वोक्तप्रकारेण **वेद -** जानाति यश्च न वेद पूर्वोक्तमर्थं न जानाति तौ **उभौ -** उभाभ्यां कर्म कर्तव्यम् । यस्मात् उद्गीथविद्या **नाना तु -** नानाविधा, सर्वकामफलप्रदत्वादिभेदेन **विद्या चाविद्या च** इति । यदुपासनं **विद्यया -** ब्रह्मज्ञानसहितस्सन् **करोति -** तत् वीर्यवत्तरं भवति । यदुपासनं - **श्रद्धया -** आस्तिक्यबुद्ध्या युक्तस्सन् करोति **उपनिषदा -** ब्रह्मज्ञानयोगेन युक्तश्च करोति कर्म **तदेव वीर्यवत्तरं भवति ।** अतः अविदुषः कर्मण्येव अधिकारं नास्ति इत्यर्थः। विद्वत्कृतकर्मणः वीर्यवत्तरत्वम् इति यावत् । रसतमाप्तिसमृद्धिरूपः अनेकैः विशेषणैः अनेकधा उपास्यत्वात् **खल्वेतस्यैव -** प्रकृतस्य उद्गीथाख्यस्य ओमित्यक्षरस्य **उपव्याख्यानं भवति -** अनेकप्रकारेण उपासनं भवति ।।

**प्र. -** [1]ननु अनेवंविद्भिरपि[1] कर्मणः अनुष्ठीयमानत्वदर्शनात् विद्यावैयर्थ्यम् इत्याशंक्य, सत्यं, विद्वद्भिः अविद्वद्भिः अपि लोके ओङ्कारेण कर्मानुष्ठीयते - [2]तथाऽपि[2] विद्याविद्ये विलक्षणफले ; विद्यया क्रियमाणं हि कर्म वीर्यवत्तरं भवति; अतादृशं तु न तथा इत्याह - **तेनोभौ** इत्यादिना । **नाना तु** विलक्षणफले इत्यर्थः । **यदेव ;** कर्म इत्यर्थः । **विद्या -** उपासनम् । **श्रद्धा -** आस्तिक्यबुद्धिः । उपनिषच्छब्देन उपनिषज्जन्यं ब्रह्मात्मकत्वज्ञानमुच्यते । कर्मणः वीर्यवत्तरत्वं नाम [3]प्रबलकर्मान्तरा - प्रतिबद्धफलकत्वम्[3] ।।

**इति...... भवति ।** रसतमत्व-कामाप्ति-समृद्धि-गुणकत्वादिभिः उक्तप्रकारैः विशिष्टम् अभिहितम् उपासनं सर्वमेतत् अक्षरविषयकमेव इत्यर्थः । ततश्च उपास्यभेदशङ्का न कार्या इति भावः ।।

एतत्खण्डान्तर्गतवाक्यविषयाणि अधिकरणानि उपन्यस्यन्ते -

---

1. ननु एवं अविद्वद्भिरपि - अ,आ । 2. अथापि - अ,आ । 3. फलत्वम् इति - अ,आ ।

अङ्गपादे - 'स एष रसानां रसतमः परमः पराध्योऽष्टमो यदुद्गीथः' इत्येवं जातीयकानां [1]वाक्यानाम्[1], 'इयमेव जुहूः, स्वर्गो [2]लोक[2] आहवनीयः' इत्यादिवाक्यवत् स्तावकत्वमेव, न तु रसतमत्वादिलक्षणोपास्यगुणसमर्पकत्वम् । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति न उपासनं विधीयते । [3]उद्गीथविधि[3] सिद्धानुष्ठानौपयिकज्ञानसामान्यवाची हि उपासनशब्दः । अतोऽनुवाद एव । ततश्च रसतमत्वादिवाक्ये समभिव्याहृतविध्यभावेन तदेकवाक्यतया स्तावकत्वाभावेन [4]उद्गीथपदो[4] पस्थापि[5]तक्रतु[5] प्रकरणगत - उद्गीथविध्येकवाक्यतया एव रसतमादिवाक्यानां स्तावकत्वम् । न च स्तावकवाक्यानां स्तुत्यविधिसमभिव्याहारनियमोऽस्ति । "एतद्ब्राह्मणान्येव पञ्चहवींषि, यद्ब्राह्मणानीतराणि" इति अतिदिष्टार्थवादेषु व्यभिचारात् । अस्तु वा "उद्गीथमुपासीत" इति उपासनविधिः ; तदेकवाक्यता च [6]रसतमत्वा[6] दिवाक्यानाम् - तथाऽपि रसतमादिवाक्यानां न उपासनविषयसमर्पकत्वेन एकवाक्यत्वम् , "ओमित्येतदक्षरम्" इत्यनेनैव उपास्यस्य लाभात् । अपितु उपास्योद्गीथस्तावकत्वेनैव ; [7]उपास्योद्गीथमादाय[7] स्तुतिमात्रस्य उपलम्भात् इति 'स्तुतिमात्रमुपादानादिति चेत्' (ब्र.सू. ३-४-२१) इति 'सूत्रखण्डेन पूर्वपक्षं कृत्वा', 'नापूर्वत्वात्' इति सूत्रखण्डेन च, 'भावशब्दाच्च' (ब्र.सू.३-४-२२) इति सूत्रेण च सिद्धान्तः कृतः ।

अयमर्थः - उद्गीथे रसतमत्वादीनां मानान्तराप्राप्तत्वेन अनुवादमुखेन [8]स्तुत्यसम्भवात्[8] ; 'इयमेव जुहूः' इत्यादौ जुहूविधेः सन्निहिततया तदेकवाक्यत्वेन तत्स्तावकत्व सम्भवेऽपि क्रतुप्रकरणगतोद्गीथविधेः असन्निहिततया तदेकवाक्यत्वाभावात् ; 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवत् तदेकवाक्यताकल्पकवचनान्तराभावात् । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति सन्निहिते [9]विस्पष्ट[9] विधिप्रत्यययुक्ते क्रियावाचिनि भावशब्दे विद्यमाने तदेकवाक्यताम् अनादृत्य क्रतुप्रकरणगतोद्गीथविध्येकवाक्यताकल्पनस्य अन्याय्यत्वात् ।

[10]ननु[10] सन्निहितोपासनविध्येकवाक्यत्वेऽपि उपास्योद्गीथस्तावकत्वेनैव रसतमादिवाक्यानाम् एकवाक्यताऽस्तु; न तु उपास्यसमर्पकत्वेन इति चेन्न; उपासनविषयसमर्पकतया प्रवृत्तिविशेषकरत्वे सम्भवति व्यर्थप्रायस्तुतित्वकल्पनायाः

---

1. वाक्यानाम् - इति पदं नास्ति - अ । 2. स्वर्लोको - क । 3. समर्पकम् - अ,आ । 4. उद्गीथशब्दो - अ । 5. तत्क्रतु - अ । 6. रसतमादि - आ । 7. उपादाय - क । 8. स्तुत्यसम्भवादिति - अ,आ । 9. विशिष्ट - क । 10. न तु - अ,आ ।

[1]अयुक्तत्वात्[1] । अतः रसतमत्वादिकमपि उपास्यमेव । [2]ततश्च[2] रसतमत्वादिविशिष्टया एव उद्गीथोपासनं कर्तव्यं [3]तत्तत्फलार्थिभिः इति[3] स्थितम् ।

तथा - 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादौ निर्विशेषसामान्येन व्यवहारासम्भवात् विशेषाकाङ्क्षायां तत्तच्छाखागतानामेव उद्गीथंव्यक्तीनां सन्निहितत्वात् तन्मात्रविषयत्वमेव [4]उद्गीथश्रुतेः[4] युक्तम् । ततश्च ताण्डिशाखागतरसतमत्व-कामाप्ति-हिरण्मयपुरुष-आकाशादिदृष्टिविशिष्टोपासने ताण्डिशाखागतोद्गीथव्यक्तेरेव क्रतुमध्यप्रयुक्तायाः उपास्यत्वम्, न तु शाखान्तरगतोद्गीथव्यक्तेः । न च [5]सर्वशाखागतोद्गीथानाम्[5] ऐक्यं शंक्यम् - स्वरादिभेदेन उद्गीथव्यक्तीनां भिन्नत्वात् । न च उद्गीथश्रुतेः [6]संकोचलक्षणबाधप्रसङ्गः[6] इति वाच्यम् - शुक्लपटमानय इत्यादौ पटशब्दस्य व्यक्तिविशेषार्थकत्वेऽपि,

"जातिव्यक्ती गृहीत्वेह वयं तु [7]श्रुत[7] लक्षिते ।
[8]कृष्णादि[8]यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते" ।। (श्लो.वा.३४८)

इति [9]न्यायेन[9]श्रुत्यर्थभूतायाः पटत्वजातेः, लक्ष्यायाः व्यक्तेश्च अपरित्यागेन [10]पटश्रुत्यबाधः[10] इत्युक्तरीत्या उद्गीथश्रुतेरपि अबाधात् तत्तच्छाखागतोद्गीथमात्रविषयत्वमेव - इति पूर्वपक्षे प्राप्ते,

उच्यते - 'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' (ब्र.सू. ३-३-५३) तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः । उद्गीथाद्यङ्गावबद्धाः उपासनाः तत्तच्छाखागंतोद्गीथव्यक्तिषु एव न व्यवतिष्ठेरन् । अपितु प्रतिशाखं संबध्येरन् । शुक्लं पटमानय इत्यादौ शुक्लपदसमभिव्याहारान्यथानुपपत्त्या विशिष्टैकार्थप्रत्यायनाय अविशेषप्रवृत्तश्रुतेः पीडनेऽपि प्रकृते तादृशबाधकाभावेन अविशेषप्रवृत्तोद्गीथश्रुतेः सन्निधिमात्रेण [11]संकोचाभावात्[11] शाखान्तरगतः [12]क्रतु[12] मध्ये प्रयुज्यमानः उद्गीथः शाखान्तरोक्तोपासनप्रकारेणापि उपास्य इत्यर्थः ।

'मन्त्रादिवद्वाऽविरोधः' (ब्र.सू. ३-३-५४) । शाखान्तराम्नातानां मन्त्रादीनां शाखान्तराम्नातक्रतुसम्बन्धवत् शाखान्तरगत उपासनानामपि शाखान्तरगतोद्गीथसम्बन्धे विरोधाभावात् इति स्थितम् ।

[13]तथा[13] गुणोपसंहारपादे 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिना विहितानाम् अङ्गावबद्धोपासनानाम् अव्यभिचरितक्रतुसम्बन्धिजुहूपस्थापित क्रतुफलनिराकाङ्क्षपर्णतादिवत्

---

1. अन्याय्यत्वात् - ख । 2. ततः - अ । 3. तत्तत्फलाभिसन्धिभिरिति - अ,आ ।
4. उद्गीथः श्रूयते - अ,आ । 5. उद्गीथव्यक्तीनाम् - अ । 6. बाधाप्रसङ्ग - अ,आ ।
7. श्रुति - क । 8. क्लृप्त्यादि - क । 9. इत्युक्तन्यायेन - अ,आ,क । 10. श्रुत्याबाध - अ ।
11. सङ्कोचासम्भवात् - अ,आ,ख । 12. कृति - अ । 13. अथ - अ,आ ।

अव्यभिचरितक्रतुसम्बन्धि उद्गीथोपस्थापितक्रतुफलेनैव नैराकाङ्क्ष्यात्, 'तदेव वीर्यवत्तरं भवति' इति वीर्यवत्तरत्वादिश्रवणानाम् अर्थवादत्वात् व्रीहिप्रोक्षणपर्णतादिवत् अङ्गत्वात् उपासनानि क्रतौ नियमेन उपादेयानि इति पूर्वपक्षे प्राप्ते - उच्यते । 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' (ब्र.सू. ३-३-४१) । निर्धारणं [1]निश्चयेन मनसोऽवस्थापनम्,[1] ध्यानम् इत्यर्थः। तस्य उपासनस्य अनियमः नियमेन अननुष्ठानम्, 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद'इति अनियमदर्शनात्; तस्य उपासनस्य प्रबलकर्माप्रतिबन्धरूप-वीर्यवत्तरत्वलक्षणफलान्तरवत्त्वेन कर्माङ्गत्वाभावात् इत्यर्थः । अयं भावः पर्णतोदुम्बरत्वादिस्थले विधिविभक्त्यश्रवणात् अर्थवादेनैव विधिशक्तिम् उपजनय्य पुनः तेनैव फलसमर्पणे विरम्यव्यापारात् वाक्यं भिद्येत । उपासनायां तु विस्पष्टविधिश्रवणात् न फलविधित्वे वाक्यभेदशंका । अतः पर्णतोदुम्बरतादिविध्यपेक्षया उपासनविधेः वैषम्यात् फलविधित्वं सम्भवतीति । इति स्थितम् ।

तथा अङ्गपादे - मुक्तिव्यतिरिक्तफलकोपासनानाम् उद्गीथविद्यारहितयज्ञादि कर्मनिष्पाद्यानामपि यज्ञादिरूपसाधननिष्पत्तौ सत्यां विलम्बे हेत्वभावात् इह जन्मन्येव निष्पत्तिरिति पूर्वपक्षे प्राप्ते - उच्यते । 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' (ब्र.सू.३-४-५०) । मुक्तिव्यतिरिक्तफलकम् उपासनं अप्रस्तुतप्रतिबन्धेप्रतिबन्धाभावे ऐहिकंइहैव जन्मनि सम्भवति । सतिप्रतिबन्धे जन्मान्तरे । न च प्रतिबन्धासम्भवः शंकनीयः, 'यदेव विद्यया करोति श्रद्धया उपनिषदा तदेव वीर्यवत्तरं भवति' इति उद्गीथविद्यायाः प्रबलकर्मान्तराप्रतिबद्ध-फलत्वावेदनेन प्रबलकर्मान्तरप्रतिबन्धस्य अनुज्ञातत्वात् । न च '[2]तमेतं[2] वेदानुवचनेन ब्राह्मणाः विविदिषन्ति' (बृ.उ.६-४-२२) इति [3]यज्ञादेर्वेदन[3] साधनत्वश्रवणात् कारीर्यभिचारादिवत् नियतैहिकत्वमेव किं न स्यादिति वाच्यम् - शुष्यच्छालिसम्पत्ति-वैरिविशेषविपत्तिफलकत्वेन विहितानां तेषां नियतैहिकत्वेऽपि विद्यासाधनयज्ञादिकर्मणां तज्जन्मनि विद्योद्देशेन अविहिततया पश्वादिफलकचित्रेष्ट्यादिवत् नियतैहिकत्वाभावात् । पूर्वतन्त्रे चतुर्थाध्याये योगसिद्ध्यधिकरणे तथा निर्णीतत्वात् इति स्थितम् ।।

तथा तदुत्तराधिकरणे - 'यक्षानुरूपो बलिः' इति न्यायेन बलवत्कर्मसाध्यानां मुक्तिफलकब्रह्मोपासनानां प्रबलकर्मान्तरप्रतिबन्धासम्भवात् नियतैहिकत्वमेव इति पूर्वपक्षे प्राप्ते - उच्यते, 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः' (ब्र.सू.३-४-५१) मुक्तिफलकविद्यानामपि ऐहिकत्वनियमो नास्ति, अप्रस्तुतप्रतिबन्धत्वरूपावस्थायाः विशेषेण

---

1. मनस्संस्थापनम् - क । 2. तमेवं - अ,आ । 3. विधि - अफलविधित्वेऽपि - क ।

तत्रापि अवधृतत्वात् । तत्रापि प्रबलानां ब्रह्मविदपचारादिप्रतिबन्धकानां सम्भवात् । [1]द्विरुक्तिरध्यायपरिसमाप्त्यर्था[1] । प्रकृतमनुसरामः ।।

**आ.भा.** - अथ अविद्वानपि कर्म करोति इति निरर्थिका विद्या इति चेत् । यद्यपि विद्वान् अविद्वांश्च लोके कर्म करोति ओङ्कारेण तथापि विद्याविद्ये परस्परं विलक्षणफलवत्यौ । विद्यापूर्वकं क्रियमाणं कर्म वीर्यवत्तरं भवति । अविद्यापूर्वकं तु न वीर्यवत्तरं भवति इति आशयेनाह - **तेनोभौ** इत्यादि । **तेन** - अक्षरेण **उभौ** - यो हि एतदक्षरं यथाव्याख्यातं जानाति **यश्च** - कर्ममात्रविद् अक्षरयाथार्थ्यं न जानाति तौ उभौ **कुरुतः** - सम्पादयतः कर्म । **नाना तु विद्या चाविद्या च** । तत्र नानाविलक्षणफले इत्यर्थः । **यदेव** - कर्म **विद्यया** - उपासनया **करोति** - सम्पादयति । **श्रद्धयोपनिषदा** । तत्र **श्रद्धा** - आस्तिक्यबुद्धिः । अत्र उपनिषच्छब्देन उपनिषज्जनितं ब्रह्मात्मकत्वज्ञानं कथ्यते । ततश्च विद्यादिभिः सहितं यदेव कर्म क्रियते तदेव कर्म वीर्यवत्तरं भवति । प्रबलकर्मान्तरेणापि प्रतिबद्धफलकं न भवतीति । **इति** - एवं प्रकारेण । **खलु** - इति निश्चये । **एतस्याक्षरस्य** - ओङ्कारस्य **उपव्याख्यानं** - माहात्म्यप्रदर्शनं भवतीति ।।

**सु.** - ननु ईदृशमहिमशालिनः अस्य अक्षरस्य उपासनं कर्तव्यम् इत्यनेन प्राप्तम् । उपासनं च विदुष एव घटेत, अन्यत्र च अविदुषामपि आर्त्विज्यं कर्मनिष्पत्तिश्च श्रूयते । यद्येवं किमनेन कर्माङ्गभूतोद्गीथोपासनेन इति आशंक्य परिहरति - **तेन** इति । यद्यपि **यश्च एतद्** - अक्षरम् **एवं वेद यश्च न वेद** तौ **उभौ, तेन** - ओमिति उद्गीथेन कुरुतः कर्म । तथापि न आनर्थक्यम् एकस्यापि । कुतः ? उच्यते । **नाना तु विद्या चाविद्या च** । तुशब्दः शङ्काव्यावृत्तौ । **विद्याऽविद्या च नाना** - मिथो विभिन्नफलके । नहि विद्याविशिष्टेन सिद्ध्यन्नर्थो विद्याविहीनेन कदाऽपि लभ्येत । कर्माङ्गभूतोद्गीथस्वरूपे ऐक्यं हि अप्रयोजकं फलैक्ये । कथमेतत् ? उच्यते । **विद्यया** - विज्ञानेन उक्तगुणविशेषविज्ञानेन, **श्रद्धया** - आस्तिक्यबुद्ध्या, **उपनिषदा** - उपासनेन चोपलक्षितः सन् यदेव करोति तदेव कर्म वीर्यवत्तरं भवति । न तु केवलम् उद्गीथस्य कर्माङ्गत्वविज्ञानमात्रतः क्रियमाणं कर्म । तत्तु वीर्यवत् । सिद्धमेतेन अङ्गगतातिशयेन फलस्य अतिशयवत्त्वम् । अतिशयश्च प्रबलतरकर्मान्तराप्रतिबद्धफलत्वरूपः, तदिदम् अन्यत्र सुस्पष्टम् तदेवम् आशङ्कां परिहृत्य उपसंहरति प्रकृतम् - **इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति** ।।

**।। इति प्रथमखण्डभाष्यम् ।।**

---

1. अध्यायपरिसमाप्तिद्योतनार्था - अ ।

## द्वितीयः खण्डः

### [उद्गीथावयवे ओङ्कारे मुख्यप्राणदृष्टिः]

**देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्याः । तद्ध देवा उद्गीथमाजहुः, 'अनेनैनान् अभिभविष्याम' इति ।। १ ।।**

**प्र.दी.** - "गीताषष्ठं मनोषष्ठं षष्ठमारण्यकं तथा । छान्दोग्यषष्ठं योऽधीते जीवन्मुक्तो न संशयः"।। इति स्मरणात् छान्दोग्य-बृहदारण्यक-षष्ठाध्यायार्थज्ञानमात्रादेव जीवन्नेव मुक्तियोग्यत्वात् ब्रह्मविद्यौपयिकानि प्रथमप्रपाठकगतोपासनावाक्यानि त्यक्त्वा केवल-परब्रह्मबोधक-सद्विद्या-दहरविद्या-प्रतिपादक-षष्ठाध्याय-अष्टाध्यायगत-ऋचां प्रतिपदार्थदीपिकानामकप्रतिपदार्थविवृतिः क्रियते । एवमेव सर्वमतस्थैः शिष्टैः वेदान्तशास्त्रे मुख्यप्रमाणतयाङ्गीकृतबृहदारण्यकान्तर्गत-तर्काध्यायषष्ठाध्याययोः एव प्रतिपदार्थदीपिकानामकव्याख्या क्रियते न तु इतराध्यायानाम् । तत्र तत्राध्यायेषु जगत्कारणत्वादि धर्मविशिष्टपरब्रह्मप्रतिपादनस्य सत्त्वेऽपि 'अश्वस्य मेध्यस्य शिर' इत्यादिना अश्वमेधविज्ञानादिकमुक्तं तृतीयाद्यध्यायेषु ब्रह्मप्रतिपादका मन्त्रास्सन्ति । तत्तन्मन्त्रव्याख्यानमपि आवश्यकमेव । यद्यावश्यकमिति चेत् - तदर्थवेतृभिः अस्मत्पूर्वाचार्यरङ्गरामानुजकृतभाष्यम् अत्र लेख्यम् । एवमेव छान्दोग्येऽपि ब्रह्मविद्याङ्ग-भूतसमस्तसाम्नोपासनादिमन्त्राणाम् अर्थः आवश्यकः इति चेत्, रङ्गरामानुजभाष्यमत्र लेख्यं विद्वद्भिः ।।

**प्र.** - उद्गीथावयवे ओङ्कारे मुख्यप्राणदृष्टिं विधातुम् आख्यायिकां प्रस्तौति - **देवासुरा...... प्राजापत्या इत्यादिना ।** द्विविधाः प्रजापतिसुताः देवासुराः **यत्र** - यस्मिन् काले परस्परं **संयेतिरे** - युद्धं कृतवन्तः इत्यर्थः । प्राजापत्या इति अपत्यार्थे, 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा.सू. ४-१-८५) इति ण्यः। **तद्ध...... इति । तत्** - तदा - **ह** - प्रसिद्धं यथा तथा **देवाः अनेनैव** - उद्गीथावयवेन ओङ्कारेण उपासितेन **एनान्** - असुरान् **अभिभविष्यामः** - जेष्यामः इत्यभिसन्धाय [1]उद्गीथं प्राणं[1] उपायत्वेन स्वीकृतवन्तः इत्यर्थः ।।

---

1. उद्गीथप्रणवं - अ,आ, उद्गीथं प्राणा - ख ।

**आ.भा.-** अथ उद्गीथावयवलक्षणे ओङ्कारे मुख्यप्राणदृष्टिं कर्तुम् इमाम् आख्यायिकां दर्शयति - **देवासुराः** इत्यादि । **प्राजापत्याः -** प्रजापतेः कर्मज्ञानाधिकृतपुरुषस्य अपत्यलक्षणाः **उभये -** द्विप्रकारकाः प्रजापतिसुताः देवा असुराश्च । तत्र **देवाः -** शास्त्रोद्भासिताः इन्द्रियवृत्तयः । **असुराः** - तद्विपरीताः तामसवृत्तयः । **ह वै -** इमौ निपातौ प्रसिद्धार्थकौ । **यत्र -** यस्मिन् काले परस्परं **संयेतिरे -** सङ्ग्रामं कृतवन्त; एकोऽपरमभिभवितुम् । **तद्ध देवाः ।** तत् तदाह । प्रसिद्धं यथा तथा **देवाः -** शास्त्रोद्भासिताः वृत्तयः **उद्गीथं -** उद्गीथावयवमोङ्कारं **आजहुः -** आहृतवन्तः, स्वीकृतवन्त इत्यर्थः । कथमाजहुः तत्राह - **अनेन** इत्यादि । **अनेन -** उपासितेन उद्गीथावयवेन ओङ्कारेण एतान् असुरान् तामसवृत्तीन् इत्यर्थः । **अभिभविष्यामः** - जेष्यामः, उद्गीथावयवोङ्कारम् उपास्यत्वेन स्वीकृतवन्तः इत्यर्थ इति ।।

**सु.** - अथ अस्यैव उद्गीथस्योपासनान्तराणि विधीयन्ते । तत्र अध्यात्मं मुख्यप्राणदृष्ट्या उपासनं शत्रुपराजयफलकम् आदौ विधास्यन् आख्यायिकामुखेन ये घ्राणादयोऽवराः प्राणा आत्मनि[1] तद्दृष्ट्युल्लङ्घने निमित्तं च व्यञ्जयन् विधित्सितस्य उपासनस्य फलाधायकतां ग्राहयति - **देवासुराः** इत्यादिना । आख्यायिका हि सुखप्रतिपत्तये भवति । देवाश्चासुराश्च प्रजापतेरपत्यतया प्रसिद्धाः पुरा **यत्र -** यस्मिन्समये यस्मिन्नर्थे वा **संयेतिरे -** अयुद्ध्यन्त । **तत् -** तदा, तस्मिन्नर्थे वा **देवा उद्गीथमाजहुः -** प्रणवलक्षणमुद्गीथं स्वीकृतवन्तः । किमवधार्यः ? **अनेनैव -** उद्गीथेन उपासितेन **एतान् -** असुरान् **अभिभविष्याम इति ।**

परे तु[2] - शास्त्रोद्भासिता इन्द्रियवृत्तयो देवाः, तद्विपरीताः तम आत्मिकेन्द्रियवृत्तयः असुराः, ते मिथः संयेतिरे, सोऽयं सङ्ग्रामः सर्वप्राणिषु प्रतिदेहमनादिकालप्रवृत्त इति व्याचक्षते । इयदत्र वक्तव्यम् । सङ्ग्रामस्त्वयं वास्तवः । घ्राणादिदृष्ट्या उद्गीथोपासनम् अनुपदमनुवर्ण्यमानम् इन्द्रियवृत्तिविशेषरूपदेवेषु न तथा, न हि तत्र तत्सम्भवः । ननु किं सम्भवासम्भवचर्चया, आख्यायिका हि इयम् । मुख्यप्राणदृष्ट्या उद्गीथस्य उपास्यत्वज्ञापने एव हि अस्याः तात्पर्यम् । तत्र न काचिदनुपपत्तिः । सत्यम् । तर्हि देवासुराणां प्रसिद्धानां परित्यागे न किञ्चित् बीजम्, सङ्ग्रामोऽपि तेषां प्रथितः । नन्वस्ति बीजम्, ज्ञाप्यते हि अनेन धर्माधर्मविवेकः । तामसीभिः इन्द्रियवृत्तिभिः अधर्मः सात्त्विकीभिस्तु धर्म इति ।

---

१. आत्मनि - शरीरे । २. परे तु अद्वैतिनस्तु ।

किं तेन अप्रकृतेन ज्ञापितेन । श्रुतेः इयम् आख्यायिका इति अर्थविशेषज्ञापनमेव मण्डनमिति चेत् । ध्वनितोऽपि तल्लाभात् रूढ्यर्थत्यागे न किञ्चित् निमित्तम् । किञ्च असुराः पाप्मना अविध्यन्नित्यत्र श्रूयमाणम् अंशतो अनुप्रविश्य असुरैः क्रियमाणं घ्राणादिदूषणं सत्त्वाभिभवद्वारैव इति धर्माधर्मविवेकविज्ञानम् अनपायम् अस्मिन्पक्षेऽपि । किञ्च - **ह वै** इति प्रसिद्धार्थकः निर्देशः **संयेतिरे** इति भूतकालनिर्देशश्च अस्मिन्पक्षे स्वरसः ।।

"वस्तुतः किमिहाक्षेपैः, नहि नस्तत्त्वविप्लवः ।
आख्यायिकाया गाम्भीर्यमन्यस्मादपि गृह्यते" ।।

**ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे ; तँ हासुराः पाप्मना विविधुः ; तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च ; पाप्मना ह्येष विद्धः ।। २ ।।**

**प्र. - ते......चक्रिरे । ते -** देवाः घ्राणेन्द्रियत्वेन उद्गीथम् उपासितवन्तः इत्यर्थः । नासिकायां भवं नासिक्यम् । 'शरीरावयवाच्च' (पा.सू.४-३-५५) इति यत् । **तं......विविधुः । तं -** नासिक्यं प्राणम् **असुराः -** स्वकीयेन पाप्मना **विविधुः -** संयोजितवन्तः । पापहेतुभूतवृत्त्या संयोजितवन्तः इति यावत् । **तस्मात्......विद्धः । तस्मात् -** पापसंसर्गाद्धेतोः पुरुषः घ्राणेन सुरभि च दुर्गन्धि च उभयं जिघ्रति । तस्मात् नासिक्यः प्राणः पापविद्ध एव इत्यर्थः ।।

**आ.भा.- तेह -** देवाः **नासिक्यं -** नासिकायां सञ्जायमानं घ्राणेन्द्रियं **प्राणमुद्गीथं -** उद्गीथकर्तारम् **उपासाञ्चक्रिरे -** घ्राणेन्द्रियकत्वेन उद्गीथम् उपासितवन्तः इत्यर्थः । **तं -** घ्राणेन्द्रियं उद्गातारं असुराः पाप्मना **विविधुः -** संयोजितवन्तः पापकारण तामसवृत्त्या संयोजितवन्तः इत्यर्थः । **तस्मात् -** पापसम्बन्धकारणात् **तेन -** घ्राणेन्द्रियेण पुरुषः **उभयं -** द्विविधमपि गन्धं **जिघ्रति** उभयप्रकारकमपि गन्धम् अनुभवति । किं तत् द्विविधं तत्राह - **सुरभि च दुर्गन्धि च ।** पाप्मना हि एष विद्धः यस्मात् कारणात् एषः नासिकायां भवः प्राणः पाप्मना विद्धः तस्मात् उभयमपि जिघ्रति इति शेषः ।।

**सु. - ते ह -** देवाः **तं -** आहृतं **उद्गीथं नासिक्यं प्राणं** । घ्राणं **उपासाञ्चक्रिरे -** घ्राणोऽयम् इति उपासितवन्तः । तदा तद्विदित्वा असुराः **तमुद्गीथं पाप्मना** स्वांशेन **अविध्यन् -** असुराः अनुप्रविश्य पाप्मना अदूषयन् । कस्तस्य तेन दोषः ? उच्यते -

**तस्मात्** इति । यस्मात् एष पाप्मना विद्धः, तस्मात् तेन घ्राणेन पुरुषः सुरभिम् असुरभिं च गृह्णाति । न केवलं सुरभिं किन्तु असुरभिं च गृह्णाति । **पाप्मना** तमःप्राचुर्यरूपेण आसुरांशेन विद्धत्वात् इति यावत् । एवम् उत्तरत्रापि ।।

**अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे, ताँ हासुराः पाप्मना विविधुः; तस्मात् तयोभयं वदति सत्यञ्चानृतञ्च; पाप्मना ह्येषा विद्धा ।। ३ ।।**

**प्र. - अथ ह वाचम् -** इत्यादि । पूर्ववत् ।।

**आ.भा. -** द्वितीयमन्त्रवदेव एतेषामपि व्याख्यानं ज्ञातव्यम् । एतावानयं विशेषः तत्र **अदर्शनीयम् -** अपवित्रम् । **अश्रवणीयं -** पापप्रयोजकं वचनम् । **असंकल्पनीयम् -** अनभिमतं पापादिकम् इति ।। ३-६ ।।

**सु. - अथ -** देवाः घ्राणस्य दूषिततां ज्ञात्वा सपदि तं त्यक्त्वा **वाचमुद्गीथमुपासाञ्चक्रिरे ।** वागियम् अदुष्टोत्कृष्टा चेति तद्भावनाम् उद्गीथे अकुर्वन् । उत्कृष्टदृष्टिर्हि उपासनं न तु अपकृष्टदृष्टिः । अविशिष्टम् , अवशिष्टम् ।। ३-६ ।।

**अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे, तद्धासुराः पाप्मना विविधुः । तस्मात् तेनोभयं पश्यति दर्शनीयञ्चादर्शनीयञ्च ; पाप्मना ह्येतद् विद्धम् ।। ४ ।।**

**प्र. - अथ......चक्रिरे** इत्यादि । **अदर्शनीयम् -** अमेध्यादिकम् इत्यर्थः ।।

**अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना विविधुः । तस्मात् तेनोभयँ शृणोति श्रवणीयञ्चाश्रवणीयञ्च ; पाप्मना ह्येतद् विद्धम् ।। ५ ।।**

**प्र. - अथ......चक्रिरे** इत्यादि । **अश्रवणीयं -** पापवचनम् इत्यर्थः ।।

**अथ ह मन उद्गीथमुपासाञ्चक्रिरे; तद्धासुराः पाप्मना विविधुः ; तस्मात् तेनोभयँ सङ्कल्पयते सङ्कल्पनीयञ्चासंकल्पनीयञ्च ; पाप्मना ह्येतद् विद्धम् ।। ६ ।।**

**प्र. - अथ......चक्रिरे** इत्यादि । **असंकल्पनीयं -** पापम् इत्यर्थः ।।

[असुराणां पराभवः]

**अथ ह, य एवायं मुख्यः प्राणः, तमुद्गीथमुपासाञ्चक्रिरे ; तँ हासुरा ऋत्वा विदध्वँसुः, यथाऽश्मानमाखणमृत्वा विध्वँसेत, एवम् ।। ७ ।।**

**प्र. - अथ......चक्रिरे ।** उद्गीथावयवम् ओङ्कारं मुख्यप्राणत्वेन उपासितवन्तः इत्यर्थः । **तं विदध्वंसुः। तं -** मुख्यप्राणं पाप्मना वेद्धुं प्रवृत्ताः असुराः **तं ऋत्वा-**प्राप्य स्वयमेव **विदध्वंसुः -** विध्वस्ता अभवन् इत्यर्थः । तत्र दृष्टान्तमाह - **यथाऽश्मानं - एवम् ।** आखन्यते इति **आखणं** मृत्पिण्डः । यथा मृत्पिण्डः अश्मानं प्राप्य विध्वस्तो भवति, एवम् इति व्यासार्यैः व्याख्यातम् । आखणमिति छान्दसं णत्वम् ; नपुंसकत्वञ्च ।।

**आ.भा. - अथ -** अनन्तरम्, प्राणादीनाम् असुरवेधनानन्तरं ते देवा य एवायं **मुख्यप्राणो** मुखे भवः प्रसिद्धः तं मुख्यप्राणम् । **उद्गीथमुपासाञ्चक्रिरे -** उद्गीथावयवम् ओङ्कारं मुख्यप्राणत्वेन उपासितवन्त इत्यर्थः । **तं ह -** मुख्यं प्राणं **ते असुरा ऋत्वा -** प्राप्य स्वयमेव **विदध्वंसुः -** नष्टा अभवन् । मुख्यं प्राणमपि अहं विद्धं करिष्यामि इति अभिप्रायेण प्रवृत्ता अपि तं प्राणं किञ्चिदपि अकृत्वा स्वयमेव विनष्टा अभवन् इत्यर्थः । तत्र दृष्टान्तमाह - **यथा अश्मानमाखणमृत्वा विध्वंसते** । अयं भावः - यथा कोऽपि लोहस्य भेदनाय मृत्पिण्डं लोहं प्रति प्रक्षिपति तत्र न लोहस्य भेदनादिकं भवति किन्तु स्वयमेव मृत्पिण्डादिः विनष्टो भवति तद्वत् ते असुरा मुख्यप्राणभेदनाय साभिप्रायाः मुख्यं प्राणं सम्प्राप्य स्वयमेव विनष्टा अभवन्निति ।।

**सु. - अथ ह -** वागादीन् दूषितानवधार्य अन्ततो य एवायं मुख्यः प्राणः तमुद्गीथम् उपासाञ्चक्रिरे । तं दूषयितुमसुरा **ऋत्वा -** प्राप्य स्वयं **विदध्वंसुः -** अकिञ्चित्करस्ववृत्तयः स्वयं व्यनश्यन् । तत्र दृष्टान्तः - **यथेति ।** आखन्यते अनेन इति आखनं कुद्दालकादि यत्किञ्चित् । छान्दसं णत्वं सामान्ये नपुंसकम् । **यथा अश्मानं** प्राप्य **विध्वंसेत ।** अजानता स्थलविवेकम् उत्क्षिप्य प्रक्षिप्तं कुद्दालकादि **शिलातलं** प्राप्य स्वयं यथाऽवशीर्येत तथा इति भावः । एवं मुख्यामुख्ययोः प्राणयोः शुद्ध्यशुद्धिनिरूपणेन विशुद्धमुख्यप्राणदृष्टिरेव उद्गीथे विधेया इति सहेतुकम् उक्तं भवति ।।

[उद्गीथविद्यायाः फलम्]

**यथाऽश्मानमाखणमृत्वा विध्वँसते, एवं हैव स विध्वँसते, य एवंविदि पापं कामयते, यश्चैनमभिदासति; स एषोऽश्माखणः ।। ८ ।।**

**प्र.** - एतद्विद्यायाः फलमाह - **यथा...... कामयते** इत्यादि । **एवंविदि** - एतद्विद्यानिष्ठे यः पापं कर्तुं कामयते, यश्चैनं **अभिदासति** - हिनस्ति, सः अश्मप्राप्तलोष्टवत् ध्वस्तो भवति इत्यर्थः । 'दाप् लवने' (धा.पा.१०५९) इत्यतः, 'दो अवखण्डने' (धा.पा. ११४८) [1]इत्यतो[1] वा लेटि ; 'सिब्बहुलं लेटि' (पा.सू.३-१-३४) इति सिपि दासति इति रूपम् ।

**स एषोऽश्माखणः । स एषः** - एतद्विद्यानिष्ठे पापकामः **अश्माखणः** - अश्मप्राप्ताखण इत्यर्थः । एतेन - 'खनो घ च' (पा.सू. ३-३-१२५) इति 'घप्रत्ययस्य, करणाधिकरणयोः' (पा.सू.३-३-११७) इत्यनुवृत्त्या कर्मण्यभावात्, करणार्थ एव घप्रत्ययो वक्तव्यः । अतः आखणशब्दस्य अश्मविशेषणत्वमेव वक्तव्यम् । खननसाधनतया दृढम् अश्मानं प्राप्य यथा लोष्टादिकं ध्वंसते इति हि तस्यार्थः । अत एव **स एषोऽश्माखण** इति वाक्यशेषे अश्मविशेषणत्वमेव [2]आखणस्य[2] श्रूयते - इति [3]शंकाऽपास्ता[3] । वाजसनेयके समानप्रकरणे, 'यथाऽश्मानमृत्वा लोष्टो विध्वँसते' (बृ.उ.३-३-७) इति श्रवणेन तत्समानार्थत्वस्य वक्तव्यतया आखणशब्दस्य लोष्टवाचित्वस्यैव उचितत्वात् । बहुलग्रहणेन कर्मण्यपि घप्रत्ययस्य उपपत्तेः । इतरथा कर्तृवाचिपदाध्याहारप्रसङ्गात् । स एषोऽश्माखणः इत्यत्र अश्माखणशब्दस्य समस्तास्य अश्मप्राप्ताखणवाचित्वेन, अश्मशब्दसामानाधिकरण्येन आखणशब्दस्य अश्मविशेषणत्वाभावात् । पूर्ववाक्ये नपुंसकलिङ्गनिर्दिष्टस्यापि स एष इति पुल्लिङ्गसामानाधिकरण्येन आखणशब्दस्य पुल्लिङ्गत्वोपपत्तेश्च इति द्रष्टव्यम् ।।

**आ.भा.** - एतद्विद्यायाः फलं दर्शयति - **यथेत्यारभ्य दासति पर्यन्तम् । एवंविदि** - एतद्विद्याविशिष्टे उपासके पुरुषे यः कोऽपि **पापं** - तदनर्हं कर्तुं **कामयते** - इच्छति **यश्च** - कोऽपि **एनमभिदासति** - हिनस्ति, आक्रोशताडनादिकं करोति । **स एवमेव विध्वंसते** - विनष्टो भवति **यथा अश्मानं - आखणम् ऋत्वा** - प्राप्य **विध्वंसते** । यस्मात् कारणात् **स एषः** - प्राणोपासकः प्राणभूतत्वात् अश्माखण इव अश्माखणः परैः घर्षयितुम् अशक्यो अयोग्यश्च इति ।

1. इत्यस्मद्धातोर्वा - अ,आ । 2. आखणशब्दस्य - अ,आ । 3. शङ्का परास्ता - अ ।

'दाप् लवने' (धा.पा.१०५९) 'दो अवखण्डने' (धा.पा.११४८) वा इत्यस्माद्धातोः 'सिपि बहुलम्' (पा.सू. ३-१-३४) इति सूत्रेण सिपिकृते अभिदासति इति रूपं भवति इति ।।

**सु.** - अथ अस्य उपासनस्य फलमाह - **एवमिति** । यथा अश्मानं प्राप्य आखणं विनश्यति, एवमेव स विनश्यति । **य एवंविदि** - उद्गीथं मुख्यप्राणतया भावयितरि उपासकविशेषे । **पापं कामयते** - अनिष्टम् अनुचितं यत्किञ्चित् आकाङ्क्षते । **यश्चैनम्** - उपासकम् **अभिदासति** - हिनस्ति, भर्त्सन-ताडनादिभिः पीडयति । तस्मात् **स एषोऽश्माखणः** । **सः** - उपासकः अश्मा अश्मवत् अविभेद्यः । **एषः** तु अनिष्टकृत् **आखणः**, आखणवत् विशीर्यमाणमुख इति यावत् ।।

**[अपहतपाप्मा मुख्यप्राणः]**

**नैवैतेन सुरभि न दुर्गन्धि विजानाति ; अपहतपाप्मा ह्येषः ; तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवति; एतमु एवान्ततोऽवित्त्वोत्क्रामति ; व्याददात्येवान्ततः इति ।। ९ ।।**

**प्र.** - इतरप्राणाद्यपेक्षया तस्य वैषम्यमाह - **नैव...... विजानाति** । **एतेन** - मुख्यप्राणेन इत्यर्थः । पुरुष इति शेषः । तत्र हेतुमाह - **अपहतपाप्मा ह्येष इति** । स्पष्टोऽर्थः । **तेन यत् अवति** । तेनैव हेतुना तस्य अपहतपाप्मत्वादेव प्राणान्तरवत् आत्मम्भरित्वाभावात् स्वाशितपीतादिना इतरान् प्राणान् रक्षति इत्यर्थः । **एतमु......क्रामति** । यत एव घ्राणादिप्राणसमुदायः मुख्यप्राणाशित-पीत-लब्धसत्ताकः ; अत एव **अन्ततः** - मरणकाले मुख्यप्राणाशितादेः अभावेन एतम् **अवित्त्वा** - अलब्ध्वा उत्क्रामति इत्यर्थः । 'विदॢ लाभे' (धा.पा.१४३३) इति हि धातुः । **व्याददात्येवान्तत** इति । **अन्ततः** - मरणकाले सर्वप्राणानाम् उत्क्रमणादेव [1]आस्य[1]व्यादानं करोति इत्यर्थः ।।

**आ.भा.** - अन्यप्राणाद्यपेक्षया मुख्यप्राणस्य वैलक्षण्यं दर्शयति - **नैवेत्यादि** । **एतेन** - मुख्यप्राणेन लोकः न सुरभिगन्धं जानाति न वा दुरभिगन्धमेव विजानाति । तत्राह - **अपहतेत्यादि** । **ह्येषः** - यस्मात्कारणात् **एषः** - मुख्यप्राणः **अपहतपाप्मा** - अपहतः विनाशितोऽपनीतः

---

1. अस्य - ख ।

पाप्मा यस्मात् सोऽयं मुख्यः प्राणः अपहतपाप्मा विशुद्धः । अत एव न विजानाति । घ्राणादयो हि आत्मंभरयः प्राणास्तु सर्वार्थः । कथम् एवं तत्राह - **तेन** इत्यादि । **तेन** - अपहतपाप्मत्वेन मुख्यप्राणेन **यदश्नाति यत् पिबति** लोकः **तेन** - अशितेन पीतेन च **इतरान्** - घ्राणादीनपि **अवति** - रक्षति । अतः नायं मुख्यः प्राणः आत्मम्भरिः किन्तु सर्वार्थः । **एतत्** । यस्मादेव कारणात् घ्राणादिप्राणसमुदायः मुख्यप्राणाशित-पीत-लब्धसत्ताकः अत एव **अन्ततो** - मरणसमये सर्वप्राणाशितपीतयोः अभावेन । एतम् **अवित्त्वा** - अलब्ध्वा **उत्क्रामति** - शरीरं परित्यज्य गच्छति **व्याददात्येवान्ततः इति** । **अन्ततः** - मरणसमये सर्वप्राणानाम् उत्क्रमणादेव **व्याददाति** - मुखविदरणं करोति इत्यर्थः ।।

**सु.** - इतरेभ्यः अस्य मुख्यप्राणस्य श्रैष्ठ्यं सनिमित्तम् अनुवर्णयति - **नैवैतेन** इति । यस्मादेष मुख्यः प्राणः आसुरवृत्तिभिः अनुपहतः तस्मात् नैव एतेन मुख्येन प्राणेन घ्राणेनेव सुरभिम् असुरभिं वा लोकः विजानाति । नैव एतेन सत्यम् अनृतं च वदति इत्याद्युपलक्षणम् । **तेन ह्येष अपहतपाप्मा** - विशुद्धः । अयमपरः विशेषः मुख्यप्राणस्य, यदयम् अनुदिनं **अश्नाति यत्पिबति** तेनशितेन पीतेन अवरान् प्राणान् घ्राणादीन् **अवति** - रक्षति । तदस्य न घ्राणादेरिव स्वोदरभरणे प्रवृत्तिः ; किन्तु परार्थैवेति । **अन्ततः** - अन्तसमये स्वस्य अन्नपानादिप्रदानेन रक्षकम् एतमेव मुख्यप्राणम् **अवित्त्वा** - अलब्ध्वा अशिशिषापिपासाव्याकुलः अयम् **उत्क्रामति** शरीरात् घ्राणादिः इतरः प्राणः । अत एव व्याकुलतया **अन्ततः** - मरणसमये **व्याददाति** - व्यात्तास्यो भवति । आस्यव्यादानं हि अशिशिषापिपासाकार्यम् ।।

[प्राणस्य अङ्गिरसस्त्वादि]

**तँ हाङ्गिराः उद्गीथमुपासाञ्चक्रे; एतमु एवाङ्गिरसं मन्यन्ते, अङ्गानां यद्रसः ।। १० ।।**

**प्र.** - **तं......चक्रे** । **तं** - अध्यस्तप्राणभावम् **उद्गीथम्** उद्गीथावयवम् ओङ्कारम् अङ्गिराः ऋषिः उपासाञ्चक्रे इत्यर्थः । केचित्तु अङ्गिरसा उपास्यमेव [1]मुख्यप्राणम् अङ्गिरसं[1] वदन्ति इत्याह - **एतमु...... रसः** । अङ्गानां प्राणाधीनस्थितित्वेन प्राणस्य अङ्गिरसत्वम् इति भावः । अङ्गरसम् [2]अङ्गिरसं[2] वदन्ति परोक्षप्रियत्वात् देवानाम् इति भावः ।

---

1. अङ्गिरं - अ । 2. आङ्गिरसं - क ।

**आ.भा. - तँ** - मुख्यप्राणम् **अङ्गिराः** - तन्नामको ऋषिः **उद्गीथम्** - उद्गीथावयवम् ओङ्कारम् **उपासाञ्चक्रे** - उपासनं कृतवान् इत्यर्थः । अन्ये तु अङ्गिरसा उपास्यमेव मुख्यप्राणम् अङ्गिरसं वदन्ति इत्यत्राह - **एतमु** इत्यादि । एतमु एव अङ्गिरसं मन्यन्ते **अङ्गानां यद्रसः** - अङ्गानां प्राणाधीनस्थितिकत्वेन प्राणस्य अङ्गरसत्वम् इत्यर्थः । अङ्गरसम् अङ्गिरसं वदन्ति परोक्षप्रियत्वात् देवानाम् इति ।।

**सु.** - अथ मुख्यप्राणे उपास्यप्रकारे गुणान्तरविधानाय अग्रिमः ग्रन्थः प्रवर्तते । तत्र आङ्गिरसत्वं नाम गुणविशेषः विधीयते प्रथमेन । **तं ह उद्गीथम् अङ्गिराः** - ऋषिः उक्तेन प्रकारेण प्राणदृष्ट्या **उपासाञ्चक्रे,** तम् इममेव आङ्गिरसः उद्गीथे अध्यस्य उपास्यमानं प्राणं आाङ्गिरस इत्याचक्षते । कथम् उपास्यस्य अयं निर्देशः इत्यत्राह **अङ्गानाम्** इति । यदयं मुख्यः प्राणः अङ्गानां रसः, धारकत्वात् । अङ्गरसे अस्मिन् आङ्गिरस इति निर्देश ईषद्विकृतोपि उपासकनामतोऽभिन्न एव । देवानां परोक्षप्रियत्वाद्वा तथा निर्देशः ।।

**तेन तँ ह बृहस्पतिरुद्गीथमुपासाञ्चक्रे ; एतमु एव बृहस्पतिं मन्यन्ते, वाग्घि बृहती, तस्या एष पतिः ।। ११ ।।**

**प्र. - तेन...... चक्रे । तेन** - अङ्गिरसत्वेन गुणेन बृहस्पतिः उपासितवान् इत्यर्थः । **एतमु......पतिः** । वागिन्द्रियस्य सर्वार्थप्रकाशकत्वादिना [1]बृहत्वम्[1] । [2]तस्य[2] मुख्यप्राणाधीनत्वात् प्राणस्य वाक्पतित्वम् । अतः उपास्यस्यैव बृहस्पतित्वं मन्यन्त इत्यर्थः ।

**आ.भा. - तेन** - आङ्गिरसत्वेन गुणेन **तं** - प्राणं, **बृहस्पतिम् उद्गीथम् उपासाञ्चक्रिरे,** उपासितवन्त इत्यर्थः । **एतमु एव बृहस्पतिं मन्यन्ते** यतः **वाग्घि बृहती** - वागिन्द्रियस्य परोक्षापरोक्षप्रकाशिकायाः बृहत्वम् । **तस्याः** - वाण्याः **एषः** - प्राणः **पतिः** । उपयुक्तवाचः सर्वार्थप्रकाशिकायाः मुख्यप्राणाधीनत्वात् प्राणस्य वाक्पतित्वं सिद्ध्यति । अतः उपास्यस्यैव बृहस्पतित्वं मन्यन्ते इत्यर्थः ।।

**सु.** - अथ बृहस्पतित्वं गुणान्तरं विधीयते । बृहस्पतिः **तेन** - अङ्गिरसत्वगुणविशिष्टेन प्राणेन उपलक्षितम् **उद्गीथम् उपासाञ्चक्रे** । तथाविधप्राणात्मना उपासितवान् इत्यर्थः । प्राणम् एतेन उपास्यमानं **बृहस्पतिम्** एव मन्यते । कुतः लोके वागेव हि **बृहती** । तस्या अपि एषः प्राणः

---

1. बृहत्वात् - अ,आ । 2. तस्य च - अ,आ,क ।

एतेन उपास्यमानं **बृहस्पतिम्** एव मन्यते । कुतः लोके वागेव हि **बृहती** । तस्या अपि एषः प्राणः पतिः, प्राणाधीनत्वात् ।।

**तेन तँ हायास्य उद्गीथमुपासाञ्चक्रे ; एतमु एवायास्यं मन्यन्ते, आस्याद्यदयते ।। १२ ।।**

**प्र. - तेन......उपासाञ्चके । तेन -** बृहस्पतित्वेन [1]अयास्यः ऋषिः[1] उपासितवान् इत्यर्थः । **एतमु......यदयते । आस्यात् -** मुखात् **अयते -** निर्गच्छति इत्यर्थः ।।

**आ.भा. - तेन -** बहस्पतित्वेन **तं - प्राणं** अयास्यः - तन्नामको ऋषिः **उद्गीथमुपासाञ्चक्रे -** उपासनं कृतवान् इत्यर्थः । **एतमु एव अयास्यं मन्यन्ते -** एतस्मादेव कारणात् इमम् अयास्यं मन्यन्ते । **आस्यात् यदयते । यत् -** यस्मात् **आस्यात् -** मुखात् **अयते -** निर्गच्छति इत्यर्थः ।।

**सु. -** अथ अयास्यत्वं गुणान्तरं विधीयते । **अयास्य**नामा ऋषिः । **तेन -** पूर्वोक्तगुणविशिष्टप्राणात्मना **तमुद्गीथमुपासाञ्चक्रे** । अतः **तं** प्राणमेव **अयास्य** इति **मन्यन्ते, यस्मात् आस्यात् अयते -** निर्गच्छति ।।

**तेन तँ ह बको दाल्भ्यो विदाञ्चकार । स ह नैमिषीयाणामुद्गाता बभूव ; स ह स्मैभ्यः कामानागायति ।। १३ ।।**

**प्र. - तेन......विदाञ्चकार । तेन -** पूर्वोक्ताङ्गिरसत्व-बृहस्पतित्वायास्यत्वादि-गुणविशिष्टतया दल्भसुतो बको नामा ऋषिः उपासितवान् इत्यर्थः। **स ह - बभूव ।** स्पष्टोऽर्थः । **स ह......आगायति । सः -** दाल्भ्यः बकः **एभ्यः -** नैमिषीयेभ्यः यजमानेभ्यः शत्रुपराभवादीन् कामान् गानेन विद्यामाहात्म्यात् सम्पादितवान् इत्यर्थः । आगायति स्म । 'लट् स्मे' (पा.सू.३-२-११८) इति लट् [2]भूतेऽपि[2] ।।

**आ.भा. - तेन -** पूर्वकथिताङ्गिरसत्वेन बृहस्पतित्वायास्यत्वादि-गुणगणविशिष्टरूपेण **तं -** प्राणम् **दाल्भ्यो -** दल्भनामकऋषिपुत्रः **बको -** बको नाम ऋषिः **विदाञ्चकार -**

---

1. अयास्य - अ,आ ।    2. भूते लट् - ख ।

उपासनं कृतवान् इत्यर्थः। **स ह** - दाल्भ्यो बको ऋषिः **नैमिषीयाणां** - यागकर्तॄणाम् उद्गाता **बभूव** - आस । **स ह स्मैभ्यः कामानागायति** । **सः** - बकः ऋषिः प्राणविज्ञानसामर्थ्यादेव कारणात् । **एभ्यः** - नैमिषीयेभ्यः **कामानागायति स्म** ह - आगीतवान् । अयमर्थः स दाल्भ्यो बको यजमानेभ्यो नैमिषीयेभ्यः शत्रुपराभवादीन् कामान् गानेन प्राणविद्यामाहात्म्यात् सम्पादितवान् इति ।।

**सु.** - दल्भ्यस्य अपत्यं नाम्ना **बकः तेन** - अयास्यत्वादिगुणविशिष्टप्राणात्मना **तं** - उद्गीथं **विदाञ्चकार** - उपासितवान् । **स ह नैमिषीयाणामुद्गाता बभूव** । **सः** - हि उद्गीथे पूर्वोक्त-सकलगुणविशिष्ट-प्राणभावनाबलेन **एभ्यः** - नैमिषीयेभ्यः यजमानेभ्यः, **कामान्** - शत्रुपराजयादीन् **आगायति** - गानेन सम्पादितवान् इत्यर्थः ।।

[अङ्गिरत्वादि गुणोपासनस्य फलम्]

**आगाता ह वै कामानां भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते इत्यध्यात्मम् ।। १४ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र. - आगाता......उपास्ते** । एवम् उपासको यजमानकामानां गानेन सम्पादयिता भवति इत्यर्थः । **इत्यध्यात्मम्** । अध्यात्मम् उद्गीथोपासनं समाप्तम् इत्यर्थः । आत्मशब्देन इन्द्रिय-मनःप्राणादि-सङ्घात उच्यते । **अध्यात्मम्** - आत्मनि इत्यर्थः । आत्मविषयम् इति यावत् ।।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते ।

अङ्गपादे - ऋत्विक्परिक्रयस्य अङ्गानुष्ठानमात्रार्थत्वात्, अङ्गावबद्धोपासनानाञ्च 'तन्निर्धारणानियमस्तद्दृष्टे : पृथग्घ्यप्रतिबन्धः फलम्' (ब्र.सू.३-३-४१) इति सूत्रोक्तन्यायेन अनङ्गत्वात् । 'शास्त्रफलं प्रयोक्तरि' (पू.मी.सू.३-७-१७) इति न्यायेन यजमानगामिफल-साधनभूतोपासनस्य यजमानेनैव कर्तव्यत्वात्, 'गोदोहनेन पशुकामस्य प्रणयेत्' इति श्रुतपश्वर्थगोदोहनादेः अनङ्गत्वेऽपि ऋत्विक्कर्तृकप्रणयन[1]निर्वर्तकस्य[1] गोदोहनस्य यजमानेन उपादातुम् अशक्यतया ऋत्विक्कर्तृकत्वेऽपि उद्गातृकर्तृके उद्गीथे यजमानस्य उपासनसम्भवात् उपासनं [2]याजमानमेव[2] । औद्गात्रसमाख्यानं तु 'शास्त्रफलं प्रयोक्तरि'

---

1. निर्वाहकस्य - क । 2. यजमानकर्तृकमेव - क,ख ।

इति न्यायेन विरोधात् उपेक्षणीयम् । अतः फलस्य स्वामिगतत्वात् फलस्वामियजमानकर्तृकमेव उपासनम् इति आत्रेयमतमिति, 'स्वामिनः फलश्रुतेरित्यात्रेयः' (ब्र.सू. ३-४-४४) इति सूत्रेण पूर्वपक्षं कृत्वा उपासनान्यपि ऋत्विक्कर्माण्येव स्युः । प्रयोगाङ्गस्य ऋत्विजः प्रयोगान्तःपात्युद्गीथाद्युपासनेऽपि कर्तृत्वसम्भवात् । 'तँ ह बको दाल्भ्यो विदाञ्चकार' । 'स ह नैमिषीयाणाम् उद्गाता बभूव । स ह स्मैभ्यः कामानागायति' इति उद्गातृदाल्भ्यगतविद्यायाः यजमानकामसम्पादकत्वदर्शनलिङ्गाच्च ऋत्विक्कर्तृकमेवोपासनम् । न च ऋत्विक्कर्तृकोपासनस्य फलं ऋत्विग्गतमेव स्यादिति [1]शक्यशङ्कम्[1] । ऋत्विजां परार्थतया तेषां वचनमन्तरेण फलसम्बन्धानुपपत्तेः । 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते, यजमानायैव एतामाशिषमाशासते' (शत.ब्रा. १-३-१-२६) इति श्रुतेश्च । 'तस्मादु हैवं विदुद्गाता ब्रूयात् कं ते काममागायानि' (छां.उ. १-७-८) इति ऋत्विग्गतविज्ञानस्य यजमानगामिफलक[2]त्वावेदन[2]लिङ्गाच्च न, 'शास्त्रफलं प्रयोक्तरि' (पू.मी.सू.३-७-१-७) इति न्यायावतारः । ततश्च परिक्रयविधिबलात् उत्सृष्टस्य ऋत्विक्कर्तृकस्य याजमानसमाख्यापादकाभावात् लिङ्गानुग्रहात् औद्गात्रसमाख्यानाच्च आर्त्विज्यमेवोपासनमिति, 'आर्त्विज्यमित्यौडुलोमिः, तस्मै हि परिक्रीयते' (ब्र.सू. ३-४-४५) इति सूत्रेण सिद्धान्तितम् । सूत्रस्य चायमर्थः - उपासनमार्त्विज्यम् ऋत्विक्कर्म । तस्मै [3]क्रतुप्रयोगाय[3] हि ऋत्विक् परिक्रीयते । अतः अनङ्गभूतमपि उपासनं क्रतुप्रयोगान्तः पातित्वात् ऋत्विजा एवानुष्ठेयमिति स्थितम् ।

तथा गुणोपसंहारपादे चिन्तितम् । तत्र हि - वाजिनां तावत् 'द्वया ह वै प्राजापत्या देवाश्चासुराश्च' इत्यारभ्य, 'ते ह देवा ऊचुः, हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' (बृ.उ.३-३-१) इति उद्गीथेन असुरविध्वंसनं प्रतिज्ञाय उद्गीथे वागादिमनःपर्यन्तदृष्टौ असुरैः अभिभवमुक्त्वा, 'अथ हेममासन्यं प्राणमूचुः' (बृ.उ.३-३-७) इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपरिभवमुक्त्वा, 'भवत्यात्मना, परास्य द्विषन् भ्रातृव्यो भवति, य एवं वेद' (बृ.उ.३-३-७) इति शत्रुपराजयफलाय उद्गीथे प्राणदृष्टिर्विहिता ।

एवं छन्दोगानामपि - 'देवासुरा ह वै यत्र संयेतिरे' इत्यारभ्य, 'तद्ध देवा उद्गीथमाजह्रुः । अनेनैनानभिभविष्यामः' इति, (छां.उ. १-२-१) इति उद्गीथेन असुरपराभवं प्रतिज्ञाय तद्वदेव उद्गीथे वागादिदृष्टौ दोषम् अभिधाय, 'अथ ह य एवायं मुख्यः प्राणः,

---

1. शक्यशङ्का - अ,आ । 2. त्वावेदनादि - अ,आ । 3. प्रयोजनाय - क ।

तमुद्गीथमुपासाञ्चक्रिरे' (छां.उ. १-२-७) इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, 'यथाऽश्मानमाखणमृत्वा विध्वँसते, एवँ हैव स विध्वँसते, य एवंविदि पापं कामयते' (छां.उ. १-२-८) इति शत्रुपराभवाय उद्गीथे प्राणदृष्टिः विहिता ।।

तत्र [1]उभयत्रा[1]ध्यस्तप्राणभावस्य उद्गीथस्यैव उपास्यत्वश्रवणेन रूपाभेदात्, शत्रुपराभवरूपफलसंयोगाविशेषात्, उद्गीथविद्या इति समाख्यैक्याच्च तयोः ऐक्यमिति पूर्वःपक्षः। तत्र राद्धान्तच्छायया परिचोद्य परिहरति - 'अन्यथात्वं शब्दादिति चेन्नाविशेषात्' (ब्र.सू.३-३-६) । वाजसनेयके, 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' (बृ.उ. ३-३-७) इत्युद्गानकर्तरि प्राणदृष्टिविधानात् । छान्दोग्ये - 'अथ ह य एवायं मुख्यः प्राणः तमुद्गीथमुपासाञ्चक्रिरे' (१-२-७) इति उद्गानकर्मणि प्राणदृष्टिविधानात् शब्दात् उपास्यरूपान्यथात्वप्रतीतेः भेद इति चेन्न । देवासुरसङ्ग्रामोपक्रमादिबहुसारूप्यात्, वाजसनेयकेऽपि 'हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' (बृ.उ. ३-३-१) इति उद्गीथेन उपक्रमात् तदविरोधाय, 'तेभ्य एष प्राण उदगायत्' (बृ.उ. ३-३-१) इति उद्गानकर्मरूप एवोद्गीथे पाकादिषु सौकर्यातिशयविवक्षया, 'पच्यते ओदनः स्वयमेव' इति ओदने कर्तृत्वोपचारवत् - उद्गानकर्मण्येव कर्तृत्वोपचारोपपत्तेः उद्गीथ एव उभयत्राप्युपास्यः । अतो विद्यैक्यम् - इति प्राप्ते प्रचक्ष्महे - 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्' (ब्र.सू. ३-३-७) । न वेति पूर्वपक्षं व्यावर्तयति । प्रकरणभेदात् । छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति [2]प्रकृतो[2]द्गीथावयव-प्रणवविषयकम् उपासनम् । वाजसनेयके प्रणवस्य अप्रकृतत्वात्, उद्गीथेनात्ययाम इति कृत्स्नोद्गीथस्यैव [3]प्रस्तुतत्वात्[3] कृत्स्नोद्गीथविषयकमेव उपासनम् । अतो रूपभेदाद्विद्याभेदः । किञ्च छान्दोग्ये उद्गीथस्य [4]अध्यस्तप्राणभावस्य[4] उपास्यत्वम्, वाजिनां तु, 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति, तथेति तेभ्य एष प्राण उदगायत्' (बृ.उ.३-३-७) इति अध्यस्तप्राणभावस्य उद्गातुरुपास्यत्वम् । न च वाजसनेयके उद्गातुरुपास्यत्वे, उद्गीथेनात्ययाम इति उपक्रमविरोधः शङ्कनीयः। उद्गातुरुपासने [5]उद्गीथस्यानु[5]प्रविष्टतया उपक्रमावगतस्य उद्गीथस्य अपरित्यागात् । अत्र च वक्तव्यं बृहदारण्यकप्रकाशिकायाम् उक्तं, तत्रैवानुसन्धेयम् ।

'संज्ञातश्चेत्तदुक्तम् अस्ति तु तदपि' (ब्र,सू. ३-३-८) । ननु उद्गीथविद्येति संज्ञैक्यात् विद्यैक्यमुक्तमिति चेन्न - तत् संज्ञैक्यं विधेयभेदेपि अस्त्येव । यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनाम् अयनाग्निहोत्रे च । छान्दोग्यगतप्रथमप्रपाठकोदितासु बह्वीषु

---

1. उभयत्रापि - अ - आ । 2. प्रस्तुतो - अ - आ । 3. प्रकृतत्वात् - अ - आ ।
4. अद्यस्तप्राणस्य - अ । 5. उद्गीथस्याप्यनु - अ,आ ।

विद्यासु उद्गीथविद्या इति संज्ञैक्यस्य दर्शनाञ्च तदप्रयोजकमिति भावः । 'व्याप्तेश्च समञ्जसम्' (ब्र.सू. ३-३-९)। छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासु 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिषु [1]उद्गीथावयवस्य[1] व्याप्तत्वेन तन्मध्यपातित्वात् अस्या अपि विद्याया उद्गीथावयवप्रणवविषयत्वमेव । ततश्च छान्दोग्यवाजसनेयकयोः बह्वर्थवादसारूप्येऽपि छान्दोग्यगतविद्याया अध्यस्तप्राणभावोद्गीथावयवप्रणवविषयत्वात् वाजसनेयकोद्गीथविद्यायाश्च अध्यस्तप्राणभावोद्गानकर्तृविषयत्वात् प्रधानभूतोपास्यभेदे बह्वर्थवादसारूप्यस्य अप्रयोजकत्वात् विद्याभेद इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा. - आगाता ह वै कामानां भवति ।** एवम् अन्योऽपि प्राणोपासकः **कामानां -** यजमानकामानां **आगाता -** गानेन सम्पादनकर्ता भवति । **यः -** विद्वान् **प्राणविज्ञानवान् एवं -** पूर्वोक्तगुणविशिष्टं प्राणम् **अक्षरमुद्गीथमुपास्ते -** उपासनां करोति तस्यैतद् दृष्टं फलं भवति । **इत्यध्यात्मम् ।** अत्र इति शब्दः समाप्त्यर्थकः । आत्मशब्देन च इन्द्रियप्राणादिसंघातः कथ्यते । **अध्यात्मं -** आत्मनि, आत्मविषयमित्यर्थः । तथा च अध्यात्मम् उद्गीथोपासनं समाप्तम् इत्यर्थः ।।

**सु. -** अथ फलेन उपसंह्रियते । य एवं विद्वान् अन्योऽपि एतदक्षरम् उद्गीथमेवम् उपास्ते स यजमानस्य शत्रुपराजयप्रभृतीनां कामानाम् **आगाता -** गानेन सम्पादको भवति । **इत्यध्यात्मम् -** शरीरे । शरीरस्थप्राणात्मना उद्गीथस्य उपासनम् उक्तम् इति शेषः ।।

**।। इति द्वितीयखण्डभाष्यम् ।।**

## तृतीयः खण्डः

[आदित्यदृष्ट्या उद्गीथोपासनम्]

**अथाधिदैवतम् - य एवासौ तपति तमुद्गीथमुपासीत । उद्यन्वा एष प्रजाभ्य उद्गायति; उद्यँस्तमोभयमपहन्ति; अपहन्ता ह वै भयस्य तमसो भवति, य एवं वेद ।। १ ।।**

---

१. उद्गीथावयवस्य प्रणवस्य - अ,आ,क,ख ।

**प्र. - अताधिदैवतम्** । उद्गीथस्य उपासनम् उच्यते इति शेषः । **अधिदैवतम्** - देवतायाम् इत्यर्थः । देवताविषयमिति यावत् । **य......उपासीत** । आदित्यदृष्ट्या उद्गीथमुपासीत इत्यर्थः । कर्माङ्गभूतोद्गीथापेक्षया कर्माराध्यस्य आदित्यस्य उत्कृष्टत्वात्, [1]अपकृष्टे[1] उत्कृष्टदृष्टेरेव न्याय्यत्वात् आदित्यदृष्ट्या उद्गीथस्य उपास्यत्वं द्रष्टव्यम् । अयमर्थः - 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' (ब्र.सू.४-१-६) इति अधिकरणसिद्धः । तच्चाधिकरणं बृहदारण्यकप्रकाशिकायाम् उपन्यस्तं, तत्रैव अनुसन्धेयम् ।

उद्गीथेऽध्यस्यमानस्य आदित्यस्य उद्गीथसाम्यमाह - **उद्यन् - गायति** । वैशब्दोऽवधारणे । **एषः** - आदित्यः **उद्यन्** - उद्गच्छन्नेव प्रजानाम् अर्थप्रकाशनं कुर्वन् उद्गायतीव भवति । उद्गीथोऽपि प्रजानाम् उद्गायतीव भवति इत्यर्थः । **उद्यन्......हन्ति** । उद्यन्नेव आदित्यः तमोजनितं प्राणिनां भयम् अपहन्ति इत्यर्थः । तमोभयापहन्तृत्वगुणविशिष्टतया उद्गीथे आदित्योपासनस्य फलमाह - **अपहन्ता......वेद** । अन्धकारादिप्रयुक्त [2]भयहन्ता[2] भवति इत्यर्थः ।।

**आ.भा. - अथ** - आध्यात्मिकोद्गीथोपपादनानन्तरम्, **अधिदैवतं** - देवतायां देवताविषयकम् उद्गीथोपासनं कथ्यते । **य एवासौ** सर्वलोकसाक्षिकः सविता **तपति** - तपनक्रियां करोति तं सूर्यम् उद्गीथम् उपासीत । आदित्यदृष्ट्या उद्गीथस्य उपासनं कुर्यात् । कर्माङ्गभूतोद्गीथापेक्षया कर्माराध्यसूर्यस्य ऋषित्वात्; इति आदित्यदृष्ट्या उद्गीथस्य उपास्यत्वमिति । अक्षरात्मके उद्गीथे अध्यस्यमानसूर्यस्य उद्गीथतुल्यतां दर्शयितुमाह - **उद्यन् वेत्यादि** । **एष** - आदित्यः **उद्यन्** - उदयं प्राप्नुवन् **प्रजाभ्यः** - लोकेभ्यः **उद्गायति** । प्रजानाम् अर्थप्रकाशात्मकं कार्यं कुर्वन् उद्गायनीभवति । उद्गीथोऽपि, लोकानाम् उद्गायनीभवति इत्यर्थः । उद्यन् सूर्यः प्रजानां **तमोभयं** - अन्धकारं **अपहन्ति** - विनाशयति इति । यथोक्तगुणविशिष्टोद्गीथोपासकस्य फलमाह - **अपहन्ता इत्यादि** । **यः** - कश्चित् उपासकः **एवं** - यथोक्तगुणविशिष्टम् उद्गीथं **वेद** - जानाति स उपासकोऽपि **तमसो** भयादेः अन्धकारप्रयुक्तभयस्य **अपहन्ता** - विनाशकः भवति इत्यर्थः ।।

**सु.** - उक्तम् अध्यात्मम् उद्गीथोपासनम् । **अथ अधिदैवतम्** उपदिश्यते । **अथ** - अध्यात्मम् उद्गीथोपासनोपदेशानन्तरम्, **अधिदैवतम्** - देवतासु, उपासनम् उपदिश्यते इति

---

१. अपकृष्टात् - अ । २. भयापहन्ता - क - ख ।

शेषः । **य एवासौ तपति ;** प्रसिद्ध आदित्यः, **तम् उपासीत उद्गीथम् ।** उद्गीथं तद्दृष्ट्या उपासीत इति यावत् ।

ननु आदित्यात्मताभावनम् उद्गीथे कस्मिन्नंशे साम्यात् ? उच्यते - **उद्यन्वा एष प्रजाभ्य उद्गायति ।** उद्गीथ इव अयमादित्योऽपि उद्यन्नेव प्रजानामर्थे उद्गायति । यद्यपि उद्गीथः उद्गातृमुखेन उद्गच्छन् उद्गायति नाम प्रजाभ्यः । यजमानस्यार्थे हि उद्गानम् । आदित्यस्तु न उद्गायति, तथापि अयमुद्गच्छन् प्रजाभ्यः एवान्नं पुष्णाति पृथिव्याम् । न हि अनुदितेऽस्मिन् सस्यसम्पत्तिः । तदयमपि प्रजाभ्यः उद्गायतीव । वस्तुतः उद्गायति उद्गाता एव । उद्गीथस्तु उद्गीयते, तदुद्गीथे उद्गायति इति निर्देश औपचारिक एव । धातुतो विवक्षितं तु प्रवृत्तिमात्रं तदिदम् आदित्येऽपि समानम् । अथ फलमुच्यते - **उद्यन्निति ।** उद्यन् एष **तमसः** - अन्धकारात् भयम् अपहन्ति यस्मात् तस्मादेवम् आदित्यात्मना उद्गीथं यो **वेद** - उपासीत, स **तमसः** - अन्धकारात् **भयस्य अपहन्ता** भवति ।।

[प्राणादित्ययोः समानत्वम्]

**समान उ एवायञ्चासौ च, उष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते, स्वर इति प्रत्यास्वर इत्यमुम् ; तस्माद्वा एतमिमममुञ्चोद्गीथमुपासीत ।। २ ।।**

**प्र. - समान......चासौ च ।** अध्यात्मप्रकरणे उक्तः **अयं** - प्राणश्च, अधिदैवतप्रकरणे उच्यमानः **असौ** - आदित्यश्च **समान एव** इत्यर्थः । तदेव दर्शयति - **उष्णोऽयमुष्णोऽसौ ।** **अयं** - प्राणः **उष्णः**, उच्छ्वासस्य उष्णतया उपलभ्यमानत्वात् । **उष्णोऽसौ** - सवितुश्च उष्णत्वं स्पष्टमेवेति भावः । **स्वरः......इत्यमुम् ।** **इमं** - प्राणं स्वर इत्याचक्षते । **स्वरः** - गन्ता इत्यर्थः । 'स्वृ - शब्दोपतापयोः' (धा.पा. ९३२) इत्यस्मात्, धातूनाम् अनेकार्थत्वात्, कर्तरि अचि रूपम् । **अमुं** - आदित्यं स्वर इति प्रत्यास्वर इति च आचक्षते । उदयास्तमययोः गमनप्रत्यागमनसत्त्वात् । प्राणस्य वायुरूपतया सदागतित्वेन प्रत्यागमनाभावात् न प्रत्यास्वरसंज्ञेति भावः । अतः स्वरसंज्ञावत्वात् औष्ण्याच्च प्राणादित्यौ परस्परसमानौ इत्यर्थः । **तस्मात्...... उपासीत ।** **तस्मात्** - उभयोरपि समत्वात् **इमं** - प्राणं वा **अमुम्** - आदित्यं वा **एतम्** - एतादृशगुणकम् **उद्गीथमुपासीत ।** उद्गीथेऽध्यस्तम् उपासीत इत्यर्थः ।।

**आ.भा. - समानः** इत्यादि । **अयम्** - अध्यात्मप्रकरणकथितः प्राणः तथा **असौ** - अधिदैवतप्रकरणकथितः सूर्यश्च **समान उ** - तुल्य एव । तत्कथं तत्राह - **उष्णोऽयम्** इत्यादि । **अयं** - प्राणः **उष्णः** - उच्छ्वासस्य उष्णतया समुपलभ्यमानत्वात्, **उष्णोऽसौ । असौ** - आदित्यः **उष्णः** सूर्योष्णतायाः प्रत्यक्षमुपलभ्यमानत्वात् । स्वरः इति समाचक्षते । **इमम्** - अध्यात्मप्रकरणपठितप्राणं **स्वर इति आचक्षते** - कथयति । स्वरः इत्यस्य गन्ता इत्यर्थः । **अमुं** - सूर्यम् स्वरः इति प्रत्यास्वरः इत्याचक्षते । उदयास्तसमये गमनागमनस्य दर्शनात् । प्राणो हि वायुरूपत्वात् सर्वदा गतिशीलत्वेन प्रत्यागमनाभावात् न प्रत्यास्वरः इति कथ्यते । अतः उभयोरपि प्राणसूर्ययोः औष्ण्यात् स्वरसंज्ञावत्वाच्च समानत्वमिति । **तस्माद्वा** - यस्मादुभयोरपि समानत्वम् तस्मात् कारणात् **इमम्** - अध्यात्मं प्राणम् । **अमुञ्च** - आदित्यम् **एतम्** - पूर्वोक्तगुणविशिष्टम्, **उद्गीथमुपासीत** - उद्गीथे अध्यस्यमानं सूर्यम् उपासीत इत्यर्थः इति ।।

**सु.** - यद्विहितम् अनुपदम् अध्यात्मम्, यच्च अधुना विधीयते अधिदैवतम्, तदुभयं न स्वतन्त्रम् उद्गीथोपासनं किन्तु प्राणादित्योभयदृष्टियुक्तम् एकम् उपासनम् इति एतत् सोपपत्तिकमाह - **समानः** इति । **एतम्** - उद्गीथं **इमं** - अनुपदोक्तप्राणात्मकम्, **अमुं** - अधुना निरूप्यमाणादित्यात्मकं च उपासीत । प्राणादित्योभयरूपतया उद्गीथः उपास्यः इति यावत् । कथम् एकस्मिन् उपासने विरुद्धशीलयोः उपासनरूपता ? इत्याशंकाम् उभयोः अविरुद्धत्वज्ञापनेन परिहरति - **समान उ एवायम्** इत्यादिना । **अयं चासौ च** - प्राणः आदित्यश्च समानः एव । तथाहि - **उष्णोऽयं** प्राणः, **उष्णोऽसौ** - आदित्यः, प्रसिद्धमेतत् । **स्वर इति इमं** प्राणमाचक्षते । इह शरीरे चक्षुरादयः प्राणायत्तप्रकाशाः प्राणस्तु न तदायत्तः, अतः प्राणः स्वयं राजत इति स्वरः । **स्वर इति प्रत्यास्वर इत्यमुमाचक्षते** - देवतासु असौ आदित्यः तेजोमयः। स्वयं राजत इति स्वरः । प्रतिदिशम् आसमन्तात् स्वयं राजत इति प्रत्यास्वरः । यद्वा - उदात्तानुदात्तादिभेदहेतुत्वात् अकारादिवर्णमयशब्दहेतुत्वाद्वा प्राणः स्वरः । स्वृधातोः शब्दार्थकात् अप्प्रत्यये स्वरः इति रूपम् । प्राणवृत्तिविशेषेणैव हि उदात्तादिभेदाः वर्णभेदाश्च भवन्ति । तथा देवतासु असौ आदित्यः स्वरः, उदिते ह्यादित्ये परितः शब्दाः प्रसर्पन्ति प्रतिदिशम्। अस्तमिते च तस्मिन् सर्वे एव प्राणिनः नीरवाः स्वनिलयनमधिशेरते, तदमुं स्वर इत्याचक्षते । यद्वा स्वरति गच्छति इति स्वरः, गच्छति हि प्राणः, तमिमं स्वरः इत्याचक्षते । तथा

असौ आदित्यः स्वरति, न केवलं स्वरति, किन्तु प्रत्यास्वरति च प्रत्यागच्छति च । तदमुं स्वरः इति प्रत्यास्वरः इत्याचक्षते । धातूनाम् अनेकार्थतया स्वृधातोः गमनार्थकात् अचि स्वरः इति रूपम् ।

परे तु - 'इमममुं वोद्गीथमुपासीत' इति पाठमाश्रित्य प्राणादित्ययोः समत्वात् प्राणं वा आदित्यं वा उपासीत इति विकल्पेन व्याचक्षते । यद्यपि पाठे न शङ्कावसरः, श्रौतो ह्ययं परिगृहीतः, श्रुतिस्तु यथाश्रवणं मान्यैव । अथापि 'एवं हैव स विध्वंसते य एवंविदि पापं कामयते अपहन्ता ह वै भयस्य तमसो भवति य एवं वेद' इति श्रूयमाणं फलभेदं कथं ते सङ्गमयन्ति एतावद्विचार्यम् । विकल्पे हि फलैक्यम् अपेक्ष्यते । स्यादप्येवम् । कर्माङ्गभूतोपासनसामान्यात् कर्मणो वीर्यवत्तरत्वरूपं फलं तु एकम् । तत्र तत्र श्रूयमाणः फलभेदस्तु अधिकः इति ।

इति अध्यात्मम् इत्यन्तेन प्राणात्मना एकमुपासनं अथ अधिदैवतम् इत्यनेन आदित्यात्मना उपासनम् अपरं निरूप्य प्राणादित्योभयात्मना उपासनमिदं तृतीयं निरूपयति **समान उ एवायम्** इत्यादिना इति कश्चित् ।।

[व्यानात्मना उद्गीथं उपासीत]

**अथ खलु व्यानमेवोद्गीथमुपासीत ; यद्वै प्राणिति स प्राणः, यदपानिति सोऽपानः। अथ यः प्राणापानयोः सन्धिः स व्यानः। यो व्यानः सा वाक्। तस्मादप्राणन् अनपानन् वाचमभिव्याहरति ।। ३ ।।**

**प्र.** - प्रकारान्तरेण उद्गीथोपासनमाह - **अथ......उपासीत ।** उद्गीथं व्यानत्वेन उपासीत इत्यर्थः । को व्यानः इत्यत्राह - **यद्वै प्राणिति** इत्यादिना । पुरुषो मुखनासिकेन **यत् प्राणिति** - यं वायुं बहिर्निस्सारयति। सः प्राणाख्यो वायोः वृत्तिविशेषः । मुखनासिकेन यं वायुम् अन्तराकर्षति, सोऽपानाख्यवृत्तिविशेषः । तयोः अन्तरालवृत्तिविशेषरूपः सन्धिः व्यानः इत्यर्थः ।

उद्गीथे व्यानाध्यासहेतुमाह - **यो व्यानः सा वाक्** । वाचः व्याननिर्वर्त्यत्वात् वाक् व्यानः एवेत्यर्थः । वाचो व्याननिर्वर्त्यत्वे युक्तिमाह - **तस्मात्......व्याहरति । तस्मात्** - वाचः व्याननिर्वर्त्यत्वादेव हेतोः **अप्राणन् अनपानन्** - श्वासमोक्षाकर्षणलक्षणप्राणापानौ विनैव तत्सन्धिरूपया व्यानवृत्त्या वाचम् अभिव्याहरति इत्यर्थः ।।

**आ.भा.** - पुनः प्रकारान्तरेण उद्गीथस्यैव उपासनं दर्शयति । **अथ खलु** इत्यादि । **अथ खलु व्यानमेव** । प्राणवायोः अङ्गभूतम् **उद्गीथमुपासीत** । उद्गीथस्य व्यानत्वेन उपासनं कुर्यादित्यर्थः । व्यानवायोः स्वरूपं दर्शयति - **यद्वै** इत्यादि । **यत्** - यं वायुं लोकः मुखनासिकया **प्राणिति** - बहिर्निष्कासयति **सः** - प्राणाख्यो वायोः वृत्तिविशेषः । **यदपानिति सोऽपानः** - मुखनासिकाभ्यां यं वायुं अन्तः आकर्षति स अपानाख्यो वृत्तिविशेषः । **अथ यः प्राणापानयोः सन्धिः स व्यानः** - प्राणापानयोः सन्धौ मध्ये विद्यमानः वृत्तिविशेषः व्यानः इत्यर्थः । **यो व्यानः सा वाक्** - वाण्या व्यानवायुनिर्वर्त्यत्वात् वाक् व्यानः इत्यर्थः । अत्र हेतुमाह - **तस्मात्** इत्यादि । **तस्मात् अप्राणन्** - प्राणक्रियाम् अकुर्वन् **अनपानन्** - अपानक्रियाम् अकुर्वन् **वाचमभिव्याहरति** - वदति । वाण्यादीनां प्राणापानक्रिययोः अभावेऽपि दर्शनात् व्यानकार्यत्वं निश्चीयते। अतो व्यानम् उद्गीथेन उपासीत इति ॥

**सु.** - प्रकारान्तरेण अध्यात्मम् उपासनम् उच्यते - **अथ** इति । **व्यानमेवोद्गीथमुपासीत** - उद्गीथं व्यांनात्मना उपासीत इत्यर्थः । कोऽसौ व्यानः ? उच्यते - **यद्वै प्राणिति स प्राणः, यदपानिति सोऽपानः अथ यः प्राणापानयोः सन्धिः स व्यानः** । प्राणिति इति यत् प्राणनव्यापारं मुखनासिकाभ्यां वायोः निःसरणलक्षणं करोति इति यत् स वै प्राणः स एव प्राणः । मुखनासिकाभ्यां वायोः अन्तराकर्षणलक्षणम् अपानव्यापारं करोति इति यत् स एव अपानः । यद्यपि निःसारणम् आकर्षणं च प्रयत्नविशेषः पुरुषधर्मः, न वायोः धर्मः, तथाऽपि तत्प्रयोज्यो वायोः वृत्तिविशेषः तेन लक्ष्यते इति न क्षतिः । उक्तलक्षणयोः प्राणापानाख्ययोः शरीरान्तस्थवायुवृत्तिविशेषयोः यः **सन्धिः** - तयोः अन्तराले भवः, ताभ्यां विरहितो वृत्तिविशेषो वायोः स व्यानः ।

ननु को विशेषः तस्मिन् यत्प्राणम् अपानं च अतीत्यैतदात्मना उपासनं विधीयते इत्याशङ्कां परिहरन् यानि वाग्व्याहरणादीनि वीर्यवन्ति कर्माणि तानि अनेनैव वृत्तिविशेषेण भवन्ति इत्याह - **यो व्यानः सा वागित्यादिना तानि करोति** इत्यन्तेन । **यो व्यानः सा वाक्** - कतिपयपदसमुदायरूपा हि वाक् व्यानः एव । कस्मात् ? यस्मादप्राणन् अपानन् वाचमभिव्याहरति तस्मात्। यदा हि पञ्चष पदानि व्याहरेत्पुरुषः तदा हि निरुध्य प्राणापानौ तयोः अन्तरालरूपं व्यानम् अवलम्ब्य व्याहरति, तस्मात् तद्बलनिर्वर्त्यत्वेन व्यान एव वाक् । एतेन वाचो व्याहरणरूपवीर्यवत्कर्माधायकत्वरूपो विशेषो व्याने कीर्तितः ॥

**या वाक् सर्क् ; तस्मादप्राणन् अनपानन् ऋचमभिव्याहरति ; यर्क् तत् साम ; तस्मादप्राणन् अनपानन् साम गायति ; यत् साम स उद्गीथः, तस्मादप्राणन् अनपानन् उद्गायति ।। ४ ।।**

**प्र. - या वाक्** इत्यादि । अप्राणता अनपानता पुंसा क्रियमाणत्वादेव व्यानस्य वागृक्सामोद्गीथानाञ्च ऐक्यमित्यर्थः ।।

**आ.भा. -** सुगमत्वात् न व्याख्यायते ।।

**सु. -** अथ वाग्विशेषाभिव्याहरणरूपवीर्यवत्कर्माधायकत्वरूपाः विशेषाः कीर्त्यन्ते - **वागित्यादिना । या वाक् सा ऋक् -** वाग्विशेषो हि ऋक् । व्यानत्वेन निरूपिताया वाचो विशेषो ऋगित्युक्त्या ऋचो व्यानत्वं प्रतिज्ञातं भवति । तस्याः तथात्वमुपपाद्यते - **तस्मादिति**। यस्मात् **अप्राणन्ननपानन् ऋचमभिव्याहरति** तस्मादृचो व्यानरूपवाग्विशेषत्वम् उपपद्यते इति भावः । एवमेव उद्गायति इत्यन्तं नेयम् ।।

**अतो यान्यन्यानि वीर्यवन्ति कर्माणि, यथा - अग्नेर्मन्थनमाजेः सरणम्, दृढस्य धनुष आयमनम् - अप्राणन् अनपानँस्तानि करोत्येतस्य हेतोर्व्यानमेव उद्गीथमुपासीत ।। ५ ।।**

**प्र. - अत......उपासीत ।** लोके अग्निमथनमर्यादाधावनदृढधनुरारोपणादि [1]वीर्यवत्कर्माणि[1] व्यानसाध्यान्येव । अतोहेतोः उद्गीथाख्यवीर्यवत्कर्मणोऽपि व्यानसाध्यत्वात् व्यानमेव उद्गीथम् उपासीत इत्यर्थः ।।

**आ.भा. -** सुगमत्वात् न व्याख्यायते ।।

**सु. - अतो -** वागाद्यभिव्याहरणादिरूपात् कर्मणः **यान्यन्यानि कर्माणि वीर्यवन्ति** अग्नेर्मन्थनं, **आजेः** - मर्यादायाः **सरणं** - धावनम् दृढधनुषः समाकर्षणं इत्यादीनि, तानि **अप्राणन् अनपानन्** एव **करोति** । निगमयति - **एतस्येति । एतस्य -** वीर्यवत्कर्माधायकत्वरूपविशेषस्य **हेतोः**, वीर्यवत्कर्माधायकत्वात् इति यावत्, **उद्गीथं व्यानमेवोपासीत -** व्यानदृष्ट्या उपासीत ।।

---
1. वीर्यवत्तराणि कर्माणि - क ।

**अथ खलूद्गीथाक्षराण्युपासीत, उद्गीथ इति । प्राण एव उत्; प्राणेन ह्युत्तिष्ठति; वाग्गीः, वाचो ह गिर इत्याचक्षते । अन्नं थम्; अन्ने हीदँ सर्वँ स्थितम् ।। ६ ।।**

**प्र. - अथ......उपासीत** इति । उत् गी थ इति त्रीणि उद्गीथनामानुप्रविष्टाक्षराणि एव उपासीत इत्यर्थः । **प्राण एव उत्** । उत् इति अक्षरे प्राणबुद्धिः कार्या इत्यर्थः । तत्र हेतुमाह - **प्राणेन ह्युत्तिष्ठतीति** । स्पष्टम् । **वाग्गीः** । गीः इत्यक्षरे वाग्बुद्धिः कार्या । वाचो गीर्शब्दवाच्यत्वात् गीः इत्यस्य वागध्यासाधिष्ठानत्वम् उपपद्यते इति भावः । **अन्नं थम्** । थम् इत्यक्षरे अन्नबुद्धिः कर्तव्या इत्यर्थः । तत्र हेतुमाह - **अन्ने......स्थितम्** । अन्नस्य [1]सर्वस्थानत्वेन[1] थकारवत्वसाम्यात् थशब्दे अन्नबुद्धिः युज्यते इति भावः ।।

**आ.भा. -** अथ खलु उद्गीथाक्षराणाम् उपासनं प्रदर्श्यते - **अथ** इत्यादि । **अथ -** सम्पूर्णोद्गीथोपासनानन्तरम् **उद्गीथाक्षराणि -** उद्गीथघटकवर्णान् **उपासीत -** उपासनं कुर्यात् । तत्र उत् गी थ इति अक्षरत्रयं विद्यते । तेषु प्राण एवाध्यात्म उत् । उत् इत्याकारके अक्षरे प्राणदृष्टिः कार्या इत्यर्थः । तत्र कारणमाह - **प्राणेन ह्युत्तिष्ठति** । प्राणाभावे अवसानदर्शनात् । अतः उत् शब्दस्य प्राणस्य च समत्वम् । **वाग्गीः -** गीः इत्यक्षरे वाग्बुद्धिः कर्तव्या इत्यर्थः । तत्र कारणमाह - **वाचो ह गिर इत्याचक्षते** शिष्टाः । **अन्नं थम्** । थमित्यक्षरे अन्नबुद्धिः कार्या । तत्र हेतुः **अन्ने हीदं सर्वं स्थितम्** । अन्नस्य सर्वाधारत्वेन थकांरवत्वसमत्वात् थशब्दे अन्नबुद्धिः युज्यते ।।

**सु. -** उद्गीथ इत्यस्मिन्पदे यानि अक्षराणि तेषाम् उपासनं विधीयते - **अथ** इत्यादिना । यद्यपि उद्गीथोपासननिरूपणसन्दर्भे अक्षरोपासननिरूपणम् अनुचितम् । अथापि उद्गीथस्यैव नामाक्षराणि इति नाम्नि उपासिते अर्थः उपासितः एव भवतीति न अनौचित्यम् । उत् गी थ इति इमानि उद्गीथस्य नाम्नः अक्षराणि उपासीत । तत्र **प्राण एवोत् -** प्रथमं श्रूयमाणं उत् इति अक्षरं प्राणात्मना उपासीत इत्यर्थः । तत्र निमित्तमाह - **प्राणेन ह्युत्तिष्ठति** इति । सर्वमेव प्राणिजातं प्राणबलेन हि उत्तिष्ठति । असति तु तस्मिन् अधः पतति नाम । तत् प्राणः एव उत्थितिः । उत्थितिरेव च उत् । तथा च **प्राणः** एव उत् । अयमाशयः - उत्थितेः प्राणसाध्यत्वेन तस्याश्च उत् इति उपसर्गविशेषित-धातुविशेषगम्यत्वात्

1. स्थानत्वेन - अ,आ ।

साध्यसाधनयोः बोध्यबोधकयोश्च अभेदाध्यवसायेन तत्र तद्दृष्टिविधानमिति । **वाग्गीः -** अयं गीशब्दो गीः इत्यस्य अक्षरस्य निर्देशः । यद् द्वितीयमक्षरं गीति तत् वाक् । वाक्त्वेन तदुपासनं कार्यम् इति यावत् । तत्र निमित्तमाह - वाचो ह गिरः इत्याचक्षते । वाचः इति द्वितीयान्तम् । वाच्यवाचकयोः अभेदभावना युक्ता इति भावः । यद्यपि गीः इति रेफान्तशब्दो वाचि, इह नाम्नि तु न तदन्तम्, अथापि ईषत् विकृतम् अनन्यत् । **अन्नं थम् -** यत् तृतीयम् अक्षरं थम् इति तदेतदन्नम् । अन्नत्वेन उपासीत इति यावत् । तत्र निमित्तमाह - **अन्ने हीदं सर्वं स्थितम्** इति । यस्मादिदं दृश्यमानं सर्वं प्राणिजातम् अन्ने स्थितं तस्मात् स्थानमन्नं स्थितिरेव वान्नम् । तदभिधायिपदं च थकारेण अवयवेन अवयवि । तदेवम् अन्नेन सम्बन्धात् थकारे अन्नदृष्टिः कार्या इति भावः ।।

[उद्गीथनामाक्षरोपासनम्]

**द्यौरेव उत्, अन्तरिक्षं गीः, पृथिवी थम्, आदित्य एव उत्; वायुर्गीः, अग्निः थम्; सामवेद एव उत्, यजुर्वेदो गीः, ऋग्वेदः थम्; दुग्धेऽस्मै वाग् दोहम्; यो वाचो दोहः, अन्नवान् अन्नादो भवति, य एतान्येवं विद्वान् उद्गीथाक्षराणि उपास्ते उद्गीथ इति ।। ७ ।।**

**प्र. -** प्रकारान्तरेण [1]उद्गीथाक्षरोपासनमाह[1] - **द्यौरेव - थम्** इत्यादि उदक्षरे द्युलोकादित्यसामवेददृष्टिः, गीरक्षरे अन्तरिक्षवायुयजुर्वेददृष्टिः, थमक्षरे पृथिवी अग्निऋग्वेददृष्टिश्च कार्या इत्यर्थः । उक्तस्य चतुर्विधस्य उद्गीथनामाक्षरोपासनस्य फलमाह - **दुग्धेऽस्मै वाग्दोहम्** । वाक् अस्मै [2]उपासकाय[2] दोहं दोग्धि इत्यर्थः । कं दोहम् इत्यत्राह - **यो वाचो दोहः** । वाक्साध्यं फलम् इत्यर्थः । फलान्तरमप्याह - **अन्नवानन्नादो भवति** । प्रभूतान्नः दीप्ताग्निश्च भवति इत्यर्थः । **य...... इति** । स्पष्टोऽर्थः ।।

**आ.भा. -** प्रकारान्तरेण उद्गीथाक्षरोपासनं दर्शयति । **द्यौरेव** इत्यादि । उत् इत्याकारके अक्षरे द्युलोकादित्यसामवेददृष्टिः कर्तव्या । गीः इत्याकारकाक्षरे अन्तरिक्षवायुयजुर्वेददृष्टिः कर्तव्या । थम् इत्याकारके पृथिव्यग्निऋग्वेददृष्टिश्च कर्तव्या इत्यर्थः ।

---

1. उद्गीथोपासनमाह - क । 2. उपासकाय सकामाय - क ।

उक्तोपासनस्य फलं दर्शयति । **दुग्धे** इत्यादि । वागस्मै उपासकाय दोहं दोग्धि । किमात्मकं दोहं तत्राह **यो वाचो दोहः ।** वाणीसाध्यं फलम् इत्यर्थः । फलान्तरमपि दर्शयति **अन्नवान्** इत्यादि । अन्नबहुलः प्रदीप्तजाठराग्निश्च भवति । तदुक्तं - भोज्यं भोजनशक्तिश्च इत्यादि ।।

**सु.** - अध्यात्मम् उपासनम् उक्तम् । प्राणो वागन्नम् इत्ययं हि समुदायः शरीरे सम्बध्यते । अथ अधिलोकम् अधिदैवम् अधिवेदं चाह । **द्यौरेवोत्** - योऽसौ द्यौर्नाम लोकः स एव उत्, स हि उत्क्रम्य वर्तते सुखेन इतरान् मानुषादीन्, उच्चैः स्थितेर्वा । **अन्तरिक्षं गीः** - शब्दो हि अन्तरिक्षस्यैव धर्मः, गिरणाद्वा लोकानाम् । द्युपृथिव्योः मध्यस्थितेर्वा । उक्तं द्यौरेव उदिति वक्ष्यति च पृथिवी थम् इति । **पृथिवी थं** - पृथिव्यां हीदं सर्वं स्थितम् **आदित्य एव उत्** - स हि उदेति, ऊर्ध्वमेवैति सर्वदा। न केवलमुदेति उद्गमयति च खमण्डलं प्रविष्टान् । **वायुर्गीः** - वायुरेव गीः, तेनैव हिं सा ; गिरो हि वर्णरूपाः, वर्णाश्च वायुनैव निमित्तेन, दण्डाभिहतात् भेर्यादेरिव शरीरान्तःस्थवायुविशेषाभिहतात् कण्ठताल्वादेर्हि तेषाम् आविर्भावः । अग्न्यादीनां गिरणाद्वा वायुर्गीः । **अग्निस्थं** - अग्निर्हि प्रजानाम् अवस्थानम्, स्मर्यते हि -

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"।। (म.स्मृ.३-७६) इति ।

**सामवेद एवोत्** - वेदेषु साम ह्युत्कर्षेण गण्यते । 'वेदानां सामवेदोऽस्मि' (भ.गी.१०-२२) इति 'सामवेदो वै स्वर्गलोकं' इति स्वर्गलोकत्वेन श्रवणाद्वा । **यजुर्वेदो गीः,** मध्यतः परिकल्नात्साम्यात् । स्वाहा स्वधादिना दत्तस्य हविषो गिरणाद्वा । अथ फलमुच्यते - **दुग्धे** इत्यादिना । यः एतानि नामाक्षराणि एवम् उक्तेन प्रकारेण **विद्वान्** - जानन् उपास्ते, अस्मै **वाक्** - ऋगादिरूपा **दोहं दुग्धे** - फलं जनयति । किं तत् ? यो वाचो दोहः स्यात् स्वयम् अन्नवान् अन्नादनशक्तश्च भवति । **इतिशब्दः** प्रक्रान्तोपासनप्रकारपरिसमाप्तौ भवति ।।

**[आशीस्समृध्द्यर्थोपसरणानि]**

**अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत - येन साम्ना स्तोष्यन् स्यात्, तत् सामोपधावेत् ।। ८ ।।**

**प्र. - अथ......उपासीत ।** आशीस्समृद्धिहेतुभूतानि उपासनानि इमानि इति मत्वा **उपासीत** - उपासनं कुर्यादित्यर्थः । केषाम् उपासनं कार्यम् इत्यत्राह - **येन......धावेत् । उपधावेत् -** चिन्तयेत् । उपासीत इत्यर्थः । शिष्टं स्पष्टम् ।।

**सु. -** अथ प्रासङ्गिकम् - उद्गीथोपासनं हि प्रकृतम् । आदास्यते चानुपदं प्रकृते एव पदं 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति । इदं तु मध्ये सामादीनाम् उपासनं सर्वकाम्योपासनशेषभूतं विधीयते । फलं च 'यदस्मै सकामः समृद्धयेत्' इति सामान्यतः श्रूयते । **अथ खलु -** उद्गीथनामाक्षरोपासनानन्तरं मध्ये किञ्चित् इदम् उच्यते । कुतः ? **आशीः समृद्धिरुपसरणानि । उपसरणानि -** उपासनानि, आशिषः कामस्य समृद्धिः सम्पादकानि **इति** हेतोः । **उपासीत -** सामान्यतो विधिरयं वक्ष्यमाणाभिसन्ध्या । तत्र एकैकं क्रमशो विदधाति - **येन साम्ना स्तोष्यन्स्यात् -** अयमुद्गाता **तत्साम उपधावेत्** - उपासीत इति यावत् ।

"तत्साम यस्यामृचि सम्बद्धं तामृचमुपधावेत् ।
यदार्षेयं यदृषिकं तत्साम तमृषिमुपधावेत् ।।
तेन साम्ना यां देवतामभिष्टोष्यन्स्यात् तां देवतामुपधावेत् ।
येन छन्दसा गायत्र्या स्तोष्यन्स्यात् तच्छन्द उपधावेत् ।।
येन स्तोमेन स्तोष्यमाणः स्यात् तं स्तोममुपधावेत्"।

स्तोमः ऋक्संख्याविशेषः । शानचा स्तोमफलं न परस्येति व्यज्यते । यां दिशम् अभिव्याप्य स्तोष्यन्स्यात् तां दिशम् उपधावेत् । अन्ततः सामाद्युपासनानन्तरम्, आत्मानम् उपसरेत् चिन्तयेत् उपसृत्य एवम् आत्मानं च सामादिभिः सहायमुद्गाता कामम् अभिलषितं **ध्यायन् -** चिन्तयन् **स्तुवीताप्रमत्तः -** स्वरादिषु अवहितः । अस्मै एवं स्तुवते यत्कामः स्तुवीत **सः कामः समृध्येत -** सम्पद्येत, कदा ? **अभ्याशः -** अचिरेण । वीप्सा आदरे, अध्यायसमाप्तौ वा ।। ८-१२ ।।

**यस्यामृचि, तामृचम्; यदार्षेयम्, तमृषिम्; यां देवतामभिष्टोष्यन् स्यात्, तां देवतामुपधावेत् ।। ९ ।।**

**प्र. - यस्मामृचि तामृचम् ।** यस्यां ऋचि साम्ना स्तोष्यन् स्यात् तामृचं चिन्तयेत् इत्यर्थः । **यदार्षेयं तमृषिम् ।** [1]ऋषिसम्बन्धि आर्षेयम्[1] । यस्यार्षेयम्

1. ऋषिदृष्टमित्यर्थ - इत्यधिकःपाठः - अ,आ,क,ख ।

**यदार्षेयम्** । शिवभागवतवत् समासः । साम यदृषिकम् तमृषिं चिन्तयेत् इत्यर्थः । **यां......धावेत्** । स्पष्टम् ।।

**येनच्छन्दसा स्तोष्यन् स्यात्, तच्छन्द उपधावेत्; येन स्तोमेन स्तोष्यमाणः स्यात्, तँ स्तोममुपधावेत् ।। १० ।।**

**प्र. - येन......उपधावेत्** । **छंन्दः** - गायत्र्यादिकम् इत्यर्थः । **येन धावेत्** । **स्तोमः** - त्रिवृत्पञ्चदशादिलक्षण-ऋक्सङ्ख्याविशेषः ।।

**यां दिशमभिष्टोष्यन् स्यात्, तां दिशमुपधावेत् ।। ११ ।।**

**प्र. - यां......धावेत्** । यद्दिगभिमुखतया स्तोष्यन् स्यात् तां दिशं च ध्यायेत् इत्यर्थः ।।

**आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन् अप्रमत्तः। अभ्याशो ह यदस्मै स कामः समृध्येत, यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ।। १२ ।।**

**।। इति तृतीयः खण्डः ।।**

**प्र. - आत्मानं......अप्रमत्तः** । उक्तं सर्वं ध्यात्वा **अन्ततः** - अन्ते आत्मानमपि **उपसृत्य** - ब्रह्मात्मकं ध्यात्वा **कामं** - आत्मन इष्टं ध्यायन् **अप्रमत्तः** - अवहितः - स्वरवर्णाद्यभ्रेषानुकूलमनोऽवधानयुक्तस्सन् बहिष्पवमानादिस्तोत्रमारभेत इत्यर्थः । **अभ्याशो ह स्तुवीतेति** । यत्कामनया एवंवित् स्तोत्रं करोति स कामः यस्मात्कारणात् **अभ्याशः** - क्षिप्रं **समृध्येत** - समृद्धिं प्राप्नोति इत्यर्थः । अभ्याङ्पूर्वात् अश्नोतेः असुनि अभ्याश इति रूपम् । क्षिप्रफलसिद्धिः उपसरणफलम् इत्यर्थः । द्विरुक्तिः विद्यासमाप्त्यर्था ।।

**आ.भा. - अथेत्यादि** । तत्र आशिषः समृद्धेश्च कारणभूतानि **उपसरणानि** - उपासनानि इति मत्वा उपासनं कर्तव्यम् इत्यर्थः । केषाम् उपासनं कर्तव्यं तत्राह - **येन......धावेदिति** । **धावेत्** - चिन्तयेत् उपासीत इत्यर्थः । एवं सर्वत्र ज्ञातव्यम् । अथ सामादिध्यानानन्तरम् **अन्ततः** - अन्ते आत्मानमपि **उपसृत्य स्तुवीत** - ध्यानं कुर्यादित्यर्थः । तदनन्तरं **कामं** - आत्मनः अभिलषितम् इष्टं **ध्यायन् अप्रमत्तः** - अवहितः स्वर उष्म-व्यञ्जनादिभ्यः प्रमादमकुर्वन् । **यदस्मै** - यत्कामनया एवंवित् स्तोत्रं करोति स कामो यस्मात्कारणत् **अभ्याशः** - क्षिप्रं **समृध्येत** - समृद्धिं गच्छेत् । **यत्कामः स्तुवीत, यत्कामः स्तुवीत** इति द्विरुक्तिः आदरार्था खण्डसमाप्तिद्योतिका चेति ।।

**।। इति तृतीयखण्डभाष्यम् ।।**

## चतुर्थः खण्डः

[प्रणवप्रशंसा]

**ओमित्येतदक्षरमुद्गीथमुपासीत ; ओमिति ह्युद्गायति । तस्योप - व्याख्यानम् ।। १ ।।**

**प्र. - ओमित्येतत्** इत्यादि । पूर्ववदर्थः । अत्र उक्तस्यैव उद्गीथोपासनस्य पुनः परामर्शो मध्ये [1]उद्गीथनामाक्षरोपासनया[1] अन्तरितत्वात् इति द्रष्टव्यम् ।।

**आ.भा. -** एतस्यार्थः पूर्ववदेव ज्ञातव्यः । अत्र उद्गीथोपासनस्य प्रकृतस्य पुनः कथनं मध्ये उद्गीथाक्षराद्युपासनान्तरितत्वात् इति ।।

**सु. -** गतः प्रासङ्गिको विचारः । इतः प्रकृते एव प्रवर्तते इति ज्ञापयन् आह । व्याख्यातम् एतत् ।।

**देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् ; ते छन्दोभिरच्छादयन् ; यदेभिरच्छादयन्, तत् छन्दसां छन्दस्त्वम् ।। २ ।।**

**प्र. - देवाः......प्राविशन् ।** देवाः मरणभीताः सन्तः **त्रयीं विद्यां प्राविशन्** वैदिकं कर्म प्रारब्धवन्तः इत्यर्थः । **ते छन्दोभिरच्छादयन् । छन्दोभिः -** कर्मविनियुक्तैः वैदिकैर्मन्त्रैः मृत्युभीताः सन्त आत्मानं छादितवन्तः इत्यर्थः । वैदिकमन्त्रकञ्चुकच्छन्ना इति यावत् । **यत्......छन्दस्त्वम् ।** छादकत्वादेव (वैदिकमन्त्राणां) छन्दस्त्वम् इत्यर्थः ।।

**आ.भा. - देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् -** मरणभीताः ते देवाः मरणभयात् विमुक्त्यर्थं वैदिकं कर्म कुर्वन्तः अभवन् इत्यर्थः । ते छन्दोभिः आच्छादयन् । ते देवाः मृत्युभीताः सन्तः छन्दोभिः कर्मविनिर्मुक्तैः वैदिकमन्त्रैः आत्मानं छादितवन्तः । वैदिकमन्त्रकवचावगुण्ठिता अभवन् इति । यदेभिरात्मानम् आच्छादयन् तत् **छन्दसां छन्दस्त्वम्** इति ।।

**सु. -** प्रणवोपासनस्य फलविशेषः आख्यायिकामुखेन निरूप्यते । **देवाः मृत्योर्बिभ्यतः -** मरणतो भीताः **त्रयीं विद्यां प्राविशन् ।** त्रय्येव विद्या तत्र प्रवेशः

---

1. उद्गीथनामाक्षराद्युपासनया - क ।

तद्विहितकर्मद्वारा । वैदिकं कर्म आरेभिरे इति यावत् । प्रविश्य तत्र ते छन्दोभिः मन्त्रैः स्वात्मानम् **अच्छादयन्** - आवृतवन्तः । छन्दोभिः तिरोहितान् अस्मान् मृत्युर्न पश्येत् इति । अमरणमाकाङ्क्षमाणाः कर्मसु प्रवृत्ता मन्त्रजपादिपराः अभूवन् इति यावत् । मन्त्रेषु छन्दश्शब्दप्रवृत्तौ निमित्तमाह - **छन्दसां छन्दस्त्वम्** इति । **छन्दसां** - मन्त्राणां **छन्दस्त्वम्** - छन्दश्शब्दप्रवृत्तौ निमित्तम् । तत्, यदाच्छादकतया परिग्रहणम् ।।

**तानु तत्र मृत्युः, यथा मत्स्यमुदके परिपश्येत्, एवं पर्यपश्यदृचि साम्नि यजुषि । ते नु [1]विदित्वो[1]र्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ।। ३ ।।**

**प्र. - तानु......यजुषि** । उशब्दो निरर्थकः । **तान्** - देवान् कर्मपरान्, यथा मत्स्यग्राही उदके मत्स्यं परिपश्यति, एवं मृत्युः [2]त्रयीविहितं,[2] कर्मानुप्रविष्टान् [3]कर्मभ्रेष[3] - समयं प्रतीक्ष्य ग्रहीतुम् ऐच्छत् इत्यर्थः । **ते नु......प्राविशन्** । **ते** - देवाः मृत्योः चिकीर्षितं ज्ञात्वा ऋक्सामयजूरूपत्रयीविहितयज्ञादिकर्मभ्यः **ऊर्ध्वाः** - [4]अधिकाः[4] कर्मनिर्मलीकृतान्तः-करणास्सन्तः स्वरशब्दितम् ओङ्कारं **प्राविशन्** - उपासितुं प्रवृत्ताः [5]इत्यर्थः[5] ।।

**आ.भा. - ततो मृत्युः तान्** - देवान् कर्मरतान् **यथा** मत्स्यग्राही **मत्स्यमुदके** - जले **परिपश्येत्, एवं**-मृत्युः वेदविहितकर्मणि अनुप्रविष्टान् कर्मवैगुण्यसमयं प्रतीक्ष्य ग्रहीतुम् ऐच्छत् । ततो देवाः मृत्योः चिकीर्षितं ज्ञात्वा, **ऊर्ध्वाः** - कर्मनिवृत्ताः सन्तः, **ऋचः, साम्नः, यजुषः स्वरमेव प्राविशन्** । वेदविहितकर्मानुष्ठानं परित्यज्य ओङ्कारोपासनायां निरताः अभवन् इत्यर्थः ।।

**सु.** - यथा क्वचित् उदकाशये उपर्युपर्येव सञ्चरन्तं **मत्स्यं,** धीवरः तद्ग्रहणप्रतीक्षः परिपश्येत् । तथा ऋचि यजुषि साम्नि च प्रविष्टान् तान् मृत्युरुपायैः गृहीतुमेव परितोऽपश्यत् । कर्मफलस्य क्षयित्वात् । न कर्ममात्रेण मृत्युतरणम् इत्युक्तं भवति । ते तद्विदित्वा ऋचः, साम्नः यजुषः ऊर्ध्वाः ऋगादिभ्यः उपरिभूत्वा, वैदिकं कर्ममात्रम् अतिलङ्घ्येति यावत्, **स्वरमेव प्राविशन्** - प्रणवं प्राविशन् । व्युत्थाय केवलात् मृत्युग्रस्तात् कर्मणः स्वरशब्दवाच्यं प्रणवम् उपासितुं प्रवृत्ताः इति यावत् ।।

---

1. वित्त्वा - इति आनन्दभाष्य तथा सुबोधिनी सम्मतः पाठः । 2. त्रयीविद्याविहित - आ ।
3. कर्मभ्रंश - क । 4. उद्गातारः - क । 5. नु शब्दः खल्वर्थः, इत्यधिकः पाठः अ,आ ,क ।

**यदा वा ऋचमाप्नोति ओमित्येवातिस्वरति एवँ साम एवं यजुः एष उ स्वरः यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ।। ४ ।।**

**प्र. –** कथं पुनः स्वरशब्दवाच्यत्वम् ओङ्कारस्य इत्यत्राह - **यदा......यजुः ।** यदा वा ऋगादिकं **आप्नोति**[१] **–** आरभते । तदा 'ओम्' इति **अतिस्वरति**[२] **–** शब्दं करोति इत्यर्थः । **एष उ स्वरः ।** तस्मात् **एषः –** ओङ्कारस्वरः इत्यर्थः । **यत्......अभयम् ।** ओङ्कार एव मरणभयादिनिवर्तकः इत्यर्थः । **तत्......अभवन् ।** मरणभयादिनिवर्तकम् ओङ्कारं **प्रविश्य देवाः अमृताः अभयाश्च अभवन्** इत्यर्थः ।।

**आ.भा. – यदा –** यस्मिन् काले वा **ऋचमाप्नोति –** ऋगादिकमध्ये तु प्रवृत्तो भवति, तदैव **अतिस्वरति** - ओमिति शब्दं करोति । **एवं साम एवं यजुः । एष उ स्वरः ।** तस्मात् कारणात् ओङ्कार एव स्वरः - **यदेतदक्षरममृतमभयं** ओङ्काराक्षरं **तत्प्रविश्य** - तदुपासनं कृत्वा देवाः **अमृताः अभयाः अभवन्** ।।

**सु. –** प्रणवे स्वरशब्दप्रवृत्तौ निमित्तमाह - **यदा वा** इति। यदा कश्चित् पुरुषः **ऋचमाप्नोति** अध्ययनद्वारा, अधीते इति यावत् । तदा आदौ **ओमित्येव अतिस्वरति –** अतिशयेन स्वरति, शब्दं करोति । **एवं साम, एवं यजुः** । साम यदा आप्नोति तदापि ओमित्येव अतिस्वरति, यदा यजुः आप्नोति तदापि ओमित्येव अतिस्वरति इत्यर्थः । तस्माद्यदेतदक्षरम् ओमिति **एष उ स्वरः** । उकारः अवधारणार्थकः । **एतदक्षरममृतम् –** मरणनिवर्तकम्, अत एवाभयम् । तदक्षरम् उपासनद्वारा **प्रविश्य देवा अमृता अभया अभवन्** ।।

**[अमृताभयगुणोंकारोपासनस्य फलम्]**

**स य एतदेवं विद्वानक्षरं प्रणौति, एतदेवाक्षरँ स्वरममृतमभयं प्रविशति; तत्प्रविश्य, यदमृता देवाः, तदमृतो भवति ।। ५ ।।**

**।। इति चतुर्थः खण्डः ।।**

---

१. ऋचमाप्नोति - अध्ययनेन स्वाधीनां करोतीत्यर्थः ।

२. अतिस्वरति अतिशयेन उच्चारयति इति यावत् ।

**प्र. - स य......प्रणौति इत्यादि** । य एतदेवाक्षरं स्वरममृतमभयं [1]**प्रणौति**[1] - उपास्ते इति यावत् । तादृशामृतत्वादिगुणकं प्रणवं प्रविश्य देवाः यादृशामृतत्वादियुक्ताः, तादृशः भवति इत्यर्थः ।।

**आ.भा. - स य एतदेवं विद्वान्** अभयादिगुणविशिष्टम् **अक्षरम्** ओङ्कारं **प्रणौति** - अक्षरस्य स्तुतिं करोति **स एतदेवाक्षरं स्वरममृतमभयं** प्रति । **तत्प्रविश्य** - तदुपासनं कृत्वा, यथा देवाः अमृताः अभवन् तथा सोऽपि अमृतो भवतीति ।।

**सु. -** य एतदक्षरम् एवम् अमृतमभयम् इति विद्वान् जानन्सन् **प्रणौति** - स्तौति ; उपास्ते इति यावत् । स पुरुषः **अमृतमभयं स्वरं प्रविशति** - उपायतया आश्रयतीति यावत् । यथा **देवा अमृता अभूवन्** तथा अयम् अमृतो भवति ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

**[प्रणवोद्गीथयोः एकत्वविज्ञानोपदेशः]**

**अथ खलु य उद्गीथः सः प्रणवः यः प्रणवः स उद्गीथ इति । असौ वा । आदित्य उद्गीथ एष प्रणवः; ओमिति ह्येष स्वरन्नेति ।। १ ।।**

**प्र. -** प्रणवोद्गीथयोः एकत्वविज्ञानम् अनेकपुत्रफलकम् उपदिश्यते । **अथ...... उद्गीथ** इति । उद्गात्रा प्रयुज्यमानो **यः उद्गीथः** - उद्गीथावयवः ओङ्कारः, स एव होत्रा प्रयुज्यमानः प्रणवः । यश्च होत्रा प्रयुज्यमानः प्रणवः, **स** एव उद्गात्रा प्रयुज्यमानः उद्गीथावयवः ओङ्कारः इति इतरेतरैक्याध्यासः कर्तव्यः इत्यर्थः । एवं तयोरैक्यं कृत्वा तत्र आदित्यदृष्टिम् उपदिशति । **असौ......प्रणवः** इति । कथम् आदित्यस्य प्रणवत्वम् इत्यत्राह - **ओमिति......एति** इति । **एषः** - आदित्यः **ओमिति स्वरन्** - कर्तव्यकर्मणां ओमित्यनुज्ञां कुर्वन्निव उदेति इत्यर्थः । 'स्वृ शब्दोपतापयोः' (धा.पा.९३२) इति हि धातुः । अतः सविता प्रणवः, अत एव उद्गीथश्च इति भावः ।।

**आ.भा. -** ओङ्कारोद्गीथयोः एकत्वविज्ञानम् अनेकपुत्रादिफलकम् उपदर्शयति **अथ** इति । **अथ खलु य** उद्गात्रा प्रयुज्यमानः **उद्गीथः** - उद्गीथावयवः ओङ्कारः **स**

---

1. स्तौति । णु स्तुतौ इति हि धातुः । इत्याधिकः पाठः । अ,आ,क,ख ।

**प्रणवः** - स एव होत्रा प्रयुज्यमानः प्रणवः ओङ्कारः **यः प्रणवः स उद्गीथः** - यः खलु होत्रा प्रयुज्यमानः प्रणवः स एव उद्गात्रा प्रयुज्यमानः उद्गीथावयवः ओङ्कारः एवं क्रमेण उभयोः परस्परमैक्याध्यासः करणीयः इति। एवं प्रकारेण प्रणवोद्गीथयोरैक्यं कृत्वा तत्र आदित्यदृष्टिम् उपदिशति - **असौ......प्रणवः** इत्यादि । **असौ वा आदित्यः उद्गीथ एष प्रणवः**, आदित्यस्य कथं प्रणवस्वरूपत्वं तत्राह - **ओम्** इत्यादि । **एषः** - आदित्यः ओमिति **स्वरन्** - उच्चारयन् कर्तव्यकर्मणाम् ओमित्यनुज्ञां कुर्वन् **एति** - उदेति । अतः असौ आदित्यः उद्गीथरूपः प्रणवरूपश्च इति ।।

**सु.** - उद्गीथावयवस्य प्रणवस्याध्यात्मं प्राणदृष्ट्या अधिदैवम् आदित्यदृष्ट्या च उपासनम् उक्तं प्राक् । अधुना तस्य प्रणवसामान्येन ऐक्यमाकलय्य अध्यात्मं केवलप्राणदृष्ट्या अधिदैवं च केवलादित्यदृष्ट्या उपासने फलन्यूनतां ज्ञापयन् गुणविशेषविशिष्टतद्दृष्ट्या तत्र तदुपासनम् अधिकफलकं विदधाति - **अथ खलु** इत्यादिना । **अथ** इति - उपासनान्तरोपदेशारम्भे । **यः उद्गीथः** छान्दोग्यः उद्गीथावयवत्वात् उद्गीथशब्दवाच्यो योऽयं छन्दोगानां **प्रणवः** स एव बह्वृचानां[1] प्रणवः, यः प्रणवः बह्वृचानां स एव छन्दोगानाम् उद्गीथः । अनेन उद्गात्रा प्रयुज्यमानस्य उद्गीथावयवस्य प्रणवस्य होत्रा प्रयुज्यमानेन शाखान्तरीयप्रणवेन ऐक्यदृष्टिः उपदिष्टा भवति । **इति**शब्दः ऐक्यदृष्टिप्रकारपरः । एवमैक्यदृष्टिम् उपदिश्य तस्मिन् उद्गीथे अधिदैवम् आदित्यदृष्टिं सनिमित्तम् अनुवदति - **असौ वा आदित्यः** - असौ उद्गीथः आदित्यः । कुत ? **उद्गीथ एष प्रणवः** - एष उद्गीथः प्रणवो हि । किं ततः ? **ओमिति ह्येष स्वरन्नेति** - ओमित्यानुपूर्वी एव कण्ठतो निर्गच्छन्नेति सर्वेषां ग्रहणपथे । एवमेवैषः आदित्यः ओमित्यानुपूर्वीकम् अनुज्ञाक्षरं अन्धकाराद्यपनयनेन **स्वरन्** - उच्चारयन् उदेति । तस्मात् एषः आदित्यः प्रणवः एव ततश्चायम् उद्गीथः इति । एष उद्गीथः प्रणवः असावादित्यः इति वा योजना । प्रणवादनन्यः एष उद्गीथः असावादित्यः इत्यर्थः । कर्मसु सन्निहितत्वादेष इत्युद्गीथ-विशेषणम् । देशविप्रकर्षात् असौ इत्यादित्ये । अस्यां योजनायां आदित्यदृष्टेः उद्गीथे प्रणवैक्यभावनपूर्वकत्वनियमस्य स्फुटप्रतिपत्तिः विशेषः ।।

**एतमु एवाहमभ्यगासिषम् ; तस्मान्मम त्वमेकोऽसि इति ह कौषीतकिः पुत्रमुवाच - रश्मीँस्त्वं पर्यावर्तयात्, बहवो वै ते भविष्यन्ति ; इत्यधिदैवतम् ।। २ ।।**

---

१. ऋक्शाखीयानाम् ।

**प्र. - एतमु......उवाच** । एतम् आदित्यमेव उद्गीथम् अहं गीतवान् अस्मि । न तु बहुरश्मिगुणविशिष्टतया उपासितवान् अस्मि । तेन दोषेण मम त्वमेक एव पुत्रोऽभूः इति **कौषीतकिः स्वपुत्रम् उवाच** इत्यर्थः । **रश्मीन्......भविष्यन्ति** इति । तस्मात् त्वं बहुरश्मिविशिष्टादित्य[1]विज्ञानावृत्तिं[1] कुरु । तव रश्मिबहुत्वविज्ञानमहिम्ना **बहवः** पुत्रा भविष्यन्ति इत्यपि उवाच इति पूर्वेण सम्बन्धः । **पर्यावर्तयात्** इति पुरुषव्यत्ययः छान्दसः । लेटि, 'लेटोऽडाटौ' (पा.सू. ३-४-९४) इत्याडागमः । **इत्यधिदैवतम्** । उपदिष्टम् इति शेषः ।।

**आ.भा. - एतं** - प्रत्यक्षपरिदृश्यमानम् आदित्यमेव उद्गीथम् **अहम् अभ्यगासिषम्** - गीतवानस्मि । न तु बहुरश्मिगुणविशिष्टतया उपासितवानस्मि । **तस्मात्** कारणात् तेन दोषेण इत्यर्थः । **मम त्वमेक** एव पुत्रः **असि** - अभूः इति **ह** इत्येवंरूपेण **कौषीतकिः** - तन्नामा ऋषिः स्व **पुत्रमुवाच** - उक्तवान् । **रश्मीस्त्वं पर्यावर्तयात्** । तस्मात् कारणात् बहुरश्मिविशिष्टादित्यविज्ञानां वृत्तिं त्वं कुरु । **बहवस्ते भविष्यन्ति । ते** - तव रश्मिबहुत्वमहिम्ना बहवः पुत्राः भविष्यन्ति इत्येवं पुत्रम् उवाच **इत्यधिदैवतम्** उपदिष्टमिति ।।

**सु. - एतमु एवाहमभ्यगासिषम्** - एतम् आदित्यमेव अहं गीतवान् । एवकारः वक्ष्यमाणरश्मिबाहुल्यरूपगुणविशेषयोगव्यवच्छेदकः । यद्यपि आदित्यस्य न गानकर्मताप्रसङ्गः, अथापि उद्गीयमाने उद्गीथे आदित्याभेदभावनया तथा निर्देशः । केवलादित्यदृष्ट्या उद्गीथं ध्यातवानस्मि । न तु रश्मिबाहुल्यगुणविशेषविशिष्टादित्यदृष्ट्या इति भावः । तस्मात् **मम त्वमेक** एवासि पुत्रः । त्वम् एवं मा कुरु । किन्तु **रश्मीन् पर्यावर्तयात्** । रश्मयो ह्यस्य बहवः, तान् पर्यावर्तय । बहुरश्मिविशिष्टादित्यभावनां कुरु इति यावत् । पर्यावर्तयात् इति छान्दसः प्रयोगः । **बहवो वै** तव **भविष्यन्ति** पुत्राः इति ह **कौषीतकिः** पुत्रम् आत्मनः **उवाच** । **इत्यधिदैवतम्** उपासनम् उक्तम् ।।

[मुख्यप्राणदृष्ट्या उद्गीथोपासनम्]

**अथाध्यात्मम् - य एवायं मुख्यः प्राणः, तमुद्गीथमुपासीत ; ओमिति ह्येष स्वरन्नेति ।। ३ ।।**

**प्र. - अथाध्यात्मम्** । उपदिश्यते इति शेषः । **य.....उपासीत** । स्पष्टोऽर्थः । **ओमिति......एति । एषः** - प्राणः वागादि [2]प्राणवृत्त्यर्थं[2] ओमित्यनुज्ञां कुर्वन्निव सञ्चरति । तस्मात् **प्राणः** एव प्रणवः, उद्गीथश्च इत्यर्थः ।।

---

1. विज्ञानप्रवृतिं - आ । 2. वागादिप्राणप्रवृत्त्यर्थं - अ,आ ।

**आ.भा. - अथाध्यात्मम् -** अधिदैवतानन्तरं अध्यात्मम् उपदिश्यते । **य एवायम्** इत्यादि । अर्थस्तु पूर्ववदेव कर्तव्यः । **ओमिति । एषः -** प्राणः वागादि ओमित्यनुज्ञां कुर्वन्निव **एति -** सञ्चरति, तस्मात् प्राणः एव प्रणवः उद्गीथश्चेति ।।

**सु. - अथाध्यात्मम्** इति । उपदिश्यते इति शेषः । उद्गीथम् उपासीत । किमिति ? **य एवायं मुख्यः प्राणस्तं** तत्त्वेन उपासीत इत्यर्थः । कुतः ? **एषः -** प्राणो हि **ओमिति स्वरन्नेति,** वागादीनाम् इन्द्रियाणां स्वस्वव्यापारे अनुज्ञां प्रयच्छन्निव अयम् उदेति । प्रणवस्वरूपस्य उद्गीथस्येव प्राणस्यापि अनुज्ञाप्रापकत्वसाम्यात् तस्मिन् तद्दृष्टिरुचिता इति भावः ।।

**एतमु एवाहमभ्यगासिषम् ; तस्मान्मम त्वमेकोऽसि इति ह कौषीतकिः पुत्रमुवाच - प्राणाँस्त्वं भूमानमभिगायतात् , बहवो मे भविष्यन्तीति ।। ४ ।।**

**प्र. - एतमु......उवाच इत्यादि** । पूर्ववदर्थः । **प्राणान् - भविष्यन्तीति** । मे बहवः पुत्राः भविष्यन्तीति अभिसन्धाय मुख्यं प्राणम् उपासीनः **त्वं भूमानं -** बहुत्वमाश्रितान् वागादीन् प्राणांश्च मुख्यप्राणेन सहाभिसन्धाय **अभिगायतात् -** उद्गानं कुरु इत्यर्थः ।।

**आ.भा. - एतमु** इत्यादि । पूर्ववदेवार्थो ज्ञातव्यः । **प्राणाँ स्त्वम्** इत्यादि । **मे -** मम **बहवः** पुत्राः **भविष्यन्ति** इति अभिसन्धाय अनेकत्वेन त्वं तदुद्गानं कुरु इति ।।

**सु. - एतं -** प्राणमेव अहम् अभ्यगासिषम् । एवकारो वागादिव्यवच्छेदपरः । वागादयो हि मुख्यप्राणस्यैव महिमानः । यस्मात् अवधूय तान्महिम्नः केवलप्राणदृष्ट्या उद्गीथोपासनं कृतवान् अत एव **मम त्वमेकः** एवासि पुत्रः । त्वमेवं मा कुरु । किन्तु **भूमानं -** मुख्यप्राणस्यैव बाहुल्यरूपान् ; धर्मधर्मिणोः अभेदोपचारः । प्राणान् वागादीन् । मुख्यः प्राणो हि स्ववृत्तिविशेषेण वागादिषु सन्निधाय व्यापारयति तत् वागादयः तस्यैव रूपान्तराणीव । **अभिगायतात् -** वागादिविशिष्टमुख्यप्राणदृष्ट्या उद्गीथोपासनं कुरु इति यावत्। **बहवो** वै **मे** पुत्राः **भविष्यन्तीति** अभिसन्धाय अभिगायता इति पूर्वेणान्वयः । इति **कौषीतकिः पुत्रमुवाच** ।।

[प्रणवोद्गीथयोरेकत्वोपासनस्य फलम्]

**अथ खलु - य उद्गीथः स प्रणवः, यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीति अनुसमाहरतीति ।। ५ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र.** - उक्तप्रणवोद्गीथैकत्वविज्ञानफलमाह - **अथ......समाहरति** इति । **अपि दुरुद्गीथम्** - वेदनहीनमपि उद्गीथमित्यर्थः । **होतृषदनात्**[१] - होतृकर्तृकोद्गीथप्रणवैक्यज्ञानात् इत्यर्थः । **होतृषदनात्** - इत्यत्र, 'पूर्वपदात्' (पा.सू.८-३-१०६) इति षत्वम् । अयं भावः - उद्गीथप्रणवैकत्वविज्ञानं होत्रापि कर्तव्यम् ; उद्गात्रापि कर्तव्यम् । प्रणवे होतुः, उद्गीथे उद्गातुश्च कर्तृत्वात् । तत्र उद्गातुः एतादृशैकत्वविज्ञानाभावेन दोषयुक्तमपि उद्गात्रा प्रयुज्यमानम् उद्गीथं होता स्वीयोद्गीथप्रणवैकत्वविज्ञानमाहात्म्यात् **अनुसमाहरति** - समादधाति - अदुष्टं करोति इति । **अनुसमाहरतीति** द्विरुक्तिः विद्यासमाप्त्यर्था ।।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणम् उपन्यस्यते ।

गुणोपसंहारपादे - 'अङ्गेषु यथाश्रयभावः' (ब्र.सू.३-३-५९), अङ्गेषु, आश्रितानाम् उपासनानां क्रतोः बहिःप्रयोगासम्भवेन आश्रयतन्त्रत्वस्य वक्तव्यतया प्रयोगवचनेन आश्रयाणाम् उद्गीथादीनां समुच्चयनियमेन आश्रितानामपि समुच्चयनियमो युक्तः। इतरथा [1]तदाश्रितत्वानुपपत्तेरित्यर्थः[1] । 'शिष्टेश्च' (ब्र.सू. ३-३-६०), 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् [2]अधिकारान्तराश्रवणेन[2] 'उद्गीथम् उपासीत इति उद्गीथाङ्गतया' उपासनविधानाच्च नियमेन उपासना उपादेया । न च वीर्यवत्तरत्वरूपफलार्थत्वस्य, 'तन्निर्धारणानियमः' (ब्र.सू. ३-३-४१) इत्यत्र उक्तत्वात् कथं तस्य उद्गीथाङ्गत्वम् इति वाच्यम् । 'उद्गीथमुपासीत' इति वाक्येन उपासनस्य उद्गीथरूपाश्रयसंबन्धे वीर्यवत्तरत्वरूपफलसम्बन्धे च बोध्यमाने वाक्यभेदप्रसङ्गात् । न च वाक्यभेदभीत्या तस्य फलविधित्वासम्भवेऽपि तस्य फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वस्यैव आर्थवादिकस्य फलत्वकल्पनं सम्भवतीति

---

१. होतृषदनम् -यत्रस्थित्वा होता शंसति तत्स्थलं होतृषदनम् । सदनम् - षद्लृ - विशरणगत्यवसादनेषु इति धातोः अधिकरणे ल्युट् । सीदन्ति अत्र इति सदनम् । पूर्वपदात् (पा.सू.८-३-१०६) इति सूत्रेण पूर्वपदस्थान्निमित्तात्परस्य सस्य षत्वम् ।

1. तदाश्रयत्वादुपपत्तेरित्यर्थः - अ,आ । 2. अधिकरणान्तराश्रयेण - अ,आ ।

वाच्यम् । पर्णतादावपि तथा [1]प्रसङ्गात्[1] । 'समाहारात्'(ब्र.सू. ३-३-६१), 'होतृषदनाद्धैवापि दुरुद्गीथम् अनुसमाहरति' इति उपासनस्य समाहारनियमो दृश्यते । उद्गातृकृतवेदनहानिप्रयुक्तोद्गीथ [2]वैगुण्यस्य[2] होतृकर्तृकप्रणवोद्गीथैकत्वविज्ञानेन समाधानोक्त्या उपासनस्य आवश्यकत्वप्रतीतेः इत्यर्थः । 'गुणसाधारण्यश्रुतेश्च' (ब्र.सू.३-३-६२) । उपासनगुणस्य उपास्यस्य प्रणवस्य, 'तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति' इति साधारण्यश्रुतेश्च उपासनावश्यकता गम्यते । प्रकृतपरामर्शिना तेनेति शब्देन उपास्यस्य प्रणवस्यैव प्रतीतेः । अतः उपासननियमो अस्तीति प्राप्ते -

उच्यते - 'न वा तत्सहभावाश्रुतेः' (ब्र.सू.३-३-६३), न वा क्रतुषु उपादाननियमः उद्गीथोपासनादेः । कुतः ? तत्सहभावाश्रुतेः-उद्गीथाङ्गभावाश्रुतेः इत्यर्थः । वीर्यवत्तरत्वरूपफलार्थतया गोदोहनतुल्यत्वेन क्रत्वर्थत्वाभावात् इति भावः । न च पर्णतादेरपि पुरुषार्थत्वप्रसङ्गः । पर्णतायाः जुहूसम्बन्धेऽपि अव्यापाररूपतया फलनिष्पादकत्वाभावेन फलाकाङ्क्षायाः एवाभावात् फलकल्पनायाः अप्रसक्तेः। **अतः** फलाकाङ्क्षासिद्ध्यर्थं क्रतूपरागेण व्यापाररूपतां सम्पादयितुं जुहूलिङ्गेन क्रतुम् उपस्थाप्य तत्सम्बन्धबोधकशब्दो वा कल्प्यः, जुहूशब्दस्य जुहूसम्बन्धिक्रतुलक्षकत्वं कल्प्यम् । ततश्च क्रतुफलेनैव नैराकाङ्क्ष्यात् रात्रिसत्रन्यायेन आर्थवादिकफलकल्पना न समुन्मिषति । इह उपासनायाः स्वयं व्यापाररूपायाः क्रतूपरागमन्तरेणैव फलाकाङ्क्षा सम्भवति । सत्याञ्च फलाकाङ्क्षायां वाक्यशेषस्यैव फलसमर्पकतया परिणामसम्भवे फलवत्कर्मान्तरबोधकवाक्यकल्पनाद्यनपेक्षणात् । तस्मात् वाक्यशेषश्रुताय तस्मै तस्मै फलाय उद्गीथाद्याश्रयविशिष्टोपासनविधिः इत्येवम् युक्तम् । न च उपासनानाम् आश्रयतन्त्रत्वात् सति आश्रये तत्तन्त्राणाम् उपासनानामपि आवश्यकत्वम् इति वाच्यम् । [3]इदमेव[3] उपासनानाम् अश्रयतन्त्रत्वम् यत् आश्रये सत्येव वृत्तिः, नान्यदाऽस्ति । न तु यावदाश्रयसत्वं वृत्तिरिति । ततश्च कामोपबद्धत्वात् उपासनानाम्, कामनानाञ्चा[4]नित्यत्वात्[4] तदवबद्धानामपि उपासनानाम् अनित्यत्वमेव । 'दर्शनाञ्च', (ब्र.सू. ३-३-६४) 'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छां.उ. ४-१७-१०) इति ब्रह्मणो वेदनेनैव सर्वेषां रक्षणं ब्रुवती श्रुतिः उद्गातृप्रभृतीनां वेदनस्य अनियमं दर्शयति इति स्थितम् ।।

---

1. प्रसङ्गः - अ,आ । 2. वैलक्षण्यस्य - अ । 3. इदमेव हि - अ,क,ख । 4. कामानाञ्च - क ।

केचित्तु - उद्गीथविद्यायाः क्रत्वर्थत्वाभावे, 'अन्यथात्वं शब्दादिति चेत्' (ब्र.सू.३-३-६) इत्यधिकरणे, 'उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलकत्वेऽपि आर्थवादिकमपि फलं तदविरुद्धं ग्राह्यम् इति देवताधिकरणे प्रतिपादितम्' इति भाष्यं विरुध्येत । तथा पुरुषार्थाधिकरणे, 'यदेव विद्यया करोति' (छां.उ.१-१-१०) इति विद्यायाः तृतीयाश्रुत्या कर्माङ्गत्वप्रतिपादनात् न विद्यातः पुरुषार्थः इति, 'तच्छ्रुतेः' (ब्र.सू.३-४-४) इति सूत्रेण पूर्वपक्षे कृते, तत्र विद्याशब्दस्य प्रकृतोद्गीथविद्याविषयत्वेन उद्गीथविद्यामात्रस्य कर्माङ्गत्वेऽपि न ब्रह्मविद्यायाः कर्माङ्गत्वम् अस्तीति एतदर्थप्रतिपादकयोः, 'असार्वत्रिकी' (ब्र.सू.३-४-१०) इति सूत्रतद्भाष्ययोः विरोधश्च स्यात् । अतश्च अस्त्येव क्रत्वार्थत्वम् । न च 'तन्निर्धारणानियमः' (ब्र.सू. ३-३-४१), 'अङ्गेषु यथाश्रयभावः' (ब्र.सू. ३-३-५९) इत्यधिकरणद्वयविरोधः ; तयोः नियतक्रत्वर्थत्वप्रतिक्षेपमात्रपरत्वात् । न च क्रत्वर्थत्वेऽपि आर्थवादिकफलस्वीकारे पर्णताया अपि अपापश्लोकश्रवणफलकत्वप्रसङ्ग इति शंक्यम् । प्रस्तरप्रहरणस्य क्रत्वर्थस्यापि सूक्तवाकमन्त्रप्रतिपाद्यफलार्थत्ववत् , उपकोसलविद्याङ्गभूतायाः अग्निविद्यायाः, 'नास्यावरपुरुषाः क्षीयन्ते' (छां.उ.४-११-२) इति प्रतिपन्नब्रह्मविद्याऽविरोधि तदुपयोगिफलार्थत्ववच्च क्रत्वर्थायाः अपि पर्णताया अर्थवादप्रतिपन्नक्रत्वविरुद्धफलार्थत्वे न दोषः इति भाष्यकाराशयः इति वदन्ति । अन्ये तु ; 'अन्यथात्वं शब्दात्'(ब्र.सू.३-३-६) इत्यत्र भाष्यस्य अन्वारुह्योक्तित्वात् क्रत्वर्थत्वं न भाष्यकृदभिमतम् इति वदन्ति । प्रकृतमनुसरामः ।।

**आ.भा.** - प्रणवोद्गीथैकत्वविद्याफलं दर्शयति - **अथ - समाहरति इति । अथ खलु** - पूर्ववदेवार्थः, **अपि दुरुद्गीथं** - वेदनरहितमपि उद्गीथम् **होतृषदनात्** - होतृकर्तृकोद्गीथप्रणवयोः ऐक्यविज्ञानात् । अयमर्थः - उद्गीथप्रणवैकत्वविज्ञानं होत्रा उद्गात्रापि सम्पादनीयम् । तत्र प्रणवे होतुः उद्गीथे उद्गातुश्च कर्तृत्वम् । तत्र उद्गातुः एतादृशैकत्वविज्ञानाभावेन दोषसहितमपि उद्गात्रा प्रयुज्यमानम् उद्गीथं होता स्वकीयोद्गीथप्रणवैकत्वविज्ञानमाहात्म्यात् **अनुसमाहरति** - अदुष्टं करोति । द्विरुक्तिः विद्यासमाप्त्यर्था ।।

**सु.** - उद्गीथप्रणवयोः ऐक्यानुसन्धानस्य फलविशेषः उच्यते - **अथ** इति । उद्गाता स्वस्य **दुरुद्गीथं** - दुष्टम् उद्गीथं, प्रमादतः उद्गाने प्रसक्तदोषम् इति यावत् , **अनुसमाहरति** - समादधाति । अदुष्टं करोति इति यावत् । कस्माद्धेतोः ? **होतृषदनात्** - होतुः सदनात् - स्थानात् । अदुष्टात् इत्यर्थः सिद्धम् । स्थानं च अत्र होतुः कर्मैव ।

प्रसक्तोऽपि उद्गानदोषः होतुः प्रणवप्रयोगरूपात् कर्मणः सम्यक् निष्पन्नात् समाधीयते इति भावः । कथम् अन्यस्य कर्मणा अन्यस्य कर्मणि दोषपरिहारः ? **यः उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः** इत्यैक्यविभावनाद्धेतोः इति भावः ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

**इयमेवर्क् , अग्निस्साम, तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; इयमेव सा ; अग्निरमः, तत् साम ।। १ ।।**

**प्र. -** प्रकारान्तरेण उद्गीथोपासनं प्रस्तूयते - **इयमेव......साम** । ऋचि इयम् इत्युक्तपृथिवीदृष्टिः, साम्नि अग्निदृष्टिश्च कर्तव्या इत्यर्थः । **तदेतत्......साम** । **तदेतत् -** अग्न्याख्यं साम **एतस्यां -** पृथिवीरूपायाम् ऋचि **अध्यूढम् -** उपरिस्थितम् इत्यर्थः । अत एवाद्यापि ऋगारूढमेव साम गीयते इत्याह - **तस्मात्......गीयते** इति । एवं ऋक्सामयोः पृथिव्यग्निदृष्टिं विधाय [1]सामनामावयवभूतयोः[1] **साशब्द-अमशब्दयोः** पृथिव्यग्निदृष्टिः कर्तव्या इत्याह - **इयमेव......अम** इति । उक्तोऽर्थः । **तत्साम** । **तत् -** तत एव परस्परसंसृष्टपृथिव्यग्निरूपसाशब्दामशब्दमेलनेन सामव्यवहारो लोके [2]प्रवर्तते[2] इत्यर्थः ।।

**आ.भा. - इयमेव -** प्रत्यक्षेण परिदृश्यमाना सर्वाधारभूता पृथिव्येव **ऋक्** । अर्थात् ऋचि पृथिवी दृष्टिः कर्तव्या । **अग्निः साम -** साम्नि अग्निदृष्टिः कर्तव्या इत्यर्थः । **तदेतत् -** अग्न्याख्यं साम **एतस्यां -** पृथिवीलक्षणायां ऋचि **अध्यूढम् -** अधिगतम् उपरिस्थितम् इत्यर्थः **साम** । अत एवाद्यापि सामगैः ऋगारूढमेव साम गीयते । तदेव दर्शयति **तस्मात्** इति । **तस्मात् -** ऋच्यधिरूढं साम गीयते । एवं प्रकारेण ऋक्सामयोः पृथिवीदृष्टिम् अग्निदृष्टिं च विधाय सामनामावयवभूतयोः **साशब्द-अमशब्दयोरपि** पृथिवीदृष्टिम् अग्निदृष्टिं दर्शयति । **इयमेव सा -** इयमेव पृथिवी सा । सामनामार्धशब्दबोध्या । **अग्निरमः -** अमशब्दवाच्यं अग्निः । तत् साम । **तत् -** तत एव परस्परसम्मिलितपृथिव्यग्निरूपः **साशब्द-अमशब्दमेलनेन** सामव्यवहारो लोके भवतीति ।।

---

1. सामावयव - अ,आ । 2. वर्तते - अ,आ ।

**सु.** - अथ मुखान्तरेण अधिदैवमध्यात्मं च उपासनं प्रस्तूयते । **ऋगियमेव** - पृथिव्येव । सामाग्निरेव । ऋचं पृथिवीत्वेन सामाग्नित्वेन भावयेत् इति यावत् । कस्मादेतत्? पृथिव्याम् अग्निरिव **एतस्यां ऋचि अध्यूढं** हि **तदेतत् साम अध्यूढम्** - उपरिस्थितम्, उपरिस्थितेः साम्यादेवं भावनम् इति भावः ।

ननु पृथिव्याम् अग्निरध्यूढ इति तु सुप्रसिद्धम्, न तथा ऋचि साम इत्याशंकां प्रसिध्या परिहरति - **तस्मादृच्यध्यूढं साम गीयते** इति । अधुनापि साम ऋच्यध्यूढं हि गीयते । योऽयं सामेति वाचकः शब्दः तदवयवो यः **सा** इत्यंशः सा पृथिवी । योऽयम् **अम** इत्यपरोंऽशः सोऽग्निः ।।

**अन्तरिक्षमेवर्क्, वायुस्साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; अन्तरिक्षमेव सा, वायुरमः, तत् साम ।। २ ।।**

**द्यौरेवर्क् , आदित्यस्साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते, द्यौरेव सा, आदित्योऽमः, तत् साम ।। ३ ।।**

**नक्षत्राण्येवर्क् चन्द्रमास्साम, तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते, नक्षत्राण्येव सा, चन्द्रमा अमः, तत् साम ।। ४ ।।**

**प्र. - अन्तरिक्षमेवर्ग्वायुस्साम** इत्यादेः पूर्ववदर्थः ।।

**आ.भा. -** द्वितीयादिचत्वारो मन्त्राः पूर्ववदेव व्याख्यातव्याः ।।

**सु. -** एवमन्तरिक्षे वायुरिव दिवि सूर्य इव ऋच्यध्यूढं साम इत्यन्तरिक्षमेव ऋक् वायुः साम द्यौरेव ऋक् आदित्यः सामेति दृष्टिविशेषो विधीयते । सामशब्दावयवेऽपि अयमेव दृष्टिविशेषो विधीयते **अन्तरिक्षमेव सा** इति । **नक्षत्राण्येव** इति - यद्यपि पृथिव्यादौ अग्न्यादेरिव न नक्षत्राणामुपरि चन्द्रमसः स्थितिः अथापि आधिपत्येन उपरिस्थितिः इत्यौपचारिकम् अद्यूढभावमाश्रित्य नक्षत्रचन्द्रमसोः ऋक्सामदृष्टिविधानम् । अन्यत्पूर्ववत् ।।

**अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क्, अथ यन्नीलं परःकृष्णम् तत् साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; अथ यदेवैतदादित्यस्य शुक्लं भाः सैव सा ; अथ यन्नीलं परःकृष्णम् तदमः, तत् साम ।। ५ ।।**

**प्र. - अथ......ऋक्** । **शुक्लं भाः** - शुक्ला दीप्तिः इत्यर्थः । **शुक्लम्** इति लिङ्गव्यत्ययश्छान्दसः । **अथ - साम** । **परः कृष्णम्** - अतिशयेन काष्ण्यर्रूपम् । परःकृष्णमिति प्रसिद्धं यन्नीलं, तत् साम इत्यर्थः । आदित्ये काष्ण्र्यस्य समाहितदृष्टिभिः ईक्ष्यमाणत्वात् तदस्तीति द्रष्टव्यम् । [1]अत्र[1] **पर**शब्दः सान्तः द्रष्टव्यः । तत् साम । शिष्टं स्पष्टम् ।।

**आ.भा. - अथ यदेतत्** इत्यादि । **शुक्लं भाः** - शुक्ला दीप्तिः इत्यर्थः । **अथ - साम** । **परः कष्णम्** - अतिशयेन काष्ण्यर्रूपम् । परं कृष्णमिति प्रसिद्धं यत् नीलं तत्र अस्तीति । **तत्साम** इति पूर्ववत् ।।

**सु.** - यदेतत्सर्वैः सपदि गृह्यते शुक्लमादित्यस्य सैव भाः - दीप्तिः ऋक् । अथ समाहितदृष्टिभिः **यत्परः कृष्णं** - अत्यन्तनीलं **तत्साम** । परः कृष्णमिति लिङ्गव्यत्ययश्छान्दसः, पर इति सान्तं वा ।।

[आदित्यान्तर्गतपुरुषदृष्ट्या उपासनम्]

**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः ।। ६ ।।**

**प्र.** - एवमृचि पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपत्वदृष्टिम्, साम्नि अग्निवाय्वादित्यचन्द्रादित्यगतनीलभारूपत्वदृष्टिञ्च विधायाह - **अथ दृश्यते** । **अन्तरादित्ये** - आदित्यमण्डलस्यान्तः **हिरण्मयः** - रमणीयः **यः** - योगिभिः दृश्यते इत्यर्थः । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (क.उ.१-३-१२) इति श्रुत्यैकार्थ्यात् । 'हिरण्मय' इति रूपसामान्यात्, 'चन्द्रमुखवत्' इति वाक्यकारः[१] । ततश्च हिरण्मयशब्दस्य न मुख्यार्थो ग्राह्य इति वाक्यकाराभिप्रायः । ततश्च हिरण्मयत्वम् उज्ज्वलत्वम् इत्यर्थः । ततश्च नीलतोयदाभस्यापि हिरण्मयत्वे नानुपपत्तिः । यद्वा 'कच्चिन्न तत् हेमसमानवर्णं तस्याननम्' (रा. सुं.३६-२८) इति श्रीरामायणप्रयोगात्, 'पश्यते रुक्मवर्णम्' (मुं.उ.३-१-३) इति

---

१. वाक्यकारः - ब्रह्मनन्दी ।

1. अत्र - इति पदं नास्ति - अ,आ ।

श्रुतेश्च नीलतोयदाभस्यापि रुक्मवर्णत्वं सम्भवति । तत्र हेतुश्च सम्प्रदायगम्यः । एतत्सर्वं [1]वेदार्थसङ्ग्रहश्रुतप्रकाशिकायां[1] स्पष्टं, तत एव अवगन्तव्यम् ।।

अत्र केचित् - 'कप्यासं पुण्डरीकम्' इति वाक्ये कप्यासशब्देन आदित्यमण्डलम् उच्यते । पुण्डरीकम् इत्यनेन हृदयपुण्डरीकम् उच्यते । अतश्च यथा सूर्यमण्डलं हृदयपुण्डरीकञ्च उपासनस्थानम्; एवम् उपासकस्य अक्षिणी अपि परमात्मनः उपासनस्थानम् इति परोक्त-व्याख्यानदूषणावसरे व्यासार्यैः, '[2]आदित्यमण्डलरूपस्थानावरुद्धे[2] अक्ष्णोः स्थानतया विधानं न सम्भवति' इत्युक्तेः आदित्यमण्डलस्थानम् उत्पत्तिशिष्टम् इति प्रतीयते । ततश्च 'य एषोऽन्तरादित्य' इति वाक्यम् उपासनोत्पत्तिपरम् । ततश्च पुरुषो दृश्यते इत्यत्र द्रष्टव्यः इत्यर्थ इति व्यासार्याभिप्रायः । न च आदित्यमण्डलस्य उत्पत्तिशिष्टत्वे उत्पत्तिशिष्टस्थानावरुद्धे भाष्यकृदभिमतपुण्डरीकदलामलायताक्षत्वादेः कथं विधानमिति वाच्यम् । पुण्डरीकाक्षत्वादेः उत्पत्तिशिष्टादित्यमण्डलस्थानाविरुद्धत्वात् उत्पत्तिशिष्टाविरुद्धगुणानां विधानसम्भवात् । नन्वेवं, 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू.१-२-१) इत्यत्र, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां.उ.३-१४-१) इत्युत्पत्तिशिष्टसार्वात्म्यावरुद्धे, मनोमयत्वादीनां विधानं न सम्भवति' इत्याक्षिप्य 'सर्वं खलु' इति वाक्यस्य उपासीत इत्यनेन एकवाक्यत्वाभावेन सार्वात्म्यस्य नोत्पत्तिशिष्टत्वम्' इति व्यासार्यैः समर्थनम् अयुक्तं स्यात् । 'मनोमयत्वादीनाम् उत्पत्तिशिष्टसार्वात्म्यविरोधात्' इत्येव परिहारसम्भवेन वाक्यभेदमाश्रित्य सार्वात्म्यस्य उत्पत्तिशिष्टत्वाभावसमर्थनं मुधा इति चेत् - उपायान्तरस्योपायान्तरादूषकत्वात् - इति वदन्ति ।

अन्ये तु - 'आदित्यमण्डलस्थानावरुद्धे' इति नोत्पत्तिशिष्टस्थानावरुद्धत्वम् अभिप्रेतम् । अपितु युगपत् अनुपसंहरणीयादित्यमण्डलरूपाक्षिरूपस्थानद्वयविधाने अष्टदोषदुष्टविकल्पप्रसङ्गात् इत्येव तात्पर्यम् इत्याहुः ।

'यदा पश्यः पश्यते रुक्मवर्णम्' (मुं.उ. ३-१-३) इति प्रकरणे 'मनसा तु विशुद्धेन' इति रुक्मवर्णविग्रहविशिष्टस्य विशुद्धमनोग्राह्यतोक्तेः, आरोपिताकारस्य विशुद्धमनोग्राह्यत्वाभावात् अनारोपितत्वं सिद्धम् । 'ईक्षति कर्मव्यपदेशात्सः' (ब्र.सू.१-३-१३) इत्यत्र ईक्षणस्य परमात्मविषयत्वं वक्तव्यम् इति परैरपि अङ्गीकृतत्वाच्च । 'आदित्यवर्णं तमसः परस्तात्'(श्वे.उ.३-८) इति तमःपारवर्तिनः आदित्यवर्णविग्रहविशिष्टत्वाभिधानेन कल्पितत्वाप्रसक्तेः । न हि कल्पितस्य तमःपारवर्तित्वं सम्भवति । **हिरण्यश्मश्रुः** इत्यादि - रमणीयश्मश्रुकेशः रमणीयसर्वावयवः इत्यर्थः ।।

---

१. वेदार्थेति - वेदार्थसङ्ग्रहे, गुरुमुखात् यत् श्रुतं तस्य प्रकाशिकायां तात्पर्यदीपिकाख्यतद्व्याख्यायाम् इत्यर्थः । (इति उत्तमूर् वीरराघवाचार्यकृतभाष्यपरिष्कारे)

1. प्रकाशिकायां - अ,आ । 2. आदित्यमण्डलस्थानावरुहे - अ,आ ।

**आ.भा.** - पूर्वोक्तप्रकारेण ऋचि पृथिव्यन्तरिक्षद्युनक्षत्र - आदित्यगतशुक्लभारूपत्वदृष्टिं, साम्नि च अग्निवायु-आदित्यचन्द्र-आदित्यगतनीलभारूपत्वदृष्टिञ्च उपदिश्याह - **अथ** इत्यादि । **अथ य एषः** - परविद्याप्रवीणैः योगिभिः दृश्यमानतया प्रसिद्धो यः परमात्मा स एव सम्प्रति दृष्ट्यर्थं गृह्यते इति । **अन्तरादित्ये** - आदित्यमण्डलमध्ये **हिरण्मयः** - अतिरमणीयो दृश्यते योगिभिः स पुरुषो **हिरण्यश्मश्रुः** - रमणीयश्मश्रुकेशः **आप्रणखात् सर्व एव सुवर्णः** - रमणीयसर्वावयवः इत्यर्थः ।।

**सु.** - **अथ** इत्यादि **साम** इत्यन्तं पूर्ववत्सामशब्दावयवयोः दृष्टिविशेषविधायकम् । एवमधिदैवम् उपासनानि अङ्गभूतानि अभिधाय प्रधानोपासनमाह - **अथ य एषः** इति । **य एषोऽन्तरादित्ये** - आदित्यमण्डलमध्ये **हिरण्मयः** - कमनीय उज्ज्वलो वा पुरुषो दृश्यते योगिभिः । **हिरण्यश्मश्रुः हिरण्यकेशः** - श्मश्रवः केशाश्च रमणीयाः यस्य । **आप्रणखात्सर्व एव सुवर्णः** - आनखाग्रं सर्वतो देदीप्यमानः ।।

**तस्य यथा कप्यासं पुण्डरीकामेवमक्षिणी ; तस्योदिति नाम ; स एष सर्वेभ्यः पाप्मभ्य उदितः; उदेति ह वै सर्वेभ्यः पाप्मभ्यः, य एवं वेद ।। ७ ।।**

**प्र.** - **तस्य......अक्षिणी** । कं पिबतीति **कपिः** - आदित्यः । तेन अस्यते क्षिप्यते विकास्यते इति **कप्यासम्** । तथा आह 'वाक्यकारः-आदित्यक्षिप्तं वा श्रीमत्त्वात्' इति । यद्वा कं पिबतीति कपिः - नालम्; तस्मिन् आस्ते इति कप्यासम् । अपचितादपि पङ्कजात् नालस्थस्य पुण्डरीकस्य शोभातिशयशालित्वात् तादृशम् इह विवक्षितम् । यद्वा **कं** - जलम् । 'आस - उपवेशने' (धा.पा. १०२१) इति धातुः अपिपूर्वकः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अकारलोपः । के जलेऽपि आस्ते इति **कप्यासं** - सलिलस्थम् इत्यर्थः । एवम् अस्यार्थत्रयस्य उपपन्नतया वाक्यकारेण सिद्धान्तितत्वम् अभिप्रेत्य भगवता भाष्यकारेण वेदार्थसङ्ग्रहे - 'गम्भीराम्भस्समुद्भूतसुमृष्ट-नालरविकरविकसितपुण्डरीकदलामलायतेक्षणः' इति अभिहितम् । मर्कटजघनसदृश-पुण्डरीकसादृश्यादि अर्थान्तरं तु अश्लीलत्वादिदोषदुष्टतया वाक्यकृदनादृतत्वात् भाष्यकारेणापि अनादृतम् ।

यद्यपि अमरकोशे 'पुण्डरीकं सिताम्भोजम्'(अ.को. १-१०-४१) इत्यनुशिष्टम् , तथापि शबरस्वामिना नवमाध्याये, 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति विहितायामिष्टौ,

'पौण्डरीकाणि बर्हींषि भवन्ति' इति स्तरणार्थत्वेन विहितेषु पुण्डरीकेषु अतिदेशप्राप्तस्य, 'दर्भैस्तृणीतहरितैः' इति मन्त्रस्य दर्भपदस्थाने पुण्डरीकपदं हरितपदस्थाने रक्तपदम् ऊहितव्यम् इत्युक्तत्वात् रक्ताम्भोजमेव पुण्डरीकम् इति द्रष्टव्यम् ।

**तस्योदिति नाम** । स्पष्टोऽर्थः । तस्य उन्नामकत्वे हेतुमाह - **स एष सर्वेभ्यः पाप्मभ्यः उदितः** । सर्वपापोद्गतत्वात् [1]उन्नामक[1] इत्यर्थः । नीडात् शकुन्तस्य उद्गमनवत् पापपञ्जरात् उद्गमनरूपमुख्यार्थस्य कुत्राप्यभावात् उद्गमनेन तत्सम्बन्धराहित्यं लक्ष्यते । 'नैनं सेतुमहोरात्रे तरतः, न जरा न मृत्युः न शोको न सुकृतं न दुष्कृतम्'(छां.उ.८-४-१) इति परमात्मनः [2]सुकृत[2]सम्बन्धाभावो हि प्रतिपाद्यते । तरतेः प्राप्तिवाचित्वात् । पापशब्दश्च पुण्यपापरूपोभयविधकर्मपरः । परमात्मप्रकरणेषु, 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युः न शोकः न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते'(छां.उ.८-४-१) इति सुकृतेऽपि पापशब्दप्रयोगात् ।। 'पाप्मानः कालजरामृत्युशोकादयः संख्याततत्वात्' इति वाक्यकारवचनात्, अलौकिकत्वे सति अनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तियोगात् पुण्यस्यापि पापशब्दाभिधेयत्वोपपत्तेः । मुमुक्ष्वपेक्षया स्वर्गादीनामपि अनिष्टत्वात् । 'एते वै निरयास्तात! स्थानस्य परमात्मनः।' (महा.भा.शां.१९६-६)

'क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्'।। (वि.पु.२-६-४४)

इति स्मरणात् । सर्वपापोदितत्वं नाम कर्मवश्यतागन्धराहित्यम् इति फलितोऽर्थः । कृतानामपि कर्मणां फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदैश्वरस्वभावविशेषः अपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थः इति द्रष्टव्यम् । एवं नाम[3]शिष्टज्ञानस्य[3] फलमाह - **उदेति......वेद** इति । स्पष्टोऽर्थः ।।

**आ.भा. - तस्य-अक्षिणी** । तच्च कं जलं पिबतीति कपिः सूर्यः तेन अस्यते क्षिप्यते इति **कप्यासम्** । मर्कटास्यमिति व्याख्यानं तु अश्लीलत्वात् न शोभनम् । **तस्योदिति नाम** । तस्य उत् नामकत्वे कारणं दर्शयति । **स एव** इत्यादि । सर्वपापरहितत्वात् उन्नामकः परमात्मा । रागद्वेषाभावेन पापपुण्ययोः तत्राभावात् **उदेति** इत्यादि । स्पष्टार्थः ।।

---

1. उन्नामकत्वं - आ,क,ख । 2. सुकृतदुष्कृत - आ,क,ख । 3. विशिष्टज्ञानस्य - ख,ग ।

**सु.** - कप्यासं पुण्डरीकं यथा एवं तस्याक्षिणी, पुण्डरीकस्य शोभातिशयसम्पादकं कप्यासमिति विशेषणम् । कं जलं पिबतीति कपिः सूर्यः तेन अस्यते क्षिप्यते विकास्यते इति **कप्यासं**, तथा - कं जलं पिबतीति कपिः - नालं तत्रास्ते इति कप्यासं, सनालमिति यावत् ; नालतो विभक्ते पुण्डरीके लेशतो ग्लानेः प्रसक्तिरस्ति सा व्यावर्त्यते अनेन । अपि च असधातुरपिपूर्वकः, 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनादकारलोपः । के जलेऽप्यास्ते इति कप्यासं सलिले वर्तमानम् । सलिलादुद्धृते लेशतो म्लानिसम्भावनया सलिलस्थम् इति विशेषणम् । तदिदं सर्वमभिप्रेत्य भगवद्रामानुजाचार्यैः वेदार्थसङ्ग्रहे "गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः" इत्यभिहितम् । **तस्योदिति नाम,** कुतः ? उच्यते - **स एष सर्वेभ्यः पाप्मभ्यः उदितो** हि - उद्गतो हि, पापैरस्पृष्ट इति यावत् । यः पुरुषमेनं **एवं** - उक्तेन प्रकारेण, रूपनामगुणविशेषेण इत्येतत्; **वेद, उदेति ह वै सर्वेभ्यः पाप्मभ्यः** - स वेत्ता पाप्मतो मुक्तो भवतीति यावत् ।।

**तस्य ऋक् च साम च गेष्णौ तस्मादुद्गीथः तस्मात्त्वेवोद्गाता एतस्य हि गाता । स एष ये चामुष्मात् पराञ्चो लोकाः तेषां च ईष्टे देवकामानां च इत्यधिदैवतम् ।। ८ ।।**

**प्र. - तस्यर्क् च साम च गेष्णौ ।** पृ[illegible]विशेषतया प्राक् प्रस्तुते ऋक्सामे एतस्य **गेष्णौ** - गानरूपे । यद्यपि ऋचो [illegible]ऽपि न गानरूपत्वम् - तथापि अभेदोपचारेण गेष्णत्वोक्तिः द्रष्टव्या । [illegible] । व्यत्ययेन पुंस्त्वम् । अग्नीन्द्रादिप्रतिपादकऋक्सामगेयत्वोक्त्या सर्वात्मकत्वम् उक्तं भवति । **तस्मादुद्गीथः....गाता ।** यस्मादुन्नामकत्वं परमात्मनः, अत एव तद्गानरूपत्वात् द्वितीयभक्तेः उद्गीथसंज्ञत्वम्, तद्गातुरुद्गातृसंज्ञावत्त्वं च इत्यर्थः । यद्वा परमात्मनः उन्नामकत्वात् ऋक्सामगेष्णत्वाच्च उद्गेष्णस्य परमात्मनः उद्गीथत्वम् उपपद्यते । [illegible] परमात्म[illegible] युक्ता इत्यर्थः ।
**स......कामानाञ्च । स एषः -** हिरण्मयः पुरुषः आदित्यमण्डलोर्ध्ववर्ति लोकानां देवभोग्यभोगोपकरण[illegible] [illegible] । **इत्यधिदैवतम् ।** उपासनम् उपदिष्टम् इति शेषः ।।

**आ.भा. - तस्य ऋक्** इत्यादि । [illegible] **तस्य गेष्णौ** - [illegible] एतावता सर्वात्मकत्वं परमात्मनः [illegible] । तस्मादुद्गीथः [illegible] नामकत्वं

परमात्मनः अत एव तद्गानरूपत्वात् द्वितीयभक्तेः उद्गीथसंज्ञात्वम् । तद्गानकर्तुश्च उद्गातृसंज्ञा च भवतीति अथवा परमात्मैव उद्गीथः तत् उद्गीथे परमात्मदृष्टिः युक्ता एवेति । अधिदैवतं उपासनं च दर्शितम् ।।

**सु. - तस्य** - उक्तरूपनामगुणविशेषविशिष्टस्य पुरुषविशेषस्य **ऋक् च साम च गेष्णौ** - पृथिव्यादितया द्रष्टव्यत्वेन उक्ता ऋक् अग्न्यादितया द्रष्टव्यत्वेन उक्तं **साम च गेष्णौ** - गायकौ; एतद्गुणगानाय प्रवृत्तौ इति यावत् । यस्मात् उन्नामकस्य अस्य गानरूपं साम, अत एव उद्गीथः इति सामभक्त्यवयवे प्रयोगः । तस्मात्त्वेव उद्गातापि अस्यैव उन्नामकस्य गाता उद्गाता इति व्यवह्रियते । स एष उन्नामा **ये चामुष्मात्** - आदित्यात् **पराञ्चो लोकाः** - ऊर्ध्ववर्तिनः लोकाः **तेषां चेष्टे** - ईशिता भवति । न केवलं तेषाम् ईष्टे अपि तु **देवकामानां च** - देवानां ये कामाः भोग्यभोगोपकरणादयः तेषां सर्वेषामपि इत्यर्थः । **इत्यधिदैवतम्** - देवतासु उपासनम् उक्तम् ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

## सप्तमः खण्डः

**[अध्यात्मस्वरूपम्]**

**अथाध्यात्मम् - वागेवर्क्, प्राणस्साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; वागेव सा, प्राणोऽमः, तत् साम ।। १ ।।**

**चक्षुरेवर्क्, आत्मा साम, तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; चक्षुरेव सा, आत्माऽमः, तत् साम ।। २ ।।**

**श्रोत्रमेवर्क्, मनस्साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; श्रोत्रमेव सा ; मनोऽमः तत् साम ।। ३ ।।**

**अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क्, अथ यन्नीलं परः कृष्णम् तत् साम, तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; अथ यदेवैतदक्ष्णः शुक्लं भाः सैव सा, अथ यन्नीलं परः कृष्णम् तदमः ; तत् साम ।। ४ ।।**

**प्र. - अथाध्यात्मम्** । उपदिश्यते इति शेषः ।

**वागेवर्क्......तत् साम** । सर्वं पूर्ववत् ।। (१-४ )

**आ.भा. - वागेवर्क्** । तत्साममन्त्रचतुष्टयं सर्वं पूर्ववदेव व्याख्यातव्यं, पुनरुक्तिभयात् न व्याख्यायते । यथोक्तप्रकारेण ऋचि वाक् चक्षुः श्रोत्रं - अक्षिगतशुक्लभारूपत्वदृष्टिम् । साम्नि च प्राणछायात्ममनोऽक्षिगतपरःकृष्णरूपत्वदृष्टिं च सम्पादनाय आह - **अथ यः ब्रह्म** इति । **अथ य एषोऽन्तरक्षिणि** - चक्षुर्मध्ये पुरुषो दृश्यते योगिभिः स ऋग्यजुःसामात्मा उक्थादिरूपो ब्रह्म चापीति। **तस्य** इत्यादि । **तस्यैतस्य** - चक्षुर्गतपरमपुरुषस्य । आदित्यमध्यवर्तिपुरुषस्य **यत्** - हिरण्मर्यत्वादिरूपम् उदितिनामऋक्सामरूपगेष्णौ चैतानि सर्वाण्येव भवन्ति इत्यर्थः।। १-५ ।।

**सु. - अथाध्यात्मम्** - शरीरे ; उपासनम् उच्यते इति शेषः । **वागेव ऋक् प्राणः साम** - ऋचि वाग्दृष्टिः साम्नि प्राणदृष्टिः कार्या, साध्यसाधनभावान्निमित्तात्, उपरिस्थितेरेव वा सामान्यात्, वाचः उपरि प्राणस्य नासिकायां वृत्तिविशेषदर्शनात् । अन्यत्पूर्ववत् । **आत्मा** - छायात्मा अन्यत् स्पष्टम् ।। १-४ ।।

[उद्गीथे अक्षिपुरुषदृष्ट्युपयुक्तनयनपूर्वकतद्दृष्टिविधानम्]

**अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क् ; तत् साम, तदुक्थम् ; तद्यजुः तद्ब्रह्म । तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम् यावमुष्य गेष्णौ तौ गेष्णौ, यन्नाम तन्नाम ।। ५ ।।**

**प्र.** - एवमृचि वाक्चक्षुःश्रोत्राक्षिगतशुक्लभारूपत्वदृष्टिम्, साम्निप्राणच्छायात्ममनः अक्षिगतपरः कृष्णरूपत्वदृष्टिञ्च विधायाह - **अथ.....ब्रह्म** । चक्षुषि यः पुरुषो योगिभिः दृश्यते ; स एव ऋग्यजुस्सामात्मा, उक्थादिशस्त्रात्मा ब्रह्म च इत्यर्थः । अत्रोक्थस्य त्रय्यपेक्षया पृथक्परिगणनं गोबलीवर्दन्यायेन द्रष्टव्यम् । **तस्य....नाम** । **तस्यैतस्य** - अक्ष्यन्तर्वर्तिनः परमपुरुषस्य, आदित्यान्तर्वर्तिनो यत् हिरण्मयत्वादिरूपम् उदिति नाम, ऋक्सामरूपगेष्णौ च, तानि सर्वाणि भवन्ति इत्यर्थः ।।

**सु.** - एवमध्यात्मं ऋक्साम्नोः वाक्प्राणदृष्टिं विधायाध्यात्मं तयोः प्रधानदृष्टिः विधीयते - **अथ** इति । य एषोऽन्तरक्षिणि पुरुषो योगिभिः दृश्यते सैव ऋक्, सामानाधिकरण्यम् इह कार्यकारणभावनिबन्धनम् । विधेयप्राधान्यात् सैवेति स्त्रीलिङ्गनिर्देशः ।

नात्र अतस्मिंस्तद्दृष्टिः विधीयते, किन्तु तन्निश्वसितम् ऋगादिकम् इति तद्विभूतिज्ञापने तात्पर्यम् । **ऋक्** - पादबद्धाक्षरात्मिका प्रसिद्धा, **तत्साम तदुक्थम्** - उक्थशब्दसाहचर्यात्सामशब्दः शस्त्रपरः, प्रगीतमन्त्रसाध्यं स्तोत्रं शस्त्रं, अप्रगीतमन्त्रसाध्यं स्तोत्रं उक्थम् इति भिदा । **तद्यजुः** - स्वाहास्वधावषडादि सर्वं वाङ्मयम् । किं बहुना **तद्ब्रह्म** - समग्रो वेदः स एव । अथ रूपादिकम् अतिदिश्यते - **तस्यैतस्य** इत्यादिना । **स्थानभेदात्** पुरुषभेदाशंका प्रसजेत् ; तद्व्यावृत्तये अयम् अतिदेशः। एतेन स्थानभेदात् उपासनभेदशंका परास्ता । एकस्यैव परमात्मनो रूपतो नामतश्च एकस्य स्थानद्वयसम्बन्धवत्तया उपासनस्य विवक्षितत्वात् ।।

**स एष ये चैतस्मादर्वाञ्चो लोकाः तेषां च ईष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्ति एतं ते गायन्ति तस्मात्ते धनसनयः ।। ६ ।।**

**प्र. - स.....कामानां चेति । एतस्मात्** - अक्षिस्थानात् अधोवर्तिनां लोकानां मनुष्यभोग्यादीनां च एषः नियन्ता इत्यर्थः ।

**तत्......गायन्ति** । यस्मात् अयम् ईश्वरः, तस्माद्धेतोः वीणागायकाः सर्वेऽपि इममेव गायन्ति इत्यर्थः । तस्य सर्वात्मकत्वेन देवमनुष्यादिकर्मकगानस्यापि परमात्मविषयत्वात् इति भावः । **तस्मात्ते धनसनयः** । सनिः - लाभः धनानां सनिः येषां ते **धनसनयः** ईश्वरगायकत्वादेव वीणागायकानां धनलाभवत्त्वम् । न हि अनीश्वरगातृत्वे धनप्रसक्तिः अस्तीति भावः ।।

**आ.भा. - स एषः** इत्यादि । **स एषः** - चक्षुषः पुरुषः **ये चैतस्मात्** - अक्षिस्थानात् **अर्वाञ्चः** - अधोवर्तिनः लोकाः **तेषामीष्टे** मनुष्यकामानां **ईष्टे** - नियन्ता भवति इत्यर्थः । **तद्यः** - यस्मात् अयमीश्वरः तस्मात् ये पुरुषाः **वीणायां गायन्ति** - गानं कुर्वन्ति **ते एतम्** - ईश्वरमेव गायन्ति । यस्मात् ईश्वरमेव ते गायन्ति **तस्मात् ते** - गायकाः **धनसनयः** - धनलाभयुक्ताः भवन्ति । ईश्वरगायकत्वादेव वीणागायकानां धनप्राप्तिः न हि अनीश्वरगायकत्वे धनप्राप्तिः सम्भवतीति ।।

**सु. - स एषः** - अक्ष्याश्रयः पुरुषः परमात्मा, **एतस्मात्** - स्वावासस्थानात् **येऽर्वाञ्चो लोकाः** - पृथिव्यादयो लोकाः **ये च मनुष्यकामाः तेषामीष्टे । तत्** -

तस्मात् ईश्वरत्वात् ये इमे लोके वीणायां गायन्ति सर्व एव ते एतमेव गायन्ति । अयमाशयः - "येऽपि अन्यदेवताभक्ताः यजन्ते श्रद्धयाऽन्विताः । तेऽपि तं परमात्मानं यजन्त्यविधिपूर्वकम् ।। एवमेवेह यं कश्चिद्गायन्तां वीणया जनाः । गीयते तु अयमेवैकः सर्वेषाम् ईश्वरो ह्यसौ" ।। **तस्मात्ते धनसनयः** - यस्मात् ईश्वरो गीतः तस्मादेव ते धनस्य सनिः लाभः येषां तथाविधा भवन्ति । ईश्वरात् अन्यः कः प्रसन्नः समृद्धं धनं प्रापयितुं समर्थः । ईश्वरत्वम् अन्यत्र हि एतदुपजीव्यम् ।।

[आदित्याक्षिपुरुषोपासनस्य फलम्]

**अथ य एतदेवं विद्वान् सामगायत्युभौ स गायति । सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताँश्चाप्नोति देवकामाँश्च ।। ७ ।।**

**प्र. - अथ......गायति ।** अध्यात्माधिदैवतभिन्नविद्यायुक्तस्सन् उद्गीथं यो गायति, स चाक्षुषम् आदित्यस्थं च गायति इत्यर्थः । उद्गीथस्य चाक्षुषेण परमात्मना, आदित्यान्तर्वर्तिना च परमात्मना, ऐक्याध्यासविशिष्टतया तादृशोद्गीथगायकस्यैव परमात्मगायकत्वात् इति भावः । तस्यैवं विदः फलम् उच्यते । **सोऽमुनैव कामांश्च । सः** - विद्वान् **अमुनैव** आदित्यान्तर्वर्तिना उपासितेन **स एषः** - तदुपासनाविशिष्टः एतस्मात् ऊर्ध्वलोकान् **देवकामांश्च आप्नोति** इत्यर्थः ।।

**आ.भा. - अथ यः एतमेवं** - यथोक्तं देवमुद्गीथं **साम गायति** - उद्गानं करोति **स उभौ गायति,** चाक्षुषम् आदित्यं च गायति । तस्य एवंविदः फलम् उच्यते - **सोऽमुनैव । सः विद्वान् अमुना** - आदित्यमण्डलान्तर्वर्तिना उपासितेन **स एषः** - तदुपासनाविशिष्टः अस्मात् **पराञ्चो लोकाः** - ऊर्ध्वलोकाः तान् प्राप्नोति देवकामांश्च प्राप्नोति ।।

**सु. - य एवं विद्वान्** - अधिदैवमध्यात्मं च उक्तेन प्रकारेण जानन् एतत्सामोद्गीथरूपं गायति ; स आदित्यचाक्षुषौ पुरुषौ उभावपि गायति । यदयं वेत्ति उन्नाम्नश्चक्षुरादित्यान्तःस्थस्य परमात्मनो गानरूपत्वादेव हि अस्योद्गीथत्वमिति, अत एवायं गानकर्मीभूतेन **अमुना** - आदित्यान्तर्वर्तिनैव परमात्मना **ये चामुष्मात्** - आदित्यात् **पराञ्चः** - ऊर्ध्वाः लोकाः तानाप्नोति देवानां कामांश्च ।।

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताँश्चाप्नोति मनुष्यकामाँश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ।। ८ ।।**

**प्र. - अथानेनैव......कामांश्च । अनेन -** अक्ष्यन्तर्वर्तिना उपासितेन मनुष्यलोकात् अधस्तनलोकान् मनुष्यकामांश्च आप्नोति इत्यर्थः । चक्षुरादित्यस्थानवर्तिपरमात्मोपासनया सर्वलोकावाप्तिः भवतीत्यर्थः, **तस्मादु ब्रूयात् । एवंवित् -** एतादृशविद्यायुक्तः उद्गाता यजमानं प्रति ब्रूयात् ।।

**आ.भा. - अथानेनैव -** चाक्षुषेणैव ये चैतस्मात् अर्वाञ्चो लोकाः तान् प्राप्नोति । मनुष्यकामानपि प्राप्नोति तस्मादु एवंवित् उद्गाता यजमानं प्रति **ब्रूयात् -** वदेत् ।।

**सु. - अथानेनैव -** चक्षुरन्तर्वर्तिना परमात्मना **एतस्मात् -** चक्षुषः **अर्वाञ्चः -** अधस्तनाः लोकाः मानुषाः तान् आप्नोति मनुष्यकामांश्च । **तस्मात् -** ईदृशशक्तियुक्तत्वात् एवंवित् उद्गाता यजमानं प्रति ब्रूयात् ।।

**कं ते काममागायानीति । एष ह्येव कामागानस्येष्टे, य एतदेवं विद्वान् साम गायति, साम गायति ।। ९ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र. -** किमिति इत्यत्राह - **कं ते काममागायानि** इति । हे यजमान ! **ते कं -** देवकामं मनुष्यकामं वा **आगायानि -** गानेन सम्पादयानि इति प्रब्रूयात् इत्यर्थः । ननु एतादृशोक्तौ उद्गातुः कथं सामर्थ्यम् इत्यत्राह - **एष....गायति** । एवं विदुषः सामगस्य कामसम्पादकगानसामर्थ्यम् अस्तीत्यर्थः । द्विरुक्तिः विद्यासमाप्त्यर्था ।।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणम् [1]उपन्यस्यते[1] -

समन्वयाध्याये प्रथमपादे - अन्तरादित्ये अन्तरक्षिणि च वर्तमानत्वेन श्रुतः पुरुषो जीव एव । 'हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः' इति शरीरसम्बन्धश्रवणात्।

---

1. लिख्यते - अ,आ,क्र ।

शरीरत्वस्यैव कर्मजन्यतावच्छेदकत्वेन कर्माजन्यशरीरासम्भवात् प्रक्रमश्रुतेन शरीरित्वलिङ्गेन जीवत्वे निश्चिते औपसंहारिकं सर्वपापोदितत्वम् आपेक्षिकं नेतव्यम् इति पूर्वपक्षे प्राप्ते -

उच्यते - 'अन्तस्तद्धर्मोपदेशात्' (ब्र.सू. १-१-२१) । आदित्याक्ष्यन्तर्वर्ती पुरुषः परमात्मैव, परमात्मधर्मोपदेशात् । कर्मवश्यतागन्धराहित्यलक्षणं नित्याविर्भूतं सर्वपापोदितत्वं न परमात्मनो अन्यत्र सम्भवति । तच्च चरमश्रुतमपि 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति फलरूपतात्पर्यलिङ्गात् प्रबलम् । तथा ऋक्सामगेयत्वाक्षिप्तं, 'सैवर्क् तत्साम' इति वाक्यश्रुतञ्च सार्वात्म्यं परमात्मधर्मः । तथा अक्ष्यादित्यवर्त्येकपुरुषगतोर्ध्वाधोवर्तिलोक-कामेश्वरत्वरूपं निरंकुशं सर्वकामेश्वरत्वमपि, "सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकाः तांश्चाप्नोति देवकामांश्च, अथानेनैव ये चैतस्मात् अर्वाञ्चो लोकाः ताँश्चाप्नोति मनुष्यकामांश्च" इति वाक्यशेषप्रतिपन्नफलरूपतात्पर्यलिङ्गानुगृहीतत्वात् प्रबलम् । अतः प्रबलैः परमात्मलिङ्गैः परमात्मत्वे निर्णीते, 'अजायमानो बहुधा विजायते' (तै.आर. ३-१३-३),

"अजोऽपि सन्नव्ययात्मा भूतानाम् ईश्वरोपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।।" (भ.गी.४-६,८)

'इच्छागृहीताभिमतोरुदेहः'[१] (वि.पु. ६-५-८४) इति श्रुतिस्मृत्यनुसारेण अजहत्स्वस्वभावस्यैव परमात्मनो मायाशब्दितसंकल्पमात्रेण उपासकपरित्राणाय अप्राकृतदिव्यविग्रहपरिग्रहोपपत्तेः ।

एतेन नित्यसर्वज्ञस्य सर्वशक्तेः ज्ञानार्थं प्रवृत्त्यर्थं वा करणानपेक्षणात् आत्मानन्दतृप्तस्य विग्रहे स्पृहासम्भवाच्च विग्रहो न सम्भवतीति शङ्का प्रत्युक्ता । करणानपेक्षज्ञानक्रियस्यापि परमात्मनः उपासकानुग्रहार्थं भोगार्थञ्च विग्रहस्वीकारोपपत्तेः । प्रभूतानन्दानामपि आनन्दान्तरापेक्षादर्शनेन निरतिशयानन्दस्वरूपस्यापि ब्रह्मणः प्रीतिविशेषापेक्षायाः सम्भवात् । न च विग्रहस्य भोग्यत्वे स्वरूपभोग्यत्ववैकल्यं शंक्यम् - स्वसम्बन्धिभोग्यत्वस्य स्वभोग्यत्वातिशयावहत्वेन [1]तद्वैकल्यावहत्वा[1]भावात् । तत्र च,

"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ।। (वि.पु.६-७-७०)

---

१. समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतवर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितो यः । इति पूर्णः श्लोकः ।

1. तद्वैकल्पत्वा - अ,आ ।

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ! ।

देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया।।" (वि.पु.६-७-७१)

'नित्याऽलिङ्गास्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती' 'उज्जहारात्मनः केशौ[१] सितकृष्णौ' (वि.पु.५-१-६०) 'अंशाशेनावतीर्योर्व्याम्'(वि.पु.५-१-३) इत्यादिप्रमाणात् नित्यस्य विग्रहस्य अशिथिलसंस्थानस्यैव अप्राकृतानन्तावतारहेतुत्वम् उपपद्यते । चतुर्मुखदेहस्य संस्थानाशैथिल्येऽपि अनेकदेहोत्पादकत्वदर्शनात् । ततश्च उपासकानुग्रहार्थं स्वेच्छासृष्टाप्राकृतशरीरसम्बन्धस्य प्रमाणसिद्धस्य परमात्मनि सत्वात् न [1]हिरण्मयविग्रहसम्बन्धानुपपत्तिः[1] परमात्मनः । अतः अक्ष्यादित्यान्तर्वर्ती परमात्मा ।।

ननु आदित्यपुरुषात् अन्यः परमात्मैव नास्ति इत्यत्राह - 'भेदव्यपदेशाच्चान्यः' (ब्र.सू.१-१-२२) 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद' (बृ.उ.५-७-९) इति आदित्यपुरुषावेद्यस्य तन्नियन्तुः परमात्मनो अन्यस्य प्रमाणसिद्धत्वात् तद्व्यतिरिक्तो नास्तीति न शंक्यम् । न च नित्यमुक्तव्यतिरिक्तः परमात्मा नास्ति इत्यपि शक्यं वक्तुम् । य आत्मनि तिष्ठन्निति पर्याये परिशुद्धमुक्तात्मभ्योऽपि भेदप्रतिपादनात् । अतः अन्तरादित्ये अन्तरक्षिणि च [2]विद्यमानः[2] परमात्मेति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा.** - कं ते कामम् उद्गायति एष कामगानस्य ईष्टे उद्गानेन गानेन कामं सम्पादयितुं समर्थः । क एवं सामर्थ्ययुक्तः तत्राह - **य एवम्** इत्यादि । य एवं विद्वान् साम गायति । द्विरुक्तिः खण्डसमाप्त्यर्था इति ।।

**सु.** - किमिति ब्रूयात् ? उच्यंते, **कं ते गानमागायानि** इति - हे यजमान ! **ते** कं कामम् अभिलषितमधिकृत्य अद्य अहम् **आगायानीति** । कुतोऽस्यैतत्सामर्थ्यं ? उच्यते, **य एवम्** उक्तेन प्रकारेण **विद्वानेतत्साम** गायति सः हि यजमानकामस्य सम्पादने **ईष्टे** - समर्थो भवति । **साम गायति साम गायतीति** द्विरुक्तिः उपासनसमाप्तौ ।। ९।।

**।। इति सप्तमखण्डभाष्यम् ।।**

---

१. केशौ - तेजसी । कः - आत्मा तस्मिन् शेते इति केशः । मोक्षधर्मे तपतो लोकानग्रेस्सोमस्य चैव हि । अंशवो ये प्रकाशन्ते मम ते केशसंहिताः ।। इति । (विष्णुचित्तीये)

1. हिरण्मयविग्रहविशिष्टानुसन्धानानुपपत्तिः - अ,आ । 2. वर्तमानः - ख ।

## अष्टमः खण्डः

[उद्गीथाक्षरस्य परोवरीयस्त्वोपासनम्]

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यः, चैकितायनो दाल्भ्यः, प्रवाहणो जैबलिरिति, ते होचुः - उद्गीथे वै कुशलाः स्मः, हन्तोद्गीथे कथां वदाम इति ।। १ ।।**

**प्र.** - प्रकारान्तरेण उपासनं विधातुम् आख्यायिकामाह - **त्रयो...... जैबलिरिति** शालावत्सुतः शिलकनामा, दल्भगोत्रः चिकितायनसुतः, जीबलसुतः प्रवाहणनामा त्रयो [1]एते[1] उद्गीथविज्ञाने निपुणा बभूवुः इत्यर्थः । **शालावत्यः** - शालावच्छब्दात् अपत्यार्थे अणि तदन्तात् स्वार्थे 'अभिजिद्विदभृच्छालावत्' (पा.सू.५-३-११८) इत्यादिना यञ् प्रत्ययः । **दाल्भ्यः** - दल्भ्यशब्दात् गोत्रापत्ये गर्गादित्वात् यञ् । चिकितायनशब्दात् अपत्यार्थे ऋषित्वात् अणि **चैकितायनः । जीबलशब्दात्** 'अत इञ्' **जैबलिः । ते... वदामः** इति वयम् उद्गीथविज्ञाने कुशलाः भवामः । अतो विद्यावैशद्याय वादकथां परस्परं प्रवर्तयामः इत्यूचुः इत्यर्थः ।।

**आ.भा.** - प्रकारान्तरेण उद्गीथोपासनं वक्तुमाख्यायिकां दर्शयति । **त्रयो......जैबलिरिति ।** शालावत्सुतः नाम्ना **शिलकः** - दल्भगोत्रः चेकितायनपुत्रः, जीबलसुतः नाम्ना **प्रवाहणः** एते त्रयः उद्गीथविज्ञाने कुशला बभूवुः इत्यर्थः । **ते......वदामः ।** एते वयम् उद्गीथविज्ञाने निपुणा भवामः, अतो विद्यादार्ढ्याय परस्परं वादकथां कुर्मः इत्यूचुः इत्यर्थः ।।

**सु.** - प्रकारान्तरेण उद्गीथोपासनं वक्तुम् उपक्रमते । आख्यायिका सुखप्रतिपत्तये । पुरा जातु **उद्गीथे कुशलास्त्रयो बभूवुः ।** एकत्र सङ्गता बभूवुः इति शेषपूरणेन वाऽन्वयः । के ते त्रयः ? **शालावत्यः शिलकः** - शालावत्सुतो नाम्ना शिलकः, **चैकितायनो दाल्भ्यः** - दल्भ्यस्य गोत्रापत्यं चिकितायनस्य अपत्यम् ; **प्रवाहणो जैबलिः** - जीबलस्यापत्यं नाम्ना प्रवाहणः, इति त्रय इति सम्बन्धः । **ते ह** सङ्गताः **ऊचुः ।** किमिति ? **उद्गीथे** हि वयं **कुशलाः** स्मः, **उद्गीथे कथां वदाम इति** - अवगतार्थद्रढिम्ने पक्षप्रतिपक्षोपन्यासरूपेण विचारम् उद्गीथे कुर्मः इति । **हन्त** इत्युत्साहे । **वैशब्दो** ह्यर्थः ।।

---

1. एव -क ; त्रयस्ते - ख ।

**तथेति ह समुपविविशुः । स ह प्रवाहणो जैबलिरुवाच भगवन्तावग्रे वदताम् ; ब्राह्मणयोर्वदतोर्वाचँ श्रोष्यामीति ।। २ ।।**

**प्र. - तथेति ह समुपविविशुः ।** [1]तथा कुर्मः इत्यन्योन्यम् उक्त्वा[1] एकत्र उपविष्टवन्तः इत्यर्थः ।।

**स.... उवाच ।** प्रवाहणः क्षत्रियः तौ ब्राह्मणौ प्रागल्भ्यात् उवाच इत्यर्थः । उक्तिमेवाह - **भगवन्तौ....श्रोष्यामि** इति । **भगवन्तौ** - पूजावन्तौ ब्राह्मणौ **अग्रेवदतां** - वादकथाः[१] कुरुताम् । तत्प्रकारं [2]श्रोष्यामीति[2] ।

**आ.भा. - तथा** इत्यादि । तथा वयं कुर्मः इति परस्परम् उक्त्वा एकत्र समुपविष्टवन्तः इत्यर्थः । **स ह** इत्यादि । तत्र प्रवाहणः क्षत्रियः तौ ब्राह्मणौ प्रागल्भ्यात् उवाचेति । **भगवन्तौ** - पूजनीयौ ब्राह्मणौ **अग्रे** - प्रथमं **वदतां** - वादकथां कुरुताम्, अहं तत्प्रकारं श्रोष्यामि इति । अन्यत्सर्वं स्पष्टम् ।। २-३ ।।

**सु. - तथा** इति मिथ उररीकृत्य ते **समुपविविशुः** । तेषु स ह प्रवाहणः **जैबलिरुवाच** इतरौ । किमिति ? **भगवन्तौ** - पूजार्हौ भवन्तौ **अग्रे वदताम्**, ब्राह्मणयोः वदतोः वाचं श्रोष्यामि इति । अयं च प्रवाहणः क्षत्रियः इति गम्यते, भगवन्तौ इति निर्देशात् ।।

**स ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच - हन्त त्वा पृच्छानीति । पृच्छेति होवाच ।। ३ ।।**

**प्र. - स..... पृच्छानीति ।** स्पष्टोऽर्थः । तत्र दाल्भ्यस्य प्रत्युक्तिमाह - **पृच्छेति होवाच** इति । स्पष्टम् ।।

**सु. -** तयोः ब्राह्मणयोरेकः स हि शिलकः शालावत्यश्चैकितायनं दाल्भ्यम् अपरम् उवाच - **त्वा पृच्छानीति ।** पृच्छामि इत्यनुक्त्वा पृच्छानि इत्युक्तेः अनुज्ञाप्रतीक्षा व्यज्यते । अपरः उवाच - **पृच्छेति** ।।

---

१. वादः - तत्त्वनिर्णिनीषुकथा वादः । तदुक्तं न्यायदर्शने तिस्रः कथा भवन्ति वादो जल्पो वितण्डा चेति । तासाम् प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धवचः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ।। (१-२-१)

1. तथा कुर्मः इत्यन्योन्यमुक्त्वा - इति वाक्यं - नास्ति - अ,आ । 2. इति भावः - अ ।

**का साम्नो गतिरिति । स्वर इति होवाच । स्वरस्य का गतिरिति प्राण इति होवाच । प्राणस्य का गतिरिति । अन्नमिति होवाच । अन्नस्य का गतिरिति । आप इति होवाच ।। ४ ।।**

**प्र. -** शिलकः पृच्छति । **का साम्नो गतिरिति । गतिः -** अयनं प्राप्यम् इत्यर्थः । सः दाल्भ्यः स्वर इति ह **उवाच -** प्रत्युवाच । स्वरात्मकत्वात् साम्नः इति भावः । शिलकः पृच्छति । **स्वरस्य का गतिरिति ।** दाल्भ्यः उत्तरमाह । **प्राण इति होवाच ।** प्राणनिर्वर्त्यत्वात् स्वरस्य इति भावः । एवम् उत्तरत्रापि औचित्यम् अनुसन्धेयम् ।।

**आ.भा. -** शिलकः पृच्छति । **का साम्नो गतिरिति ।** तत्र **गतिः -** अयनं प्राप्यम् इत्यर्थः । ततो दाल्भ्यः **स्वर इति होवाच -** स्वरात्मकत्वात् साम्नः यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवति मृदाश्रय इव घटादिः इति भावः । पुनः शिलकः पृच्छति **स्वरस्य का गतिरिति ।** दाल्भ्यः प्राह - **प्राण इति होवाच ।** प्राणनिर्वर्त्यत्वात् स्वरस्य इति । **प्राणस्य का गतिरिति । अन्नमिति होवाच दाल्भ्यः ।** अन्नाधीनत्वात् प्राणस्य 'शुष्यति वै प्राण ऋते अन्नादिति' (बृ.उ.४-१२-१) श्रुतेः । **अन्नस्य का गतिरिति** प्रश्ने **आप इति होवाच ।** जलजन्यत्वात् अन्नस्य ।।

**सु. -** एवम् अनुमतः पप्रच्छ शिलकः - **का साम्नो गतिरिति ।** सामशब्दः प्रकृते उद्गीथे वर्तते, सामान्यविशेषन्यायात् । तस्य गतिराश्रयः कः, इतिशब्दः प्रश्नप्रतिवचनविभागज्ञापकः । पृष्टो दाल्भ्यः **स्वर इति होवाच ।** स्वरप्रधानत्वात् उद्गीथस्य स्वरः आश्रयः इति भावः । **स्वरस्य का गतिरिति पृष्टः प्राण इति होवाच ।** प्राणबलनिर्वर्त्यो हि स्वरः । **प्राणस्य का गतिरिति पृष्टः अन्नमिति होवाच ।** अन्ने हि प्राणः प्रतिष्ठितः । 'शुष्यति वै प्राणः ऋते अन्नात्' । (बृ.उ. ७-१२-१) **अन्नस्य का गतिरिति पृष्टः आपः इति होवाच ।** अप्प्रभवं हि अन्नम् ।।

**अपां का गतिरिति । असौ लोक इति होवाच । अमुष्य लोकस्य का गतिरिति । न स्वर्गं लोकमतिनयेदिति होवाच - स्वर्गं वयं लोकँ सामाभिसँस्थापयामः ; स्वर्गसँस्तावँ हि सामेति ।। ५ ।।**

**प्र.** - अपां का गतिः इति पृष्टो दाल्भ्यः, **असौ लोकः इति होवाच ।** द्युलोकादेव वृष्टिप्रभवात् इति भावः । अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्यः आह । **न......होवाच ।** स्वर्गलोकमतीत्य परमाश्रयान्तरं साम न नयेत् । स्वर्गलोकव्यतिरिक्तम् आश्रयान्तरं साम न प्रापयेत् इत्यर्थः । न वदेत् इति यावत् । **स्वर्गं......सामेति ।** अतो वयमपि **साम अभि** - साम प्रति आश्रयत्वेन स्वर्गं लोकं सम्यक् स्थापयामः । **हि** - यस्मात् **साम स्वर्गसंस्तावम्** - स्वर्गो वै लोकः सामवेदः इति श्रुत्या स्वर्गत्वेन साम्नः स्तूयमानत्वात् इत्यर्थः ।।

**आ.भा.** - अपां का गतिः इति प्रश्ने असौ द्युलोको गतिः इति होवाच । द्युलोकादेव वृष्टिप्रभवात् । अमुष्य लोकस्य का गतिः इति प्रश्ने उत्तरयति ; **न स्वर्ग लोकमतिनयेदिति होवाच ।** स्वर्गलोकातिरिक्तं सामगतिं न वदामि स्वर्गं लोकं वयं सामाभिसंस्थापयामः । सामाश्रयतया स्वर्गलोकमेव वयं सम्यक् स्थापयामः । **हि** - यस्मात्कारणात् **स्वर्गसंस्तावं हि सामेति** - 'स्वर्गो वै लोकः सामवेदः' इति श्रुतेः स्वर्गरूपेणैव साम्नः स्तुतिकरणात् स्वर्गगतिकमेव साम इति वयं निश्चिनुमः ।।

**सु. - अपां का गतिः** इति पृष्टोऽसौ लोक इति होवाच । **असौ लोकः** - द्युलोकः । वृष्टिर्हि अमुष्मात् लोकात् । अमुष्य लोकस्य का गतिः इति पृष्टो न स्वर्गं लोकमतिनयेत् इति होवाच । साम्नो गतिपरम्परां पर्यालोचयन् कोऽपि साम स्वर्गं लोकमतिक्रम्य तत उपरितनम् आश्रयान्तरं न नयेत् । न कोऽपि साम्नः स्वर्गात् परमाश्रयान्तरं मन्यत इति भावः । साम स्वस्य गतिपरम्पराविचारकं पुरुषं स्वर्गमतीत्य न नयेत् । तत्रैव गतिः इति विचारविश्रान्तिः भवेत् इति भावः । अतो वयं सामाभिस्वर्गलोकमेव मुख्याश्रयतया स्थापयामः **हि** - यस्मात् **साम स्वर्गसंस्तावं** स्वर्ग इति संस्तावः स्तुतिः यस्य तत् । स्वर्गो वै लोकः साम इति श्रुतेः ।।

**तँ ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच - अप्रतिष्ठितं वै किल ते दाल्भ्य ! साम ; यस्त्वेतर्हि ब्रूयात्, मूर्धा ते विपतिष्यतीति, मूर्धा ते विपतेदिति ।। ६ ।।**

**प्र. - तँ ह विपतेदिति ।** हे दाल्भ्य ! अप्रतिष्ठितं स्वर्गलोकं सामगतिपरम्पराविश्रान्तिभूमिं वदतः तव मते साम अप्रतिष्ठितमेव स्यात् । एतस्मिन् समये यः कश्चित्

आगत्य वादकथायाम् अयुक्तमर्थं प्रतिजानानस्य ते मूर्धा विपतिष्यति इति यदि ब्रूयात् - तदा विपतेदेव ते मूर्धा । न संशयः । मया तु सौहार्दात् तथा नोक्तम् । अतो जीवसि इति शिलक उक्तवान् इत्यर्थः ।।

**आ.भा.** - तं दाल्भ्यं पुनः शिलकः पृच्छति - **तं ह** इत्यादि । **अप्रतिष्ठितं वै किल ते साम** - अप्रतिष्ठितो हि स्वर्गलोकः तं सामाधारत्वेन मन्यमानस्य तव मते सामापि अप्रतिष्ठितमेव भवेदिति वादकथाया यदि कोऽपि अन्यो वदेत् यत् **मूर्धा ते विपतेत्** तदा तव शिरःपतनम् अवश्यमेव स्यात् । अहं तु स्नेहात् न तथा वदामि अतो जीवसि इति ।।

**सु. - साम ते अप्रतिष्ठितं किल** - तव पक्षे साम प्रतिष्ठारहितं किल भवति, यदस्थिरं स्वर्गं प्रतिष्ठां मन्यसे । न हि अस्थिरं गत्यन्तरसापेक्ष्यं कस्यचित् प्रतिष्ठा भवेत् । तदेवम् अन्यथावादमपराधं तावकम् असहमानो यद्यभिज्ञो यः कश्चित् **एतर्हि** - एतस्मिन् समये **मूर्धा ते विपतिष्यतीति ब्रूयात्, मूर्धा ते विपतेत्,** मया तु स्नेहोत् न तथा उच्यते इति भावः । इति उवाच इति पूर्वेण सम्बन्धः ।।

**हन्ताहमेतद् भगवत्तो वेदानीति । विद्धीति होवाच । अमुष्य लोकस्य का गतिरिति । अयं लोक इति होवाच । अस्य लोकस्य का गतिरिति । न प्रतिष्ठां लोकमतिनयेदिति होवाच ; प्रतिष्ठां वयं लोकं सामाभिसँस्थापयामः ; प्रतिष्ठासँस्तावँ हि सामेति ।। ७ ।।**

**प्र. - हन्त विद्धीति होवाच** । तर्हि अहं सामगतिपरम्पराविश्रान्तिभूमिं त्वत्तः जानीयाम् इति दाल्भ्येन प्रार्थितः शिल्कः तथा इत्युक्तवान् इत्यर्थः । अनुमतो दाल्भ्यः पृच्छति । **अमुष्य......इति** । शिलकः उत्तरमाह - **अयं-होवाच** । यागदानहोमादिभिः भूलोकस्य स्वर्गोपजीव्यत्वात् इति भावः । **अस्य लोकस्य** इत्यादि । पृथिवीलोकस्य का गतिः इति दाल्भ्येन पृष्टः शिलकः **प्रतिष्ठां** - पृथिवीलोकमतिक्रम्य सामगतिपरम्पराविश्रान्ति-भूमिम् अन्यं न कश्चिदपि वदेत् । अतः वयमपि तथैव वदामः । 'इयं वै रथन्तरं' (तां.ब्रा.१८-६-११) इति श्रुत्या साम्नः प्रतिष्ठालोकत्वेन स्तूयमानत्वात् । स्वर्गस्य ज्योतिश्चक्रलग्नतया बम्भ्रम्यमाणत्वेन प्रतिष्ठात्वाभावेपि पृथिव्यास्तु, स्थिरत्वात् प्रतिष्ठात्वम् इत्युक्तवान् इत्यर्थः ।।

**आ.भा. - हन्ताहमेतत्** इति । हे भगवन् ! त्वत्तोऽहं सामगतिपरम्पराविश्रामस्थानं ज्ञातुम् इच्छामि इति दाल्भ्येन कथितः शिलकः **विद्धि इति होवाच** - यथेच्छं जानीयाः । ततो दाल्भ्यः पृच्छति । **अमुष्य लोकस्य का गतिरिति** । ततः शिलकः प्राह - **अयं लोक** इति । यागदानादिक्रमेण भूलोकस्य स्वर्गजनकत्वात् इत्यर्थः । अस्य लोकस्य का गतिः इति प्रश्ने शिलकः उत्तरयति - **न प्रतिष्ठाम्** इत्यादि । प्रतिष्ठातिरिक्तं न किमपि विश्रान्तिस्थानम् कोऽपि वदति अतः अहमपि प्रतिष्ठामेव सामाधारं ब्रवीमि इति ।।

**सु.** - एवम् अभिहितः दाल्भ्यः आत्मनः उद्गीथेऽनभिज्ञतां विनिश्चित्य अभिसन्धाय च शिलकस्य तदभिज्ञतां विनीत उवाच । किमिति ? **हन्ताहमेतद्भगवत्तो वेदानीति** । यत्प्रतिष्ठं साम स्यात् तदेतत् भगवत्तो वेदानि इति विज्ञापितः शिलकः उवाच - विद्धि मत्त इति । अनुमतो दाल्भ्यः पप्रच्छ - **अमुष्य लोकस्य का गतिरिति** पृष्टः उवाच - **अयं लोकः** इति । यागदानहोमादिभिः अयं हि भूलोकः पुष्णाति द्युलोकम् । अस्य लोकस्य का गतिः इति पृष्टो दाल्भ्येन शिलकः उवाच - **न प्रतिष्ठां लोकम् अतिनयेदिति** । **प्रतिष्ठां लोकं** - सर्वभूतानां प्रतिष्ठात्वेन प्रत्यक्षतोऽवगतम् इमं भूलोकमतिक्रम्य न कश्चित् अभिज्ञः सामविश्रान्तिस्थानं नयेत् । विवृतप्रायम् इतरम् । **प्रतिष्ठासंस्तावं हि सामेति** । प्रतिष्ठा इति अयं लोक इति संस्तावः स्तुतिः यस्य तत् प्रतिष्ठासंस्तावम् । 'इयं वै रथन्तरम्' (तां.ब्रा.१८-६-११) इति श्रुतेः । **इयं** - पृथिवी इत्यर्थः ।।

**तँ ह प्रवाहणो जैबलिरुवाच अन्तवद्वै किल ते शालावत्य ! साम ; यस्त्वेतर्हि ब्रूयात्, मूर्धा ते विपतिष्यतीति, मूर्धा ते विपतेदिति ।। हन्ताहमेतद्भगवतो वेदानीति । विद्धीति होवाच ।।**

**।। इति अष्टमः खण्डः ।।**

**प्र. - तं ह - प्रवाहणो जैबलिरुवाच** - उक्तवान् किमिति । **अन्तवद्वै किल ते शालावत्य साम** । अन्तवतीं पृथिवीं सामगतिपरम्पराविश्रान्तिभूमितया प्रतिजानानस्य ते मते साम अन्तवदेव स्यात् इत्यर्थः । **यस्त्वेतर्हि......होवाच** इति । पूर्ववदर्थः । **हन्ताहमेतत्** इत्यादि शिलक आह - **विद्धीति** राजा उवाच इत्यर्थः ।।

**आ.भा. - तं ह प्रवाहण** इत्यादि पूर्ववदेव व्याख्यानं कर्तव्यम् इति ।।

**सु. -** अथ तमेवम् उक्तवन्तं शिलकं तृतीयः **प्रवाहणो जैवलिरुवाच** । अन्तवद्वै किल **ते शालावत्य साम,** यत्प्रतिष्ठा इति निगदितः अयं लोकः अन्तवान् प्रतिष्ठान्तरम् अपेक्षते एव । अन्यद्व्यक्तम् । **भगवत्तो वेदानीति** निर्देशात् क्षत्रियोऽपि ब्राह्मणेन विद्यां ततो जिघृक्षता पूज्यः इति व्यज्यते ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

**अस्य लोकस्य का गतिरिति, "आकाश" इति होवाच, "सर्वाणि" ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ; आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम् ।। १ ।।**

**प्र. -** एवम् अनुमतः शिल्कः राजानं पृच्छति । **अस्य लोकस्य का गतिरिति । अस्य -** पृथिवीलोकस्य । का गतिरिति इत्यर्थः । शालावत्येन पृष्टः प्रवाहणः **आकाश इति होवाच ।** आकाश' इत्युक्तवान् इत्यर्थः । [1] अत्र[1] आकाशते प्रकाशते, आकाशयतीति वा व्युत्पत्या आकाशशब्दो ब्रह्मपरः । 'आकाशो ह वै नामरूपयोः निर्वहिता' (छां.उ.८-१४-१) इत्यादौ आकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धत्वात् ; न तु भूताकाशपरः इति द्रष्टव्यम् । तदेव गतित्वं प्रपञ्चयति । **सर्वाणि ह......यन्ति** । चिदचिदात्मकप्रपञ्चः आकाशादेव उत्पद्यते तत्रैव लीयते इत्यर्थः । **आकाशो ज्यायान्** । ज्यायस्त्वं नाम - सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षः **आकाशः परायणम्** । परायणत्वं - परमगतित्वम् । परमप्राप्यत्वम् इति यावत् ।।

**आ.भा. -** उक्तप्रकारेण राज्ञानुमतः शिलकः राजानं पृच्छति **अस्य लोकस्य का गतिरिति । आकाश इति होवाच** राजा । तत्र आकाशते प्रकाशते इति आकाशः

---

१. अत्र आकाशपदेन परमात्मा गृह्यते न तु भूताकाशः । आकाशः - आसमन्तात् काशते इति कर्तरि अच् प्रत्ययः । निरुपाधिकतया प्रकाशमानः । (परमात्मा) काशृ - दीप्तौ इति हि धातुः । तदुक्तं ब्रह्मसूत्रपद्यमालिकायां -

आकाशः परमात्मेति तल्लिङ्गादिह तूच्यते ।

परायणत्वसृष्ट्यादि कारणत्वविशेषणात् ।। (१-१-२३) विस्तरस्तु श्रीभाष्यादौ द्रष्टव्यः ।।

1. नित्यमत्र - क ।

परमात्मा न तु भूताकाशः । तत्र युक्तिं दर्शयति **सर्वाणि** इत्यादि । सर्वाणि इमानि स्थावरजङ्गमभूतानि आकाशपदवाच्यपरमात्मसकाशात् उत्पद्यन्ते । उत्पत्तिविपरीतक्रमेण प्रलयसमये तत्रैव लयमपि यान्तीति । एभ्यः सर्वेभ्यः **आकाशः ज्यायान्** महान् परायणं त्रिष्वपि कालेषु सर्वेषां प्रतिष्ठा इति भावः ।।

**सु.** - अनुज्ञातः शिलकः पप्रच्छ - **अस्य लोकस्य का गतिरिति** । पृष्टः प्रवाहण उवाच - **आकाश** इति । आसमन्तात् काशते इत्यवयवार्थाश्रयणेन आकाशः इह परमात्मा, रूढ्यर्थे हि वक्ष्यमाणं सर्वभूतोत्पादकत्वादि बाधकम् । आकाशस्य अस्य साम्नो गतिविश्रान्तिभूमित्वे लिङ्गमाह - **सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति** इति । **भूतानि** - चराचराणि । **हवा** इति निर्देशात्प्रसिद्धिर्द्योत्यते । सा च 'सदेव सौम्येदमग्र आसीत्' (छां.उ.६-२-१) इत्यादिवाक्यतः परमात्मनि गम्यमाना । आकाशो **ह्येवैभ्यः** - भूतेभ्यः सर्वेभ्यः **ज्यायान्** - महान् । यस्मादयमेव सर्वभूतानां प्रभवाप्ययस्थानं व्यापकश्च तस्मात् अयमेव सर्वस्य **परायणम्** - परागतिः, यद्यस्मादन्यत्कारणं व्यापकं वा स्यात् तदा परायणत्वम् अस्मिन् न घटेत, तत्तु नेत्यस्य परायणत्वं युक्तम् इति भावः ।।

**[उद्गीथः परोवरीयः]**

**स एष परोवरीयानुद्गीथः, स एषोऽनन्तः । परोवरीयो हास्य भवति ; परोवरीयसो ह लोकाञ्जयति ; य एतदेवं विद्वान् परोवरीयाँसमुद्गीथमुपास्ते ।। २ ।।**

**प्र. - स एष परोवरीयानुद्गीथः । परः** उत्कृष्टः, वरीयन् उत्कृष्टतरः । वरीयसामपि परः इत्यर्थः । अत्र परःशब्दः सकारान्तो द्रष्टव्यः । एवं रूपः **आकाश उद्गीथः** । परमात्मदृष्टिविशिष्टः उद्गीथ इत्यर्थः । उद्गीथे एतादृशाकाशदृष्टिः कर्तव्या इति यावत् । **स एषोऽनन्तः** । उद्गीथ अध्यस्यमानः अयमाकाशः **अनन्तः** - अपरिच्छिन्नः इत्यर्थः । ततश्च अनन्तस्य आकाशशब्दितस्य परमात्मन एव सामगतिपरम्पराविश्रान्ति-भूमित्वात् मत्पक्षे 'अन्तवद्वै किल ते साम' इत्युक्तः अन्तवत्त्वदोषो न प्रसरति इति भावः । **परोवरीयो....जयति** इत्यादि । **यः** - परोवरीयांसम् एतम् आकाशशब्दितं परमात्मानं **विद्वान्** आकाशत्वेन उद्गीथम् उपास्ते, तस्य परोवरीयस्त्वगुणकं जीवनं भवति । परोवरीयस्त्वगुणकसकलल्लोकावाप्तिश्च भवति ।।

**आ.भा. - एषः** इत्यादि । **परः** उत्कृष्टः वरीयान् उत्कृष्टतरः वरीयसामपि वर इत्यर्थः । आकाशः **उद्गीथः** परमात्मदृष्टिविशिष्टः उद्गीथः इत्यर्थः । उद्गीथे एतादृशाकाशदृष्टिः सम्पादनीया इति भावः । **स एषोऽनन्तः -** उद्गीथे अध्यस्यमानः अयमाकाशः अनन्तः [1]परिच्छेदत्रयवर्जितः सर्वव्यापीत्यर्थः । एवञ्च अनन्तस्य आकाशपदबोध्यस्य परमात्मन एव सामगतिपरम्पराविश्रामस्थानत्वात् अन्तवत्वादिदोषो न भवति इत्यर्थः । **परोवरीयो हास्य** इत्यादि । **यः** खलु **परोवरीयांसम् एनम्** आकाशपदबोध्यं परमात्मानं **विद्वान्** आकाशरूपेण उद्गीथोपासनं सम्पादयति तस्य परोवरीयस्त्वगुणविशिष्टं जीवनं भवति । तथा परोवरीयस्त्वगुणविशिष्टसकललोकप्राप्तिरपि भवति इति भावः ।।

**सु. - स एषः - उद्गीथः परोवरीयान् -** योऽसौ आकाशः सर्वभूतानाम् उद्भवाप्ययस्थानभूतः सर्वतो महान् स एष उद्गीथः, तत्त्वेन उद्गीथो विभाव्यते, अत एवायं परोवरीयान् । परश्चासौ, वरीयांश्च वरीयसामपि वरः, परश्चासौ वरीयांश्चेति वा । आकाशस्य अयं गुणः तत्त्वेन भाव्यमाने उद्गीथे सम्पाद्यते । **स एषोऽनन्तश्च -** तस्य आनन्त्यात् तत्त्वेन दृश्यमाने एतस्मिन् आनन्त्यम् आरोप्यते ।

यद्वा - परेण कृते साम्नो गतिनिरूपणे स्थिरगत्यलाभात् - यदन्तवत्त्वं दोषः उद्भावितः - अन्तवत्किल ते सामेति, सोऽयं दोषः अस्मिन्पक्षे न इत्याह - **स एषोऽनन्त** इति । य एतत्साम एवम् उक्तप्रकारेण **विद्वान् -** जानन् **परोवरीयांसं -** परोवरीयस्त्वगुण - विशिष्टम् उद्गीथम् उपास्ते, अस्य इह लोके **परोवरीयः -** वरीयसां वरीयः जीवनं भवति; स परत्र **परोवरीयसो लोकानपि जयति ।।**

**[विद्याफलश्रुतिविषये शौनकवाक्योद्धरणम्]**

**तँ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच, यावन्त एनं प्रजायामुद्गीथं वेदिष्यन्ते, परोवरीयो हैभ्यस्तावदस्मिन् लोके जीवनं भविष्यति ।। ३ ।।**

**प्र. -** प्रवाहणः स्वोक्तार्थं संवादयति - **तं......उवाच । अतिधन्वनामा** शुनकसुतः **उदरशाण्डिल्याय** ऋषये, **उदरशब्देन** सन्ततिर्लक्ष्यते । सन्ततिशाली शाण्डिल्यः इत्यर्थः । तस्मै **एनम्** उद्गीथम् उक्त्वा अन्यदप्युवाचेत्यर्थः । किं तत् इत्यत्राह - **यावन्त......भविष्यतीति ।**

१. त्रिविधपरिच्छेदरहितः - देश-काल-वस्तु इति त्रिविधपरिच्छेदरहितः ।

**वेदिष्यन्त** इत्येतद् व्यत्ययेन आत्मनेपदम् **प्रजायां** - त्वत्सन्ततौ यावन्तःपुरुषाः **एनं** उद्गीथं उपासिष्यन्ते, तेषाम् उत्कृष्टमिह **लोके जीवनं भविष्यति** इत्यर्थः ।।

**आ.भा.** - प्रवाहणो राजा स्वोक्तमर्थं संवादयति । **तमुवाचेति** । **अतिधन्वा** शुनकपुत्रः **उदरशाण्डिल्याय** ऋषये तत्र उदरशब्देन अपत्यं लक्ष्यते तेन अपत्यशाली शाण्डिल्यः इत्यर्थः, तस्मै । एनम् उद्गीथस्वरूपं वर्णयित्वा तदन्यदपि उक्तवान् । किम् उक्तवान् तत्राह - **यावन्त** इत्यादि । का कथा तव । त्वदीयवंशे अन्योऽपि कोऽपि य एनम् उद्गीथम् उपासिष्यते तस्य उत्कृष्टं **जीवनम् इह लोके भविष्यति** इत्यर्थः ।।

**सु.** - शुनकसुतः नाम्ना **अतिधन्वा** तमेतम् उद्गीथम् **उदरशाण्डिल्याय** शिष्याय उपदिश्य इदमपि उवाच । ते प्रजायां सन्ततौ **एनम्** उद्गीथं यावत् **वेदिष्यन्ते** - ज्ञास्यन्ति, **एभ्यः** सर्वेभ्यः **अस्मिंल्लोके परोवरीयः** - अत्युत्तमं **जीवनं भविष्यति, तथा अमुष्मिन्नपि** इति उवाचेति पूर्वेण सम्बन्धः । एवं फले संवादप्रमाणम् उपन्यस्य स्वयं फलनिरूपणेन निगमयति - **स य एतमेवं विद्वानुपास्ते** इति । स्फुटोऽर्थः । प्रक्रान्तोपासनप्रकारपरिसमाप्तिद्योतनाय वीप्सा ।। ३ - ४ ।।

**तथाऽमुष्मिन् लोके लोक इति । स य एतमेवं विद्वान् उपास्ते, परोवरीय एव हास्यास्मिन् लोके जीवनं भवति, तथाऽमुष्मिन् लोके लोक इति, लोके लोक इति ।। ४ ।।**

**।। इति नवमः खण्डः ।।**

**प्र.** - **तथाऽमुष्मिन् लोके लोक** इति । तथा अमुष्मिन्नपि - परलोके भविष्यति इत्यर्थः । **परोवरीयो जीवनमित्यनुषङ्गः** । **लोके लोके** इति वीप्सायां द्विर्वचनम् । **इति अतिधन्वा उवाच** इति पूर्वेणान्वयः । अतः इदानीन्तनानामपि तद्विदां तत् फलमस्ति इत्याह - **स य लोके** इति । स्पष्टोऽर्थः । **लोके लोके इति** । लोके लोके इतीति द्विरुक्तिः विद्यासमाप्त्यर्था ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणम् उपन्यस्यते - समन्वयाध्याये प्रथमपादे उद्गीथे अध्यस्योपास्यमानाकाशो भूताकाशः एव । आकाशशब्दस्य भूताकाशे रूढत्वेन रूढाकाशशब्दाभ्यासात् इति पूर्वपक्षे प्राप्ते -

उच्यते - 'आकाशस्तल्लिङ्गात्' (ब्र.सू.१-१-२३) आकाशशब्दाभिधेयः परमात्मा । निखिलजगदेककारणत्व-सर्वज्यायस्त्व-परायणत्वादीनां परमात्मलिङ्गानां भूताकाशे असम्भवात् । भूताकाशस्य अचेतनवर्गं प्रति कारणत्वसम्भवेऽपि चिदचिद्वर्गकारणत्वासम्भवात् सर्वैः कल्याणगुणैः सर्वोत्कृष्टत्वलक्षण- ज्यायस्त्वस्यापि असम्भवात् अचेतनस्य स्वरूपभिन्नत्वेन मोक्षविरोधितया [1]हेय[1] शब्दादिनिषिद्धविषयप्रावण्यजनकतया च सकलपुरुषार्थविरोधिनः अचेतनस्य परायणत्वलक्षणप्राप्यत्वस्य चासम्भवात् [2]तस्य[2] 'का साम्नो गतिः,' 'अस्य लोकस्य का गतिः,' इत्युपक्रमलक्षणतात्पर्यलिङ्गेन प्रतिपिपादयिषितत्वावगमात्[3]। प्रतिपिपादयिषितपरायणत्वानन्तत्वपरोवरीयस्त्वादिलिङ्गविरोधे अभ्यस्ताया अपि श्रुतेर्दुर्बलत्वाच्च आकाशशब्दश्च आकाशते आकाशयतीति वा योगवशेन परमात्मपर एव ।

ननु 'सर्वाणि ह वा इमानि भूतानि' (छां.उ.१-९-१) इति श्रुत्यैव आकाशस्य जगत्कारणत्वावेदनात् यथाश्रुताकाशस्यैव जगत्कारणत्वम् अभ्युपेतव्यमिति चेन्न - 'सदेव सोम्येदमग्र आसीत्,' (छां.उ. ६-२-१), 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.उ.१-१) 'एको ह वै नारायण आसीत्' (महो.१-१) इत्यादियोग्यार्थाननुवादरूपबहुवाक्यविरोधे एकस्यानुवादरूपस्य अयोग्यार्थस्यास्य वाक्यस्य दुर्बलत्वेन स्वार्थप्रतिपादनसामर्थ्याभावात् । अतः आकाशशब्दः यौगिक्या वृत्या ब्रह्मपर एव ।

यत्तु अत्र व्यासार्यैः, "अर्थाविरोध एव रूढिप्राबल्यमित्यपशूद्राधिकरणनयोपजीवनेन अवयवशक्त्या निर्वाहो भाष्ये उक्तः"। रूढ्यपरित्यागेन [4]अपर्यवसानवृत्त्या[4] आकाशशब्दस्य आकाशशरीरकपरमात्मपरतया निर्वाहोऽपि अभिमतः इत्युक्तम् - तत् उपायान्तरसम्भव-प्रदर्शनमात्रपरम्; न तु प्रकृताभिप्रायम् । अनन्यथासिद्धभूताकाशलिङ्गसत्त्व एव, 'जीवमुख्यप्राणलिङ्गात्' (ब्र.सू.१-४-१७) इति सूत्रोक्तन्यायावतारात्,

"परविद्यासु जीवोक्तिः निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ।।" (न्या.सि.ईश्वरपरिच्छेदे)

इत्याचार्योक्तेः । भूताकाशशरीरकब्रह्मप्रतिपादकत्वा[5]सम्भवाच्चेति[5] द्रष्टव्यमिति स्थितम् । प्रकृतमनुसरामः ।।

---

1. हेयस्य - अ,आ । 2. तस्य च - क,ख । 3. तया, 'अन्तवद्वै किल ते दाल्भ्य (शालावत्य) साम' इति पृथिवीलोकस्यान्तवत्त्वोक्तिदूषणपूर्वकमुपक्षिप्तस्य स एषोऽनन्तः' इत्यनन्तत्वलिङ्गे च प्रतिपिपादयिषितत्वावगमात् । इत्यधिकः पाठः क - ख कोशे 4. पर्यवसानवृत्या - अ । 5. भूताकाशशरीरकात् ब्रह्मणः सकलचेतनाचेतनवर्गोत्पत्त्य -भावेन 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यत्राकाशशब्दस्य भूताकाशशरीरकब्रह्म -प्रतिपादकत्वासम्भवात् । इति अधिकः पाठः क कोशे । न चाकाशावस्थस्य ब्रह्मणः निखिलकारणत्वासंभवेऽपि आकाशावस्थोपलक्षितस्य तत् सम्भवतीति वाच्यम् - तथा सति आकाशशब्दस्य अत्यन्तामुख्यत्वप्रसङ्गादिति - इत्यधिकः पाठः - खकोशे ।

**आ.भा. - तथेत्यादि । तथा** परलोकेऽपि उत्कृष्टजीवनं भविष्यति इति । लोके लोके इत्यत्र द्विरुक्तिः विद्यासमाप्त्यर्था इति ।।

।। इति **नवमखण्डभाष्यम्** ।।

## दशमः खण्डः

[प्रस्तावोद्गीथप्रतिहारभक्तित्रयोपासनम्]

**मटचीहतेषु [1]कुरुष्वाटक्या[1] सह जायया उषस्तिर्ह चाक्रायण इभ्यग्रामे [2]प्रद्राणक[2] उवास ।। १ ।।**

**प्र.** - प्रस्तावोद्गीथप्रतिहारभक्तित्रयविषयकोपासनानि विधातुम् आख्यायिकामाह - **मटची.....उवास ।** चक्रस्य सुतः उषस्तिनामा कश्चन ऋषिः **मटचीहतेषु** - अश्मवृष्टिकृतदुर्भिक्षदूषितेषु कुरुदेशेषु **आटक्या** - अनुपजातपयोधरादिव्यञ्जनया भार्यया सह **इभ्यानां** - गजारोहाणां ग्रामे **प्रद्राणकः** - अनशनेन कुत्सितां गतिमापन्नः ब्रह्मविद्यायाः निष्पत्तये प्राणानामनवसादं काङ्क्षन् **उवास ।** 'द्रा कुत्सायां गतौ' (धा.पा. १०५४) इति हि धातुः । चक्रस्य गोत्रापत्यम् इत्यर्थे अश्वादित्वात् फञि चाक्रायण इति रूपम् ।

**आ.भा.** - प्रस्तावोद्गीथप्रतिहारभक्तित्रयविषयकोपासनानि दर्शयितुं सुखावबोधार्थम् आख्यायिकामुखेन प्राह - **मटचीत्यादि । चाक्रायण उषस्तिः** - चक्रस्य अपत्यं नामतः उषस्ति ऋषिः **मटचीहतेषु कुरुषु** - अश्मनावृष्ट्यादिप्रयुक्तदुर्भिक्षदूषितेषु कुरुसस्येषु । **तत्र मटचिः** - दुर्भिक्षम् अशनिर्वा । **आटिक्या** - अटनम् अर्हतीति आटिकी तया अनुपजातस्त्रीव्यञ्जनया **जायया** पत्न्यासह । **इभ्यग्रामे** - तत्र इभो हस्ती तम् अर्हतीति इभ्यः ईश्वरो गजारोहो वा तेषां ग्रामे अनशनेन **प्रद्राणकः** - कुत्सितां गतिमापन्नः ब्रह्मविद्यायाः निष्पत्यर्थं प्राणानाम् अनवसादमिच्छन् **उवास** - कस्यचित् गृहम् आश्रित्य उषितवान् इति ।।

**सु.** - प्रसङ्गात् प्रस्तावाद्युपासनं वक्तुम् उपक्रमते । आख्यायिका सुखप्रतिपत्तये । **मटची** - अश्मवृष्टिः, तया **हतेषु** - विनष्टसस्येषु इति यावत् । **कुरुषु** - कुरुसंज्ञकेषु

---

1. आटिक्या इति आनन्दभाष्यसम्मतः पाठः । 2. कुद्राणक इति सुबोधिनीसम्मतः पाठः ।

देशेषु, **आटक्या जायया सह** - आटकी - अनुपजातपयोधरादिस्त्रीव्यञ्जना, उषस्तिर्नामतः, चाक्रायणः चक्रस्यापत्यम्, **इभ्याः** - हास्तिपकाः तेषां **ग्रामे कुद्राणकः** - कुत्सितां दशामापन्न उवास ।।

[उषस्तेः भिक्षायाचनम्]

**स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे । तँ होवाच - नेतोऽन्ये विद्यन्ते, यच्चये मे इमे उपनिहिता इति ।। २ ।।**

**प्र. - स.... बिभिक्षे । सः** - अन्नार्थी अटन् **कुल्माषान्** - कुत्सितान् माषान् खादन्तं इभ्यम् याचितवान्[१] । 'कुल्माषादञ्' (पा.सू. ५-२-८३) इति निर्देशात् कुत्सितमाषार्थे कुल्माषशब्दस्य साधुत्वम् । **तं......निहिताः** इति । **इतः** - मया भक्ष्यमाणात् उच्छिष्टराशेः कुल्माषा **अन्ये न विद्यन्ते । यत्** - यस्माद्धेतोः **इमे** - कुल्माषाः **मे चये । मे** - मया भक्ष्यमाणे **चये** - उच्छिष्टराशौ **उपनिहिताः** - प्रक्षिप्ताः । अतः किं करोमि इति उषस्तिम् इभ्य उवाच इत्यर्थः ।।

**आ.भा. - सः** - अन्नार्थी उषस्तिः अटन् **कुल्माषान्** - कुत्सितमाषान् **खादन्तं** कमपि इभ्यं **बिभिक्षे** - याचितवान् । **तं होवा च** इति । **इतः** - मया भक्ष्यमाणात् उच्छिष्टराशेः **अन्ये** - कुल्माषा न मत्समीपे **विद्यन्ते । यत्** - यस्मात् कारणात् **इमे** - कुल्माषाः **मे चये** कुत्सितमाषा मया भक्ष्यमाणे **चये** - उच्छिष्टराशौ **उपनिहिताः** - प्रक्षिप्ताः एव वर्तन्ते । अतः कथम् उच्छिष्टं भवते दास्यामि इति उषस्तिम् इभ्यः उवाच इति ।।

**सु. - सः** - अनशनपीडितः अन्नार्थम् अटन् इभ्यम् एकं **कुल्माषान्** - कुत्सितान् माषान् खादन्तं **बिभिक्षे** । तम् उषस्तिम् इभ्यः **उवाच । इतो** मया भक्ष्यमाणादन्ये **न विद्यन्ते, यत्** - यस्मात् ये मे स्युः, ते **चये** अस्मिन् राशौ **उपनिहिता** इमे एव, उच्छिष्टमेतत्, हन्त किं कुर्याम् इति भावः ।।

---

१. एतेन दारिद्र्यावस्थामापन्नस्य ब्रह्मज्ञानिनः आपदि अनन्नभक्षणं न पापाय भवति इति व्यज्यते ।

**एतेषां मे देहीति होवाच, तानस्मै प्रददौ, हन्तानुपानमित्युच्छिष्टं वै मे पीतँ स्यादिति होवाच ।। ३ ।।**

**प्र. - एतेषां......होवाच** । उच्छिष्टानामपि मध्ये **मे** - मह्यमपि किञ्चित् देहीति इभ्यम् ऋषिः प्रार्थितवान् इत्यर्थः । **तानस्मै प्रददौ** । **तान्** - कुल्माषान् उषस्तये इभ्यः दत्तवान् इत्यर्थः । **हन्त......उवाच** । अथ समीपस्थम् उदकं गृहीत्वा **गृहाणानुपानमिति** इभ्येनोक्तः स ऋषिः [1]तदुदकपाने[1] उच्छिष्टोदकपानं मे **स्यादिति** प्रत्युवाच इत्यर्थः ।।

**आ.भा. - एतेषाम्** इत्यादि । यद्यपि उच्छिष्टाः इमे माषाः तथापि मह्यं किञ्चित् **देहीति** इभ्यमुषस्तिः याचितवान् इत्यर्थः । **तानस्मै प्रददौ तान्** - स्वेन भुज्यमानान् कुल्माषान् ऋषये इभ्यः प्रदत्तवान् इति । **हन्ते**त्यादि । ततः स्वसमीपवर्तिजलमादाय अत्यादरात् स्वीक्रियतां जलम् इति इभ्येन उक्तः ऋषिः तादृशजलपानकरणे उच्छिष्टभोजनजनितदोषो मे स्यादिति उषस्तिः उक्तवान् ।।

**सु. - एतेषाम्** इति निर्धारणे षष्ठी । किञ्चिदिति शेषः । यानि सन्ति एतेषामेव मध्ये किञ्चित् **मे** - मह्यं **देहि** । कर्मणः सम्बन्धसामान्येन विवक्षा वा । एतानेव देहीत्यर्थः । **इति होवाच** प्राणसंशयमापन्नः । एवमुक्त इभ्यः तानेव कुल्माषान् अस्मै **प्रददौ** । प्रदाय कुल्माषान् सानुतापमाह - **हन्तानुपानमिति** । **हन्त** इति अनुकम्पायाम् । अस्तु इति शेषः । एवमुक्तः उषस्तिः उवाच - यदीदं पास्यामि मया **उच्छिष्टमेव पीतं स्यादिति** ।।

**न स्विदेतेऽप्युच्छिष्टा इति । न वा अजीविष्यमिमानखादन् इति होवाच, कामो मे उदपानमिति ।। ४ ।।**

**प्र. - न......होवाच** इत्यादि । किमेते इदानीं त्वया मत्तो गृहीताः कुल्माषा अनुच्छिष्टाः इति इभ्येन पर्यनुयुक्त ऋषिः कुल्माषाखादने स्वस्य जीवनहानिर्भवति । तावन्मात्रखादनेन धृतप्राणस्य स्वस्य उच्छिष्टोद**कपानं कामः** - कामकारितं निषिद्धं स्यात् इत्युवाच इत्यर्थः ।।

---
1. उदकपानेन - क ।

**आ.भा. - न स्विदेते** इत्यादि । किम् इदानीमेव मत्तः गृहीताः त्वया माषाः ते अनुच्छिष्टाः ? एवम् इभ्येन कथितो ऋषिः । भोःकुल्माषाभक्षणे मे जीवनहानिः स्यात् अतः, तावन्मात्रभक्षणेन न तादृशो दोषः उदके यथेच्छमन्यत्रापि प्राप्यते अतः तद् ग्रहणे दोषः स्यादेव अतः नो ग्रहिष्यामि इति ।।

**सु. -** अजानानो धर्ममर्यादाम् इभ्य आह - **एतेऽपि न किमुच्छिष्टाः,** ये त्वया कुल्माषाः गृहीताः इति । एवं पृष्ट उषस्तिः उवाच - **इमान् अखादन्नेव अजीविष्यम् ।** प्राणसंशयमापन्नेन प्राणधारणाय इदं गृहीतम् । उदपानं तु कामो मे स्यात् । केवलं कामायैव उदकपानं नतु प्राणरक्षणाय । यदनेन पीतेन उच्छिष्टदोषः प्रसजेत् इत्यर्थः । एतेन विदुषः सर्वान्नानुमतिः प्राणात्ययप्रसङ्गे[१] इति ज्ञाप्यते ।।

**स ह खादित्वाऽतिशेषान् जायाया आजहार । साऽग्र एव सुभिक्षा बभूव; तान् प्रतिगृह्य निदधौ ।। ५ ।।**

**प्र. - स.....आजहार । सः** - उषस्तिः तान् स्वयं किञ्चिद्भक्षयित्वा **अतिशिष्टान्** अवशिष्टान् जायायै दत्तवान् इत्यर्थः । **सा...... निदधौ । सा** - जाया **अग्रे** - प्रागेव **सुभिक्षा** - लब्धान्ना बभूव । तथापि स्त्रीस्वभावात् अनवज्ञाय तान् कुल्माषान् पत्युः हस्तात् प्रतिगृह्य निक्षिप्तवती ।।

**आ.भा. - स ह खादित्वा** इत्यादि । **सः -** ऋषिः स्वयं किञ्चिद्भक्षयित्वा **अतिशिष्टान्** - अवशिष्टान् कुल्माषान् जायायै दत्तवान् इति । **सा अग्रे** इत्यादि । **सा -** ऋषिजाया **अग्रे** - पत्या अन्नदानात् प्रागेव कुतश्चित् **सुभिक्षा** - लब्धान्ना बभूव । तथापि पतिदत्तमन्नं स्थापितवती ।।

**सु. - सः -** तान् कुल्माषान् किञ्चित् जग्ध्वा अवशिष्टान् जायायै **आजहार,** क्षुत्क्षामेति कारुण्यात् । **सा** तु कुल्माषानयनतः **प्रागेव सुभिक्षा बभूव ।** प्राणधारणोचितम् अन्नं भिक्षया लब्धवती इत्येतत् । अथापि **तानादरेण प्रतिगृह्य अन्तर्निदधौ ।** न हि प्राक्षिपत् । पत्यौ भक्त्या अनशनक्लेशेन वा ।।

---

१. *प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।।* इति हि स्मर्यते ।।

**स ह प्रातः संजिहान उवाच, यद्बतान्नस्य लभेमहि, लभेमहि धनमात्राँ ; राजाऽसौ यक्ष्यते, स मा सर्वैरार्त्विज्यैर्वृणीतेति ।। ६ ।।**

**प्र. - स ह......धनमात्राँ । स ह -** उषस्तिः प्रातः **संजिहानः** शयनं परित्यजन्नेव पत्न्यां शृण्वन्त्याम् इदम् उवाच । किं तत् ? यदन्नस्य स्तोकमपि लभेमहि तेन प्राणान् धृत्वा **धनमात्रां** - अल्पधनं लभेमहि इत्यर्थः । कथं धनमात्रा लभ्यत इत्यत्राह । **राजाऽसौ वृणीतेति** । राजाऽसौ नातिदूरे यजते, स मां दृष्ट्वा सर्वाणि आर्त्विज्यानि त्वया कारयितव्यानि इति मां [1]प्रार्थयेत[1] - इति उवाच इत्यर्थः ।।

**आ.भा. - स ह प्रातः** इत्यादि । ततः **सः** - उषस्तिः प्रातःकाले **संजिहानः** - शयनं परित्यजन्नेव पत्नीं श्रावयित्वा इदम् उवाच । किम् उक्तवान् तत्राह - **य**दित्यादि । यदि अन्नम् अल्पमपि लभेमहि तदा तेन प्राणरक्षां कृत्वा **धनमात्राँ** - अल्पधनं प्राप्स्याम् इति । केन प्रकारेण प्राप्स्यामि तत्राह - **राजासौ** इत्यादि । असौ राजा समीपे एव यज्ञं करोति सः - मां दृष्ट्वा यज्ञकरणाय अवश्यमेव प्रार्थयिष्यति इति उक्तवान् ।।

**सु. - स प्रातः संजिहानः** - शयनतलं परित्यजन्; शयनात् उत्तिष्ठन्नेव इदं वक्ष्यमाणम् उवाच - **अन्नस्य लभेमहि,** मात्राम् इत्यध्याहारः । धनमात्राम् इत्यतो विभज्य वा सम्बन्धः । अन्नस्य **मात्रां** - लेशम् । **यत्** - यदि **लभेमहि, लभेमहि धन**मात्रां - धनस्य लेशम् । केनोपायेन? राजाऽसौ नातिदूरे **यक्ष्यते, स मां** सन्निहितं **सर्वैरार्त्विज्यैः** - ऋत्विक्कर्मभिः । **वृणीत** । वरणे हेतुः आर्त्विज्यम् । यजमानस्य हि एतत्प्रयोजनम् । हन्तेति खेदे ।।

**तं जायोवाच, हन्त पते इम एव कुल्माषा इति । तान् खादित्वाऽमुं यज्ञं विततमेयाय ।। ७ ।।**

**प्र. - तं...... कुल्माषा इति । हे पते, ;** ये मद्धस्तनिक्षिप्ताः कुल्माषाः, ते **इम एव,** एतान् गृहाणेति जाया प्रत्युक्तवती इत्यर्थः । **तान्......विततमेयाय** । तानेव पर्युषितोच्छिष्टान् कुल्माषान् भक्षयित्वा **विततं** - विस्तीर्णं यज्ञं गतवान् इत्यर्थः ।।

---

1. प्रार्थयते - अ,आ ।

**आ.भा. - तं जायोवाच** इत्यादि । **हे पते !** मम हस्ते समर्पिता माषा विद्यन्ते तान् गृहाण इति उवाच पत्नी । ततः उषस्तिः तान् माषान् भक्षयित्वा **विततं** - विस्तीर्णं राज्ञो यज्ञं गतवान् इति ।।

**सु. - तमेवम्** उक्तवन्तं **जायोवाच - हन्त पते ! इमे एव कुल्माषाः** सन्निहिता एव कुल्माषा भवदाहृता इति । **हन्तेति** हर्षे । हर्षश्च धनलाभप्रसङ्गनिबन्धनः । स **तान्खादित्वा विततं** - विस्तीर्णं यज्ञं **एयाय** ।।

**तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश । स ह प्रस्तोतारमुवाच ।। ८ ।।**

**प्र. - तत्र...... उपविवेश ।** आस्तुवन्ति अस्मिन् इति आस्तावः स्तोत्रस्थानम् । सदसि स्तोतुं प्रवृत्तानां उद्गातृ-प्रस्तोतृ-प्रतिहर्तॄणां समीपे उपविष्टवान् इत्यर्थः । **स ह प्रस्तोतारमुवाच । सः** - उषस्तिः प्रस्तोतारं प्रति इत्थम् उवाच इत्यर्थः ।।

**आ.भा. - तत्र** इत्यादि । **तत्र** - यज्ञे **आस्तावे** - आस्तुवन्ति अस्मिन्निति आस्तावः स्तोत्रस्थानम् सदसि स्तुतिं कर्तुं प्रवृत्तानाम् उद्गातृ-प्रस्तोतृ-प्रतिहर्तॄणां **उप** - समीपे **उपविवेश** - उपविष्टवान् इत्यर्थः । **स ह प्रस्तोतारम्** इत्यादि । **स** - उषस्तिः प्रस्तोतारं वक्ष्यमाणम् **उवाच** - उक्तवान् इत्यर्थः । किमुक्तवान् तत्राह ।।

**सु. - तत्र** - यज्ञे **आस्तावे स्तोष्यमाणान्** - यत्र स्थित्वा स्तोत्रम् उद्गातृप्रभृतिभिः क्रियते तत्स्थानमास्तावः, तस्मिन्स्थित्वा स्तोतुं प्रवृत्तान्, **उद्गातॄन्** - उद्गाने कर्तृभूतान् उद्गातृप्रतिहर्तृप्रस्तोतृन्, **उप** - समीपे, **उपविवेश** - उपविष्टवान् । उपविश्य **स प्रस्तोतारमिदमुवाच** ।।

**प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यतीति ।। ९ ।।**

**प्र.** - उक्तिमेवाह - **प्रस्तोतर्या.....विपतिष्यतीति । हे प्रस्तोतः; प्रस्तावमन्वायत्ता** - प्रस्तावभक्तौ अध्यस्य या देवता उपास्या, ताम् अविदित्वा यदि विदुषो मम समीपे प्रस्तोष्यसि मूर्धा ते विपतिष्यति इत्यर्थः । 'यद्यपि तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न

वेद' (छां.उ. १-१-१०) इति अविदुषोऽपि आर्त्विज्याधिकारोऽस्ति । तथापि विद्वत्सन्निधौ अविदुषः कर्माधिकारो नास्तीति भावः ।।

**आ.भा. - प्रस्तोतः** इत्यादि । **हे** प्रस्तोतः ! **प्रस्तावमन्वायत्ता ।** प्रस्तावमधिकृत्य **या देवता** उपास्यतया समुपदिष्टा **तां** - देवतां यदि मम देवतास्वरूपविज्ञानवतः समीपे अविदित्त्वा **प्रस्तोष्यसि** - स्तुतिं करिष्यसि तदा **ते मूर्धा** - शिरः पतिष्यति । यद्यपि 'तेनोभौ कुरुतः' इत्यादिश्रुत्या अविदुषोऽपि स्तुतिकरणमनुज्ञातं तथापि विद्वत्समीपे अविदुषो मूर्धापातः स्यादेवेति भावः ।।

**सु.** - स्वस्वकर्मसु व्यापृतान् अभिमुखीकर्तुं **प्रस्तोत**रित्यादि सम्बोधनम् । हे **प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता** - प्रस्तावभक्तिम् अभिसम्बद्धा, **तां** - देवताम् अजानंश्चेज्ज्ञानतो मम **प्रस्तोष्यसि मूर्धा ते विपतिष्यति ।** एतेन - अविदुषः सत्यपि आर्त्विज्ये अधिकारे विदुषः सन्निधौ तदनुज्ञां विना नाधिकारः इति व्यज्यते ।। ९ - १० ।।

**एवमेवोद्गातारमुवाच, उद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि, मूर्धा ते विपतिष्यतीति ।। १० ।।**

**।। इति दशमः खण्डः ।।**

**प्र. - एवमेव ......उवाच** इत्यादि । पूर्ववदर्थः ।।

**आ.भा. - एवमेवोद्गातारम्** इत्यादि । पूर्ववदेवार्थो ज्ञातव्यः ।।

**एवमेव प्रतिहर्तारमुवाच, प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यसि, मूर्द्धा ते विपतिष्यतीति । ते ह समारतास्तूष्णीमासाञ्चक्रिरे ।। ११ ।।**

**प्र. - एवमेव......उवाच** इत्यादि । स्पष्टोऽर्थः । **ते ह......चक्रिरे । ते ह** - प्रस्तोत्रादयः **समारताः** - उपरतास्सन्तः मूर्धपातभयात् तूष्णीमेव स्थिताः इत्यर्थः ।।

**आ.भा. - एवमेव प्रतिहर्तारम्** इत्यादि । पूर्ववदेवार्थः । **ते ह** इत्यादि । **ते ह** - प्रस्तोतृप्रभृतयः उषस्तिवचनं श्रुत्वा देवतास्वरूपाः विद्वांसः मूर्धापातभयात् । **समारताः** -

उपरताः स्तुत्यादिकर्म परित्यज्य तूष्णीमेव **आसाञ्चक्रिरे** - स्थिताः कर्मविरताः अभवन् इत्यर्थः ।।

**सु. - ते** त्रयोऽपि स्वस्वकर्मभ्यः **समारताः** - उपरताः **तूष्णीमासाञ्चक्रिरे** - निर्व्यापाराः अभूवन् । निर्व्यापारता च शुश्रूषोर्लक्षणम् । एतेन देवताविशेषं ततो ज्ञातुकामाः अभूवन्निति व्यज्यते ।।

**।। इति दशमखण्डभाष्यम् ।।**

## एकादशः खण्डः

**[प्रस्तावप्रतिहारयोः उपासना]**

**अथ हैनं यजमान उवाच, भगवन्तं वा अहं विविदिषाणीति । उषस्तिरस्मि चाक्रायण इति होवाच ।। १ ।।**

**प्र. - अथ......विविदिषाणीति** । को भवानिति भवन्तं ज्ञातुम् इच्छामि इति उषस्तिं यजमानः उक्तवान् इत्यर्थः । **उषस्तिरस्मि......उवाच** । स ऋषिः इति शेषः । स्पष्टोऽर्थः ।।

**आ.भा. - अथ हैनमित्यादि** । आगमनानन्तरं राजोवाच हे भगवन् । को भवान् विद्यते इति ज्ञातुम् अहम् इच्छामि इति समुदितार्थः । अहम् उषस्तिः अस्मीति ऋषिः उवाच ।।

**सु.** - अथ निर्व्यापारेषु तेषु यजमान उपसृत्य भगवन्तम् अहं **विविदिषाणि** - वेत्तुम् इच्छामि इति उवाच । उषस्तिरस्मि चाक्रायण इति नाम्ना अभिजन्मना च निरूपणात् स्वप्रसिद्धिः व्यज्यते ।।

**स होवाच, भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम् ; भगवतो वा अहम[1]विद्या[1]ऽन्यानवृषि ।। २ ।।**

**प्र. - स......अवृषि** । तम् ऋषिं यजमानः उवाच । किमिति । **भगवन्तं** । सर्वगुणोपेतं श्रुत्वा सर्वाणि आर्त्विज्यानि भगवदधीनानि कर्तुं **पर्यैषिषम्** - भगवतोऽन्वेषणं

1. अवित्त्वा इति सुबोधिनीसम्मतः पाठः ।

कृतवान् अस्मि । भगवतः **अविद्या** - विदिः लाभः । न विदिः अविदिः 'इक् कृष्यादिभ्यः' (वा. २२३२) इति इक् । सा न भवति इति अविदिः । तया **अविद्या** - अलाभेन इमान् ऋत्विजः **अवृषि** - वृतवानस्मि इत्यर्थः ।।

**आ.भा. - स ह** - राजा उवाच हे विद्वन् ! भवन्तं सर्वगुणसम्पन्नं ब्राह्मणमुखात् श्रुत्वा सर्वाणि आर्त्विज्यानि भवदधीनं कर्तुं **पर्यैषिषम् -** भवतः एव अन्वेषणम् अहम् अकरवम्, अपि तु भवतः **अविद्या** - अलाभेन इमान् ब्राह्मणान् **अवृषि** - वृतवानस्मि ।।

**सु. - स होवाच** - पूज्यतमं भवन्तम् एभिः सर्वैः आर्त्विज्यैः निमित्तभूतैः, आर्त्विज्यार्थम् इति यावत्, **पर्यैषिषम्** - अन्विष्टवान् । भगवतः **अविद्या** - भगवन्तम् अलब्ध्वा अन्यान् इमान् **अवृषि** - वृतवानहम् ।।

**भगवाँस्त्वेव मे सर्वैरार्त्विज्यैः इति । तथेति ; अथ तर्हि एत एव समतिसृष्टाः स्तुवताम् ; यावत्त्वेभ्यो धनं दद्याः तावन्मम दद्याः इति । तथेति ह यजमान उवाच ।। ३ ।।**

**प्र. - भगवाँस्त्वेव......आर्त्विज्यैरिति** । इतः परमपि भगवानेव **सर्वैः आर्त्विज्यैः** - ऋत्विक्कर्मभिः वृतः इति उवाच इत्यर्थः । सर्वार्त्विज्यार्थं वृतः इति यावत् । **तथेति स्तुवताम्** इत्यादि । **अथ** उषस्तिः तथा इत्यभ्युपगम्य त्वया पूर्वं वृताः एते एव मया **समतिसृष्टाः** - सम्यक्प्रसन्नेन अनुज्ञाताः उपदिष्टदेवताः सन्तः **स्तुवतां -** स्तुवन्तु किन्तु एभ्यो यावद्धनं प्रयच्छसि तावन्मम दद्याः इति उक्तवान् इत्यर्थः । **तथेति ह यजमान उवाच** । स्पष्टोऽर्थः ।।

**आ.भा. - भगवांस्तु** । अतः परमपि भगवानेव **सर्वैरार्त्विज्यैः** - ऋत्विक्कर्मभिः परिवृतः इति प्रोक्तवान् **तथेति** - अथ एते ब्राह्मणाः मया **समतिसृष्टाः** - समनुज्ञाताः - देवतायाः स्तुतिं कुर्वन्तु किन्तु एभ्यो यावत् धनं दास्यति तावदेव धनं मह्यमपि देयं न ततो हीनम् अधिकं वा ततोऽहं ऋत्विक्कर्मकरिष्यामि इत्युक्ते ऋषौ तथा इति यजमानः प्रोवाचेति पिण्डितोऽर्थः ।।

**सु.** - तत् भगवानेव **सर्वैरार्त्विज्यैः** - सर्वार्त्विज्यार्थं मेऽस्तु, इति उवाचेति पूर्वेण सम्बन्धः । तथा इति उवाच राजा । अथ एते एव मया **समतिसृष्टाः** - समनुज्ञाताः स्तुवताम्, यावत्तु एभ्यो धनं दद्याः तावत् मे एकस्य देहीति क्षुत्क्षामो विद्यासम्पन्नः उषस्तिः उवाच । तथा इति यजमानः उवाच ।।

**अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्; कतमा सा देवतेति ।। ४ ।।**

**प्र. - अथ हैनं प्रस्तोतोपससाद** । उषस्तिवचनं श्रुत्वा प्रस्तोता विनयेन तत्समीपम् आगतवान् इत्यर्थः । **प्रस्तोतर्या अन्वायत्ता** इत्यादि । भगवान् मां प्रति प्रस्तोतर्या देवता इत्यादिना यां देवताम् **अवोचत्** - उक्तवान्, सा देवता का इति प्रस्तोता तम् ऋषिं पप्रच्छ इत्यर्थः ।।

**आ.भा. - अथ हैनं प्रस्तोतोपससाद** । उषस्तेः वचनं श्रुत्वा प्रीतः प्रस्तोता सविनयं ऋषिसमीपं गतवान् इत्यर्थः । **प्रस्तोतर्या** इत्यादि । हे भगवन् ! मा प्रति प्रस्तोतर्या देवताम् इत्यादिना यां देवताम् **अवोचत्** - कथितवान् सा देवता का इति प्रस्तोता उषस्तिं पृष्टवान् ।।

**सु.** - उषस्तियजमानयोः संवादानन्तरम् उषस्तिं प्रस्तोता जिज्ञासुः उपससाद - विनयेन उपस्थितवान् । उपगम्य च इदम् अपृच्छत् । भगवन् मां प्रति 'प्रस्तोतर्या देवता' इत्यादि यद्वचनम् अवोचत्, सा तत्प्रश्नवचनाभिप्रेता देवता का? इति । प्रस्तोतः इत्यादि विपतिष्यति इत्यन्तम् उषस्तिवचनानुवादः ।।

**[प्राण एव प्रस्तावदेवता]**

**प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ।। ५ ।।**

**प्र. - प्राण इति होवाच** । प्राण एव प्रस्तावमन्वायत्ता देवता इति उषस्तिः उवाच इत्यर्थः । अत्र प्राणयितृत्वगुणयोगात् प्राणशब्देन परमात्मा उच्यते । प्राणशब्दस्य मुख्यप्राणपरत्वं

व्यावर्तयति । **सर्वाणि......अन्वायत्ता** । प्राणमभिलक्ष्य **संविशन्ति** - समित्येकीकारे । ऐक्येन विशन्ति । लीयन्त इत्यर्थः । **प्राणमभ्युज्जिहते** - प्राणादेव उद्गच्छन्ति इत्यर्थः । सर्वभूतलयोत्पत्तिस्थानत्वेन वेदान्तेषु प्रसिद्धा प्राणरूपा देवता प्रस्तावभक्त्यनुगता प्रस्तावभक्तौ अध्यस्य उपास्येत्यर्थः । **तां......मयेति** । "ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यती"ति मदुक्त्यनन्तरमपि मदुक्तिम् अनादृत्य तद्देवताम् अनभिज्ञाय यदि प्रास्तोष्यः, तदा मूर्धा ते व्यपतिष्यदेव । अतः साधु कृतं त्वया मत्समीपमागत्य विनयेन पृच्छतेति भावः । अत्र मूर्धा ते व्यपतिष्यत् तथोक्तस्य मया इत्युक्त्या विदुषा एवम् उक्तस्य अविदुषः तदनादरेण कर्मकरणे प्रत्यवायः, न तुं विदुषा अनुमतस्यापि अविदुष इति भावः । व्यासार्यैस्तु मूर्धा ते व्यपतिष्येत् इत्यस्य "आत्मसत्ता न लभ्येत" इत्यर्थः इति आत्मसत्ताहानिपर्यन्तः प्रत्यवायो वर्णितः ।।

**आ.भा. - प्राण इति होवाच** इत्यादि । हे प्रस्तोतः ! प्रस्तावमन्वायत्ता प्राण एव सा इति ऋषिः उक्तवान् । अत्र खलु प्राणपदेन परमात्मा कथ्यते । अत एव प्राणपदस्य मुख्यप्राणपरत्वं वारयति - **सर्वाणि** इत्यादि । **अभिसंविशन्ति** - लीयन्ते इत्यर्थः । प्राणादेव समुत्पद्यन्ते । **सैषा देवता** - सर्वभूतलयोत्पत्तिस्थानतया वेदान्तप्रसिद्धा प्राणलक्षणा देवता **प्रस्तावमन्वायत्ता** । प्रस्तावभक्तौ अध्यस्य उपासनीया । **ताञ्चेदविद्वान्** इत्यादि । मत्कथनानन्तरमपि यदि ताम् अविद्वानेव प्रस्तोष्यसि तदा ते मूर्धा विपतिष्यति । अतः सम्यक्कृतं भवता । यद्विनयपूर्वकं तत्स्वरूपम् अपृच्छ इति ।।

**सु.** - एवं पृष्ट उषस्तिः प्रत्युवाच - **प्राण इति** । प्राणश्चायं सर्वप्राणनगुणयोगात्परः सर्वस्य अन्तरात्मा, अस्मिन्नेव च मुख्यः तद्योगः, श्रूयते हि अन्यत्र 'स उ प्राणस्य प्राणः' (केन.उ.१-२) इति । श्रूयते च 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ.आन.७-१) इति । न केवलं प्राणनहेतुः **सर्वाणि** इमानि लीयमानानि **प्राणम् अभिसंविशन्ति,** तथा **प्राणमिमभ्युज्जिहते** - प्राणात् आविर्भवन्ति इत्येतत् । एतेन ब्रह्मलक्षणतः प्रस्तावदेवता निरूपिता भवति । लक्ष्यते हि सृष्टिस्थितिलयैः ब्रह्म 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' (तै.उ.भृ.१-२) इति । **सैषा देवता प्रस्तावमन्वायत्ता** - अनुसम्बद्धा, तस्मिन् तद्देवतोपासनं कार्यमिति यावत् । एवं देवताम् उपदिश्य प्रस्तोतारम् अभिनन्दति, त्वमसि विनीतः - विनयेन चात्मा रक्षितः ; **ताम्** इमां देवतां **चेदविद्वान्** - अवगणय्य मां **प्रास्तोष्यः** - प्रस्तावमकरिष्यः, प्राक् मया तथोक्तस्य **ते मूर्धा व्यपतिष्यत्**-मूर्धपतनम् अनिष्टमात्रोपसम्पातलक्षणम् ।।

**अथ हैनमुद्गातोपससाद उद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् ; कतमा सा देवतेति ।। ६ ।।**

**प्र. - अथ हैनमुद्गातोपससाद** इत्यादि । पूर्ववदर्थः ।।

**आ.भा. - अथ हैनमुद्गाता** इत्यादि । पूर्ववदेवार्थः ।।

**सु. - अथ हैनम्** - उषस्तिम्, उद्गीथदेवताजिज्ञासया **उद्गातोपससाद -** विनयेन उपतस्थे, उपगत्य इदम् अपृच्छत् - भवान् मां प्रति 'उद्गातर्या देवता' इत्यादि यद्वचनम् अवोचत् सा देवता का ? इति । उद्गातरित्यादि विपतिष्यति इत्यन्तम् उषस्तिवचनानुवादः ।।

[आदित्यः उद्गीथदेवता]

**आदित्य इति होवाच, सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति । सैषा देवतोद्गीथमन्वायत्ता । तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ।। ७ ।।**

**प्र. - आदित्य इति होवाच** इति । उद्गीथेऽध्यस्योपास्यः आदित्य इत्यर्थः । **सर्वाणि......गायन्ति** इति । **उच्चैस्सन्तं -** उच्चैः स्थितं अधःस्थितानि भूतानि गायन्ति इत्यर्थः । प्रस्तावप्राणयोः प्रशब्दवत्त्वेन साम्यवदुद्गीथोच्चैः स्थितादित्ययोः उच्छब्दवत्त्वेन साम्यमिति भावः । शिष्टं पूर्ववत् ।।

**आ.भा. - आदित्यः** उद्गीथे अध्यस्योपास्यः आदित्य इत्यर्थः । **उच्चैः सन्तम्** इत्यादि । उच्चैः विद्यमानम् अधःस्थितानि सर्वाणि भूतानि गायन्ति इति, अन्यत्सर्वं पूर्ववदेव ।।

**सु.** - एवं पृष्टः उषस्तिः प्रत्युवाच - **आदित्यः** इति । आदित्यश्चायं प्रसिद्धः । सर्वाणि इमानि भूतानि मानुषलोके **उच्चैः सन्तं -** उपरिवर्तमानम् एनम् आदित्यं **गायन्ति -** स्तुवन्ति आलोकतो लब्धनयनाः । योऽयम् उच्चैःस्थितो गीयमानः आदित्यः सैषा देवता **उद्गीथमन्वायत्ता -** उद्गीथमनुसम्बद्धा, तस्मिंस्तद्देवतादृष्टिःकार्या इति यावत् । उद्गीयते

उद्गीथः, आदित्यश्च उच्चैःस्थितो गीयते, तदेवं सामान्यात् तस्मिंस्तद्दृष्टिरिति भावः । एवं देवताम् उपदिश्य उद्गातारम् अभिनन्दति - तां चेत् इत्यादिना । व्यक्तम् अन्यत् ।।

**अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ।। ८ ।।**

**प्र. - अथ हैनं प्रतिहर्तोपससाद** इत्यादि । पूर्ववत् ।।

**आ.भा. - अथ हैनम्** इत्यादि । पूर्ववदेवार्थः ।।

**सु.** - व्यक्तम् ।।

**[प्रतिहारदेवता अन्नम्]**

**अन्नमिति होवाच, सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति । सैषा देवता प्रतिहारमन्वायत्ता । तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति । तथोक्तस्य मयेति ।। ९ ।।**

**प्र. - अन्नमिति होवाच।** प्रतिहारभक्तौ अन्नमध्यस्य उपास्यम् इत्यर्थः । **सर्वाणि जीवन्ति** इति । **प्रतिहरमाणानि -** भक्षयन्ति इत्यर्थः । सन्ति इति शेषः । अत्र **प्रतिहरमाणानि** इति प्रतिशब्दवत्त्वेन अन्नप्रतिहारयोः साम्यात् प्रतिहारे अन्नाभिमानिदेवताध्यासः । ततश्च प्रस्तावोद्गीथप्रतिहारभक्तिषु क्रमेण प्राणादित्यान्नदृष्टिः कर्तव्या इत्यर्थः । **तथोक्तस्य मयेति तथोक्तस्य मयेति** इति द्विरुक्तिः विद्यासमाप्त्यर्था । शिष्टं पूर्ववत् ।।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणम् उपन्यस्यते - समन्वयाध्याये प्रथमपादे - प्राणस्य निखिलभूतजातप्रवृत्तिहेतुत्वसम्भवात् प्राणशब्देन मुख्यप्राणः एव अभिधीयताम् इति पूर्वपक्षे प्राप्ते - शिलाकाष्ठाद्यचेतनस्वरूपस्य, शुद्धस्य जीवस्वरूपस्य च, मुख्यप्राणाधीन[1]स्थितिकत्वाभावात्[1] प्रसिद्धवन्निर्दिष्टसकलचेतनोत्पत्तिलयहेतुत्वस्य परमात्मव्यतिरिक्ते असम्भवात् चेतनवाचिदेवताशब्दस्यापि अचेतने मुख्यप्राणे असम्भवाच्च परमात्मैव प्राणयितृत्वादियोगवशेन अभिधीयते इति । 'अत एव प्राणः' (ब्र.सू.१-१-२४) इति सूत्रेण सिद्धान्तितम् ।

[प्रतिहारदेवता अन्नम्]

**अन्नमिति होवाच, सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति । सैषा देवता प्रतिहारमन्वायत्ता । तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति । तथोक्तस्य मयेति ।। ९ ।।**

प्र. - **अन्नमिति होवाच।** प्रतिहारभक्तौ अन्नमध्यस्य उपास्यमित्यर्थः । **सर्वाणि जीवन्ति** इति । **प्रतिहरमाणानि -** भक्षयन्तीत्यर्थः । सन्तीति शेषः. । अत्र प्रतिहरमाणानीति प्रतिशब्दवत्त्वेन अन्नप्रतिहारयोः साम्यात् प्रतिहारे अन्नाभिमानिदेवताध्यासः । ततश्च प्रस्तावोद्गीथप्रतिहारभक्तिषु क्रमेण प्राणादित्यान्नदृष्टिः कर्तव्या इत्यर्थः । **तथोक्तस्य मयेति तथोक्तस्य मयेति** इति द्विरुक्तिर्विद्यासमाप्त्यर्था । शिष्टं पूर्ववत् ।।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते - समन्वयाध्याये प्रथमपादे - प्राणस्य निखिलभूतजातप्रवृत्तिहेतुत्वसम्भवात् प्राणशब्देन मुख्यप्राण एव अभिधीयताम् इति पूर्वपक्षे प्राप्ते - शिलाकाष्ठाद्यचेतनस्वरूपस्य, शुद्धस्य जीवस्वरूपस्य च, मुख्यप्राणाधीन[1]स्थितिकत्वाभावात्[1] प्रसिद्धवन्निर्दिष्टसकलचेतनोत्पत्तिलयहेतुत्वस्य परमात्मव्यतिरिक्ते असम्भवात् चेतनवाचिदेवताशब्दस्यापि अचेतने मुख्यप्राणे असम्भवाच्च परमात्मैव प्राणयितृत्वादियोगवशेन अभिधीयते इति । 'अत एव प्राणः' (ब्र.सू.१-१-२४) इति सूत्रेण सिद्धान्तितम् ।

ननु प्रस्तावोद्गीथप्रतिहारभक्त्यनुगतत्वेन देवतात्वेन च निर्दिष्टेषु प्राणादित्यान्नेषु प्राणस्यैव परमात्मत्वम् आदित्यान्नयोस्तु न तथात्वम् इत्यत्र किं विनिगमकम् । चेतनवाचिदेवताशब्दः त्रिष्वपि समानः । प्राणवाक्यशेषे प्रसिद्धप्राणासम्भावितासंकुचितसर्व भूतसंवेशनोद्गमनाधारत्वश्रवणवत् आदित्यान्नवाक्यशेषयोरपि असंकुचित- सर्वभूतगेयत्व - सर्वभूतोपजीव्यत्वयोः प्रसिद्धादित्यान्नासम्भावितयोः श्रवणाविशेषात् । यदि च आदित्यवाक्ये सर्वभूतशब्दः आदित्यगानयोग्यचेतनविशेषपरतया अन्नवाक्यशेषे अन्नोपजीवनयोग्य - चेतनविशेषपरतया च संकोच्यते । देवताशब्दश्च 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (ब्र.सू.२-१-५) इति सूत्रोक्तन्यायेन अभिमानिदेवतापरतया योज्यते । तर्हि [2]प्राणेऽपि[2] तथाऽस्तु विशेषाभावात् इति चेत् -

---

1. स्थितित्वासम्भवात् - क । 2. प्राणोऽपि - क ।

उच्यते - प्राणशब्दस्य 'प्राणस्य प्राणं' (बृ.उ.६-४-१८) 'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्' (क.उ.६-२) इत्यादिषु परमात्मन्यपि निरूढत्वात् । 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्यशेषस्वारस्याच्च परमात्मपरत्वमाश्रितम् । अन्नादित्यशब्दयोः अतथात्वात् चेतनवाचिदेवताशब्दस्य केवलादित्यमण्डलान्नयोः अभावात् तदभिमानिदेवतापरत्वम् । अन्नाभिमानिदेवतायाश्च [1]भूतभक्ष्यत्वं[1] तदधिष्ठेयात् न अभेदारोपेण उपपद्यते । 'सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैस्सन्तं गायन्तीति' प्रतिपादितं सर्वभूतगेयत्वं परमात्मनोऽपि न [2]सम्भवति[2] । भूतशब्दो हि प्राणिनिकाये महाभूतेषु च रूढः । महाभूतस्य गातृत्वप्रसक्तेरेवाभावात् प्राणिनिकायपरत्वं वक्तव्यम् । तदपि न सम्भवति । न हि सर्वेऽपि प्राणिनः परमात्मानं गायन्ति ; स्थावरेषु पश्वादिषु चाभावात् । तस्मात् गानयोग्यप्राणिविशेषपरत्वेन संकोचः परमात्मपरत्वेऽपि आवश्यक इति आदित्य शब्दस्य लोकव्युत्पत्तिविरुद्धं परमात्मपरत्वं नाश्रयणीयम् । एवमन्नवाक्यशेषेऽपि 'प्रतिहरमाणानि' इति भक्ष्यमाणत्वं न परमात्मनि मुख्यम् । अतः आदित्यान्नशब्दयोः ब्रह्मपरत्वाभावेऽपि प्राणशब्दस्य ब्रह्मपरत्वं सिद्धमिति द्रष्टव्यम् । प्रकृतमनुसरामः ।।

**आ.भा. - अन्नम्** इति । अन्नम् अध्यस्य उपास्यमित्यर्थः । **प्रतिहरमाणानि -** भक्ष्यन्तीत्यर्थः । अन्यत्सर्वं पूर्ववत् ।।

**सु. -** एवं पृष्ट उषस्तिः प्रत्युवाच - **अन्नम्** इति । तत्र निमित्तमाह - **सर्वाणि ह वा इमानि भूतानि** - प्राणिमात्राणि अन्नमेव **प्रतिहरमाणानि -** प्रत्याहरन्ति एतदाहरणेन जीवन्ति । तदेवं बुभुक्षितैः सर्वैः प्राणिभिः प्रतिह्रियत इति प्रतिहारोऽयम् । **सैषा देवता -** अन्नरूपा **प्रतिहारमन्वायत्ता -** अनुसम्बद्धा । तस्मिन् अन्नदेवतादृष्टिः कार्या इति यावत् । निमित्तं च ज्ञापितम् । ननु कथमन्नं देवता ? अभिमानिव्यपदेशात् । अन्यत्स्पष्टम् । अवयवार्थतः पर्यवसानवृत्त्या वा प्राणशब्दस्येव आदित्यान्नशब्दयोरपि परमात्मपरता किं न स्यात्, स्यात् प्रसिद्धार्थत्यागे यदि निमित्तम्, प्राणशब्दस्य तु प्रसिद्धेऽर्थे वाक्यशेषो बाधकः, तेन हि ब्रह्मणो लिङ्गमाख्यायते, निरूपितं तु प्राक् ।।

**।। इति एकादशखण्डभाष्यम् ।।**

---

1. भूतोपजीव्यत्वम् - अ,आ । 2. सम्भवात् - अ,आ ।

## द्वादशः खण्डः

[श्वदृष्टोद्गीथस्तुत्यर्थं दाल्भ्यस्य आख्यायिका]

**अथातः शौव उद्गीथः । तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ।। १ ।।**

**प्र. -** अतीतखण्डे अन्नाप्राप्तिनिमित्ता उच्छिष्टपर्युषितभक्षणलक्षणा कष्टावस्था उक्ता । अनन्तरमन्नलाभाय श्वदृष्टः उद्गीथः प्रस्तूयते । **अथातः शौव उद्गीथः । शौवः -** श्वदृष्टः उद्गीथः । प्रस्तूयते इति शेषः । शौव इति टिलोपश्छान्दसः । **तद्ध......वव्राज ।** अत्र वाशब्दः चार्थे । बकग्लावनामद्वययुक्तो दल्भसुतो मित्रासुतश्च स्वाध्यायं कर्तुं **उद्वव्राज -** ग्रामात् निर्गतवान् इत्यर्थः ।।

**आ.भा. -** इतोऽव्यवहितपूर्वखण्डे अन्नाप्राप्तिनिमित्ता उच्छिष्टपर्युषितभक्षण-रूपाकष्टावस्था कथिता । इतः परम् अन्नलाभाय श्वदृष्ट उद्गीथः उद्गानं प्रस्तूयते **अथातः** इत्यादि । **अथातः शौव उद्गीथः । शौवः -** श्वदृष्टः उद्गीथः । **तद्ध** इत्यादि । **बको** दाल्भयः ग्लावो मैत्रैयः स्वाध्यायं कर्तुं **उद्वव्राज** - ग्रामाद्बहिः निर्गतवानिति ।।

**सु. -** उद्गीथोपासनप्रकरणेऽस्मिन् प्रस्तावप्रतिहारोपासनयोः प्रसङ्गात् प्राप्तिः, प्रकरणं तु उद्गीथस्यैवेत्युद्गीथस्य उपासनान्तरं प्रस्तूयते । तत्र ब्रह्मविदामपि अनशनक्लेशः प्राणाख्यायिकामुखेन सूचितः, स येन निरस्यते, तथाविधमुपासनं प्रस्तूयते - **अथ** इति । **अतः** वक्ष्यमाणवचनसन्दर्भेण, शौवः उद्गीथः, प्रस्तूयते इति शेषः, **शौवः** - शुना दृष्टः, कथं शुना दृष्टः ? श्रावयिष्यति श्रुतिः सुखप्रतिपत्तये आख्यायिका प्रस्तूयते - **तद्ध** इति । बको ग्लावश्च नामतः, वाशब्दः चार्थे, नामद्वययोगात् द्व्यामुष्यायणः । दल्भ्यस्यापत्यं मित्रायाश्चापत्यं स दाल्भ्यो मैत्रेयः । स्वाध्यायं कर्तुं विविक्तदेशमभिलषन् **उद्वव्राज -** ग्रामान्निर्जगाम बहिः, उद्वव्राज इत्येकवचनात् दाल्भ्यो बकोऽन्यो मैत्रेय ग्लावस्त्वन्य इति भ्रमो व्युदस्यते ।।

**तस्मै श्वा श्वेतः प्रादुर्बभूव । तमन्ये श्वान उपसमेत्योचुः अन्नं नो भगवानागायतु ; अशनायाम वौ इति ।। २ ।।**

**प्र. - तस्मै......बभूव ।** तत्स्वाध्यायेन तोषितः कश्चन ऋषिः श्वेतशुनकरूपतया प्रादुर्बभूव इत्यर्थः । **तं......ऊचुः । तं** - श्वेतं श्वानं क्षुल्लकाः श्वानः उपसमेत्य उक्तवन्तः । उक्तिमेवाह - **अन्नं** इति । वैशब्दोऽवधारणे । वयं **अशनायाम** - बुभुक्षिताः स्मः । अस्माकं, गानेनान्नं भगवान् सम्पादयतु इत्यूचुरित्यर्थः ।।

**आ.भा. - तस्मै श्वा** इत्यादि । तस्य स्वाध्यायकरणेन सन्तुष्टा देवता ऋषिर्वा श्वेतशुनकरूपतया तदग्रे प्रादुर्बभूव । तं श्वेतं श्वानं तदन्येऽनेके श्वानः उपसमेत्य **ऊचुः** उक्तवन्तः वयं बुभुक्षिताः स्मः मदर्थं गानेन भगवान् अन्नं सम्पादयतु इति ते प्रोक्तवन्तः ।।

**सु. - तस्मै** - स्वाध्यायप्रवणाय । **प्रादुर्बभूव** - तमनुग्रहीतुं प्रादुर्बभूव इत्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा.सू.२-३-१४) इति चतुर्थी । कः प्रादुर्बभूव ? श्वा श्वेतः । तस्य स्वाध्यायेन सन्तुष्टा देवता तमनुग्रहीतुं शुनः रूपेण प्रादुर्बभूव इति यावत् । तमन्ये श्वानः **उपसमेत्य** - उपसङ्गत्य, ऊचुः । किमिति ? **भगवान् नः** - अस्मभ्यं अन्नम् **आगायतु** - आगानेन अन्नं सम्पादयतु, वयं **अशनायाम वै** - बुभुक्षिताः स्मः । इमा अपि देवताः एव ।।

**तान् होवाच, इहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ।। ३ ।।**

**प्र. - तान्......समीयातेति ।** श्वः प्रातःकाले अस्मिन्नेव देशे **मा** - मामुपगच्छतेति **तान्** - क्षुल्लकान् शुनः श्वेतः श्वा उवाच इत्यर्थः । **तद्ध......चकार ।** बकग्लावनामा ऋषिः तत्संवादं श्रुत्वा श्वेतश्वाद्यागमनं प्रतीक्ष्य स्थितवानित्यर्थः ।।

**आ.भा. - तान्** - क्षुल्लकान् शुनः प्रति स श्वेतः श्वा प्रोवाच । **इहैव** - अस्मिन् एव प्रदेशे प्रातःकाले भवन्तः **उपसमीयाते** - उपागच्छत । **तद्ध** इत्यादि । ततः बकदाल्भ्यनामको ऋषिस्तत्संवादं श्रुत्वा श्वेतशुनामागमनं प्रतीक्ष्य स्थितवानिति ।।

**सु. - तान्** - बुभुक्षितान् अन्नम् आकाङ्क्षमाणान् श्वेतः श्वा उवाच । **इहैव मां प्रातः उपसमीयात** - उपसङ्गच्छत । छान्दसप्रयोगः । **प्रातरुपसमीयातेति** -

प्रातःकालप्रतीक्षाविधानं यस्य आगानेनान्नं सम्पाद्यं तस्य सवितुः देवस्याभिमुख्यसमुचितं कालमपेक्ष्य, प्रातःकाले ह्यादित्यस्य सुखोपसेव्यता । उदयसमकालं स्तुतिर्हि प्रीणनाय । तमिमं शुनां संवादम् उपश्रुत्य बकः, तत् - प्रातः पुनस्तत्र तेषां सङ्गमनम्, **प्रतिपालयाञ्चकार** - प्रतीक्षितवान् । अनेन प्रतीक्षणेनास्यापि बुभुक्षोपशमनोपायाधिगमे त्वरा सूच्यते । अध्ययनपरायणता चानेनैव निमित्तेनेति विज्ञायते, यदि इदमनाकाङ्क्षितम्, अध्ययनप्रीताभिः देवताभिः श्ववेषमाश्रिताभिरन्नलाभोपायः किमर्थं प्रस्तूयेत ।।

**ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सँरब्धाः सर्पन्तीत्येवमाससृपुः तेह समुपविश्य हिञ्चक्रुः ।। ४ ।।**

**प्र. - ते......ससृषु । ते -** श्वेतश्वादयः तत्रैव प्रातरागत्य, बहिष्पवमानेन स्त्रोत्रेण स्तोष्यमाणाः उद्गातृपुरुषाः अन्योन्यस्पृष्टा गच्छन्तीत्येतद्यथा, तथैव अन्योन्यस्य पुच्छं [1]मुखेन[1] गृहीत्वा **आससृपुः -** उपसर्पणं कृतवन्तः । **ते......ह हिञ्चक्रुः ।** अथ ते, उपविश्य **हिञ्चक्रुः -** हिङ्कारं कृतवन्तः इत्यर्थः ।।

**आ.भा. - ते -** श्वेतश्वादयः तत्रैव प्रातःकाले समागत्य **बहिष्पवमानेन** स्तोत्रेण **स्तोष्यमाणाः -** स्तुतिं कुर्वाणा उद्गातृपुरुषाः **सँरब्धाः -** संलग्नाः अन्योन्यसंस्पृष्टाः यथा तथैव ते अन्योन्यस्य पुच्छं मुखेन संगृह्य **आससृपुः -** उपसर्पणं परिभ्रमणं कृतवन्तः ततस्ते एवं संसृप्य समुपविश्य **हिञ्चक्रुः -** हिंकारं कृतवन्तः इति ।।

**सु. - ते -** हि श्वानः परेद्युः तत्रैव समेत्य **बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः -** स्तोत्रं करिष्यन्त उद्गातारः **संरब्धाः -** मिथः संलग्नाः **सर्पन्ति -** गच्छन्ति, इतीदं यथा, एवमन्योन्यं **संरब्धाः -** अन्यस्य पुच्छम् अन्यः मुखेन गृहीत्वा, **आससृपुः -** उपससृपुः, भ्रमणमकुर्वन्निति यावत् । **अथ ते समुपविश्य हिञ्चक्रुः -** हिङ्कारम् अकुर्वन् ।।

**ओ३मदा३मों ३ पिबा ३ मों ३ देवो वरुणः प्रजापतिः सविता ३ ऽन्नमिहा२हरदन्नपते २ ऽन्नमिहाहरा २ हरो ३ मिति ।। ५ ।।**

**।। इति द्वादशः खण्डः ।।**

---

1. मुखे - क ।

**प्र.** - हिङ्कारमेवाह - **ओमदामों......आहरत्** । ओमिति गानोपक्रमे । **अदाम** - [1]भक्षयेम[1], पिबाम च । द्योतमानत्वात् **देवः** । व्रियमाणत्वात् **वरुणः**[१] । प्रजानां पालनात् - **प्रजापतिः** । एवम्भूतः सविता अन्नमाहरतु इत्यर्थः । **अन्नपते......ओमिति** । **अन्नपते** इति आदित्यस्य सम्बोधनम् । **आहराहर** इति द्विरुक्तिः प्रार्थनायाम् । इति गीतवन्तः इत्यर्थः । अन्नपत इति मन्त्रकरणकादित्याध्यासविशिष्टोद्गीथोपासनमन्नफलकमिति भावः ।।

**आ.भा.** - हिङ्कारस्वरूपमेव दर्शयति - **ओम्** इत्यादि । **ओमन्नं** वयम् **अदामः** - भक्षयामः, ओं जलं पिबामः । द्योतमानत्वात् **देवः, वरुणः** वर्षणात् , जगतः पालनात् **प्रजापतिः, सविता** - सर्वप्रसवितृत्वात् आदित्यः अन्नमाहरत् । **हे अन्नपते !** सवितः ! मदर्थम् अन्नमाहरतु भवान् **अन्नमाहर अन्नमाहरेति** ।।

**सु.** - ओङ्कारावृत्तिर्गानाय, **अदाम** - भक्षयेम आतृप्ति, पिबाम चाप्रशान्ति, **देवः** - द्योतनस्वभावः, **वरुणः** - वर्षणात्, सविता हि वृष्टौ निदानम्, व्रियमाणत्वाद्वा वरुणः, प्रजानां पतिः पालयति हि प्रजा रश्मिभिः सविता, एवम्भूतः सविता स हि सर्वस्यान्नस्य प्रसविता, काङ्क्षितस्य वा सर्वस्य, तदिह सवितृशब्दः गुणयोगात् प्रवर्तते, अन्नमिह अस्मभ्यम् **आहरत्** - आहरतु । हे **अन्नपते!** अन्नस्यास्य सर्वस्य स्वामिन् । अन्नमस्मभ्यमिह स्थितस्थाने **आहर** - उपहर ; आदरात् द्विरुक्तिः । इहेति निर्देशात् अन्नार्जननिमित्तदेशाटनक्लेशो माभूदिति व्यज्यते । इतिशब्दः प्रक्रान्तोपासनसमाप्तिद्योतकः । कथमस्य उद्गीथोपासने सम्बन्धः, सविता हि प्रार्थ्यते, स्यात्सवितुरुपासनमेतत् , उद्गीथकरणकत्वात्प्रार्थनायाः इदमुद्गीथोपासनमिष्यते । ओमित्यादिहिंङ्कारो हि प्रार्थनायां करणमिह उच्यते । अन्नपते इत्यादिमन्त्रकरणकप्रार्थनाकर्मीभूतादित्याध्यासविशिष्टोद्गीथः उपदिश्यते इति वा तथात्वम् ।।

**।। इति द्वादशखण्डभाष्यम् ।।**

## त्रयोदशः खण्डः

**अयं वाव लोको हाउकारो वायुर्हा इकारश्चन्द्रमा अथकार आत्मेह कारोऽग्निरीकारः ।। १ ।।**

---

१. वरुणः - 'यः स्थितः सर्वमावृत्य वरुणः स तु कथ्यते' इति निरुक्तिः ।

1. भक्षयाम - अ,आ ।

**प्र.** - सामावयवान्तर्गतस्तोभाक्षरविषयाणि उपासनान्तराण्युपदिश्यन्ते । **अयं......हाउकारः** । हाउ इत्येवंलक्षणो यः सामसु स्तोभः सः **अयं लोकः** - एतल्लोकत्वेनोपास्यः इत्यर्थः । एवमुत्तरत्रापि स्तोभशब्दोऽध्याहर्तव्यः । अयं स्तोभो रथन्तरसाम्नि प्रसिद्धः । **वायुर्हा इकारः हा इ** - इति स्तोभः वामदेव्यसाम्नि प्रसिद्धः । एवमग्रेऽपि । शिष्टं स्पष्टम् ।।

**आ.भा.** - सम्प्रति सामावयवान्तर्गतस्तोभाक्षरविषयाणि उपासनान्तराणि प्रदर्श्यन्ते - **अयम्** इत्यादि । **हाउ** इत्याकारको यः सामसु स्तोभः सः अयं लोकः एतल्लोकत्वेन उपास्यः । स च स्तोभः रथन्तरे साम्नि प्रसिद्धः । **वायुर्हाइकारः** अयं च स्तोभः वामदेव्ये साम्नि प्रसिद्धः **चन्द्रमा अथकारः** - चन्द्रदृष्ट्या अथकारमुपासीत इत्यर्थः । **आत्मा इहकारः** - इहेति स्तोभःप्रत्यक्षो ह्यात्मा । अग्निरीकारः ।।

**सु.** - अनन्तरखण्डे स्तोभाक्षरविषयाणि उपासनानि उपदिश्यन्ते । अर्थविधुराणि गीतिसिद्धिमात्रफलकानि कानिचिदक्षराणि साम्नि विनियुज्यमानानि स्तोभाक्षराणि परिभाष्यन्ते । एषां च सामावयवत्वाविशेषादेतदुपासनस्य सामावयवोपासनप्रकरणे अस्मिन्नस्ति प्रसङ्गः । **हा उकारः** - रथन्तरे साम्नि हाउ इत्युच्चार्यमाणः स्तोभाक्षरविशेषः, सोऽयं **अयं वाव लोकः** - पृथिव्येव, पृथिवीदृष्टिः तस्मिन्कार्या इति यावत् । **हाइकारः** - वामदेव्ये सामनि प्रसिद्धः, **हाइ इति** स्तोभाक्षरविशेषः वायुरेव, वायुदृष्टिस्तस्मिन् कार्या इति यावत् । **अथकारः** - अथेति प्रसिद्धः स्तोभः चन्द्रमाः । इहेति प्रसिद्धस्तोभः आत्मा । **ई** इति प्रसिद्धस्तोभः अग्निः ।।

**आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइकारः प्रजापतिहिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट् ।। २ ।।**

**प्र.** - **आदित्य ऊकारः** इत्यादि । **निहव एकारः** । **निहवः** - आह्वानम् इत्यर्थः । 'ह्वस्सम्प्रसारणं च न्यभ्युपविषु' (पा.सू.३-३-७२) इति भावे ह्वेङः अप्सम्प्रसारणयोः निहव इति रूपम् । **प्राणः स्वरः** - स्वर इति स्तोभः प्राण इत्यर्थः । **अन्नं या** । या इति स्तोभाः अन्नमित्यर्थः । **वाग्विराट्** । वागिति स्तोभो विराट् अन्नमित्यर्थः । विराट्पुरुषो वा ।।

**आ.भा. -** उकारश्चायं स्तोभः आदित्यः **निहव एकारः । निहवः -** आह्वानम् एकारः स्तोभः **विश्वेदेवाः औहोयिकारः -** वैश्वदेव्ये साम्नि अस्य स्तोभस्य दर्शनात् **प्रजापतिः हिङ्कारः -** प्राणः स्वर इति स्तोभः **या -** या इति स्तोभः अन्नम् । अन्नेन हीदं याति अतः तत्सामान्यात् वागिति स्तोभो विराडन्नम् । देवताविशेषो वा वैराजे साम्नि स्तोभदर्शनात् ।।

**सु. -** ऊकारस्तोभ आदित्यः । एकारस्तोभाः निवहः । औहोइकारस्ताभः विश्वेदेवाः । हिङ्कारस्तोभः प्रजापतिः । स्वर इति स्तोभः प्राणः । या इति स्तोभः अन्नं, प्रसिद्धमन्नं देवताविशेषो वा । वागिति स्तोभो विराट् ।।

**अनिरुक्तस्त्रयोदशस्तोभः सञ्चरो हुङ्कारः ।। ३ ।।**

**प्र. - अनिरुक्तः......हुङ्कारः ।** हाउकारादिभ्यो द्वादशभ्यः पूर्वोक्तेभ्यः अधिकः हुमिति त्रयोदशो यः स्तोभः, सः इदमिति निर्वक्तुमशक्यतया अनिरुक्तत्वात् **सञ्चरः -** डोलायितः - सन्देहरूप इत्यर्थः । ततश्च तत्र सञ्चरत्वदृष्टिः कार्या इत्यर्थः । ततश्च हाउकारादिषु त्रयोदशसु उक्तपृथिवीलोकादिदृष्टिः कर्तव्या इति स्थितम् ।।

**आ.भा. - अनिरुक्तः** इत्यादि । हाउकारादिभ्यो द्वादशभ्यः पूर्वोक्तस्तोभेभ्योऽधिकः हुमिति यः त्रयोदशस्तोभः सः अनिरुक्तः, इदमिति निर्वक्तुमशक्यत्वात् सञ्चरः सन्देहरूपः, तस्मात्कारणात् तत्र हुमितिस्तोभे सञ्चरत्वदृष्टिः कर्तया इति । एवं हाउकारादि त्रयोदशस्तोभेषु पूर्वोक्तपृथिवीलोकादिदृष्टिः करणीया इति ।।

**सु. -** उक्ताः द्वादशस्तोऽभाः, तेभ्योऽयं त्रयोदशस्तोभो हुङ्कारः, सोऽयमनिरुक्तः सञ्चरः । इदमित्थमिति निरुच्यते इति निरुक्तः कार्यवर्गः, ततोऽन्यः अनिरुक्तः कारणम् । कारणमेव तत्र तत्र कार्यात्मना सम्यक् स्फुटं चरतीति सञ्चर उच्यते । हुङ्कारे कार्यात्मना सञ्चरतः कारणस्य दृष्टिः कार्या इति यावत् ।।

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः; अन्नवानन्नादो भवति, य एतामेवं साम्नामुपनिषदं वेदोपनिषदं वेद इति ।। ४ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**।। इति प्रथमः प्रपाठकः समाप्तः ।।**

**प्र.** - तस्य फलमाह - **दुग्धे......भवति** । उक्तोऽर्थः । **यः......वेद** । सामावयव[1]स्तोभाक्षरोपासनां[1] यो वेद इत्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था ।।

**।। इति प्रथमप्रपाठकप्रकाशिका ।।**

**आ.भा.** - स्तोभाक्षराणामुपासनाफलं प्रदर्शयति । **दुग्धे** इत्यादि । अतिरोहितार्थमिदम् । **य एताम्** इत्यादि । **यः एताम्** - सामावयवस्तोभाक्षराणामुपासनं **वेद** - जानाति सः यथोक्तफलभाग् भवति । द्विरुक्तिः अध्यायपरिसमाप्त्यर्था ।।

**।। इति प्रथमप्रपाठकआनन्दभाष्यम् ।।**

**सु.** - स्तोभाक्षरोपासनस्य फलमुच्यते । **साम्नां** - सामावयवभूतानां स्तोभाक्षराणाम्, एताम् उपनिषदं उक्तमुपासनम् एवंप्रकारेण यो वेद । **अस्मै** - स्तोभाक्षरोपासकाय वाक् दोहं दुग्धे, यो वाचो दोहः स्यात् । वाग्मिनः फलमस्य भवेदिति यावत् । अन्नवानन्नादश्च भवति । उपनिषदं वेद इत्यभ्यासः प्रक्रान्तविद्यासमाप्त्यर्थः ।।

**।। इति प्रथमप्रपाठक सुबोधिनी ।।**



---

1. स्तोभाक्षररहस्योपासनां - अ,आ ।

# द्वितीयः प्रपाठकः

## प्रथमः खण्डः

### [समस्तसामोपासनम्]

**ओम्, समस्तस्य खलु साम्न उपासनम्, साधु । यत् खलु साधु, तत् सामेत्याचक्षते । यदसाधु, तदसामेति ।। १ ।।**

**प्र.** - सामावयवोपासनं प्राङ्निर्दिश्य समस्तस्य साम्नः उपासनं प्रस्तौति **समस्तस्य......साधु । समस्तस्य** - पाञ्चविध्ययुक्तस्य साप्तविध्ययुक्तस्य वा समस्तस्य साम्नः साधुत्वेन उपासनं कार्यम् इत्यर्थः । तत्रोपपत्तिमाह - **यत्......असामेति ।** साध्वसाधुकर्मणी सामासामत्वेन व्यवहरन्ति इत्यर्थः ।।

**आ.भा.** - इतः पूर्वं सामावयवस्य उपासनं प्रदर्श्य संप्रति सम्पूर्णस्य साम्नः उपासनं प्रदर्श्यते - **समस्तस्य** इत्यादि । **समस्तस्य** - सर्वावयवसंयुतस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य च साम्नः उपासनं साधु, अत्र साधुशब्दः शोभनार्थकः यतः खलु लोकेऽपि दृश्यते यत् **साधु** - शोभनं **तत् साम इत्याचक्षते ।** लोकाः यत् खलु अशोभनं असामेत्याचक्षते लोकाः इति साध्वसाधुकर्मणी सामासामत्वेन व्यवहरन्ति इत्यर्थः ।।

**सु.** - निरूपितमनेन प्रथमेन प्रपाठकेन साम्नोऽवयवानाम् उपासनम् । ओमित्येतदक्षरमुद्गीथः साम्नो ह्यवयवः । तथा स्तोभाक्षराणि च । अथ समुदितस्य साम्नः उपासनभेदाः चिन्त्यन्ते द्वितीयेन । प्रसङ्गो वा सङ्गतिः, स्मार्यते ह्यवयवी अवयवेन, प्राप्तनिरूपणावसरश्च । समस्तस्य साम्नः सामेत्येतन्मात्रस्य साप्तभक्तिकस्य पाञ्चभक्तिकस्य साम्नः उपासनं साधु ।

ननु निन्दा आक्षिप्यते उपासनमसाध्विति । नैतत् । न ह्यत्र स्तूयते समस्तस्य साम्न उपासनं साध्विति, येनाक्षिप्येतापि निन्दा, किन्तु समस्तं साम साधु इत्युपासीतेति विधीयते । अत्रैव चास्य तात्पर्यम् । ननु किं तथोपासने निमित्तम्? इदम्, यत्खलु साधु भवति लोके तत्सामेत्याचक्षते जनाः, यदसाधु तदसामेति । तथा च शब्दैक्यात् तथोपासनं युक्तमिति यावत् ।।

**तदुताप्याहुः, साम्नैनमुपागादिति, साधुनैनमुपागादित्येव तदाहुः । असाम्नैनमुपागादिति, असाधुनैनमुपागादित्येव तदाहुः ।। २ ।।**

**प्र. - तदुताप्याहुः । तत् -** तस्मिन्वषये अन्यदप्याहुः । किं तदित्यत्राह - **साम्ना तदाहुः** इत्यादि । सामासामोपायाभ्यामागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतं व्यवहरन्ति इत्यर्थः ।।

**आ.भा. - तदुत** इत्यादि । **तत् -** तस्मिन् सामविषये अन्यदपि **आहुः -** कथयन्ति । किं तत् कथयन्ति तत्राह - **साम्नैनं......**इत्यादि । सामासामोपायाभ्यामागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतमित्येवं व्यवहरन्ति लोकाः इत्यर्थः ।।

**सु. -** उक्तं निमित्तयोगमनेकधा द्रढयति । उतेति विकल्पे समुच्चये वा । **तत् -** तस्मिन्नर्थे साध्वसाधुविवेचने इति यावत् । एवमप्याहुः - साम्नोपायेनैनमसौ उपागादित्यर्थे साधुनैनमुपागादित्यप्याहुः । साम्नोऽन्येन विपरीतेन उपायेन असौ एनमुपागादित्यर्थे असाधुना एनमुपागादित्यप्याहुः ।।

**अथोताप्याहुः, साम नो बतेति, यत्साधु भवति । साधु बतेत्येव तदाहुः असाम नो बतेति, यदसाधु भवति असाधु बतेत्येव तदाहुः ।। ३ ।।**

**प्र. - अथोताप्याहुः ।** अस्मिन्नेवार्थे जनाः अन्यदप्याहुः इत्यर्थः । **साम......भवति।** यत्कर्म साधु भवति, तत् **नः -** अस्माकं साम बतेति सानुमोदाः [1]प्रवदन्ति लोकाः[1] । **साधु.... तदाहुः ।** साम नो बत इत्युक्त एवंविषये, साधु बतेति लोकाः प्रवदन्ति । ततः सामसाधुशब्दौ एकत्र प्रयुज्यमानौ दृश्येते इत्यर्थः । एवमुत्तरत्रापि । अतः सामसाधुशब्दयोः एकार्थप्रयोगात् समस्तस्य साम्नः साधुत्वेन उपासनं कर्तव्यम् इत्यर्थः ।।

**आ.भा. - अथोताप्याहुः** इत्यादि । **अथ -** अस्मिन्नेव विषये अन्यदप्याहुः लोकाः **साधु बतेति** इत्यादि । यत्कार्यं साधु भवति तदस्माकं साम बतेति अनुमोदनपूर्वकं लोकाः व्यवहरन्ति । साम नो बत इत्युक्ते एव विषये साधु बतेति लोको वदति । ततः

---

1. वदन्ति - अ ।

सामसाधुशब्दौ एकत्रप्रयुज्यमानौ दृश्येते । एवमसाधु असामशब्दावपि एकार्थकौ । ततः सामसाधुशब्दयोः एकस्मिन् विषये प्रयोगदर्शनात् समस्तस्य साम्नः साधुत्वेन उपासनं कर्तव्यमित्यर्थः ।।

**सु. - किञ्चैवमप्याहुः, यत्** यदा **साधु -** शोभनं भवति, **तत् -** तदा बत नः साम - सम्पन्नम् इत्याहुः । बत नः साधु सम्पन्नमित्यपि चाहुः पर्यायेण । **यदसाधु -** अशोभनं भवति तदा असाम नो बत सम्पन्नम् इत्याहुः असाधु नोबतेति च । एवं साम्नि साधुशब्दान्वयात् साम्नः साधुत्वेनोपासनं कार्यमिति भावः ।।

**[समस्तसामोपसनस्य फलम्]**

**स य एतदेवं विद्वान् साधु सामेत्युपास्ते, अभ्याशो ह यदेनँ साधवो धर्माः आगच्छेयुः, उप च नमेयुः ।। ४ ।।**

**।। इति प्रथमः खण्डः ।।**

**प्र. - स य...... नमेयुः ।** एवं साधुत्वेन समस्तसामोपासकं **ह -** प्रसिद्धं **अभ्याशः -** क्षिप्रं साधुधर्माः सर्वे आगच्छेयुश्च, भोग्यत्वेन उपनताश्च भवेयुः इत्यर्थः । 'रमणीयचरणा अभ्याशो ह' (छां.उ.५-१०-७) इत्यत्र **अभ्याशः -** अभ्यागन्तारः इति व्यासार्यैः व्याख्यातत्वात् इहापि **अभ्याशः -** आगन्तारः साधवो धर्माः अभ्यागमनयोग्याः **साधवः धर्माः -** अभ्यागच्छेयुः इति वार्थः । **उपनमेयुश्च -** भोग्यतां भजेयुः इत्यर्थः ।।

**आ.भा. - स यः** इत्यादि । **स यः विद्वान् -** उपासकः एवं साधुत्वेन समस्तस्यापि साम्नः उपासनं करोति एनं तमुपासकम् **अभ्याशः -** झटिति साधवो धर्माः सर्वेऽपि **आगच्छेयुः -** भोग्यत्वेन प्राप्ता भवन्ति इति । **उप च नमेयुः -** भोग्यतां आप्नुयुः इति ।।

**सु. -** उपासनफलमुच्यते -**सः** इति । स यः कश्चिदेवं विद्वान् **साम -** साधु इत्युपास्ते **एनम् -** उपासकं साधवः धर्माः आगच्छेयुः । अथ च **उपनमेयुः -** भोगोपधायकाश्च भवेयुः इति यावत् ।।

**।। इति प्रथमखण्डभाष्यम् ।।**

## द्वितीयः खण्डः

[पञ्चविधसाम्नि लोकादिदृष्टिप्रकाराः]

**लोकेषु पञ्चविधँ सामोपासीत । पृथिवी हिङ्कारः । अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथः आदित्यः प्रतिहारो, द्यौर्निधनमित्यूर्ध्वेषु ।। १ ।।**

**प्र. - लोकेषु पञ्चविधं सामोपासीत ।** हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधन-लक्षणपाञ्चविध्ययुक्तं क्रत्वङ्गभूतं सामोपासीत । पञ्चविधसामकर्मकमुपासनं **लोकेषु** - लोकविषयकं कुर्यात् इत्यर्थः । 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' (ब्र.सू.४-१-६) इत्यधिकरणे अङ्गानङ्गसमभिव्याहारयुक्तोपासनेषु अङ्गेषु अनङ्गदृष्टिरूपत्वस्य समर्थितत्वात् अङ्गभूते साम्नि अनङ्गलोकदृष्टिः कर्तव्या इत्यर्थः । तत्प्रकारमेव दर्शयति । **पृथिवी...... इत्यूर्ध्वेषु ।** हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनेषु क्रमेण पृथिव्यग्न्यन्तरिक्षादित्य - द्युलोकदृष्टिरूर्ध्वक्रमेण कर्तव्या [1]इत्यर्थः[1] ।।

**आ.भा. - लोकेषु** - पृथिव्यादिलोकेषु **पञ्चविधं** - पञ्चभक्तिभेदेन पञ्चप्रकारकं साधु समस्तमपि **सामोपासीत** - तदुपासनं कुर्यात् । तत्प्रकारमेव दर्शयति - **पृथिवी** इत्यादि । अत्र हिंकारप्रस्तावोद्गीथप्रतिहारनिधनक्रमेण पृथिव्यन्तरिक्षादित्यद्युलोक-दृष्टिरूर्ध्वक्रमेण कार्या इत्यर्थः ।।

**सु. -** पाञ्चभक्तिकस्य साप्तभक्तिकस्य च साममात्रस्य साधुदृष्ट्या उपासनं विहितम् । अथ तत्र पाञ्चभक्तिकस्य साम्न उपासनं विधीयते - **लोकेषु** इत्यादिना । हिङ्कारः प्रस्ताव उद्गीथः प्रतिहारो निधनमिति पाञ्चविध्यमापन्नं सामोपासीत लोकेषु, लोकदृष्ट्या उपासीत इत्यर्थः । दोषान् गुणेषु भावयति इत्यादाविव इह सप्तमी विषये । तत्र लोकविषयकोपासनायां हिङ्कारादीन् विषयीकुर्यात्, न ततोऽतिरिक्तत्वेन । तत्प्राप्तं लोकत्वेन उपासीतेति । कुत्र कस्य लोकस्य दृष्टिः ? उच्यते विशिष्य, हिङ्कारः पृथिवी; प्रस्तावोऽग्निः, उद्गीथोऽन्तरिक्षम्, प्रतिहारः आदित्यः, निधनं द्यौः । तं तं तत्तल्लोकत्वेन उपासीतेति यावत् । **इत्यूर्ध्वेषु -** एवं क्रमेण उत्तरोत्तरमुपरितनलोकेषु बोध्यम् । पृथिव्या ऊर्ध्वमग्निस्ततोऽन्तरिक्षं तत आदित्यस्ततो द्यौरित्युत्तरोत्तरमूर्ध्वता ।।

---

1. पृथिव्यादिषु द्युपर्यन्तेषु ऊर्ध्वेषु द्युप्रभृतिषु पृथिवीपर्यन्तेषु आवृत्तेषु च उक्तरीत्या हिङ्कारादिदृष्टिः कर्तव्या इत्यर्थः इति - क कोशपाठः ।

**अथावृत्तेषु - द्यौर्हिङ्कारः, आदित्यः प्रस्तावः, अन्तरिक्षमुद्गीथः, अग्निः प्रतिहारः, पृथिवी निधनम् ।। २ ।।**

**प्र.** - तथा, **अथावृत्तेषु......निधनम्** । आवृत्तक्रमेण तेष्वेव द्युलोकादित्यान्तरिक्षाग्निपृथिवीदृष्टिः कर्तव्या इत्यर्थः ।।

**आ.भा.** - **अथावृत्तेषु** इत्यादि । तत्र **आवृत्तेषु** - अवाङ्मुखेषु विपरीतक्रमेण इत्यर्थः । द्युलोकादित्यान्तरिक्षाग्निपृथिवीदृष्टिः कार्या इति ।।

**सु.** - अथावाङ्मुखक्रमेण तत्र तद्दृष्टिर्विधीयते - **अथ** इति । **अथ** - ऊर्ध्वक्रमेण उपासनविधानानन्तरम् । **आवृत्तेषु** - प्रत्यावृत्तिक्रमविशिष्टेषु तेष्वेव तद्दृष्टिः कार्या, कथं? विविच्योच्यते - हिङ्कारो द्यौः, प्रस्ताव आदित्यः, उद्गीथोऽन्तरिक्षम्; प्रतिहारोऽग्निः, निधनं पृथिवीति ।।

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चा वृत्ताश्च, य एतदेवंविद्वाँल्लोकेषु पञ्चविधँ सामोपास्ते ।। ३ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र.** - तत्फलमाह - **कल्पन्ते हास्मै** इत्यादि । **अस्मै** - अस्य **लोकाः कल्पन्ते** । उपासकभोगनिष्पादनसमर्थाः भवन्ति इत्यर्थः । एतादृशोपासनस्य फलमाह कल्पन्ते इत्यादि । अतिरोहितार्थमिदं प्रकरणम् ।।

**सु.** - इदं लोकदृष्ट्या समस्तस्य साम्नः उपासनं फलेन उपसंह्रियते - **कल्पन्ते** इति । यो विद्वान् एतत्पञ्चविधं साम एवंप्रकारेण आरोहावरोहक्रमेण लोकेषु उपास्ते, **अस्मै** - उपासकाय इमे लोकाः **ऊर्ध्वाश्चावृत्ताश्च** - आरोहावरोहक्रमविशिष्टाः, **कल्पन्ते** - फलाय प्रभवन्ति इति यावत् ।।

**।। इति द्वितीयखण्डभाष्यम् ।।**

## तृतीयः खण्डः

### [वृष्टिदृष्ट्या सामोपासनम्]

**वृष्टौ पञ्चविधँ सामोपासीत - पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः उद्गृह्णाति तन्निधनम् ।। १ ।।**

**प्र. - वृष्टौ......उपासीत** । पूर्ववदेव अत्र पञ्चविधे साम्नि वृष्टिदृष्टिः कर्तव्या इत्यर्थः । **पुरोवातः......तन्निधनम्** । **उद्ग्रहणम्** - जलस्य उद्ग्रहणं, वर्षसमाप्तिः । शिष्टं स्पष्टम् ।।

**आ.भा. - वृष्टौ** इत्यादि । पूर्ववदेवात्रापि पञ्चप्रकारके साम्नि वृष्टिदृष्टिः कार्या इत्यर्थः । **पुरो वातः** इत्यादि स्पष्टम् ।।

**सु. -** लोकदृष्टिविधानानन्तरं वृष्टिदृष्टिर्विधीयते - **वृष्टौ** इति । वृष्टौ पञ्चविधं सामोपासीत, अत्र वृष्टिशब्देन वर्षः सपरिकरो गृह्यते, वृष्ट्यारम्भतः आसमाप्ति वर्षानुबद्धमखिलं वृष्टिरिति व्यपदिश्यते इति यावत् । हिङ्कारः पुरोवातः, स हि वृष्टेरारम्भदशायां प्रवर्तते । **यो मेघो जायते** - तदानीमाविर्भवति, प्रस्तावः सः । यद्वर्षति उद्गीथः सः । **यद्विद्योतते यच्च स्तनयति** - गर्जति प्रतिहारः सः । यदुद्गृह्णाति जलस्योद्ग्रहणं करोतीति यत्, वृष्टेर्विरतिरिति यावत्, तन्निधनम् । क्रमात् तत्र तत्र तत्तद्दृष्टिः कार्या इति भावः ।।

### [तस्य फलम्]

**वर्षति हास्मै, वर्षयति ह, य एतदेवं विद्वान् वृष्टौ पञ्चविधँ सामोपास्ते ।। २ ।।**

**।। इति तृतीयः खण्डः ।।**

**प्र. - वर्षति हास्मै** । इच्छतः इति शेषः । अस्य इच्छायां सत्यां वर्षतीति यावत् । **वर्षयति......उपास्ते** । अद्यापि यः एवमुपास्ते, स इच्छायां सत्यां **वर्षयति** - वर्षं कारयति इत्यर्थः ।।

**आ.भा. -** उपासनाफलमाह - **वर्षति हास्मै** इत्यादि । एतादृशोपासनाकर्तुरिच्छायां सत्यां वर्षणसमयेऽपि भवतीत्यर्थः । **वर्षयति** इत्यादि । य एतादृशोपासनं करोति सः स्वेच्छया यजमानाय वर्षं कारयति इत्यर्थः ।।

**सु. -** यो विद्वान् एतत्पञ्चविधं साम एवं क्रमेण वृष्टौ उपास्ते, अस्मै वर्षति पर्जन्यः अयं च सत्यवग्रहे वृष्टिं कारयति लोकाय ।।

**।। इति तृतीयखण्डभाष्यम् ।।**

## चतुर्थः खण्डः

**[अप्सु पञ्चविधसामोपासनम्]**

**सर्वास्वप्सु पञ्चविधँ सामोपासीत - मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ।। १ ।।**

**प्र. - सर्वासु......उपासीत** । पूर्ववदर्थः । **मेघो हिंकारः । सम्प्लवनं -** सञ्चारः । **याः.....उद्गीथः** । स्यन्दन्ते, आप इति शेषः । **याः प्रतीच्यः स प्रतिहारः** । प्रतीच्यः स्यन्दन्ते, आप इति शेषः । शिष्टं स्पष्टम् ।।

**आ.भा. - सर्वासु** इत्यादि । पूर्ववदेवार्थः कर्तव्यः । संप्लवने तत्र संप्लवनं, सञ्चारः, या प्राच्यः स्यन्दन्ते आपः प्रतीच्यः स्यन्दन्ते आपः स प्रतिहारः । अन्यत्सर्वं पूर्ववत् ।।

**सु. -** अथाप्सु उपासनं विधीयते । **सर्वास्वप्सु पञ्चविधं सामोपासीत** पूर्ववत् । **मेघो यत्संप्लवते -** वियति संपल्वते इति यत् - सङ्गत्य मिथः प्लवते इति यत् सः हिङ्कारः, हिंकारे मेघदृष्टिः कार्या इति यावत् । घनीभूतानामपां समुदायो मेघः इति अप्दृष्टिरनुपहतैव । **यद्वर्षति स प्रस्तावः,** परितः प्रसृते वर्षे प्रस्तावदृष्टिरिति यावत् ; या नादेया आपः प्राच्यः स्यन्दन्ते स उद्गीथः, यास्तु प्रतीच्यः स प्रतिहारः, सर्वासामपां निधिः समुद्रः निधनम् ।।

[तस्य फलम्]

**न हाप्सु प्रैति । अप्सुमान् भवति, य एतदेवं विद्वान् सर्वास्वप्सु पञ्चविधँ सामोपास्ते ।। २ ।।**

**।। इति चतुर्थः खण्डः ।।**

**प्र. - न हाप्सु प्रैति । न प्रैति -** न म्रियते इत्यर्थः । **अप्सुमान् भवति -** प्रभूतोदकसम्पन्नो भवति इत्यर्थः । 'अपो योनियन्मतुषु' (वा.३८७६) इत्यलुक् । शिष्टं स्पष्टम् ।।

**आ.भा. - न हाप्सु** इत्यादि । **न प्रैति** न जले म्रियते इत्यर्थः । **अप्सुमान् भवति** - पुष्कलजलसम्पत्त्या सम्पन्नो भवति । अन्यत् सर्वं पूर्ववदेव ज्ञातव्यमिति ।।

**सु. -** यो विद्वान् एतत्पञ्चविधं साम एवंक्रमेण सर्वासु अप्सु उपास्ते, सः उपासकः **अप्सु न प्रैति -** कदापि न म्रियते । **अप्सुमान् भवति -** अद्भिः समृद्धश्च भवति । अपाम् अलाभतः क्लेशः नास्त्येव इति भावः ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

[ऋतुषु पञ्चविधसामोपासनम्]

**ऋतुषु पञ्चविधँ सामोपासीत । वसन्तो हिङ्कारो, ग्रीष्मः प्रस्तावो, वर्षा उद्गीथः, शरत् प्रतिहारो, हेमन्तो निधनम् ।। १ ।।**

**प्र. - ऋतुषु पञ्चविधँ सामोपासीत** इत्यादि । स्पष्टम् ।।

**आ.भा. - ऋतुषु** इत्यादि । अतिरोहितार्थः। प्रकरणमाह । उपासनाफलमाह ।।

**सु. -** अथ ऋतुषु उपासनमुच्यते । हिङ्कारादिषु वसन्तादिदृष्टिः क्रमात् कार्या इति यावत् ।।

[तस्य फलम्]

**कल्पन्ते हास्मा ऋतवः, ऋतुमान् भवति, य एतदेवं विद्वान् ऋतुषु पञ्चविधँ सामोपास्ते ।। २ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र. - कल्पन्ते हास्मा ऋतवः । कल्पन्ते** - उपासकस्य भोग्यनिष्पादनसमर्थाः भवन्ति इत्यर्थः । **ऋतुमान् भवति** । वसन्तादिऋतुफलभोगशाली भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - कल्पन्तो** इत्यादि । **कल्पन्तो** - उपासकस्य एते ऋतवः भोग्यवस्तुसम्पादने समर्थाः भवन्ति इति । **ऋतुमान् भवति** - उपासको वसन्तादिऋतुफलभोगशाली भवति इत्यर्थः ।।

**सु. - यः** विद्वान् **एतत्पञ्चविधं साम । एवम्** - उक्तप्रकारेण **ऋतुषु उपास्ते** तस्मै उपासकाय **ऋतवः कल्पन्ते** - प्रभवन्ति । उपासकं प्रीणयितुं फलेन प्रभवन्ति । **ऋतुमांश्च भवति** । सर्वदा सर्वर्तुभोगसम्पन्नश्च भवति ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

[पशुषु पञ्चविधसामोपासनम्]

**पशुषु पञ्चविधँ सामोपासीत - अजा हिङ्कारः[१], अवयः प्रस्तावः, गावः उद्गीथः, अश्वाः प्रतिहारः, पुरुषो निधनम् ।। १ ।।**

**प्र. - पशुषु पञ्चविधँ सामोपासीत** इत्यादि । स्पष्टम् ।।

**आ.भा. - पशुषु** इत्यादि । **अवयः - मेषाः** । अन्यत्सर्वं स्पष्टम् ।।

---

१. **अजा हिङ्कारः** - अजस्य हिङ्कारवत् पशूनां प्राथम्यात्, 'अजः पशूनाम्' इति श्रुतेः । ब्राह्मणो मनुष्याणाम्, अजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त ।

**सु.** - अथ पशुषु उपासनमुच्यते । पञ्चविधं साम पशुषु उपासीत । यथा **हिङ्कारोऽजाः** इति, प्रस्तावोऽवयः इति, उद्गीथो गावः इति, प्रतिहारः अश्वाः इति, निधनं पुरुषः इति ।

ननु पशोरन्यः पुरुषः, कथं पशुषु उपासने अस्य गणनम् । सत्यं पशोरन्यः, अथापि अजादयः इमे पशवः पुरुषाश्रयाः इति तदनुबन्धितया तदुपासने संवेशः पुरुषस्य । वृष्टाविव पुरोवातस्य पशुपरायणस्य अस्य पशुत्वं तैः सह समानम् इति वा ।।

[तस्य फलम्]

**भवन्ति हास्य पशवः, पशुमान् भवति, य एतदेवं विद्वान् पशुषु पञ्चविधँ सामोपास्ते ।। २ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र. - भवन्ति हास्य पशवः ।** अस्योपासकस्य भोगसम्पादनक्षमाः भवन्ति इत्यर्थः । **पशुमान् भवति** - प्रभूतपशुमान् भवति इत्यर्थः । अयम् उपासकः इति शेषः । शिष्टं स्पष्टम् ।।

**आ.भा.** - उपासकस्य फलम् - **भवन्ति......** इत्यादि । **अस्य** - उपासकस्य अजाद्याः पशवः, भोगसम्पादनदक्षाः भवन्ति इत्यर्थः । **पशुमान् भवति** इत्यादि । अयमुपासको यथोक्तोपासनया प्रभूतपशुमान् भवति इत्यर्थः । अन्यत् सर्वं स्पष्टम् ।।

**सु.** - अस्य पशवो भवन्ति यथेष्टम् । **पशुमांश्चायं भवति** - पशूनां फलेन च सर्वदा सम्पन्नो भवति ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

## सप्तमः खण्डः

[प्राणेषु पञ्चविधसामोपासनम्]

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत । प्राणो[१] हिङ्कारो, वाक्प्रस्तावः चक्षुरुद्गीथः श्रोत्रं प्रतिहारो, मनो निधनं, परोवरीयांसि वा एतानि ।। १ ।।**

---

१. प्राणो घ्राणं हिङ्कारः - इति शाङ्करे । मुख्यप्राणादुत्तरेषां वरीयस्त्वासम्भवात्तस्य सर्वश्रेष्ठतया निर्धारितत्वात् परं परं वरीयसां वागादीनां मध्ये प्रथमभावित्वेन उक्तत्वात् घ्राणमेवात्र प्राणशब्दमित्यर्थः इत्यानन्दगिरिटीकायाम् ।

**प्र. - प्राणेषु......उपासीत** । वरीयस्त्वं - ज्येष्ठत्वम् परस्त्वम् - श्रेष्ठत्वम् । परस्त्वे सति वरीयस्त्वं परोवरीयस्त्वम् । परश्शब्दः सान्तः । परोवरीयस्त्वगुणकप्राणदृष्ट्या पञ्चविधसामोपासनं कर्तव्यम् इत्यर्थः । तदेवाह - **प्राणो......एतानि । एतानि -** प्राणादीनि **परोवरीयांसि -** परोवरीयस्त्वगुणकानि इत्यर्थः ।।

**आ.भा. - प्राणेषु** इत्यादि । **प्राणेषु पञ्चविधं परोवरीयः सामोपासीत ।** तत्र वरीयस्त्वं ज्येष्ठत्वं, परत्वञ्च श्रेष्ठत्वम् । परत्वे सति वरीयस्त्वं परोवरीयस्त्वम् । तथात्र परोवरीयस्त्वगुणप्राणदृष्ट्या पञ्चप्रकारकसामोपासनं करणीयम् इत्यर्थः । अत्र प्राणपदेन मुख्यप्राणो गृह्यते । तदापन्नायत्तस्थितिप्रवृत्तिकत्वात् अन्येषामपि प्राणत्वम् । 'तद्वा एतन्मिथुनं च वाक् प्राणश्च' (छां.उ.१-१-६) इति श्रुतौ वाक्प्राणौ संयुक्तौ गृहीतौ । अतः प्राणपदं न घ्राणस्य बोधकम्, अपि तु मुख्यस्यैव ज्ञापकम् । **प्राणो हिङ्कारः वाक्प्रस्तावः।** तत्र प्राणबलप्राप्तः अनन्तरं वाचो व्यवहारो भवति । तत्रापि बोधकव्यवहारस्य साक्षात् निष्पादनात् प्राणादनन्तरं वाचः कथनम् । वाग्व्यवहारस्य दृष्टार्थमूलकत्वात् वाचः प्राक् अर्थबुद्धिकरं ग्राहकताशक्तिसम्पन्नस्य चक्षुषः उद्गीथकथनम् । अदृष्टार्थेऽपि शब्दश्रवणेन अर्थकरत्वदर्शनात् श्रोत्रं बुद्धिकरम् । **मनो निधनम् ।** यस्मात् मनसः उपरि न किमपि बुद्धिकरमस्ति, तस्मात् तन्मनः निधनमिति । एतेषां मुख्यप्राणादीनां पञ्चानामेव सर्वत्र श्रेष्ठतया परिगणनं कृतम् । अत एवात्र परोवरीयस्त्वं प्राणानां कथितं परत्वे सति वरीयस्त्वम् । एतानि प्राणादीनि **परोवरीयांसि** परोवरीयस्त्वगुणविशिष्टानि इति ।।

**सु. - प्राणेषु पञ्चविधं सामोपासीत,** अत्र प्राणशब्दः इन्द्रियपरः, प्राणाधीनवृत्तिकत्वात् । प्राणनाम् इन्द्रियाणां व्यपदेशो भाक्तः । हिङ्कारादिपञ्चविधं साम वक्ष्यमाणक्रमेण प्राणात्मना उपासीत इत्यर्थः । न केवलं तथा, परोवरीयः इति परोवरीयस्त्वगुणवत्तया च, सा च न स्वातन्त्र्येण, किन्तु अध्यस्यमानप्राणद्वारा । **परोवरीयांसि वा एतानि** इति प्राणेषु परोवरीयस्त्वमुपपादयति । परोवरीयस्त्वं च परः परोवरीयानिति निर्दिष्टक्रमेण घ्राणात् वाक्, वाचः चक्षुः, चक्षुषः श्रोत्रम्, श्रोत्रात् मनः, परं परं वरीयः, तदेषु सूपपत्तिकं परोवरीयस्त्वम् । तथा च परोवरीयस्त्वगुणविशिष्टप्राणात्मना सामोपासीत इति भावः । **प्राणो हिङ्कारः** - प्राणोऽत्र घ्राणः, वागिन्द्रियैः सह पाठात् ।

वक्ष्यमाणपरोवरीयस्त्वानुगुण्याच्च । न हि मुख्यप्राणतो वागादीनां वरीयस्त्वप्रसङ्गः । अपरे तु - परस्त्वं वरीयस्त्वं चेति गुणद्वयं परोवरीयःशब्देन आददानाः प्राणो हिङ्कारः इत्यत्र प्राणशब्दस्य मुख्यार्थमेव मन्यन्ते । **परोवरीयांसि वैतानि** - एतानि घ्राणादीनि वरीयांसि नाम, अर्थप्रकाशकत्वात् , उत्तरोत्तरं वरीयांसि च । घ्राणो हि वर्तमानमेव स्वार्थं प्रकाशयति । वाक् तु - अतीतम् अनागतमपि अर्थम् । चक्षुस्तु स्वार्थं ततो विशदम् अवभासयति । संमुखस्थमेव अर्थं चक्षुः प्रकाशयति, श्रोत्रं तु परितः सम्बद्धं स्वार्थम् इति परोवरीयस्ता ।।

[तस्य फलम्]

**परोवरीयो हास्य भवति ; परोवरीयसो ह लोकाञ्जयति, य एतदेवं-विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्ते । इति तु पञ्चविधस्य ।। २ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र. - परोवरीयो हास्य भवति** - उपासकस्यास्य जीवनं श्रेष्ठं भवति इत्यर्थः । **इति तु पञ्चविधस्य** साम्नः उपासनमुक्तं भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा.** - उपासनाफलमाह - **परोवरीयः** इत्यादि । उपासकस्य जीवनम् अतिश्रेष्ठं भवति इत्यर्थः । **इति** अनेन प्रकारेण **पञ्चविधस्य** - पञ्चप्रकारकस्य **साम्नः उपासनं** कथितं भवति इति । अन्यत् सर्वं स्पष्टम् ।।

**सु. - यः विद्वानेतत्पञ्चविधं** साम एवं प्राणे परोवरीयः उपास्ते, **अस्य परोवरीयः**- उत्तरोत्तरम् उत्कृष्टं जीवनं **भवति । परोवरीयसो ह लोकान्** - उत्तरोत्तरम् उत्कृष्टान् लोकान् जयति । **इति तु पञ्चविधस्य** - एवंप्रकारेण पञ्चविधस्य उपासनम् उक्तम् ।। ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टमः खण्डः

[वाचि सप्तविधसामोपासनम्]

**अथ सप्तविधस्य - वाचि सप्तविधँ सामोपासीत - यत्किञ्च वाचो हिमिति स हिङ्कारो, यत्प्रेति स प्रस्तावो, यदेति स आदिः ।। १ ।।**

**प्र. - अथ सप्तविधस्य ।** सप्तविधस्य साम्नः उपासनं प्रस्तूयते इत्यर्थः । **वाचि...... उपासीत । वाचि** हिङ्कारप्रस्तावोङ्कारोद्गीथप्रतिहारोपद्रवनिधनाख्यसप्तविधायुक्ते साम्नि वक्ष्यमाणप्रकारेण वाक्छब्दितशब्ददृष्टिः कर्तव्या इत्यर्थः । **यत्किञ्च हिङ्कारः । वाचः -** शब्दस्य अवयवभूतः हिमिति यः शब्दः, स हिङ्कारः । हिङ्कारस्य हिंशब्दवत्त्वसादृश्यात् । ततश्च हिङ्कारे, लोके हिंशब्दा यावन्तः तद्बुद्धिः कर्तव्या इत्यर्थः । एवमुत्तरत्रापि । **यत्प्रेति.......आदिः ।** प्रस्तावे[1]सर्व[1]प्रशब्दत्वबुद्धिः, कर्तव्या । उद्गीथस्य आद्यवयवभूते ओङ्कारे 'अ' इति शब्दबुद्धिः कर्तव्या इत्यर्थः ।।

**आ.भा. - अथ सप्तविधस्य -** सप्तप्रकारकस्य साम्नः उपासनं प्रस्तूयते । **वाचि -** वाग्दृष्टिविशिष्टं **सप्तविधं -** सप्तप्रकारकं साम उपासीत **यत्किञ्च वाचः -** यत्किञ्चिद्वाचः शब्दस्य **हुमिति -** यो विशेषः **स हिङ्कारो** हकारसामान्यात् । **यत् प्रेति** शब्दरूपं **स प्रस्तावः** प्रशब्दसामान्यात् । **यदेति -** यत् आ इति **स आदिः** आकाशशब्दसामान्यात् आदिः इति ओङ्कारः सर्वप्रथमत्वात् ।।

**सु. - अथ -** पञ्चविधस्य साम्नः उपासनविधानानन्तरम् । सप्तविधस्य साम्नः उपासनं विधीयते इति शेषः । तत्र प्रथमं वाचि विधीयते । वाचि सप्तविधं साम उपासीत । अत्र वाक्छब्दो वागिन्द्रियसाध्ये शब्दसामान्ये वर्तते । सप्तम्यर्थः पूर्ववत् । सप्तविधं साम वाक्त्वेन उपासीत इति यावत् । किं तत्सप्तविधं साम? सप्तसु कुत्र कस्याः वाचः दृष्टिः ? उच्यते । यो वाचो **हुमिति** सः हिंकारः । हिंकारे साम्नि हुमिति शब्दसामान्यदृष्टिः कार्या इति भावः । **यत्प्रेति स प्रस्तावः, -** प्रशब्दसामान्यदृष्टिः प्रस्तावे कार्या इति यावत् । एति इति नैकं पदम् । यत् आ इति स आदिः । इहादिशब्दः प्रणवे वर्तते । स हि आदिः सर्वस्य वाङ्मयस्य ! प्रणवे आकारसामान्यदृष्टिः कार्या इति यावत् ।।

**यदुदिति स उद्गीथो, यत् प्रतीति स प्रतिहारो, यदुपेति स उपद्रवो, यन्नीति तन्निधनम् ।। २ ।।**

---

1. सर्वत्र - क ।

**प्र. - यदुदिति स उद्गीथः** इत्यादि । स्पष्टम् ।।

**आ.भा. - यदुदिति स उद्गीथः** । उत्पूर्वकत्वात् उद्गीथस्य । **यत्प्रतीति स प्रतिहारः** । प्रतिशब्दसामान्यात् । **यदुपेति स उपद्रवः**, उपोपक्रमत्वात् उपद्रवस्य । **यन्नीति तन्निधनम्** । निशब्दसामान्यात् इति ।।

**सु. - यदुदिति** शब्दस्य स्वरूपं **स उद्गीथः**, तद्दृष्टिः तस्मिन् विधेया इति भावः । **यत्प्रतीति सः प्रतिहारः**, प्रतिहारे प्रतिशब्ददृष्टिः । **यदुपेति स उपद्रवः**, उपद्रवे उपशब्ददृष्टिः । **यन्नीति तन्निधनं** । निधने 'नि' इत्यक्षरदृष्टिः कार्या इति भावः ।।

**[उपासनाफलम्]**

**दुग्धेऽस्मै वाग् दोहं यो वाचो दोहः, अन्नवानन्नादो भवति, य एतदेवं विद्वान् वाचि सप्तविधँ सामोपास्ते ।। ३ ।।**

**।। इति अष्टमः खण्डः ।।**

**प्र.** - उपासनाफलमाह - **दुग्धे......भवति** । वाक्सम्बन्धी यो दोहोऽस्ति, वाक्साध्यं यत्फलम् इत्यर्थः । तत्फलं उपास्यमाना वाक् **अस्मै** - उपासकाय **दुग्धे** - प्रयच्छति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा.** - उपासनाफलमाह - **दुग्धे** इत्यादि । अर्थस्तु पूर्ववदेव कर्तव्यः इति ।।

**सु.** - यो विद्वानेतत्सप्तविधं साम वाचि एवमुपास्ते **अस्मै वाक् दोहं दुग्धे** कोऽसौ दोहः ? **यो वाचः** स्वस्याः **दोहः** स्यात् फलं स्यात् । **अन्नवान्** - अन्नेन सम्पन्नः, **अन्नादश्च** - अन्नमत्तुं शक्तश्च अरोगश्च भवति ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

**[सप्तविधे साम्नि आदित्यदृष्टिः]**

**अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत - सर्वदा समः, तेन साम, मां प्रति मां प्रतीति सर्वेण समः, तेन साम ।। १ ।।**

**प्र. - अथ......उपासीत ।** सप्तविधे साम्नि आदित्यबुद्धिः कर्तव्या इत्यर्थः । सामादित्ययोः ऐक्याध्यासहेतुमाह - **सर्वदा समः तेन साम ।** आदित्यस्य सर्वदा समपरिमाणत्वेन समत्वात् सामत्वम् इत्यर्थः । **मां......साम ।** लोके हि, 'आदित्यो मां प्रति समः अभिमुखः, मां प्रति समः' इति प्रतीयते । पुरुषविशेषं प्रति आभिमुख्यस्य पुरुषविशेषं प्रति अनाभिमुख्यस्य [1]वा अभावात्[1] । अतः सर्वं प्रति समत्वादपि सामत्वम् इत्यर्थः ।।

**आ.भा. -** अवयवमात्रे साम्नि आदित्यदृष्टिः प्रञ्चप्रकारके प्रथमाध्याये प्रदर्शिता । **अथ -** तदनन्तरम्, **अमुमादित्यं** सम्पूर्णे साम्नि अवयवविभागपूर्वकम् अध्यासं कृत्वा सप्तप्रकारकम् उपासनं प्रदर्श्यते **अथ** इत्यादि । सप्तप्रकारके साम्नि आदित्यदृष्टिः कर्तव्या इत्यर्थः । तत्र सामादित्ययोः एकत्वाध्यासकारणं दर्शयति - **सर्वदा** इत्यादि । वृद्धिक्षयाभावात् सर्वदा एकरूपत्वेन समः । तेन साम इति कथ्यते आदित्यः । **मां प्रती**त्यादि । लोकेऽपि 'अयमादित्यो मां प्रति अभिमुखो मां प्रति अभिमुख' इति प्रतीयते सर्वः । तस्मात् कारणात् आदित्यः साम इति ।।

**सु. -** अथ विधीयते आदित्ये साम्नः उपासनम् । **अमुमादित्यं सप्तविधं सामोपासीत ।** अस्ति च इदं निमित्तं साम्नः आदित्यत्वेन उपासने, यदसौ आदित्यः सर्वदा समो न कदाचिद्वर्धते क्षीयते वा । समेऽस्मिन् सामत्वं न्याय्यम् । समशब्दार्थात् अनतिरिक्तार्थे हि सामशब्दार्थः प्रवर्तेत । इतश्च साम असौ, अन्यान्यदेशीयेन पुरुषेण सर्वेण हि असौ समः, कथं ? व्यवहरन्ति हि सर्वेऽविशेषेण मां प्रति असौ आदित्यः **समः** - अभिमुखः मां प्रति असौ आदित्यः समोऽभिमुखः इति । तेन च असौ साम ।।

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् । तस्य यत्पुरोदयात् स हिङ्कारः । तदस्य पशवोऽन्वायत्ताः । तस्मात्ते हिङ्कुर्वन्ति ; हिङ्कारभाजिनो ह्येतस्य साम्नः ।। २ ।।**

**प्र. - तस्मिन्.....विद्यात् । तस्मिन् -** आदित्ये । सर्वभूतोपजीव्यतया आदित्यम् उपासीत इत्यर्थः । भूतानाम् उपजीवनप्रकारं कालभेदेन दर्शयति । **तस्य....साम्नः ।**

---

1. चाभावत् - ख ।

**तस्य** - आदित्यस्य उदयात् **पुरा** - पूर्वं यद्रूपं, स हिङ्कारः । हिङ्कारे तद्रूपदृष्टिः कर्तव्या इत्यर्थः । एवमग्रेऽपि । **अस्य** - आदित्यस्य हिङ्काराख्यं तत् रूपं पशवः **अन्वायत्ताः** - उपजीवन्ति । **हि** - यतः एव ते **एतस्य साम्नः** - सामरूपस्य आदित्यस्य सम्बन्धिहिंकारलक्षणरूपोपजीविनः । **तस्मात्ते हिङ्कुर्वन्ति** । अत एव पशवो हिमिति शब्दं कुवन्ति इत्यर्थः ।।

**आ.भा. - तस्मिन्** - आदित्ये **इमानि सर्वाणि भूतानि अन्वायत्तानि** । अनुगतानि । आदित्यम् उपजीव्य जीवन्ति इत्यर्थः इति विद्यात् । सर्वभूतोपजीव्यतया आदित्यम् उपासीत इत्यर्थः । कालभेदेन भूतानाम् उपजीवनप्रकारं दर्शयति **तस्य** इत्यारभ्य **साम्नः** इत्यन्तम् । **तस्य** आदित्यस्य **उदयात् पुरा** पूर्वं यत् रूपं स हिङ्कारः । हिङ्कारे तद्रूपदृष्टिः कार्या इत्यर्थः । **अस्य** आदित्यस्य यत् हिङ्काराख्यं रूपं **तत्** रूपं **पशवः** - गवादयः **अन्वायत्ताः** - उपजीवन्ति **हि** - यस्मात् ते एतस्य **साम्नः** - सामरूपादित्यस्य सम्बन्धिहिङ्कारलक्षणरूपोपजीविनः **तस्मात्** कारणात् **ते** पशवः **हिङ्कुर्वन्ति** - हिमित्याकारकं शब्दं कुर्वन्ति इत्यर्थः ।।

**सु.** - यः सर्वेषां समः **तस्मिन्** आदित्ये **सर्वाणि भूतानि** - पश्वादीनि **अन्वायत्तानि** - अनुबद्धानि, **इति विद्यात्** - एवं भावयेत् । आदित्यं भूतोपजीव्यतया भावयेत् इति यावत् । अवयवविभागशः सप्तविधे साम्नि आदित्योपासनं भूतोपजीव्यतां च विविच्याह **तस्य** इत्यादिना । **तस्य** - आदित्यस्य **उदयात्पुरा** यद्रूपं तद्रूपं हिङ्कारः। तदिदम् अस्य आदित्यस्य रूपं **पशवः अन्वायत्ताः** । उदेष्यदादित्यरूपं हिङ्कारे अध्यस्य पशूपजीव्यत्वेन भावयेदिति यावत् । कथं तस्य पशूपजीव्यता ? यतो हिङ्कारात्मकादित्योपजीविनः । अत एव ते उषसि **हिङ्कुर्वन्ति** पशवः । कथमन्यथा हिङ्कारभाजिनो भवेयुः । **साम्नः एतस्य** - सामात्मकस्य एतस्य उदेष्यतः आदित्यस्य हिङ्कारभाजिनः हि ।।

**[प्रस्तावलक्षणम्]**

**अथ यत् प्रथमोदिते स प्रस्तावः । तदस्य मनुष्या अन्वायत्ताः, तस्मात्ते प्रस्तुतिकामाः प्रशँसाकामाः; प्रस्तावभाजिनो ह्येतस्य साम्नः ।। ३ ।।**

**प्र. - अथ यत् प्रथमोदिते** इत्यादि । **प्रथमोदिते -** प्रथमोदयकाले । प्रथमोदयकालावच्छिन्नः आदित्यः **प्रस्तावः** । अस्य तथाविधं रूपं मनुष्याः उपजीवन्ति । यतस्ते प्रस्तावाख्यप्रथमोदितादित्यरूपोपजीविनः, अत एव मनुष्याः **प्रस्तुतिकामाः** भवन्ति । प्रस्तुतिकामाः इत्यस्य विवरणं **प्रशंसाकामाः** इति ।।

**आ.भा. - अथ प्रथमोदिते -** प्राथमिकोदयकाले यत् रूपं **स प्रस्तावः** । प्रथमोदयकालावच्छिन्नः आदित्यः प्रस्तावः । अस्य तथाविधं रूपं मनुष्याः **अन्वायत्ताः -** उपजीवन्ति इत्यर्थः । यस्मात् **ते -** प्रस्तावाख्यप्रथमोदितादित्यरूपोपजीविनः **तस्मात् -** कारणात् ते **प्रस्तुतिकामाः प्रशंसाकामाः** भवन्ति । अन्यत् पूर्ववत् ।।

**सु. -** प्रथमोदिते तस्य यद्रूपं स **प्रस्तावः** । उदयसमकालावच्छिन्नम् आदित्यस्य रूपं प्रस्तावेऽध्यस्य भावयेदिति यावत् । अस्य तद्रूपं **मनुष्या अन्वायत्ताः** । तस्मादेव **ते प्रस्तुतिकामाः** भवन्ति - प्रस्तुतिं परैः क्रियमाणां कामयन्ते, प्रस्तोतुं कामयन्ते वा । **प्रशंसाकामाः** श्लाघां च परैः क्रियमाणां कामयन्ते च । पूज्यभावसापेक्षत्वतदभावाभ्यां स्तुतिश्लाघयोः भेदः । **साम्नः एतस्य -** सामात्मनः एतस्य प्रथमोदितस्य प्रस्तावभाजिनो हि ते । प्रस्तावात्मकादित्योपजीव्यतया **प्रस्तुतिकामाः प्रशंसाकामाश्च** भवन्तीति भावः । प्रस्तावः प्रस्तुतिः ।।

**[आदित्यसाम्नः आदिः]**

**अथ यत् सङ्गववेलायाँ स आदिः । तदस्य वयाँस्यन्वायत्तानि । तस्मात् तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्ति ; आदिभाजीनि ह्येतस्य साम्नः ।। ४ ।।**

**प्र. - अथ यत् सङ्गववेलायाम्** इत्यादि । **तानि वयांसि -** पक्षिणः **अनारम्बणानि -** आलम्बनान्तरशून्यान्येव आत्मानमेव आलम्बनत्वेन आदाय आकाशे परिपतन्ति । सङ्गवकालादित्यसम्बन्ध्यादिशब्दितोङ्काररूपोपजीवित्वादेव आदाय [1]परिपतनं[1] पक्षिणाम् इत्यर्थः । **आदिशब्दादाय**शब्दयोः आकारदकारवत्त्वसाम्यम् इहाभिप्रेतम् ।।

---

1. परिवर्तनं - अ,आ ।

**आ.भा. - अथ यत्** इत्यादि । **सङ्गववेलायाम् -** गवां रश्मीनां सङ्गमनं सङ्गवः यस्यां वेलायां तस्मिन् काले यदादित्यरूपं स आदिः । **तदस्य वयांसि -** पक्षिणः अन्वायत्तानि । तस्मात्कारणात् **अनारम्बणानि -** अनावरणानि आत्मानमेव आदाय **परिपतन्ति -** आकाशे गमनागमनं कुर्वन्ति ।।

**सु.** - प्रातःकालादूर्ध्वं, प्राक् मध्याह्नात् मुहूर्तत्रयपरिमितः कालः सङ्गवः उच्यते । सङ्गववेलायां यत् आदित्यस्य रूपं स आदिः, ओङ्कारः । **अस्य -** सवितुः तद्रूपं सङ्गवकालिकम्, **वयांसि** - पक्षिणः । **अन्वायत्तानि -** अनुसम्बद्धानि । तानि हि वयांसि अन्तरिक्षे अनाश्रयाण्येव स्वयम् आत्मानम् आदाय **परितः पतन्ति -** सञ्चरन्ति । **एतस्य साम्नः -** एतस्य सामात्मकस्य सङ्गवकालिकस्य **आदिभाजीनि -** आदिशब्दितप्रणवात्मकस्वरूपभाजीनि । यद्यपि न प्रणवेन वयसां कश्चन सम्बन्धः, तथापि प्रणववाचके आदिशब्दे आकारः सम्बन्धः, तथा आदायात्मानं पतताम् एषाम् आदानक्रियावाचके शब्दे आकारसम्बन्धोस्ति इत्याकारसाम्यात् तथा उपचारः ।।

**[आदित्यसाम-उद्गीथः]**

**अथ यत् सम्प्रति मध्यन्दिने स उद्गीथः । तदस्य देवा अन्वायत्ताः । तस्मात्ते सत्तमाः प्राजापत्यानाम् । उद्गीथभाजिनो ह्येतस्य साम्नः ।। ५ ।।**

**प्र. - अथ यत् सम्प्रति मध्यन्दिने स उद्गीथः** इत्यादि । **सम्प्रति मध्यन्दिने -** ऋजुमध्यन्दिने इत्यर्थः । **प्राजापत्यानां -** [1]देवासुराणां मध्ये[1] ते **सत्तमा** - उत्तमाः इत्यर्थः । उद्गीथसत्तमशब्दयोः संयुक्ततकारश्रुतिमत्त्वसाम्यात् उपजीव्योपजीवकभावोक्तिः द्रष्टव्या ।।

**आ.भा. - अथ यत् सम्प्रति** इत्यादि । **सम्प्रति मध्यन्दिने -** ऋजुमध्यन्दिने **प्राजापत्यानां -** प्रजापत्यापत्यानां देवासुराणां मध्ये ते **सत्तमाः -** अत्युत्तमाः इत्यर्थः । अत्र उद्गीथसत्तमशब्दयोः संयुक्ततकारश्रुतिमत्वं समानमेव । अतः उपजीव्योपजीवकभावः इति ।।

---

1. देवासुराणां - ख ।

**सु. - अथ यन्मध्यन्दिने** रूपमादित्यस्य **सोऽयमुद्गीथः ।** उद्गीथे माध्यन्दिनम् आदित्यं रूपम् अध्यस्य भावयेत् इति भावः । **तदस्य** माध्यन्दिनं रूपं **देवाः अन्वायत्ताः ।** तद्धि रूपं विशेषतो द्योतते, देवाश्च द्योतनस्वभावाः, तद्युक्तं नाम देवानां माध्यन्दिनादित्यरूपोपजीव्यत्वम् । यतः एते **एतस्य साम्नः** - सामात्मकस्य एतस्य आदित्यस्य उद्गीथात्मकमाध्यन्दिनरूपभाजिनः, **तस्मात्ते प्राजापत्यानां** - काश्यपानां मध्ये सत्तमाः भवन्ति । द्योतनातिशयात् माध्यन्दिनम् आदित्यरूपं हि प्रकृष्टम् । प्रकृष्टोपजीव्यत्वात् एषां सत्तमत्वं युक्तमिति भावः । उत्तमो गीथो ह्युद्गीथः । सत्तमः इत्युत्तमात् अनन्यार्थं, तद्युक्तम् उद्गीथभाजिनां सत्तमत्वम् इति वा ।।

[प्रतिहारलक्षणम्]

**अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात्, स प्रतिहारः । तदस्य गर्भा अन्वायत्ताः । तस्मात्ते प्रतिहृता नावपद्यन्ते, प्रतिहारभाजिनो ह्येतस्य साम्नः ।। ६ ।।**

**प्र. - अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारः** इत्यादि । सवितुः प्रतिहारभक्तिरूपोपजीवित्वादेव ऊर्ध्वं प्रतिहृताः सन्तः **गर्भाः नावपद्यन्ते -** द्वारे सत्यपि नाधः पतन्ति इत्यर्थः ।।

**आ.भा. - अथ यदूर्ध्वम्** इत्यादि । आदित्यस्य प्रतिहारभक्तिरूपोपजीव्यत्वादेव ऊर्ध्वं प्रतिहृताः सन्तः गर्भाः **नावपद्यन्ते -** द्वारे सत्यपि नाधः पतन्ति इत्यर्थः ।।

**सु. -** अथ मध्यन्दिनादूर्ध्वं, अपराह्णात् परिसमाप्यमानात् प्राक् यद्रूपम् आदित्यस्य स प्रतिहारः । प्रतिहारे तद्दृष्टिः कार्या इति यावत् ? अस्य आदित्यस्य तदापराह्णं रूपं प्रतिहारात्मकं **गर्भा अन्वायत्ताः -** उपजीवन्ति, यत् **एतस्य -** सामात्मकस्य आदित्यस्य प्रतिहारात्मकरूपभाजिनः एते गर्भाः । तस्मादेव **ते** उदरे **प्रतिहृताः**, सत्यपि पतनद्वारे **नावपद्यन्ते -** नाधः च्यवन्ति ।।

[उपद्रवलक्षणम्]

**अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात्, स उपद्रवः । तदस्यारण्याः अन्वायत्ताः । तस्मात्ते पुरुषं दृष्ट्वा कक्षँ श्वभ्रमित्युपद्रवन्ति । उपद्रवभाजिनो ह्येतस्य साम्नः ।। ७ ।।**

**प्र. - अथ उपद्रवः** इत्यादि । आदित्यसम्बन्ध्युपद्रवभक्त्युपजीवित्वात् एव पुरुषदर्शनभीतानां आरण्यानां कक्षश्वभ्रादिषु उपद्रवणम् इत्यर्थः ।।

**आ.भा. - अथ यदूर्ध्वमपराह्णात्** इत्यादि । आदित्यसम्बन्ध्युपद्रवभक्त्युपजीवित्वात् एव मनुष्यदर्शनभीतानां कक्षश्वभ्रादिषु उपद्रवणम् इत्यर्थः ।।

**सु. - अपराह्णात् ऊर्ध्वम् अस्तमयात् प्राक्** सायाह्ने यदादित्यस्य रूपं **स उपद्रवः** । उपद्रवे तद्रूपदृष्टिः कार्या इति यावत् । अस्य तद्रूपं **आरण्याः - पशवः** उपजीवन्ति । यस्मादेतस्य साम्न आदित्यस्य उपद्रवाख्यसायाह्नरूपोपजीविन आरण्या पशवः **तस्मात्ते पुरुषं दृष्ट्वा** भीत्या **कक्षं** - गर्तं वा **उपद्रवन्ति** - अभिधावन्ति । उपद्रवोपजीविनाम् उपद्रवान्वयो युक्तः इति भावः ।।

**[निधनलक्षणम्]**

**अथ यत्प्रथमास्तमिते, तन्निधनम् । तदस्य पितरोऽन्वायत्ताः । तस्मात्तान्निदधति ; निधनभाजिनः ह्येतस्य साम्नः । एवं खल्वमुमादित्यँ सप्तविधँ सामोपास्ते ।। ८ ।।**

**।। इति नवमः खण्डः ।।**

**प्र. - अथ......साम्नः** । श्राद्धकर्तारो हि दर्भेषु पितॄन् निक्षिपन्ति, तदर्थान् पिण्डान् वा इत्यर्थः । **निधनभाजिनः हि** - निधनोपजीवित्वात् पितॄणां दर्भेषु निधनं प्राप्तवन्तः । उक्तमुपासनम् उपसंहरति **ह्येवं......उपास्ते** ।।

**आ.भा. - अथ यदित्यादि । तस्मात्तान्निदधति** - श्राद्धकर्तारः पुत्रादयः दर्भेषु पितॄन्, तदर्थपिण्डान् निक्षिपन्ति । **निधनभाजिनः** इति । निधनोपजीवित्वात् पितृणां दर्भेषु निधनं प्राप्तवन्तः । उपसंहरति **एवम्......उपास्ते** इति ।।

**सु. - अथ प्रथमास्तमिते यद्रूपं** - अस्तं गच्छति यद्रूपं सवितुः **तन्निधनम्** निधने तद्रूपम् अध्यस्य चिन्तयेत् इति यावत् । अस्य तद्रूपं **पितरः अन्वायत्ताः** - उपजीवन्ति । यस्मात् **एतस्य साम्नः** - आदित्यस्य निधनाख्यरूपोपजीविनः ते, **तस्मात्तान्** - पितॄन्

निदधति दर्भेषु । सामसप्तविधम् एवंप्रकारेण अवयवशो विभक्तम् **आदित्यमुपास्ते** - उपासीत इति यावत् ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**[सप्तविधे साम्नि आत्मसंमितत्वातिमृत्युत्वोपासनम्]**

**अथ खल्वात्मसंमितमतिमृत्यु सप्तविधँ सामोपासीत, हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत् समम् ।। १ ।।**

**प्र. - अथ......उपासीत । अथ** - अध्यस्तादित्यभावसप्तविधसामोपासनोपदेशानन्तरम् अतिक्रान्तादित्यसप्तविधसामोपासनम् उपदिश्यंते इत्यर्थः । अत्र **मृत्युशब्देन** आदित्यः अभिधीयते । आदित्यस्य अहोरात्रकालावर्तनेन जगन्नाशहेतुत्वात् मृत्युत्वम् । **आत्मसंमितम्** - आत्मनां स्वेषाम् एषामेव त्र्यक्षरत्वेन परस्परसंमितत्वकथनात् आत्मसंमितत्वम् । द्वाविंशत्यक्षरात्मकस्य सप्तविधसामभक्तिविशेषस्य एकविंशति लक्षणादित्यसंख्यातिरेकित्वात् अतिमृत्युत्वम् ।

आत्मसम्मितत्वात् अतिमृत्युत्वप्रकारमेव दर्शयति । **हिङ्कार इति......समम् ।** अतश्च एतयोः उभयोः समत्वादेव आवापोद्वापौ न कर्तव्यौ इत्यर्थः ।।

**आ.भा.** - तत्र मृत्युः आदित्यः स च अहोरात्रादिकालेन जगन्नाशकारणात् मृत्युत्वम् । अथ अध्यस्तादित्यभावसप्तप्रकारकसामोपासनोपदेशात् अनन्तरम् आत्मनां स्वेषाम् एवमेव परस्परसंमितत्वकथनात् **आत्मसंमितत्वम् ।** एतादृश**मतिमृत्युः ।** सप्तप्रकारकं सामोपासनं कुर्यात् । आत्मसंमितत्वम् अतिमृत्युप्रकारं दर्शयति **हिङ्कारः** इत्यादि **सम**मित्यन्तम् । अनयोः उभयोरपि समत्वादेव आवापोद्वापौ न कर्तव्यौ इति ।।

**सु.** - उक्तं साम्नः सप्तविधोपासनम् आदित्यात्मना । येन आदित्यस्यापि अतिक्रमणं स्यात् तथाविधम् उपासनम् इदानीम् उपदिश्यते - **अथ** इत्यादिना । सप्तविधं साम उपासीत। यद्यपि इह हिङ्कारः, प्रस्तावः, प्रतिहारः, आदिः, उद्गीथः, उपद्रवः, निधनम् इति यानि नामानि साम्नः भक्तीनां तेषाम् उपासनम् उपदिश्यते । अथापि तेषां वक्ष्यमाणक्रमेण

सामत्वपरिकल्पनया साम उपासीतेति विधेः अन्वयः । उपासनप्रकारं ज्ञापयन् साम विशेषयति **आत्मसम्मितमतिमृत्यु** इति । **आत्मसम्मितं** - आत्मनः मिथः सम्मितं तुल्यतां गतम् । हिङ्कारादीनां भक्तिनाम्नां सप्तानां एकैकस्मिन् अक्षरत्रयात्मकावयवयोगनिरूपणेन आत्मसम्मितततां स्फुटीकरिष्यति अनुपदम् । **अतिमृत्यु** - मृत्युः आदित्यः, स हि अहोरात्रादिकालचक्रपरिवर्तनाधानेन सर्वस्य आयुः अपहरति। तं मृत्युम् अतितारयति इदं सामेति अतिमृत्यु । एवं प्रकारं सप्तविधं हिंकारादिभक्तिनामलक्षणं साम उपासीत । कथमस्य सामत्वं? कथं च आत्मसम्मितत्वं? कथं च अतिमृत्युता? तदुच्यते - **हिङ्कार इति** इत्यादिना । हिङ्कार इति यन्नाम तदिदं त्र्यक्षरं। यच्च प्रस्तावः इति तदपि त्र्यक्षरं तदिदं द्वयम् अन्यूनाधिकाक्षरतया मिथः सममेव । तदनयोः आत्मसम्मितत्वं, समत्वादेव सामत्वं च ।।

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत् समम् ।। २ ।।**

**प्र. - आदिरिति......तत्समम् ।** चतुरक्षरात् एकमक्षरं गृहीत्वा द्व्यक्षरे निवेशिते समं भवति इत्यर्थः ।।

**आ.भा. - आदिरिति** इत्यादि । ततः चतुरक्षरात् एकमक्षरं गृहीत्वा आद्यक्षरे निवेशिते सममेव भवति इत्यर्थः ।।

**सु. -** यद्यपि आदिरिति द्व्यक्षरं, प्रतिहारः इति चतुरक्षरम् अथापि ततः प्रतिहारपदात् इहादिशब्दे एकमक्षरं बुद्ध्या समानेयम् । तथा च तत्समं मिथो भवति ।।

**उद्गीथ इति त्र्यक्षरम् उपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति, अक्षरमतिशिष्यते । त्र्यक्षरं तत्समम् ।। ३ ।।**

**प्र. - उद्गीथ इति......समम् ।** उपद्रवः इति चतुरक्षरे एकस्मिन् अक्षरे पृथक्कृते सति अवशिष्टं त्र्यक्षरं सममेव भवति इत्यर्थः ।।

**आ.भा. - उद्गीथः** इत्यादि चतुरक्षरे उपद्रवे एकाक्षरे पृथक्कृते अवशिष्टं त्र्यक्षरम् उभयत्रापि तुल्यमेव भवति इति ।।

**सु. -** यद्यप्युद्गीथः इति त्र्यक्षरम्, उपद्रवः इति चतुरक्षरम् । अथापि उपद्रवपदे एकमक्षरं दूरीकृत्य गण्यमानं त्रिभिः त्रिभिः सममेव मिथो भवति । अतिशिष्यते नाम एकमक्षरम् । तदेवं त्र्यक्षरं तत्समम् अभूत् ।।

**निधनमिति त्र्यक्षरं तत्सममेव भवति । तानि ह वा एतानि द्वाविंशतिः अक्षराणि ।। ४ ।।**

**प्र. - निधनमिति त्र्यक्षरं तत्सममेव भवति** । उपसंहरति । **तानि अक्षराणि** । स्पष्टोऽर्थः ।।

**आ.भा. -** सर्वं स्पष्टम् ।।

**सु. -** निधनमिति त्र्यक्षरं तत्सममेव भवति । अन्यैः हिङ्कारादिभिः । **तान्येतानि** हिङ्कारादीनाम् अवयवभूतानि **अक्षराणि द्वाविंशतिः । ह वा** इति प्रसिद्धौ ।।

**एकविंशत्यादित्यमाप्नोति एकविंशो वा इतोऽसावादित्यः । द्वाविंशेन परमादित्याज्जयति । तन्नाकं तद्विशोकम् ।। ५ ।।**

**प्र. - एकविंशत्या......आदित्यः** । 'द्वादशमासाः पञ्चर्तवः त्रय इमे लोकाः असावादित्य एकविंशः' (ऐ.ब्रा.४-५, तां.ब्रा.१०-१-१०) इति श्रुतेः यतः आदित्यस्य एकविंशत्वं, अतः सप्तविधभक्तिनामाक्षरगतैकविंशतिसंख्यया एकविंशतिसंख्याकम् आदित्यं प्राप्नोति । आदित्यसालोक्यं प्राप्नोति इत्यर्थः । **द्वाविंशेन......तद्विशोकम्** । अवशिष्टेन **द्वाविंशेन** अक्षरेण **आदित्यात्** परं दुःखासम्भिन्नं लोकं प्राप्नाति इत्यर्थः ।।

**आ.भा. - एकविंशत्या** इत्यादि । द्वादश मासाः पञ्च ऋतवः, त्रय इमे लोकाः आदित्यश्च इति एवं प्रकारेण आदित्यस्य एकविंशत्वम् । ततः सप्तप्रकारकभक्तिनामाक्षरगतैकविंशतिसंख्यया एकविंशतिसंख्याकम् **आदित्यं** प्राप्नोति । सवितुः सालोक्यं प्राप्नोति इति। **द्वाविंशेन** इत्यादि । **द्वाविंशेन अक्षरेण आदित्यात्परं** दुःखरहितं लोकं आदित्यजयं च प्राप्नाति इत्यर्थः ।।

**सु. - निधनमिति त्र्यक्षरं तत्सममेव भवति ।** अन्यैः हिङ्कारादिभिः । तान्येतानि हिङ्कारादीनाम् अवयवभूतानि **अक्षराणि द्वाविंशतिः ।** ह वा इति प्रतिद्धौ । तदेवम् एकाक्षराधिकम् एकविंशत्यक्षरसमुदायं त्रिभिः त्रिभिः अक्षरैः आत्मसम्मितततां प्राप्तैः समतया सामतामुपगतैः सप्तभिः विधाभेदैः उपेतम् अनेन प्रकारेण यः उपास्ते स उपास्यमाने तस्मिन् अन्तर्गतया **एकविंशत्या आदित्यमाप्नोति ।** कुतः? **आदित्यो ह्यसौ एकविंशः इतो** लोकात्, कथम्? 'द्वादशमासाः पञ्चर्तवः त्रय इमे लोकाः असावादित्य एकविंश' (ऐ.ब्रा.४-५ तां.ब्रा.१०-१-१०) इति श्रुतेः । यदक्षरमधिकमवशिष्टं तेन **द्वाविंशेन** यः **आदित्यात्परो** लोकस्तं **जयति,** प्राप्नोतीति यावत् । किं तत्स्थानम्? **तन्नाकं तद्विशोकम् ।** कं - सुखम्, अकं - असुखम्, यत्र न तत् **तन्नाकं,** दुःखासम्भिन्नं स्थानमिति यावत् । अत एव तद्विशोकं तद्गतानां न शोकप्रसङ्गः इति भावः । अतिमृत्युत्वम् अनेन प्रकारेण ज्ञापितं भवति ।।

**आप्नोतीहादित्यस्य जयम्; परो हास्यादित्यजयाज्जयो भवति । य एतदेवं विद्वान् आत्मसंमितमतिमृत्यु सप्तविधँ सामोपास्ते सामोपास्ते ।। ६ ।।**

**।। इति दशमः खण्डः ।।**

**प्र. - आप्नोतीहादित्यस्य जयम्** इति । **इह** - लोके आदित्यजयं प्राप्नोति इत्यर्थः । **परो हास्य विद्वान्** इत्यादि । य [1]एवमुपास्ते तस्य[1] [2]आदित्यजयात्[2] [3]सर्वोत्कर्षो[3] भवति इत्यर्थः ।।

**आ.भा. - परो ह** इत्यादि । अस्मादादित्यजयात् सर्वोत्कर्षो भवति इत्यर्थः । अन्यत् सर्वं स्पष्टम् ।।

**सु. -** एवमात्मसम्मितत्वम् अतिमृत्युत्वं च उपपाद्य फलेन उपसंहरति । **य एवम्** उक्तप्रकारेण **विद्वान् सप्तविधं साम** भक्तिनामाक्षरसमुदायात्मकम् आत्मसम्मितत्वेन अतिमृत्युत्वेन च उपास्ते स आदित्यलक्षणस्य मृत्योः जयम् अतिक्रमणं प्राप्नोति । आदित्यजयाच्च अस्मात्परो जयः - आदित्यात् अर्वाचीनानां जयात् उत्कृष्टो **जयोऽस्य भवति ।** विमृत्युः विशोको भवति इत्ययम् उत्कर्षः इतरेभ्यः । द्विरुक्तिः प्रक्रान्तपरिसमाप्तौ ।।

**।। इति दशमखण्डभाष्यम् ।।**

---

1. अस्य - ख । 2. आदित्यस्य जयात् - अ,आ । 3. सर्वोत्कृष्टो - अ,आ ।

## एकादशः खण्डः

[प्राणेषु गायत्रसामोपासनम्]

**मनो हिङ्कारो, वाक् प्रस्तावः, चक्षुरुद्गीथः, श्रोत्रं प्रतिहारः, प्राणो निधनम् । एतद् गायत्रं प्राणेषु प्रोतम् ।। १ ।।**

**प्र.** - अथ गायत्ररथन्तरादिसामोपासनं प्रस्तूयते - **मनो......निधनम्** इति । गायत्राख्यस्य साम्नः हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्यपञ्चविधभक्तिषु मनो वाक्चक्षुश्श्रोत्रप्राणदृष्टिः कर्तव्या इत्यर्थः । **एतद्गायत्रं[१] प्राणेषु प्रोतम् ।** अनेन आकारेण गायत्राख्यस्य साम्नः मन आदि प्राणानां च अध्यासाधिष्ठानभावलक्षणसम्बन्धेन परस्परसम्बद्धम् इत्यर्थः ।।

**आ.भा.** - (अतः परं गायत्ररथन्तरादि) सामोपासनं प्रदर्शयति - **मनोनिधनम्** इति। गायत्रनामकसाम्नः हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधननामकपञ्चप्रकारकभक्तिविषये मनोवाक्चक्षुःश्रोत्रप्राणबुद्धिः कार्या इति समुदितार्थः । **एतद्** इत्यादि । प्रोतम् इत्यस्य आश्रितम् इत्यर्थः । अनेन प्रकारेण गायत्रनामकसाम्नः मनःप्रभृतिप्राणानां च अध्यासाधिष्ठानभावलक्षणसम्बन्धेन परस्परसम्बद्धम् इति ।।

**सु.** - सामान्यतः साम्नः भक्तिभूतानां हिंकारादीनाम् उपासनम् उक्तम् । अथ गायत्रादि सामविशेषस्य भक्तिभेदानां तेषाम् उपासनम् उच्यते । तत्र गायत्रस्य प्रथमम् उपासनप्रकारो निरूप्यते **मन** इति । **गायत्रं प्राणेषु प्रोतं** - सम्बद्धम् । गायत्रं साम प्राणदृष्ट्या भावयेदिति यावत् । कथम्? गायत्रस्य साम्नो यो **हिंकारस्तन्मनः**, यः **प्रस्तावः** सा **वाक्**, य **उद्गीथः** तच्चक्षुः, यः **प्रतिहारः** तच्छ्रोत्रम्, **यन्निधनं** स मुख्यः **प्राणः**, मनःप्रभृतीन् यथाक्रमं हिङ्कारादिषु अध्यस्य भावयेत् इति यावत् । तदेवं गायत्रभक्तिभेदभूतहिङ्कारादीनां प्राणभेदमनःप्रभृत्यात्मकत्वेन चिन्तनीयतया गायत्रस्य प्राणेषु प्रोतता ।।

---

१. गायत्रं साम तावत् - तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् (सा.सं.१३-४-१) इत्यस्यां ऋचि उत्पन्नम् । तथा च श्रुतिः - प्राणो वै गायत्री (जै.ब्रा.१-२७२) इति । 'गायन्तं (त्रायन्तं) त्रायते यस्माद्गायत्रीयं ततः स्मृता' इति च स्मर्यते ।।

[तस्य फलम्]

**स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद, प्राणी भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान्कीर्त्या । महामनाः स्यात्, तद्व्रतम् ।। २ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र.** - तत्फलमाह - **स य......वेद** इत्यादि । **प्राणी भवति** - अविकलेन्द्रियो भवति इत्यर्थः । **ज्योक्** - उज्वलः, व्याध्यादिभिः अनुपहतः इत्यर्थः । **महामनाः स्यात्** - वदान्यमनस्को भवेत् इत्यर्थः **तद्व्रतम्** - महामनस्कत्वम् एतदुपासनाङ्गम् इत्यर्थः । एवमग्रेऽपि नेयम् । शिष्टं स्पष्टम् ।।

**आ.भा.** - फलश्रुतिम् उक्तोपासनस्य दर्शयति । **स यः** इत्यादि । **यः** - उपासकः **एवम्** उक्तप्रकारेण **वेद** - जानाति समुपास्ते **स प्राणी भवति** - परिपूर्णेन्द्रियो भवति इत्यर्थः । **ज्योक्** - उज्ज्वलः व्याध्यादिरहितजीवनो भवति इति । **महान्** इत्यादि । परिपूर्णकीर्तिः पश्वादियुक्तो भवति इत्यर्थः । **महामनाः** - वदान्यमनस्को भवति इत्यर्थः । **तद्व्रतम्** - महामनस्कत्वम् एतदुपासनाङ्गम् इत्यर्थः । एवं सर्वत्रापि । अवशिष्टं सुगमम् ।।

**सु.** - **य एवम्** उक्तेन प्रकारेण **गायत्रं** साम **प्राणेषु प्रोतं** - सम्बद्धं **वेद** - प्राणात्मना उपासीत । **स प्राणी** - अनुपहतमनःप्रभृतिप्राणशक्तिको भवति । यावदायुः मनुष्यस्य तावत् सर्वम् आयुःशतम् आप्नोति । **ज्योक्** - उज्ज्वलो जीवति । लोकेऽस्मिन् दीप्तिमान् भवति । **प्रजया पशुभिः महान् भवति** । भवति च **महान् कीर्त्या** । अस्य उपासकस्य इदं **तद्व्रतम्** । **यन्महामनाः स्यात्** इति । महामनस्त्वम् अस्य उपासनस्य अङ्गभूतम् इति यावत् ।।

**।। इति एकादशखण्डभाष्यम् ।।**

## द्वादशः खण्डः

[रथन्तरसाम्नः उपासनम्]

**अभिमन्थति स हिङ्कारः धूमो जायते स प्रस्तावः, ज्वलति स उद्गीथः, अङ्गारा भवन्ति स प्रतिहारः, उपशाम्यति तन्निधनँ सँशाम्यति तन्निधनम् । तद्रथन्तरमग्नौ प्रोतम् ।। १ ।।**

**प्र. -** अभिमन्थति इत्यादि । **उपशमः -** सावशेषः शमः । निःशेषोपशमः **संशमः** । एतद्रथन्तरं व्रतम् । अग्नेः अभिमुखो **नाचामेत्** न भक्षयेत् । **न निष्ठीवेत्** श्लेष्मादिनिरसनं च न कुर्यात् इत्यर्थः ।

**आ.भा. - अभिमन्थति स हिङ्कारः** । उपशाम्यति तत्रोपशमः **सावशेषः शमः** । **निःशेषोपशमः शंशमः** । अग्नेः अभिमुखो **नाचामेत् -** न भक्षयेत् अन्नादिकम् **न निष्ठीवेत** श्लेष्मादिपरित्यागं च न कुर्यादिति 'नाप्सु मूत्रं पुरीषं वा ष्ठीवनं नैव कारयेत्' (म.स्मृ.४-५६) इति स्मृतेः, जनपदम् अग्नेरुपलक्षकमिति ।।

**सु. -** अथ रथन्तरस्य उपासनमाह । **अभिमन्थति स हिङ्कारः -** योऽयम् अभिमन्थनाख्यो व्यापारः स हिंकारः । अग्नेः प्रथमम् अभिमन्थनम्, भक्तिषु च प्रथमो हिंकारः, अतः तस्मिन् तद्दृष्टिः अभिप्रेता । अभिमन्थनम् अनु यो **धूमो जायते स प्रस्तावः** । यत् **ज्वलति स उद्गीथः** । ये **अङ्गारा भवन्ति स प्रतिहारः** । **यदुपशाम्यति -** किञ्चित् शाम्यति तदुपशमनं **निधनम्** । यच्च सम्यक् **शाम्यति** तत्संशमनं, तच्च **निधनम्** । **एतद्रथन्तरमग्नौ प्रोतम् -** उक्तप्रकारेण अग्नौ सम्बद्धम् । हिंकारादिषु यथाक्रमम् अभिमन्थनादिदृष्ट्या रथन्तरं सामाग्नित्वेन उपासीत इति भावः ।।

**स, य एतदेवं रथन्तरमग्नौ प्रोतं वेद, ब्रह्मवर्चस्यन्नादो भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्; तद्व्रतम् ।। २ ।।**

**।। इति द्वादशः खण्डः ।।**

**प्र. - स य वेद** इत्यादि । अग्नेरभिमुखो[१] **नाचामेत् -** न भक्षयेत् । **न निष्ठीवेत् -** श्लेष्मादिनिरसनञ्च न कुर्यादित्यर्थः ।।

**सु. - य एवम् -** उक्तप्रकारेण रथन्तरं साम अग्नौ प्रोतं वेद, ब्रह्मणा वेदेन **यद्वर्चः** तेजः, वृत्ताध्ययनादिजन्यं तेज इति यावत् । तेन असौ युक्तो भवति । **अन्नादश्च भवति -** जाठराग्निबलसम्पन्नो भवति । ज्योग् जीवति महान्प्रजया पशुभिः भवति महान् कीर्त्या

---

१. तथा च स्मर्यते - 'नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्' ।। इति । (मनु.स्मृ.४-५३)

सर्वमायुरेति पूर्ववत् । **अग्निं प्रत्यक्** - अग्निमभि **नाचामेत्** । **न निष्ठीवेत्** । तदिदम् अस्य उपासकस्य व्रतम् । एतत् उपासनाङ्गम् इति यावत् ।।

।। इति द्वादशखण्डभाष्यम् ।।

## त्रयोदशः खण्डः

[मिथुने वामदेव्योपासनम्]

**उपमन्त्रयते स हिङ्कारः, ज्ञपयते स प्रस्तावः, स्त्रिया सह शेते स उद्गीथः, प्रतिस्त्रीं सह शेते स प्रतिहारः, कालं गच्छति तन्निधनम् , पारं गच्छति तन्निधनम् । एतद्वामदेव्यं मिथुने प्रोतम् ।। १ ।।**

**प्र. - उपमन्त्रयते स हिङ्कारः । उपमन्त्रणं** - संकेतकरणम् । **ज्ञपयते स प्रस्तावः । ज्ञपनं** - तोषणम् । मरणतोषणानिशामनेषु मित्वात् ज्ञा धातोर्ह्रस्वः । **स्त्रिया सह शेते स उद्गीथः** । एकपर्यङ्कोपवेशनं सहशयनम् । **प्रतिस्त्री सह शेते स प्रतिहारः** । स्त्रिया आभिमुख्येन शयनम् इत्यर्थः । **कालं......निधनम्** । मैथुननिवृत्तिः इत्यर्थः ।।

**आ.भा. - उपमन्त्रयते** - सङ्केतं करोति **स हिङ्कारः ज्ञपयते** - तोषयति **स्त्रिया सह शेते** । एकस्मिन् पर्यङ्कादौ समुपवेशनं सहशयनम् **प्रतिस्त्रीम्** इति । स्त्रिया सह आभिमुख्येन शयनम् । **कालमिति** । मैथुननिवृत्तिः इत्यर्थः ।।

**सु. - उपमन्त्रयते** - सङ्केतं करोति इति यावत् । तत् हिंकारः । **ज्ञपयते** - अनुवर्तनेन तोषयतीति यावत् । **स प्रस्तावः** । अन्यत् स्पष्टम् । ननु साम्नां भक्तौ ग्राम्यधर्मदृष्टिविधानं कथम्? उत्कृष्टदृष्टिर्हि न्याय्या । सत्यम्, पश्वादीनाम् इव कामकण्डूतिचेष्टितरूपतां विना स्त्रीपुरुषयोः उत्तराधरारणित्वेन भावनया धर्मरूपा या प्रवृत्तिः अकामकलङ्किता सा इह विवक्षिता इति नात्र कलंकावसरः ।।

[वामदेव्योपासनस्य फलम्]

**स य एवमेतद् वामदेव्यं मिथुने प्रोतं वेद, मिथुनीभवति, मिथुनात् मिथुनात् प्रजायते, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । न काञ्चन परिहरेत्, तद्व्रतम् ।। २ ।।**

।। इति त्रयोदशः खण्डः ।।

**प्र.** - फलमाह......**स य......वेद** इत्यादि । **मिथुनी भवति** । सर्वदा स्त्रिया अवियुक्तो भवति इत्यर्थः । **मिथुनान्मिथुनात्प्रजायते** । अमोघरेताः भवति इत्यर्थः । **न काञ्चन परिहरेत् तद्व्रतम्** । काञ्चन स्त्रियं प्रार्थयमानाम् इति शेषः । प्रार्थयमानसर्वयोषिद्गमनस्य वामदेव्योपासनाङ्गत्वेन विधानात् परदारगमनप्रतिषेधकवचनानि तदतिरिक्तविषयाणि द्रष्टव्यानि ।।

**आ.भा.** - फलं दर्शयति । **स यः** इत्यादि । **मिथुनी भवति** - स्त्रिया सह सर्वदा अवियुक्तो भवति इति । **मिथुनात्** इति - अमोघवीर्यो भवति । **न काञ्चन** इति । प्रार्थयमानां कामपि **न परिहरेत्** । परस्त्रीगमनप्रतिषेधशास्त्रं वामदेव्योपासनाव्यतिरिक्तपरकम् इति न परस्परं विरोधः इति ।।

**सु.** - **मिथुनीभवति** - विधुरो भवति । **मिथुनान्मिथुनात्प्रजायते** - अमोघरेताः भवति । **न काञ्चन परिहरेत्** इति तस्य **व्रतम्** । श्रुत्या धर्मस्य गतिः इत्यभिज्ञाः ।।

## चतुर्दशः खण्डः

[आदित्ये बृहत्सामोपासनम्]

**उद्यन् हिङ्कारः, उदितः प्रस्तावः मध्यन्दिन उद्गीथः, अपराह्णः प्रतिहारः, अस्तं यन्निधनम् । एतद्बृहदादित्ये प्रोतम् ।। १ ।।**

**प्र.** - **उद्यन् हिङ्कारः उदितः प्रस्तावः** इत्यादि । आदित्य इति शेषः । **मध्यन्दिन उद्गीथः** । मध्यन्दिनकालावच्छिन्नः आदित्यः उद्गीथः इत्यर्थः । **अपराह्णः प्रतिहारः** । अपराह्णकालावच्छिन्नः आदित्यः प्रतिहारः इत्यर्थः । **अस्तं यन्निधनम्** । **यन्** - गच्छन् इत्यर्थः ।।

**आ.भा.** - **उद्यन्** सूर्यो **हिङ्कारः** । **उदितः** - उदितकालावच्छिन्नः **प्रस्तावः मध्यन्दिनः** - मध्यन्दिनकालावच्छिन्नः सविता उद्गीथः । अस्तं यन् धनं अस्तं गच्छन् **निधनम्** ।

**सु.** - अथ बृहत्साम्न उपासनम् उच्यते । य उद्यन् आदित्यः स हिङ्कारः । य **उदितः** स **प्रस्तावः** । यो **मध्यन्दिनः** स **उद्गीथः** । य **अपराह्ण** स **प्रतिहारः** । योऽस्तं

**यन्** अस्तं गच्छन् आदित्यः स **निधनम्** । एवं तत्र तत्र आदित्यस्वरूपदृष्ट्या एतत् बृहत्साम आदित्ये प्रोतम् । आदित्यात्मना उपासीत इति यावत् ।।

**स य एवमेतद्बृहदादित्ये प्रोतं वेद, तेजस्व्यन्नादो भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या, तपन्तं न निन्देत् ; तद्व्रतम् ।। २ ।।**

**।। इति चतुर्दशः खण्डः ।।**

**प्र. - स य एवमेतद्बृहदादित्ये प्रोतं वेद** इत्यादि । **तपन्तं न निन्देत् तद्व्रतम्** । तपन्तम् आदित्यं न निन्देत् इत्यर्थः ।।

**आ.भा. - तपन्तम्** इत्यादि । **तपन्तं** सूर्यं **न** कथमपि **निन्देत्** । तस्य निन्दां न कुर्यात् इति ।

**सु. - स य एवम्** इत्यादि पूर्ववत् । रश्मिभिः उग्रैः तपन्तम् आदित्यं न निन्देत् इत्येतदस्य बृहत्सामोपासकस्य व्रतम् ।।

**।। इति चतुर्दशखण्डभाष्यम् ।।**

## पञ्चदशः खण्डः

[पर्जन्येवैरूप्यसामोपासनम्]

**अभ्राणि संप्लवन्ते स हिङ्कारः, मेघो जायते स प्रस्तावः, वर्षति स उद्गीथः, विद्योतते स्तनयति स प्रतिहारः, उद्गृह्णाति तन्निधनम् । एतद् वैरूपं पर्जन्ये प्रोतम् ।। १ ।।**

**प्र. - अभ्राणि सम्प्लवन्ते स हिङ्कारः । अभ्राणि** - जलधारकत्वमात्रावस्थापन्नानि। **संप्लवः** - सञ्चारः । **मेघो जायते । मेघः** - सेचकत्वावस्थापन्नः । **उद्गृह्णाति** - उद्ग्रहणम् वर्षसमाप्तिः । **एतद् वैरूपं पर्जन्ये प्रोतं । वैरूपं** - वैरूपाख्यं साम इत्यर्थः ।

**आ.भा. - अभ्राणि** इत्यादि । तत्र अभ्रं नाम जलधारकत्वमात्रावस्थापन्नं धूमादीनां संघातात्मकं **सम्प्लवः** - सञ्चरणम् । **मेघो जायते** । सेचकत्वावस्थाम् आपन्नो

मेघः **स प्रस्तावः । उद्गृह्णाति ।** तत्र उद्ग्रहणं वर्षसमाप्तिः । **एतद् वैरूपमिति ।** तत्र वैरूपं वैरूपाख्यं साम इत्यर्थः ।

**सु. -** अथ वैरूपस्य साम्न उपासनमुच्यते । **यानि** अभ्राणि - अद्भिरापूर्णानि वियति **सम्प्लवन्ते -** सञ्चरन्ति । वृष्टेः प्राग्रूपाणि तानि हिंकारः । **यो मेघो जायते स प्रस्तावः ।** सेचनात् मेघः । **यो वर्षति स उद्गीथः, -** वृष्टेः पूरः इति सेकात् विशेषः । **विद्योतते स्तनयति** इति **यत् स प्रतिहारः । उद्गृह्णाति** वृष्टिधाराः इति **यत् -** वृष्टेः समाप्तिरिति यावत् , स निधनम् , य उद्गृह्णाति स वा निधनम् । एवं तत्र तत्र तद्दृष्ट्या एतद्वैरूपं साम पर्जन्ये प्रोतम् । पर्जन्यात्मना उपासीत इति यावत् ।।

[तस्य फलम्]

**स, य एवमेतद् वैरूप्यं पर्जन्ये प्रोतं वेद, विरूपाँश्च सुरूपाँश्च पशूनवरुन्धे, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । वर्षन्तं न निन्देत्; तद्व्रतम् ।। २ ।।**

**।। इति पञ्चदशः खण्डः ।।**

**प्र. - स य अवरुन्धे । विरूपान् -** [1]विविधरूपान्[1] **सुरूपान् -** शोभनरूपान् **अवरुन्धे -** प्राप्नोति इत्यर्थः । **वर्षन्तं न निन्देत् तद्व्रतम् । वर्षन्तं -** पर्जन्यम् इत्यर्थः ।।

**आ.भा. -** उपासनाफलं दर्शयति । **स यः** इत्यादि । **विरूपान् -** विरुद्धानेकरूपान् **सुरूपान् -** शोभनरूपान् - **अवरुन्धे -** प्राप्नोति इति । **वर्षन्तं** पर्जन्यं **न निन्देत् ।** अन्यत् सर्वं पूर्ववत् ।।

**सु. - सुरूपान् -** शोभनरूपान् , **विरूपान् -** विभिन्नरूपान् , नानाजातीयान् इति यावत् । **पशूनवरुन्धे ।** विरूपांश्च सुरूपांश्च अवरुन्धे पशूनिति वा । **अवरुन्धे -** स्वस्वगृहाङ्गणे रुणद्धि, पशुमान् यावत् । **महान् प्रजया पशुभिः -** प्रजापशुसन्ततिभिः महान् भवति । **वर्षन्तं** जलमुचं **न निन्देत्** इत्येतदस्य **व्रतम् ।।**

**।। इति पञ्चदशखण्डभाष्यम् ।।**

---

1. विरुद्धनानारूपान् - अ,आ,क,ख ।

## षोडशः खण्डः

[वैराजसाम्नः उपासनम्]

**वसन्तो हिङ्कारः, ग्रीष्मः प्रस्तावः, वर्षा उद्गीथः, शरत् प्रतिहारः, हेमन्तो निधनम् । एतद् वैराजमृतुषु प्रोतम् ।। १ ।।**

**स य एवमेतद् वैराजमृतुषु प्रोतं वेद, विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन, सर्वमायुरेति, ज्योग्जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । ऋतून् न निन्देत्, तत् व्रतम् ।। २ ।।**

**।। इति षोडशः खण्डः ।।**

**प्र. - वसन्तो हिङ्कारः** इत्यादि । स्पष्टम् । **वैराजं** - वैराजाख्यं साम इत्यर्थः ।।

**आ.भा. - एतत्** इत्यादि । **एतद् वैराजं** - वैराजाख्यं साम ऋतुषु **प्रोतम्** - श्रितम् । अन्यत् सर्वं पूर्ववत् ।।

**सु. -** अथ वैराजस्य साम्न उपासनम् उच्यते । **वर्षा** - वर्षर्तुः । **वैराजं** - वैराजाख्यं साम । उक्तेन प्रकारेण हिङ्कारादिषु वसन्तादिदृष्ट्या ऋतुत्वेन वैराजं सामोपासीत इति यावत् ।।

**।। इति षोडशखण्डभाष्यम् ।।**

## सप्तदशः खण्डः

[शक्वरीसाम्नः उपासनम्]

**पृथिवी हिङ्कारः, अन्तरिक्षं प्रस्तावः, द्यौरुद्गीथः, दिशः प्रतिहारः, समुद्रो निधनम् । एताः शक्वर्यो लोकेषु प्रोताः ।। १ ।।**

**प्र. - पृथिवी हिङ्कारः** इत्यादि । स्पष्टम् । **शक्वर्यः** - शक्वर्याख्यं साम इत्यर्थः । [1]नित्य[1]बहुवचनम् ।।

---

1. शक्वर्यः इति नित्यं - क ।

**आ.भा. - पृथिवी** इत्यादि । शक्कर्यः तदाख्यं साम । शक्करीशब्दो नित्यबहुवचनम् ।।

**सु. -** अथ शक्कर्याख्यस्य साम्न उपासनम् उच्यते । एताः शक्कर्यः सामविशेषाः, शक्कर्य इति नित्यं बहुवचनम् ।।

[शक्करीसाम्नः फलम्]

**स य एवमेताः शक्कर्यो लोकेषु प्रोता वेद लोकीभवति, सर्वमायुरेति, ज्योग् जीवति महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । लोकान् निन्देत्, तद् व्रतम् ।। २ ।।**

**।। इति सप्तदशः खण्डः ।।**

**प्र. - स य एवमेताः** इत्यादि । **लोकीभवति** - उत्तमलोकप्राप्तो भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. -** फलश्रुतौ लोकीभवति इत्यस्य उत्तमलोकं प्राप्नोति इत्यर्थः । अन्यत् सुगमम् ।।

**सु. - लोकेषु प्रोताः -** लोकत्वेन उपासीत इति यावत् ।।

**।। इति सप्तदशखण्डभाष्यम् ।।**

## अष्टादशः खण्डः

[पशुदृष्ट्या रेवतीसामोपासनम्]

**अजा हिङ्कारः, अवयः प्रस्तावो गाव उद्गीथः, अश्वाः प्रतिहारः, पुरुषो निधनम् । एतारेवत्यः पशुषु प्रोताः ।। १ ।।**

**स, य एवमेता रेवत्यः पशुषु प्रोता वेद, पशुमान् भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । पशून् न निन्देत्; तद् व्रतम् ।। २ ।।**

**।। इति अष्टादशः खण्डः ।।**

**प्र. - अजा......पशुषु प्रोताः । रेवत्यः** इत्यपि **शक्कर्यः** इतिवत् नित्यबहुवचनं, सामविशेषनाम ।।

**आ.भा. -** अत्रापि रेवत्यः तदाख्यं साम, शक्वर्यः इतिवत् नित्यबहुवचनम् । सामविशेषनाम । अन्यत् सर्वं सुगमम् ।।

**सु. -** अथ रेवत्याख्यस्य साम्नः उपासनम् उच्यते । रेवत्यः इति नित्यं बहुवचनम् ।।

**।। इति अष्टादशखण्डभाष्यम् ।।**

## एकोनविंशः खण्डः

**[अङ्गदृष्ट्या यज्ञायज्ञीयसामोपासनम्]**

**लोम हिङ्कारः, त्वक् प्रस्तावो, माँसमुद्गीथः, अस्थि प्रतिहारः, मज्जा निधनम् ; एतद् यज्ञायज्ञीयमङ्गेषु प्रोतम् ।। १ ।।**

**स य एवमेतद् यज्ञायज्ञीयमङ्गेषु प्रोतं वेद, अङ्गीभवति । नाङ्गेन विहूर्च्छति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । संवत्सरं मज्ज्ञो नाश्नीयात् ; तद् व्रतं, मज्ज्ञो नाश्नीयादिति वा ।। २ ।।**

**।। इति एकोनविंशः खण्डः ।।**

**प्र. - लोमहिङ्कारस्त्वक्प्रस्तावः** इत्यादि । स्पष्टम् ।।

**स य एवमेतद्यज्ञायज्ञीयम्** इत्यादि । **अङ्गीभवति -** समग्राङ्गयुक्तो भवति इत्यर्थः । **नाङ्गेन विहूर्च्छति । अङ्गेन -** हस्तपादादिना **न विहूर्च्छति -** कुटिलो न भवति इत्यर्थः । 'हुर्च्छा कौटिल्ये' (धा.पा.२११) इति हि धातुः। **संवत्सरं मज्ज्ञो नाश्नीयात् तद्व्रतम् । मज्ज्ञः -** मज्ञाख्यं मांसविशेषान् इत्यर्थः । **मज्ज्ञो नाश्नीयादिति वा ।** व्रतं । सर्वदा इति शेषः ।।

**आ.भा. - लोम हिङ्कारः ।** देहावयवेषु मध्ये लोम्नः प्राथम्यात् । **त्वक् प्रस्तावः** आनन्तर्यात् **मांसमुद्गीथः** सर्वेषु श्रैष्ठ्यात् । **अस्थि प्रतिहारः**, प्रतिहृतत्वात् । **मज्ञा निधनम्** अन्तेभवात् । एतद् यज्ञायज्ञीयं नाम साम देहावयवेषु मध्ये **प्रोतम् -** आश्रितम् इत्यर्थः ।

उपासनाफलमाह - **स यः** इत्यादि । **अङ्गीभवति -** समग्राङ्गो भवति । **नाङ्गेन विहूर्च्छति -** नाङ्गविकलो भवति, पङ्गुः कुणी वा इत्यर्थः । संवत्सरं वर्षमात्रं **मज्ज्ञः -**

मांसानि **नाश्नीयात्** - न भक्षयेत् **मज्ज्ञो नाश्नीयात्** - कदाचिदपि मांसभक्षणं न कुर्यात् । तद्व्रतम् इति ।।

**सु.** - अथ यज्ञायज्ञीयस्य साम्न उपासनमाह । **अङ्गीभवति** - अङ्गशोभासम्पन्नो भवति । **नाङ्गेन विहूर्च्छति** - कुटिलो भवति । **मज्ज्ञो नाश्नीयात्** - मज्ञाख्यमांसविशेषान् । इदमुपलक्षणं मांससामान्यस्य ।।

**।। इति एकोनविंशखण्डभाष्यम् ।।**

## विंशः खण्डः

**[राजनसामोपासनम्]**

**अग्निर्हिङ्कारो, वायुः प्रस्तावः, आदित्य उद्गीथः, नक्षत्राणि प्रतिहारः, चन्द्रमा निधनम्, एतद् राजनं देवतासु प्रोतम् ।। १ ।।**

**प्र.** - **अगिर्हिङ्कारः** इत्यादि । स्पष्टम् । **राजनं** - राजनाख्यं साम इत्यर्थः ।।

**आ.भा.** - **अग्निर्हिङ्कारः** इत्यादि । पूर्ववत् ।।

**सु.** - अथ राजनाख्यस्य साम्न उपासनम् उच्यते - **अग्निः** इति ।।

**[तस्य फलम्]**

**स, य एवमेतद् राजनं देवतासु प्रोतं वेद, एतासामेव देवतानाँ सलोकताँ सार्ष्टिताँ सायुज्यं गच्छति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । ब्राह्मणान्न निन्देत्, तद् व्रतम् ।। २ ।।**

**।। इति विंशः खण्डः ।।**

**प्र.** - **स य एवमेतद्राजनम्** इत्यादि । **सार्ष्टिता** - समानऋद्धित्वम् । **सायुज्यं** - समानभोग्यत्वम् । **ब्राह्मणान् न निन्देत् तद्व्रतम्** । 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः' । इति श्रुतेः । ब्राह्मणनिन्दैव देवतानिन्दा इति भावः ।।

**आ.भा. - स यः** इत्यादि । **सलोकतां -** समानलोकतां **सार्ष्टितां -** समानऋद्धित्वम् । **सायुज्यं -** सयुग्भावम् समानभोग्यत्वम् **ब्राह्मणान् न निन्देत् ।** एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः इति श्रुतेः । ब्राह्मणनिन्दा देवतानिन्दैव इत्यतः ब्राह्मणनिन्दा न कार्या इति ।।

**सु. -** उपासनफलम् उच्यते - **सः** इति । **सर्वमायुरेति** उज्ज्वलो **जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ।** परतश्च **एतासामेव** अग्न्यादि**देवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति । सलोकता -** समानलोकता, **सार्ष्टिता -** समानर्द्धिता, **सायुज्यं -** समानभोग्यभोगः । **ब्राह्मणान् न निन्देत् तद्व्रतम् ।** देवात्मना उपासनेऽस्मिन् देवनिन्दापरिहारस्यैव अङ्गत्वम् उचितम् । अथापि देवानाम् अपरं रूपं ब्राह्मणा इति तथोक्तम् । श्रूयते च, 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः' इति ।।

**।। इति विंशखण्डभाष्यम् ।।**

## एकविंशः खण्डः

**[त्रयीविद्यादिदृष्ट्या सामोपासनम्]**

**त्रयी विद्या हिङ्कारस्त्रय इमे लोकास्स प्रस्तावोऽग्निर्वायुरादित्यस्स उद्गीथो नक्षत्राणि वयाँसि मरीचयस्स प्रतिहारः, सर्पा गन्धर्वाः, पितरस्तन्निधनम् । एतत् साम सर्वस्मिन् प्रोतम् ।। १ ।।**

**प्र. - त्रयी विद्या हिङ्कारस्त्रय इमे लोकास्सः** इत्यादि । स्पष्टम् । **एतत् साम सर्वस्मिन् प्रोतम् ।** अत्र सामनामविशेषानिर्देशात् सामशब्दः सामसामान्यपरः ।।

**आ.भा. -** त्रयीत्यादिकं पूर्ववत् ।

**सु. -** अथ अविशेषेण साम्नः उपासनम् उच्यते । **त्रयी विद्या -** ऋग्यजुःसामलक्षणा । **मरीचयः -** रश्मयः । **एतत्साम सर्वस्मिन् प्रोतम् ।** अत्र सर्वशब्देन त्रय्यादयो गृह्यन्ते । त्रयो वेदास्त्रयो लोकाः अग्न्यादयस्त्रयो नक्षत्रादीनि इति बहूनां ग्रहणात् । प्रायः सर्वात्मतया भावनं प्राप्तमिति सर्वस्मिन् प्रोतं साम इत्युक्तम् ।।

[तस्य फलम्]

**स य एवमेतत् साम सर्वस्मिन् प्रोतं वेद, सर्वँ ह भवति ।। २ ।।**

**प्र. - स य एवमेतत् साम सर्वस्मिन् प्रोतं वेद** । तस्य सर्वं हि भवति । काम्यमानं सर्वम् आप्नोति इत्यर्थः[1] ।।

**आ.भा. - सर्वं ह भवति** इति - सर्वेश्वरो भवति । सर्वं काम्यमानं प्राप्नोति इत्यर्थः ।।

**सु. - सर्वं भवति -** सर्वमस्य सिद्ध्यति इत्यर्थः । यद्यदिह कामयते तदखिलं सिद्ध्यतीति भावः ।।

[त्रयीविद्यादिस्तुतिः]

**तदेष श्लोकः । यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ।। ३ ।।**

**प्र. - तदेष श्लोकः । तत् -** उक्ते सर्वात्मकसामोपासने **एषः** - वक्ष्यमाणमन्त्रोऽप्यस्ति इत्यर्थः । तमेवाह - **यानि......परमन्यदस्ति । त्रीणि त्रीणि** - त्रयी विद्या हिङ्कारस्त्रय इमे लोका [2]इत्यादिना उक्तानि[2] [त्रयीविद्या, लोकत्रयं, अग्निवाय्वादित्याः, नक्षत्रवयोमरीचयः, सर्पगन्धर्वपितरश्चेत्येतानि] यानि त्रीणि हिङ्कारादिरूपेण पञ्चधा भवन्ति । अतः **परं** - उत्कृष्टं **अन्यत्** श्रेयः किमपि नास्ति इत्यर्थः ।।

**आ.भा. - तदेष श्लोकः** - तत्कथिते सर्वात्मकसामोपासने एषः वक्ष्यमाणः मन्त्रोऽपि भवति । तमेव दर्शयति - **यानि** इत्यादि । त्रयीविद्या हिङ्कारः इत्यादिना कथितानि यानि त्रीणि त्रीणि तानि हिङ्कारादिभेदेन **पञ्चधा** - पञ्चप्रकाराणि भवन्ति । **तेभ्यः परमन्यत् ज्यायः** - श्रेष्ठं परोत्कृष्टं किमपि नास्ति ।।

**सु.** - यदिदानीं निरूपितं साम सामाख्यस्य उपासनं तदधिकृत्य एषः वक्ष्यमाणः स्तुतिरूपः श्लोकः प्रवर्तते । यानि **त्रीणि त्रीणि** - त्रयो वेदाः, त्रयः इमे लोकाः,

---

1. भूः प्राप्तिरित्यर्थः - इत्यधिकः पाठः - ख । 2. इत्युक्तानि - क ।

इत्यादीनि हिंकारादिषु भक्तिभेदेषु यथाक्रमम् अध्यस्य उपास्यतया प्रोक्तानि पञ्चधा, **तेभ्योऽन्यत्** परम् उत्कृष्टं **ज्यायः** - श्रेयो नास्ति । ज्यायःशब्देन श्रेयो लक्ष्यते । परमित्यस्यैव अन्यदिति विवरणं वा ।।

**यस्तद् वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरन्ति ।।**
**सर्वमस्मीत्युपासीत, तद् व्रतं तद् व्रतम् ।। ४ ।।**

**।। इति एकविंशः खण्डः ।।**

**प्र. - यस्तद्वेद स वेद सर्वं** । एतदुपासकः सर्वज्ञो भवति इत्यर्थः । **सर्वा......हरन्ति** । सर्वदिग्वर्तिनोपि वशीकृताः **अस्मै** - उपासकाय उपहारान् समर्पयन्ति इत्यर्थः । **सर्वमस्मीत्युपासीत** । सामसामान्ये उक्तरीत्या [1]सर्वत्वाश्रयत्वेन[1] स्वाभिन्नत्वेन च उपासना कर्तव्या इत्यर्थः । **तद् व्रतं तद् व्रतम्** । तस्य तदेव व्रतम् , नान्यद् व्रतमस्ति इत्यर्थः । द्विरुक्तिः सामोपासनसमाप्त्यर्था ।।

**आ.भा. - यः** - उपासकः **तद्वेद** - जानाति **सर्वं स वेद** - सर्वज्ञो भवति इत्यर्थः । **अस्मै** - उपासकाय सर्वाः दिशः **बलिम्** - उपायनं **हरन्ति** - समर्पयन्ति । **सर्वमस्मि** इत्यादि । सामसामान्ये पूर्वोक्तप्रकारेण सर्वाश्रयत्वेन स्वाभेदतया उपासना विधेया इति । तदेव तस्य व्रतं, नान्यद् व्रतमिति ।।

**सु.** - यः तत्सामोक्तप्रकारेण **वेद, स सर्वं वेद** - सर्वज्ञो भवति। अतीतानागतादिसाक्षात्कारसमर्थो भवति इति यावत् । **सर्वा दिशः** - दिशि वर्तमाना लक्ष्यन्ते । **अस्मै** - उपासकाय **बलिं** - भोग्यजातं **हरन्ति** - उपहरन्ति । अस्य उपासनस्य इदमङ्गं सर्वम् अहमस्मि इति भावनम् । द्विरुक्तिः विद्यासमाप्तौ ।।

**।। इति एकविंशखण्डभाष्यम् ।।**

---

1. सर्वस्य आश्रयत्वेन - क ।

## द्वाविंशः खण्डः

[गानविशेषोपदेशः]

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेः निरुक्तस्सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य । तान् सर्वानेवोपसेवेत, वारुणं त्वेव वर्जयेत् ।। १ ।।**

**प्र.** - एवं सामोपासनं समाप्य गानविशेषान् उद्गातुरुपदिशति - **विनर्दिसाम्नो वृणे पशव्यम्** इति । विशिष्टो नर्दः स्वरविशेषः, ऋषभकूजितसमः सः अस्य अस्तीति विनर्दि । गानमिति वाक्यशेषः । **साम्नः** - सामसम्बन्धि । **पशव्यं** - पशुहितम् । 'उगवादिभ्यो यत्' (पा.सू.५-१-२) इति यत् । सामसम्बन्दिविनर्दिगानं **वृणे** - प्रार्थयेत । पुरुषव्यत्ययश्छान्दसः । **अग्नेरुद्गीथोऽनिरुक्तः** । अग्निदैवत्यम् उद्गानं **अनिरुक्तः** - अस्पष्टं भवति । अस्पष्टो गानविशेषोऽग्निप्रीतिहेतुः भवति इत्यर्थः । **प्रजापतेर्निरुक्तः** । **निरुक्तः** - स्पष्टो गानविशेषः प्रजापतिदैवत्यः । प्रजापतिप्रीतिहेतुः इत्यर्थः । **सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं** । स्पष्टम् । **बलवदिन्द्रस्य** । **बलवत्** - बलवत्प्रयत्नोपेतम् इत्यर्थः । **क्रौञ्चं बृहस्पतेः** । क्रौञ्चपक्षिनादसमं बार्हस्पत्यं गानम् इत्यर्थः । **अपध्वान्तं वरुणस्य** - भिन्नकांस्यसमं वारुणगानमित्यर्थः **तान् वर्जयेत्** । अपध्वान्तगानव्यतिरिक्तान् सर्वान् उद्गीथान् उपसेवेत इत्यर्थः ।।

**आ.भा.** - पूर्वकथितप्रकारेण साम्नः उपासनं परिसमाप्य गानविशेषान् उद्गानम् उपदिशति - **विनर्दि** इत्यादि । तत्र विलक्षणो नर्दो विनर्दः स्वरविशेषः, ऋषभकूजितसमानः। स स्वरविशेषो विद्यते अस्येति विनर्दिगानम् इत्यर्थः । **साम्नः** - सामसम्बन्धिगानम् । **वृणे** - प्रार्थये । **पशव्यं** - पशुभ्यो हितम् । **अग्नेरुद्गीथोऽनिरुक्तः** - अग्निदैवत्यम् उद्गीथः उद्गानम् एवं विशिष्टमुद्गानं **वृणे** - प्रार्थये इति वाक्यशेषः । **अनिरुक्तः** - अमुकतुल्य इत्यविशेषितः अग्निदैवत्यो गानविशेषः । **प्रजापतेर्निरुक्तः** - तत्र निरुक्तः स्पष्टः स्पष्टो गानविशेषः । प्रजापतिदैवत्यः प्रजापतिप्रीतिकारणम् इत्यर्थः । **सोमस्य मृदु श्लक्ष्णं - वायोः श्लक्ष्णम्** सुस्पष्टमेतत् । **बलवदिन्द्रस्य** - वलवत्प्रयत्नयुक्तं गानम् इन्द्रस्य । **क्रौञ्चं बृहस्पतेः** - बृहस्पतिदेवतायाः क्रौञ्चपक्षिस्वरसदृशं गानं भवति इत्यर्थः । **अपध्वान्तं वरुणस्य** - भिन्नकांस्यतुल्यं वरुणदेवताकगानं भवति इति । **तान् सर्वानेवोपसेवेत** । **तान्** - अपध्वान्तगान - व्यतिरिक्तान् सर्वानेव उद्गीथान् उपसेवेत । वारुणं परिवर्जयेत् इति ।।

**सु.** - प्रसङ्गात् साम्नो गानविशेषान् सदेवताकान् उपदिशति । अस्ति हि देवताविज्ञानेन फलविशेषः । **साम्नः** सम्बन्धि यत् **विनर्दि** तदहं **वृणे,** विनर्दः - स्वरविशेषः, ऋषभकूजितसमः । सः अस्या अस्तीति विनर्दि गानविशेषः । पशुभ्यो हितं च एतद्विनर्दि इति वृणे इति पूर्वेण सम्बन्धः । इतिश्चायं प्रकारवाची । **अग्नेरुद्गीथः -** अग्निदेवताकं च एतदुद्गानम् । वृणे इत्युत्तमोद्गातुः अभिसन्ध्या । छान्दसः पुरुषव्यत्ययो वा । **वृणुते** - वृणुयात् इति यावत् । **अनिरुक्तः प्रजापतेः** - अयम् अनेन तुल्यः एवंविधः इति स्पष्टं यो न ज्ञातुं शक्यते सोऽयं गानविशेषः अनिरुक्तः प्रजापतिदेवताकः । **निरुक्तः सोमस्य** - सोमदेवताको गानविशेषो निरुक्तः । **मृदु श्लक्ष्णं** च यद्गानं तद्वायोः । वायुदेवताकम् । **यद्बलवत् श्लक्ष्णं तदिन्द्रस्य** - इन्द्रदेवताकम् । **यत्क्रौञ्चं** - क्रौञ्चपक्षिनादतुल्यं **तद्बृहस्पतेः** - बृहस्पतिदेवताकम् । **यदपध्वान्तं** - भिन्नकांस्यध्वनिसमं तद्वरुणस्य । उद्गाता तानेतान् सर्वानेव उपसेवेत । **वारुणं तु वर्जयेत्** ।।

**अमृतत्वं देवेभ्य आगायानीत्यागायेत् ; स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मन आगायानीति । एतानि मनसा ध्यायन् अप्रमत्तः स्तुवीत ।। २ ।।**

**प्र. - अमृतत्वं......आगायेत् ।** अमृतत्वप्राप्तिम् **आगायानि** - गानेन साधयानि इति **आगायेत्** - गानं कुर्यात् इत्यर्थः । यथाप्रार्थनं फलं भवति इति भावः । **स्वधां पितृभ्यः** । आगायानि इति सर्वत्र सम्बन्धः । **आशां मनुष्येभ्यः, तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मने आगायानि** इति आगायेत् इत्यर्थः । **एतानि...... स्तुवीत । एतानि** - देवामृतत्वादीनि फलानि मनसा ध्यायन् स्वरादिषु अप्रमत्तस्सन् स्तोत्रं कुर्यात् इत्यर्थः ।।

**आ.भा. - अमृतत्वम्** इत्यादि । अमृतत्वप्राप्तिम् **आगायानि** - गानद्वारा साधयानि इति **आगायेत्** - गानं सम्पादयेत् । प्रार्थनानुरूपं फलं आप्नोति इति । **स्वधां पितृभ्यः आगायानि इत्यागायेत्** इत्येवं सर्वत्र क्रियासम्बन्धः ऊहनीयः । **एतानि** - देवाः अमृतत्वादीनि फलानि **मनसा** - हृदयेन **ध्यायन्** - चिन्तयन् स्वरादिषु **अप्रमत्तः** - प्रमादरहितो भूत्वा स्तोत्रगानं कुर्यात् ।।

**सु.** - एवं स्वरविशेषान् देवतापूर्वकं ज्ञात्वा उद्गायन् उद्गाता एवं ध्यायीत इति उच्यते । येभ्यो यत् प्रियं तेभ्यः तदहं गानेन साधयानि इति मनसा ध्यायन् स्तुवीत । येभ्यो यत् प्रियं तद्विशिष्य उच्यते । **अमृतत्वं देवेभ्यः आगायानि इति आगायेत्** । **स्वधां पितृभ्यः, आशां** - अविशेषेण गृहारामादि यद्यदभिवाञ्छितं तत् **मनुष्येभ्यः, तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मने** इत्येतानि । अप्रमत्तः स्वरादिषु, स्तुवीत ।।

**सर्वे स्वरा इन्द्रस्यात्मानः, सर्व ऊष्माणः प्रजापतेरात्मानः, सर्वे स्पर्शाः मृत्योरात्मानः । तं यदि स्वरेषूपालंभेत, इन्द्रँ शरणं प्रपन्नोऽभूवम् । स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ।। ३ ।।**

**प्र.** - **सर्वे......आत्मनः** । अचः **स्वराः** । **आत्मानः** - [1]अवयवसदृशाः[1] इत्यर्थः । श-ष-स-हाः **ऊष्माणः** । कादयो मावसानाः **स्पर्शाः** । **तं यदि स्वरेषूपालभेत** । एवंविधम् उद्गातारं यदि कश्चित् आगत्य 'त्वया दुष्टः स्वरः प्रयुक्तः' इत्युपालम्भं कुर्यात् इत्यर्थः । **इन्द्रं ब्रूयात्** । **इन्द्रमहं शरणं** गतः । तस्मात् इन्द्रः एव तव प्रत्युत्तरं दास्यति इति तदा तम् आक्षेप्तारं प्रति ब्रूयात् इत्यर्थः ।।

**आ.भा.** - सर्वे स्वराः अचः **आत्मानः** - अवयवतुल्याः । **सर्वे ऊष्माणः** - श-ष-स-हाः प्रजापतेः देहावयवतुल्याः **सर्वे स्पर्शाः** - कादयो मावसानाः **मृत्योरात्मानः** - देहावयवसदृशाः । तम् उद्गातारं **यदि** कोऽपि तत्समीपम् आगत्य **उपालभेत** - 'त्वया दुष्टः स्वरादिः प्रयुक्तः' तदा सः उपासकः इन्द्रमहं शरणं गतः तस्मात् इन्द्रादिरेव तव उत्तरं दास्यति इति तं प्रतिक्षेप्तारं **ब्रूयात्** - वदेत् ।।

**सु.** - अथ देवताः स्वरादीनाम् उपदिश्यन्ते । तद्विज्ञानेन उद्गातुः उद्गानकाले केनापि अप्रधृष्यता च । **सर्वे स्वराः** - अकारादयोऽचः **इन्द्रस्यात्मानः** - इन्द्रस्यैव अपरास्तनवः, इन्द्रदेवताका इति यावत् । **सर्वे ऊष्माणः** - श-ष-स-हाः प्रजापतेः आत्मानः, प्रजापतिः अत्र चतुर्मुखः । **सर्वे स्पर्शाः** - कादयो मावसानाः **मृत्योः** - यमस्य आत्मानः । **तम्** एवं देवताविज्ञानवन्तम् उद्गातारं उद्गानवेलायां **यदि** कश्चित् **स्वरेषु**

---

1. अवयवभूताः - अ ।

**उपालभेत** - आक्षिपेत्, **तम्** एनम् उद्गाता **प्रतिब्रूयात्** - स्वराणां देवताभूतम् **इन्द्रं शरणं प्रपन्नोऽभूवम्** । **स त्वा प्रतिवक्ष्यति** यदत्र प्रतिवक्तव्यम् इति । देवताविज्ञानबलेन हानिः आक्षेप्तुरेव भवेत् इति भावः ।।

**अथ यद्येनमूष्मसूपालभेत, प्रजापतिँ शरणं प्रपन्नोऽभूवं, स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयात् । अथ यद्येनँ स्पर्शेषूपालभेत, मृत्युँ शरणं प्रपन्नोऽभूवं, स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात् ।। ४ ।।**

**प्र. - अथ यद्येनमूष्मसूपालभेत** इत्यादि । पूर्ववत् उक्तार्थम् । **स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयात्** । **त्वा प्रति** - त्वां प्रति **पेक्ष्यति** - चूर्णयिष्यति इत्यर्थः । 'पिष्लृ सञ्चूर्णने' (धा.पा.१४५६) इति हि धातुः । **स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात्** । **धक्ष्यति** - भस्मीकरिष्यति इत्यर्थः । 'दह भस्मीकरणे' (धा.पा.९९१) इति हि धातुः ।।

**आ.भा. - सः** इन्द्रादिः **त्वा** - त्वां **प्रतिपेक्ष्यति** - चूर्णयिष्यति **त्वाम्** इति ।।

**सु. - अथ यद्येनमूष्मसूपालभेत** - आक्षिपेत् ; **प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वाम्** अज्ञातास्मद्विज्ञानबलम् आक्षिपन्तं **प्रतिपेक्ष्यति** - चूर्णयिष्यति इत्येनं प्रति ब्रूयात् । **अथ यद्येनं स्पर्शेषु उपालभेत** इत्यादि स्पष्टम् ।।

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः, इन्द्रे बलं दधानीति । सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः, प्रजापतेरात्मानं परिददानीति । सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्याः, मृत्योरात्मानं परिहराणीति ।। ५ ।।**

**।। इति द्वाविंशः खण्डः ।।**

**प्र. - सर्वे......दधानीति** । घोषवत्तया बलवत्तया उच्चारणम् इन्द्रस्य बलाधायकम् इत्यर्थः । **सर्वे......वक्तव्याः** । **अग्रस्ताः** - अन्तरप्रवेशिताः । **अनिरस्ताः** - बहिरक्षिप्ताः । 'लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम्' ( अ.को. १-६-२०) इत्यमरः । **विवृताः**- विवृतप्रयत्नोपेताः । **प्रजापतेरात्मानं परिददानीति** । ऊष्मणां प्राजापत्यात्मकत्वात् अग्रस्तत्वादियुक्त ऊष्मोच्चारणे प्रजापतेः आत्मलाभः भवति इत्यर्थः । **सर्वे स्पर्शाः......वक्तव्याः** । **लेशेन** - अल्पशः

**अनभिनिहिताः** - अनभिक्षिप्ताः, अद्रुतोच्चारिता इति यावत् । **मृत्योरात्मानं परिहराणीति** । सर्वेषां स्पर्शानां मृत्व्यात्मकत्वात् स्पर्शानां तेषां दोषेभ्यः परिहृत्य उच्चारणे मृत्योः आत्मैव दोषेभ्यः परिहृतो भवति इति भावः ।।

**आ.भा. - सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः** । घोषवत्तया उच्चारणम् इन्द्रस्य बलसम्पादकम् इत्यर्थः । **सर्वे ऊष्माणः अग्रस्ताः** अनन्तरप्रवेशिताः **अनिरस्ताः** - बहिरक्षिप्ताः **विवृताः** - विवृतप्रयत्नयुक्ताः **प्रजापतेः** इत्यादि । ऊष्मवर्णानां प्रजापत्यात्मकत्वात् अग्रस्तत्वादिगुणयुक्ततदुच्चारणे कृते प्रजापतेः आत्मलाभो जायते । सर्वे स्पर्शाः **लेशेन** - अल्पशः **अनभिहिताः** - अद्रुतोच्चारिताः । **मृत्योरात्मानं परिहराणीति** । स्पर्शानां कादीनां मृत्युस्वरूपत्वात् तेषां स्पर्शानां दोषेभ्यः परिहृत्य उच्चारणे कृते मृत्योः आत्मैव दोषेभ्यः रहितो भवति इति ।।

**सु.** - ज्ञापितम् एतेन देवताज्ञानबलसम्पन्नम् उद्गातारं नाक्षिपेत् इति । अथ देवताज्ञानबलवता उद्गात्रा स्वबले अप्रमत्तेन भाव्यम् इत्याशयेन उच्यते - **सर्वे** इति । उद्गात्रा प्रयोगवेलायां **सर्वे स्वरा घोषवन्तः तथा बलवन्तश्च वक्तव्याः** । यदिह स्वरे आधीयमानं बलं स्वराणां देवताभूते इन्द्रे बलम् आहितमिव । **तदिन्द्रे बलं दधानीति** मनसा विभाव्य तथा **वक्तव्याः**, अन्यथा देवताधिष्ठानबलं न सिद्ध्येत् इति भावः । **सर्वे ऊष्माणः अग्रस्ताः** - अलुप्तवर्णपदाः इति यावत् । **अनिरस्ताः** - बहिरक्षिप्ताः - अत्वरितोदिताः इति यावत् । **विवृताः** - विवृतप्रयत्नोपेताश्च वक्तव्याः । एवं प्रयुज्यमानेन **प्रजापतेरात्मानं परिददानीति** विभाव्य वक्तव्या इति पूर्वेण अन्वयः । प्रजापतेः इति चतुर्थ्यर्थे षष्ठी । आत्मा बलम् । सर्वे स्पर्शाः **लेशेन** - शनैः **अनभिनिहिताः** - असंकीर्णाः अद्रुतोच्चारिताः वक्तव्याः । एवं स्पर्शानां प्रयोगेण मृत्योः सकाशात् **आत्मानं परिहराणीति** विभाव्य तथा वक्तव्याः । अन्यथा प्रयोगे तद्देवताया मृत्योः प्रकोपः स्यात् असङ्गतप्रयोगात् अपराधात् । मृत्योः प्रकोपे च आत्मनाशः स्यात् । तत्तेषां साधुना प्रयोगेण मृत्योः मरणात् आत्मा रक्ष्यते इति भावः । यद्वा अधिष्ठेयेषु स्पर्शेषु उच्चारणकृतो यो दोषः तस्मात् मृत्योः आत्मानं **परिहराणि** सुष्ठु प्रयोगेण इति विभाव्य तथा प्रयोक्तव्याः इति भावः ।।

**।। इति द्वाविंशखण्डभाष्यम् ।।**

## त्रयोविंशः खण्डः

[ओङ्कारब्रह्मोपासनविधिः]

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्व एते पुण्यलोका भवन्ति; ब्रह्मसँस्थोऽमृतत्वमेति ।। १ ।।**

**प्र.** - ओङ्कारेण ब्रह्मोपासनं विधातुं प्रस्तौति - **त्रयो धर्मस्कन्धाः** इत्यादि । **धर्मस्कन्धाः** - धर्मसाधकमार्गाः । आश्रमरूपमार्गाः त्रयः इत्यर्थः । **यज्ञो.... प्रथमः ।** यज्ञाध्ययनदानशब्दैः गृहस्थाश्रमः उच्यते । अध्ययनशब्दः वेदाभ्यासपरः । **तप एव द्वितीयः ।** तपश्शब्देन वैखानसपारिव्राज्ययोः ग्रहणम् । उभयोः तपःप्रधानत्वात् । **तपश्शब्दो** हि कायक्लेशे रूढः । स च द्वयोरपि समानः । **ब्रह्मचारी......अवसादयन् ।** अत्यन्तम् आचार्यकुले नियमैः देहं क्षपयन् तृतीयाश्रमे इत्यर्थः । **सर्वे एते......एति ।** एवं त्रित्वेन सङ्गृहीतानां चतुर्णाम् आश्रमाणां मध्ये यः **ब्रह्मसंस्थः** - ब्रह्मनिष्ठः स मुक्तिभाग् भवति । ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः भवन्ति इत्यर्थः । एवमेव हि 'अनुष्ठेयं बादरायणस्साम्यश्रुतेः' (ब्र.सू.३-४-१९) इत्यत्र भाषितम् । न च अत्र ब्रह्मसंस्थशब्दात् संन्यासाश्रमप्रतिपत्तिः इति शङ्क्यम् । ब्रह्मसंस्थशब्दस्य प्रोक्षिणीन्यायेन योगेन एव वृत्त्युपपत्तौ संन्यासे रूढेः अनभ्युपगन्तव्यत्वात् । योगमात्रस्य च आश्रमान्तरसाधारणत्वात् न ब्रह्मसंस्थशब्देन संन्यासाश्रमग्रहणे प्रमाणं पश्यामः । न च सम्पूर्वस्य तिष्ठतेः समाप्तिवाचकत्वात्, अनन्यव्यापारत्वलक्षणाया ब्रह्मणि समाप्तेः [1]संन्यासिष्विव[1] अग्निहोत्रादिकर्मान्तरव्यग्राश्रमान्तरेषु असम्भवात्, ब्रह्मसंस्थशब्देन परिव्राडेव उच्यते इति वाच्यम् । स्वाश्रमोचित[2]धर्म[2]व्यग्रतायाः संन्यासिषु अपि अविशिष्टत्वात् । तदतिरिक्तव्यापारराहित्यस्य सर्वाश्रमेषु अपि सम्भवात् न ब्रह्मसंस्थशब्देन चतुर्थाश्रमपरामर्शे हेतुं पश्यामः ।।

**आ.भा.** - ओङ्कारद्वारा ब्रह्मणः उपासनं दर्शयितुमाह **त्रयः** इत्यादि । **त्रयः** - त्रिसंख्याकाः **धर्मस्कन्धाः** - धर्मस्य विभागाः, तत्र धर्मस्य श्रेयःसाधनस्य भागाः आश्रमलक्षणमार्गाः त्रयः इत्यर्थः । तत्र **यज्ञः** प्रथमो मार्गः । अत्र यज्ञाध्ययनदानैः **प्रथमो** गृहस्थाश्रमः सूचितो भवति । **अध्ययनं** - वेदाभ्यासः । **तपः** द्वितीयो मार्गः ।

1. सन्यासिन इव - अ,आ । 2. कर्म - क ।

तपःशब्दः कायक्लेशेन सिद्धः । तपसा वैखानसपरिव्राजकयोः ग्रहणम् । एतयोः द्वयोः अपि तपःप्रधानत्वात् । **ब्रह्मचारी आचार्यकुलवासी तृतीयः ।** एकान्तत आचार्यकृते नियमतो देहं क्षपयन् तृतीयः आश्रमः । **सर्वे एते** इति । एवं यथोक्तप्रकारेण त्रिसंख्यया सङ्गृहीतानां चतुर्णाम् आश्रमाणां यो व्यक्तिविशेषः **ब्रह्मसंस्थः** - ब्रह्मणि परमात्मनि संस्थितिः यस्य स ब्रह्मसंस्थः ब्रह्मनिष्ठः । **स अमृतत्वमेति** - मुक्तियोग्यो भवति । ब्रह्मनिष्ठारहिताः केवलाश्रमकर्म कुर्वाणाः पुण्यलोकान् प्राप्नुवन्ति । केचित्तु ब्रह्मसंस्थशब्देन संन्यासाश्रमग्रहणम् इति कथयन्ति, तन्न । ब्रह्मणि संस्था यस्य इति योगार्थस्य सर्वाश्रमसाधारण्यात् । न च आश्रमान्तरव्यापारव्यग्रस्य ब्रह्मणि संस्था न सम्भवति इति वाच्यम् । स्वाश्रमोचितधर्मव्यग्रतायाः संन्यासिनाम् अपि सम्भवात् इति ।।

**सु.** - अथ प्रणवं स्तुवन् प्रस्तौति - **त्रयो धर्मस्कन्धाः** इति । ननु साम्नाम् उपासननिरूपणप्रकरणे कः प्रसङ्गः प्रणवस्तवनस्य ? अयं प्रसङ्गः । इह उद्गीथावयवस्य ओमिति अक्षरस्य उपासनं बहुधा अभिधाय फलानि निरूपितानि नाम । तेन च परिमितफलकता एव प्रणवोपासनस्य इति अवधारणं कस्यचित् स्यात् । तत्तु व्यावर्तयितव्यम् । यदलभ्यमन्यैः उद्गीथाद्युपासनैः एतैः तदमृतत्वं केवलेन प्रणवोपासनेन परब्रह्मोपासनविशेषभूतेन लभ्यते इति । त्रयो धर्मस्य स्कन्धाः प्रविभागाः । तत्र **यज्ञः** - अग्निहोत्रादिः । **अध्ययनं** - त्रय्या अभ्यासः । **दानं** - यथाशक्ति अर्थिभ्यो द्रव्यस्य इति अयं प्रथमः । गृहस्थाश्रमः एकः इति यावत् । **तप एव द्वितीयः** - तपश्चर्याप्रधानं वानप्रस्थं पारिव्राज्यं च लक्ष्यते । तपःशब्देन, अयं द्वितीयः प्रविभागः, यमनियमादियोगात् अस्ति तपश्चर्या परिव्राजोऽपि । **आचार्यकुलवासी** - आचार्यस्य कुले एव वस्तुं शीलम् अस्य, **आत्मानं** - देहम् आचार्यकुले एव **अवसादयन्** - तत्परिचर्यादिभिः क्षपयन्, यो ब्रह्मचारी भवति स तृतीयः । यस्मिन् आश्रमे एवं भवति स तृतीयो धर्मस्य स्कन्धः इति वा । **एते** - उक्तधर्मविभागत्रयनिष्ठाः त्रयोऽपि पुण्यलोकाः भवन्ति । यदेकः चिनोति अन्वहं यज्ञादिधर्मम् ; अपरश्च तपः, इतरश्च अगृहीतदार आचार्यकुले तत्परिचर्यादिना आत्मनो घर्षणलक्षणं धर्मं पाटीर इव आत्मनो घर्षणं परस्मै । इमां साधनसम्पत्तिं व्यञ्जयितुम् एव यज्ञादिभिः विभाजकैः त्रयाणां विभजनश्रुतिः। अन्यथा आश्रमनाम्ना प्रविभागस्य सम्पत्तेः । यस्तु तत्तदाश्रमे वर्तमानोऽपि तान् यज्ञादीन् धर्मान् उपसर्जनीकृत्य अङ्गतया स्वीकृत्य, **ब्रह्मसंस्थः** - ब्रह्मणि परे निष्ठावान् ब्रह्मप्रणिधानपरो भवति, सः **अमृतत्वं** जरामरणलक्षणसंसारसागरनिस्तरणं प्राप्नोति ।

इह परे[1] परोऽयम् एभ्यः त्रिभ्यो यो ब्रह्मसंस्थः स च परिव्राडेव । अस्मिन्नेव प्रवृत्तिनिमित्तयोगात् , ब्रह्मनिष्ठा हि अस्य पदस्य प्रवृत्तौ निमित्तम् , सा च तेषु धर्मस्कन्धेषु न घटेत, अद्वितीयात्मप्रत्ययो हि ब्रह्मनिष्ठा । इदमेव च औपनिषदं विज्ञानम् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ', (छां.उ.६-१-४) 'नेह नानास्ति किञ्चन', (बृ.उ.६-४-१९) 'नान्योऽतोऽस्ति द्रष्टा', (छां.उ. ५-७-२७) 'आत्मैवेदं सर्वम्' , (छां.उ. ७-२५-२) 'सर्वं खल्विदं ब्रह्म' (छा.उ.३-१४-१) इति श्रूयते । इयं च विद्या न अनुपमृद्य भेदम् अखिलम् उद्भवितुम् अर्हति । यज्ञोऽध्ययनम् इत्यादयस्तु धर्माः भेदोपजीव्याः । तदेषु धर्मस्कन्धेषु मम इदं कर्तव्यम् इत्यभिसन्धिसंवलितेषु विधिनिषेधलक्षणेषु भेदावलम्बेषु कथं नाम घटेत सा ब्रह्मनिष्ठा, कथं वा धर्माणाम् उपसर्जनीभूय वाऽस्यां सहकारिता, उपमर्द्येन उपमर्दकस्य सहकारः इति बाधितं वचः । यस्तु अनेकजन्मभिः अनुवर्तितैः एभिः धर्मस्कन्धैः प्रमृष्टकषायया निर्मलया बुद्ध्या अवधार्य भेदानाम् आभासतां व्यावहारिकात् विधिनिषेधसम्बन्धात् उत्तीर्णः सोऽयं परिव्राट् ब्रह्मसंस्थाम् अधिकरोति, तदेवम् अर्थस्वभावपरिशीलने ब्रह्मसंस्थो गृहस्थात् तपस्विनो वानप्रस्थात् नैष्ठिकात् गुरुकुलवासिनश्च अतिरिक्त एव ब्रह्मसंस्थशब्देन निर्दिश्यत इति विज्ञायते इत्याहुः । एतावत् इह विचार्यम् यादृक् अभिमतं परैः अद्वितीयात्मविज्ञानम् अखिलभेदोपमर्दकं तत् तथैव आवेदयन्ति उपनिषदो न वा इति । येन अर्थस्वभावो लिङ्गं सदसत् इति विनिश्चितं स्यात् । अद्वितीयम् आत्मानम् अवगमयन्ति नाम उपनिषदः । द्वितीयम् अखिलम् आत्मनि अधिष्ठाने कल्पितम् अविद्याविलासः इति अद्वितीयम् आत्मतत्त्वम् इति तु न । तथा विशेषस्य अश्रवणात् । श्रूयन्ते तु वियदादीनां सर्वेषां भेदानाम् आत्मनः जनिप्रभृतयः धातुविशेषैः 'आत्मन आकाशः सम्भूतः' (तै.आन.१-१) 'यतो वा इमानि भूतानि जायन्ते' (तै.भृ.१-२) 'तत्तेजोऽसृजत', (छां.उ.६-२-३) 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्' ।। (मुं.उ.१-१-८) 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्' ।। (मुं.उ.१-१-९) 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मुं.उ.२-१-१), 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी,' ।। (मुं.उ.२-१-३) 'इदं

---

१. अद्वैतिनः ।

सर्वमसृजत,' (तै.आन.६-२) 'ततो वै सदजायत स ईक्षत लोकान्नु सृजा,' (ऐ.उ.१-१-१) इति। 'स इमाँल्लोकानसृजत' (ऐ.उ.१-१-२, तै.भृ.१-५) 'स यथोर्णनाभिस्तन्तुनोच्चरेत्', 'यथाग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्ति । एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः' ।। इति । न हि अध्यासे स्वरसा गतिः जन्यादेः । न हि शुक्तौ रजतम् अध्यास इति ज्ञापयन् कोऽपि प्रयुङ्क्ते । शुक्तौ रजतं जायते सम्भवति व्युच्चरति सृज्यते इति वा । प्रातिभासिकस्य उत्पत्तिः इति तु परिभाषा केवलम् । प्रतिभासः एव क्वचित् कस्यचित् । न श्रूयते च आभासशब्दः तत्र । श्रुतेश्चेत् अस्याभासता अभिमता, सा तर्हि किमिति न श्रावयति 'आत्मनि आकाशः अध्यासः' 'यस्मिन् भूतानि अध्यस्यन्ते' इत्यादि । येन हार्दं प्रकाशेत । स्वतन्त्रा श्रुतिः इति चेत्, स्वातन्त्र्यं हि पर्यायेषु घटेत । तदर्थान्तरे शब्दं नयन् व्याख्याता एव स्वतन्त्रो गण्येत ।

ननु श्रूयन्तां नाम-जनिस्थितिलयाः तत्र तत्र धातुविशेषैः एव, तावता भेदानां न सत्यत्वसिद्धिः, प्रत्युत मिथ्यात्वस्य एव । उपादानस्य ब्रह्मणः सत्यत्त्वं तदुपादेयस्य अस्य सर्वस्य मिथ्यात्वं च अभिप्रेत्य श्रावयति हि दृष्टान्ततया मृद्धटशरावादीन् - 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां.उ.६-१-१) इत्यादि । अनेन पामराणां विकारे यः पारमार्थ्यभ्रमः स व्युदस्यते । घटः शराव इति वागेव केवलं न परमार्थतो वस्तु अस्ति विकारः इति, मृत्तिका एव उपादानं सत्यमिति । एवं तत्र तत्र उपादानोपादेयभावस्थले उपादेयस्य मिथ्यात्वम् उपादानस्य सत्यत्वं च बहुभिः दृष्टान्तैः उपपाद्य जगतश्च ब्रह्मोपादानतानिरूपणद्वारा सर्वस्य मिथ्यात्वं ब्रह्मण एव सत्यत्वं च 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छां.उ.६-८-७) इति श्रुत्यैव विशदीकृतम् । नैतत् । न हि अनेन विकाराणां मिथ्यात्वं प्रत्याय्यते, - अनुपपत्तेः, न किं घटादिना जलाहरणादि? न किं पटेन आच्छादनादि? किं वा शुक्तिरूप्येण राजतं स्थाल्यादि किं वा मृगतृष्णिकया पिपासोपशमः । तदेवम् अनुपपन्नम् अर्थं प्रदर्शयत् वचनम् अप्रमाणकोटौ स्यात् । ननु नेदं वचनं कस्यचित् , स्वतः प्रमाणश्रुतिः इति चेत् किं तावता । 'आयुर्वै घृतम्', 'आदित्यो यूपः' इति श्रौतं वचः इति किम् इष्यते घृतस्यैव आयुष्ट्वं यूपस्यैव आदित्यत्वम् , दृष्टोपहत्या तत्र लक्षणया प्रामाण्यम् इति चेत् किं घटशरावादीनां मिथ्यात्वे न सोपहतिः ? यथा यूपादित्ययोः तादात्म्यं प्रत्यक्षोपहतम् । तथैव घटशरावादीनां मिथ्यात्वमपि प्रत्यक्षोपहतम् । ननु न मूढग्राहेण विकारस्य मिथ्यात्वम् अवगमयति श्रुतिः, अपि तु प्रात्यक्षिकेन एव पथा उपपादयति नाम विकारस्य मिथ्यात्वम् । घटः शरावो मणिका इति विविधं व्यवह्रियमाणमपि न लक्ष्यते मृद्द्रव्यात् उपादानात् अन्यदर्थत्वम्, तत्

वागालम्बनं शब्दमात्रम्, असति अर्थे चेत् शब्दः प्रवर्तेत तत्सिद्धं विकारस्य मिथ्यात्वम् इति । मैवम् । न ह्यर्थो नास्ति अस्त्येव मृद्द्रव्यम्, आह च भवान् - न ततोऽन्यदिति । तेन अनन्यत्वं कार्यदशायां वस्तुनः उक्तं स्यात् । कथम् एवं सति कार्यस्य असत्यत्वम् ? न हि सत्यमिथ्यात्वयोः एकता । न हि शुक्तेः अनन्यत् रजतम् । असति अर्थभेदे शब्दभेदो मिथ्यावलम्बी इति चेत्, किम् असत्यपि अर्थभेदे घटः कलशः इति शब्दभेदः प्रवर्तमानो मिथ्यावलम्बी ? किं वा एकस्मिन्नेव पिण्डविशेषे पिता भ्राता पुत्र इत्यादयः शब्दाः प्रवर्तमाना मिथ्यावलम्बिनः ? ननु मिथ्यावलम्बिनः एव एतेऽपि । इदम् अनुभवतः विरुद्धं, उपपत्त्या मिथ्यात्वं घटयितुम् उपक्रान्तं हि अधुना । धर्मिणः देवदत्तस्य ऐक्येऽपि प्रवृत्तिनिमित्तभेदाः पितृत्वभ्रातृत्वादयो मिथोभिन्नाः सन्ति इत्यर्थभेदः तत्रेति चेत्, इहापि मृद्द्रव्यैक्येऽपि घटशरावत्वाद्यवस्थाः मिथः भिन्नाः सन्ति इत्यर्थभेदः अव्याहत एव । इदमपरं पृच्छ्यते अपि घटशरावाद्यर्थभेदे असत्यपि घटः शराव इति नाम एव केवलं प्रवर्तते इति मन्यते भवान् ? येन मिथ्यावलम्बनं तत्तन्नामसु मन्यते । मन्यते एवेति चेत् । हन्त सर्वथा अर्थविधुरम् । अथ च नाम इति किम् । घोषो हि तथा स्यात् । नाम तु अर्थेन नियतम् । भ्रान्तेन शुक्तौ प्रयुज्यमानो रजतम् इति शब्दोऽपि न सर्वथा अर्थविधुरः । अस्ति हि लोके रजतम् । शुक्तौ असतः स्वार्थतादात्म्यस्य ग्राहकतया तु मिथ्यावलम्बनत्वं तस्य । तत् घटशरावादयो न अर्थभेदाः नामैव केवलं घटः शराव इति, तन्मिथ्याविकारः, इति श्रुतिः उपपत्तितो घटयति इत्यसङ्गतम् । यदि मन्यते-आदिशति श्रुतिः अपूर्वम् अर्थं नामैव केवलम्, घटादयः विकाराः मिथ्या, मृदेव सत्यम् इति । इमम् असम्बद्धम् अर्थम् आदिशति श्रुतिः इति वदता श्रुतेः अप्रमाणकोटौ एव निवेशः कृतः स्यात् । अनुभवविरुद्धेऽपि अस्मिन् अपूर्वेऽर्थे प्रामाण्यम् इति चेत् 'आदित्यो यूपः' इति वाक्यमपि अपूर्वम् आदित्ययूपतादात्म्यम् अनुभवविरुद्धम् अवगमयदेव प्रमाणकोटौ किं न स्यात् ? अपि च किमर्थोऽयम् आदेशः ? यन्निदर्शितं 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छां.उ.६-१-१) इति; तत्र असम्भवम् आशङ्कमानं समाधातुम् । किम् आदेशेन आशङ्का निवार्येत, उपपादनं तु कर्तव्यम् । उपपत्तिस्तु न । अपूर्वश्च अर्थः । निदर्शनशेषभूतेन वचनेन उपपन्नार्थकेन प्रसिद्धार्थकेन च भाव्यम् । तद्वा निदर्शनं कस्मै? प्रतिज्ञातस्य एकविज्ञानेन सर्वविज्ञानस्य सङ्गमनाय, शुक्तिरूप्यादिनिदर्शनेनापि तत्सङ्गमनं सुकरम् । विकाराणां मिथ्यात्वोपपादनसापेक्षेण कारणनिदर्शनेन को विशेषः? ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेन एव हि एकविज्ञानेन सर्वविज्ञानसङ्गमनं विवक्षितम् । ननु यद्यपि शुक्तिरूप्यनिदर्शने सति सुकरं नाम एकविज्ञानम्, परं जगत्कार्यकारणभावापन्नं कथं शुक्तिरूप्यवत् स्यात् ? इत्याशङ्का अपरिहृतैव स्यात्, सा परिहर्तव्या इति, विकारो न वस्तुतत्त्वं नामैव केवलं मृत्तिका इत्येव

सत्यम् । तत् यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् तथा एकस्मिन् अखिलोपादानेऽस्मिन् विज्ञाते सर्वं विज्ञातं स्यात् इति निदर्शितम् इति चेत् । किमनेन वाङ्मात्रेण सा आशङ्का निवार्येत? घटशरावादिविकाराणां जलाहरणादिकार्यक्षमाणां मिथ्यात्वं कथं स्यात् इत्यनुपपत्तिस्तु जागर्त्येव । तदनुपपन्नम् अर्थं श्रुतिः उपपादयति इति असङ्गतम् ।

तदुपपन्नेन एव अर्थेन भाव्यम् । उपपन्नश्च अयमर्थः - यथा - सौम्य एकेन मृत्पिण्डेन विज्ञातेन मृण्मयं घटशरावादि निखिलं विज्ञातं स्यात्, कथम् एतत्? घटशरावादयो हि अर्थान्तरं व्यवहारविभेदात् । मैवम् - न अर्थान्तरम् उपादानात्, मृत्तिका एव मृण्मयम् - अखिलम् इत्येतत् सत्यम् । अदुष्टनयनैः अपि तदेव हि द्रव्यं गृह्यते न वा तद्द्रव्यबाधः । वाचारम्भणं विकारः अन्यान्यवाचाम् आलम्बनं तु विकारः - विकारभेदः, घटेन जलम् आहर, शरावे भर्जय मुद्गान् इत्यादयो भिन्नाः भिन्नाः व्यवहाराः घटत्वशरावत्वाद्यवस्था भेदनिबन्धनाः, न द्रव्यान्तरत्वनिबन्धना इति यावत् । अत एव नामधेयभेदः, तद्द्रव्यैक्यात् उपादाने विज्ञाते उपादेयं विज्ञातं स्यात् इति । यद्वा - यद्वाचारम्भणं आरम्भणम् आरम्भः वाचाऽऽरम्भः - व्यवहारः इति यावत्, घटेन जलमाहर इत्यादिः यः व्यवहारविशेषः, यश्च घटत्वशरावत्वादिः विकारः अवस्थाविशेषः, यञ्च घटः इति नामधेयं तदिदम् अखिलं मृत्तिका एव - मृद्द्रव्यसम्बद्धमेव, न द्रव्यान्तरसम्बद्धम् । तदेकसम्बद्धत्वात् तदिति निर्देशः, इति तु सत्यम्, मृद्द्रव्यसम्बद्धम् इत्येव प्रामाणिकम् । अस्ति व्यवहारविशेषः, अस्ति नाम विकारविशेषः अस्ति नाम नामधेयभेदः । न एतावता द्रव्यभेदाः तदानीमपि मृत्तिका इत्येव सत्यम्; प्रमाणतः उपलभ्यम् इति वा योजना । यद्वा - यो घटशरावादिः विकारभेदः स केवलं वाचारम्भणं वागालम्बनं नामधेयम् - नामधेयभेदः एव केवलम् । नामधेयभेदनियतः केवलं न तु द्रव्यभेदनियतः, अन्यान्योपादानकाः घटपटादिविकारभेदाः यथा नामभेदेन द्रव्यभेदेन च नियताः, न तथा एकोपादानकाः मृण्मयाः घटशरावादयः । किन्तु केवलेन नामभेदेन नियताः । यत् मृत्तिका इत्येव सत्यम्, मृण्मयम् अखिलं घटशरावादि मृत्तिका इत्येव विकारदशायामपि प्रमाणतो गृहीतम् अबाधितं भवतीति । 'नैतावता विकाराणां मिथ्यात्वावगमः । यदपि 'आत्मैवेदं सर्वम्' (छां.उ.७-२५-२) 'सर्वं खल्विदं ब्रह्म' (छां.उ.३-१४-१) इति वचनम् तदपि सर्वस्यास्य मिथ्यात्वे अनैकान्तिकं लिङ्गम् । तद्धि जगति आत्मनः ब्रह्मणः तादात्म्यम् अवगमयत् विश्राम्यति । न च तादात्म्यं जगतो मिथ्यात्वं विना नानुपपन्नम्, येन मिथ्यात्वे तत्कल्पकं स्यात् । 'नेह नानास्ति' (बृ.उ.६-४-१९) इति वाक्यं तु धर्म्यन्तरसद्भावं न सहते न तु धर्मबाहुल्यमपि । तदिदं तत्तद्वचनविवरणावसरे व्यक्तम् उपपादयिष्यामः ।

ननु उपादेये उपादानानतिरिक्ततोपपादनमुखेनापि अन्ततः प्रपञ्चे आत्मानतिरिक्तताया एव निरूपणेन आत्माद्वैतज्ञानम् उपमर्दकं भवेदेव यज्ञो दानम् इत्यादीनां धर्मस्कन्धानां क्रियाकारकविभेदनियतानाम् । मैवम् । मृदनतिरिक्ततां घटशरावविकारे जानतः किम् उपरुध्यते, जलाहरणादिव्यवहारः ? किं वा जलाहरणादिना मृदात्मकताज्ञानम् उपरुध्यते, ? एवमेव सर्वात्मनः परस्य ब्रह्मणः सर्वोपादानस्य उपादेयभूतमिदं ततोऽनतिरिक्तं जानतोऽपि यथांशं व्यवस्थितेन स्वभावभेदेन धर्मान्वयो यथायोग्यम् अप्रतिहतः एव । इयांस्तु विशेषः । यः पुनरजानन् कृत्स्नस्य ब्रह्मोपादानकतया ब्रह्मात्मताम् अहमस्मि स्वतन्त्रः कर्ता भोक्ता इति आत्मानं मन्वानः कर्म केवलं यथावर्णं यथाश्रमं करोति स तु भ्रान्तः एवेति केवलस्य धर्मस्य अनुष्ठानात् पुण्यलोको भवति । यः पुनः ब्रह्मसंस्थः ब्रह्मात्मकतया जानन् करोति स तु तथाविधेन कर्मणा अभ्यस्यमानस्य ब्रह्मविज्ञानस्य सहायसम्पत्तिम् अप्रमादकरणग्रामसम्पत्त्या समधिगतः प्राप्नोति परं ब्रह्म । अत एव च स्मर्यते,

"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना" ।। (भ.गी.४-२४) इति ।

ननु चिदचिद्विभागं ब्रह्मणः अत्यन्तविलक्षणं पारमार्थिकम् अभ्युपगच्छतां ब्रह्मानन्यत्वं जगति कथम् ? घटशरावादिविभागः इव मृत्पिण्डस्य ब्रह्मणः एव चेदयं विभागो वास्तवो विलक्षणस्वभावता कथम् ? कथम् वाऽविकारित्वं ब्रह्मणः ? इदम् उपरिष्टात् उपपादयिष्यामः । तदुक्तेन प्रकारेण धर्मस्कन्धविभागे तत्र तत्र ब्रह्मनिष्ठायां विरोधाभावात् 'ब्रह्मनिष्ठोऽमृतत्वमेति' इति वाक्यं न अतिक्रान्तधर्मस्कन्धमेव गृह्णाति इति । अत एव याज्ञवल्क्यादयो ब्रह्मविदग्रेसराः स्मर्यन्ते । इदमिह अवधार्यम्, यः निर्विण्णः कर्मचितेभ्यो लोकेभ्यः, नित्यम् एकम् अनवधिकानन्दं वाञ्छन्, श्रोत्रियं ब्रह्मनिष्ठम्, उपगम्य गुरुम्, ततो विज्ञाय ब्रह्मस्वरूपं स्वयं मननेन निश्चित्य च तथा, ततश्च तद्ब्रह्म अपरोक्षाय प्रवृत्तः ब्रह्मात्मकं स्वात्मानम् अनुसन्धाय, ब्रह्मात्मकतया अनुसंहितैः यथाश्रमं प्राप्तैः परिग्रहैः ब्रह्मण एव आराधनरूपतया कर्म कुर्वन्, अनेन च कर्मानुष्ठानेन अक्लेशेन ब्रह्मभावनायाम् एव आनुकूल्यम् उपगतैः अखिलैः इन्द्रियैः अन्तःकरणमपि अन्वहम् उन्मुखयन् ब्रह्मप्रणिधाने, तेन अन्तःकरणेन काले काले योगपथेन ब्रह्मणः स्मरणाभ्यासलक्षणं प्रणिधानम् अनुतिष्ठति । सोऽयं ब्रह्मनिष्ठो गृहे वा वने वा स्यात्, नात्र आश्रमविशेषनियमः । स एवम् अन्वहम् अनुष्ठीयमानेन ब्रह्मप्रणिधानलक्षणस्मरणाभ्यासपाटवेन यदा ब्रह्मणः अपरोक्षम् अधिगच्छति, निमग्नो नाम तदा भवति अनिर्वचनीये क्वापि महानन्दे परितः प्रवृत्ते अपारे, तदा च्यवति नाम सर्व एव वर्णाश्रमादिपरिग्रहः प्रसुप्तहस्तात् इव व्यजनम् । अत एव स्मर्यते -

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते" ।। (भ.गी.३-१७) इति ।

[ओङ्कारस्तुतिः]

**प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयीविद्या संप्रास्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त, भूर्भुवस्सुवः इति ।। २ ।।**

**प्र.** - एवं 'ब्रह्मसंस्थः अमृतत्वमेति' इति अमृतत्वसाधनं ब्रह्मोपासनम् उक्त्वा तत्प्रणवाङ्गकमिति वक्तुं प्रणवं स्तौति - **प्रजापतिर्लोकानभ्यतपत्** इत्यादिना । **अभ्यतपत्** - सारनिष्कर्षाय लोकान् पर्यालोचयत् इत्यर्थः । **तेभ्यो.... संप्रास्रवत्** । **त्रयीविद्या संप्रास्रवत्** - सारत्वेन निष्पन्ना अभवत् इत्यर्थः । एवम् उत्तरत्रापि द्रष्टव्यम् ।।

**आ.भा.** - ब्रह्मसंस्थः अमृतत्वं प्राप्नोति इति अमृतत्वसाधनं ब्रह्मोपासनम् इति कथितं तत् प्रणवाङ्गकम् इति कथयितुं ओङ्कारं स्तौति - **प्रजापतिः** इत्यादि । **अभ्यतपत्** - साराकर्षणाय **लोकान्** पर्यालोचयत् **तेभ्यः त्रयीविद्या संप्रास्रवत्** सारतया निष्पन्ना जाता इति । **तामभ्यतपत्** इत्यादि **तां** - त्रयीविद्याम् ।

**सु.** - केवलधर्मनिष्ठात् ब्रह्मनिष्ठः फलम् अमृतत्वम् उत्तमम् आप्नोति इति प्रस्तुतं 'ब्रह्मसंस्थः अमृतत्वम् एति' इति। ब्रह्मणि या सम्यक् स्थितिः निध्यानलक्षणा सा च प्रणवेन आलम्बनेन भवति इति अभिप्रेत्य तस्य तथात्वे आनुगुण्यं ज्ञापयन् तस्य महिमानमाह - **प्रजापतिः** इति । यो ब्रह्मसंस्थः प्रणवसंस्थः सोऽमृतत्वमेति इति साक्षात् प्रणवः एव वा प्रस्तुतः । प्रणवे स्थितिः परमात्मालम्बनतया इति अमृतत्वे हेतुः । **प्रजापतिः** पुरा सारम् उद्दिधीर्षुः **लोकान्** इमान् **अभ्यतपत्** विवेचनाग्नौ । किं सारम् इति पर्यालोचयत् इति यावत् । पर्यालोचनलक्षणेन अग्निना **अभितप्तेभ्यस्तेभ्यः** - लोकेभ्यः **त्रयीविद्या संप्रास्रवत्** - द्रवीभूय निरगच्छत् । त्रयी सारत्वेन प्रजापतेः प्रतिभा गोचरा अभूदिति यावत् । सारतरसञ्जिघृक्षया पुनः **तां** त्रयीम् **अभ्यतपत्** । **तस्या अभितप्तायाः** - त्रय्याः **भूर्भुवःसुवरिति** इमानि अक्षराणि **संप्रास्रवन्** । पूर्ववत् आशयः ।।

**तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत् । तद् यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि एवमोंकारेण सर्वा वाक् संतृण्णा । ओङ्कार एवेदँ सर्वम् , ओङ्कार एवेदँ सर्वम् ।। ३ ।।**

**।। इति त्रयोविंशः खण्डः ।।**

**प्र. - तान्यभ्यतपत्** इत्यादि । **तद्यथा......सर्वम् । यथा सर्वाणि** पत्रजातानि **शंकुना** - पर्णनालेन **संतृण्णानि** - व्याप्तानि भवन्ति, **एवम्**, 'ओङ्कारो वै सर्वा वाक्' - इति श्रुतेः **ओङ्कारेण सर्वा वाक्** व्याप्ता । अतः **ओङ्कारः** एव सर्वं वाङ्मयम् । अतः ओङ्कारेण ब्रह्मोपासनं कर्तव्यम् इति पर्यवसितोऽर्थः । द्विरुक्तिः विद्यासमाप्त्यर्था ।।

**आ.भा. - तद्यथा** इत्यादि - येन प्रकारेण निखिलान्यपि पलाशजातानि **शंकुना** - पत्रनालेन **संतृण्णानि** - व्याप्तानि भवन्ति । अनेन प्रकारेण ओङ्कारेण सर्वा अपि वाक् व्याप्ता 'ओङ्कारो वै सर्वा वाग्' इति श्रुतेः । तस्मात् ओङ्कार एव सर्वं वाङ्मयम् । अतः ओङ्कारद्वारा ब्रह्मोपासनं कार्यम् इति समुदितार्थः । विद्यापरिसमाप्त्यर्था द्विरुक्तिः ।

**सु.** - सारतमसञ्जिघृक्षया पुनः **तानि** अक्षराणि **अभ्यतपत् । तेभ्यः ओङ्कारः संप्रास्रवत् ।** पूर्ववत् आशयः । सर्वस्य अस्य नामरूपविभेदस्य मूलं त्रयी इति सारता; तस्याः त्रय्या व्याहृतिः मूलमिति व्याहृतेः सारतरता; व्याहृतिमूलत्वात् ओङ्कारस्य सारतमता । एवं सारतमत्वमहिमानम् अभिधाय ब्रह्मणा साम्ययोगम् उपस्थापयति - **तद्यथा** इति । यथा एकेन **शङ्कुना** - नालेन **सर्वाणि** - बहूनि **पर्णानि संतृण्णानि** - संदृब्धानि व्याप्तानि तथा ओङ्कारेण अनेन **वाक् सर्वा** - वाचकराशिः अखिलः **संतृण्णा ।** प्रणवः सर्वस्य वाङ्मयस्य मूलं । सर्वस्य अर्थस्य परं ब्रह्मैव इति यावत् । तया च व्याप्त्या साम्यं ब्रह्मणाऽस्य ज्ञापितं भवति । सर्वमिदम् ओङ्कार एव । कथमेतत् ? ओङ्कारो हि अमूर्तं ब्रह्मणः किमपि आलम्बनम् । ब्रह्मैव च इदं सर्वं ब्रह्मणः कार्यमिति । वाच्यवाचकयोः अभेदाध्ययवसायेन तत्तदर्थानां तत्तद्वागभेदे सर्वासां वाचाम् ओङ्कारमूलकतया ओङ्कारेण अभेदे ओङ्कारः एवेदं सर्वम् अर्थजातम् इति वा ।।

**।। इति त्रयोविंशखण्डभाष्यम् ।।**

## चतुर्विंशः खण्डः

### [प्रातस्सवनादि कर्माङ्गाणि]

**ब्रह्मवादिनो वदन्ति - यद्वसूनां प्रातस्सवनँ रुद्राणां माध्यन्दिनँ-सवनमादित्यानाञ्च विश्वेषाञ्च देवानां तृतीयसवनम् ।। १ ।।**

**प्र.** - प्रसङ्गात् कर्माङ्गानि कानिचित् विधातुं प्रस्तौति - **ब्रह्मवादिनः वदन्ति** इत्यादिना । **ब्रह्मवादिनः** - वेदवेत्तारः इत्यर्थः । ते किं वदन्ति इत्यत्राह - **यद्वसूनां प्रातस्सवनम्** इत्यादि । प्रातस्सवन-माध्यन्दिनसवन-तृतीयसवनेश्वरैः वसुरुद्रादित्यविश्वेदेवैः तत्सवनफलभूताः पृथिव्यन्तरिक्षस्वर्लोकाः वशीकृताः इत्यर्थः ।।

**आ.भा.** - प्रसङ्गप्राप्तानि कानिचित् कर्माङ्गानि कथयितुं प्रस्तौति - **ब्रह्मवादिनः** इत्यादि । प्रातःसवन-माध्यन्दिनसवन-तृतीयसवनेश्वरैः वसुरुद्रादित्यविश्वेदेवैः पृथिव्यन्तरिक्ष स्वर्लोकानां स्वायत्तीकृततया तदवशिष्टस्य लोकस्य अभावात् यजमानस्य लोकः कुत्र विद्यते इति ज्ञातव्यम् इत्यर्थः ।।

**सु.** - 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यारभ्य अध्यायद्वयेन कर्माङ्गभूत प्रणवाद्युपासनम् उक्तम् । अन्ते प्रणवस्य यो महिमा स्वातन्त्र्येण साक्षात् ब्रह्मोपासनान्वयेन स तु निरूपितः । कर्मप्रसङ्गात् कर्मणि यज्ञे अङ्गभूतानि सामहोममन्त्रोत्थानानि उपदिशन् आह - **ब्रह्म** इति । सामादीनां रूपं तु अनुपदं 'पुरा प्रातरनुवाकस्य' इत्यादिना व्यक्तीकरिष्यति । तत्र आदौ इदमाह - इयमिह हानिः; अनेन इयम् इत्थं समाधेया इति जानन् कुर्यात् सामाद्यङ्गम् इति । यद्यपि जानन् अजानन् वा कुर्यात् । श्रुतं हि - 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छां.उ.१-१-१०) इति । अथापि तेषाम् अङ्गदार्ढ्याय इदमाह । **ब्रह्मवादिनः** - वेदविदो हि एवं वदन्ति, **प्रातःसवनं** - प्रसिद्धं कर्म नामधेयम्, लक्ष्यते तत्सम्बन्धी पार्थिवो लोकः । **तद्वसूनां** - वसवः तस्य ईशा इति यावत् । **माध्यन्दिनं रुद्राणां** - माध्यन्दिनसम्बद्धस्य अन्तरिक्षस्य रुद्रा ईशाः । **तृतीयं सवनमादित्यानां विश्वेषां च देवानाम्** - तृतीयसवनसम्बद्धस्य द्युलोकस्य आदित्याः विश्वेदेवाश्च यजमानाः ।।

**क्व तर्हि यजमानस्य लोक इति । स यस्तान्न विद्यात् कथं कुर्यात् अथ विद्वान् कुर्यात् ।। २ ।।**

**प्र. - क्व तर्हि यजमानस्य लोकः** इति । एवं तैः लोकानां वशीकृततया अवशिष्टस्य लोकस्य यजमानप्राप्यस्य अभावात् यजमानस्य लोकः क्व अस्तीति वेदितव्यम् इत्यर्थः । **स यस्तन्न विद्यात् कथं कुर्यात्** । यस्य यजमानप्राप्यलोकस्थानज्ञानं नास्ति सोऽज्ञः कथं कर्म कुर्यात् । **अथ विद्वान् कुर्यात्** । तस्मात् लोकस्वीकरणोपायभूतं वक्ष्यमाणं सामगान-होम-मन्त्रोत्थानलक्षणं ज्ञात्वैव कुर्यात् इत्यर्थः ।।

**आ.भा. - स यस्तन्न** इत्यादि । यस्य यजमानलोकस्य ज्ञानमेव नास्ति सोऽविद्वान् कथं कर्म कुर्यात् । **अथ विद्वान् कुर्यात्** । अतः लोकस्वीकरणोपायभूतं वक्ष्यमाणं सामगान-होम-मन्त्रोत्थानरूपं विदित्वैव कुर्यात् इत्यर्थः, तदेव दर्शयति ।।

**सु. - क्व तर्हि यजमानस्य लोकः** - एवं त्रयो लोकाः तेषां तेषां वशे अभूवन् । यजमानस्य कर्मणा प्राप्यो लोकः क्व ? न कश्चित् अवशिष्यते । अथ कृतेन कर्मणा किम् ? हानिरेव कर्मणः । **यः तन्न विद्यात् कथं कुर्यात्** - ईदृशी कर्मणि हानिः, परिहारश्च, अयम् इत्थं इत्येतत् यो न विद्यात् स कथं कुर्यात् । कथम् अर्थवत् कर्म भवेत् इति आक्षेपे । इयम् इह हानिः अनेन इयं परिहार्यते इति अजानता अपि अनुष्ठेयतां केवलं जानता अपि अनुष्ठीयमानैः वक्ष्यमाणैः अङ्गैः सा परिह्रियेत नाम । अथापि अङ्गानुष्ठानदार्ढ्याय आक्षिप्यते - **कथं कुर्यात्** इति । अथ इमां हानिं वक्ष्यमाणस्य तत्परिहारे हेतुतां च जानन् वक्ष्यमाणप्रकारेण कुर्यात् इति वदन्ति इति पूर्वेण सम्बन्धः ।।

**[प्रातस्सवनप्राप्त्युपायः]**

**पुरा प्रातरनुवाकस्योपाकरणात्, जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवँ सामाभिगायति ।। ३ ।।**

**प्र.** - तदेवाह - **पुरा प्रातरनुवाकस्योपाकरणात्** इत्यादि । **प्रातरनुवाकस्योपाकरणात् पुरा** - प्रातरनुवाकारम्भात् प्राक् गार्हपत्यस्य **जघनेन** - पश्चात् **उदङ्मुख उपविश्य वासवं** - वसुदैवत्यं **साम सः** - विद्वान् गायेत् इत्यर्थः ।।

**आ.भा. - पुरा** इत्यादि । **पुरा** - पूर्वं प्रातरनुवाकारम्भात् । गार्हपत्यस्य **जघनेन** - पश्चात् **उदङ्मुखः उपविश्य वासवं** - वसुदेवताकं **साम सः** - विद्वान् गायेत् इत्यर्थः ।।

**सु.** - किं कुर्यात् । तत् विविच्याह - **पुरा** इत्यादिना । **प्रातरनुवाकस्योपाकरणात्** । **पुरा** - प्राक् प्रातरनुवाकारम्भात् **गार्हपत्यस्य जघनेन** - गार्हपत्याग्नेः पश्चाद्भागे **उपविश्य सः** विद्वान्, वसवो देवा यस्मिन् तत् **वासवं सामाभिगायति** - अभिगायेत् । अपूर्वत्वात् अर्थस्य विधिः उन्नेयः ।।

**लोकद्वारमपावार्णू २-३-३ पश्येम त्वा वयँ रा ३-३-३-३.ऽ३ हुं ३ आ २-३-३ जा ३ यो ३ आ १-२-४-५ इति ।। ४ ।।**

**प्र.** - तदेव साम आह - **लोकद्वारमपावृणु पश्येम त्वा वयं राज्याय** इति । हे अग्ने! पृथिवीलोकप्राप्तये द्वारम् अपावृणु । तेन अपावृतेन द्वारेण त्वां **राज्याय** - पृथिवीलोकप्राप्तिफलाय पश्येम इत्यर्थः ।।

**आ.भा.** - तदेव साम दर्शयति - **लोकद्वारम्** इत्यादि । हे अग्ने! पृथिवीलोकप्राप्तये **द्वारम् अपावृणु** । अपावृतेन द्वारेण त्वां **राज्याय** पृथिवीलोकप्राप्तिफलाय पश्येम ।।

**सु.** - किं तत् साम? **लोकद्वारमपावृणु पश्येम त्वा वयं राज्याय** इति - हे अग्ने! योऽयं पृथिव्याख्यः तस्य **द्वारमपावृणु** - उद्घाटय । तेन द्वारेण वयं त्वां **राज्याय** - पार्थिवोपभोगाय इति यावत्, **पश्येम** ।।

**अथ जुहोति, नमोऽग्नये पृथिवीक्षिते लोकक्षिते । 'लोकं मे यजमानाय विन्द' एष वै यजमानस्य लोकः । एतास्मि ।। ५ ।।**

**अत्र यजमानः परस्तादायुषः । स्वाहा । अपजहि परिघम् इत्युक्त्वोत्तिष्ठति । तस्मै वसवः प्रातस्सवनँ संप्रयच्छन्ति ।। ६ ।।**

**प्र.** - **अथ जुहोति** । **अथ** - अनन्तरम् अनेन वक्ष्यमाणेन मन्त्रेण जुहोति इत्यर्थः । होममन्त्रमेव आह - **नमोऽग्नये.... लोकक्षिते** इत्यादि । **पृथिवीक्षिते** - पृथिवीनिवासाय **लोकक्षिते** - लोकनिवासाय अग्नये नमः । **मे** - मह्यं **यजमानाय लोकं विन्द** - [1]लम्भयस्व[1] । **एष वै मम यजमानस्य लोकः** । **यजमानोऽहमत्र** अस्मिन् लोके **आयुषः परस्तात्** - मरणात् ऊर्ध्वं **एतास्मि** - आगन्तास्मि । **स्वाहेति** - जुहोति इत्यर्थः ।

---

1. लम्भय - ख ।

**अपजहि......उत्तिष्ठति** । एवं हुत्वा अनन्तरं **परिघं** - लोकद्वारार्गलम् **अपजहि** - अपनय इति एतं मन्त्रम् उक्त्वा उत्तिष्ठति इत्यर्थः । **तस्मै सम्प्रयच्छन्ति** । [1]एवं सामगानहोममन्त्रोत्थानकृते यजमानाय[1] वसवः प्रातस्सवनसम्बन्धिलोकं पृथिवीलोकं प्रयच्छन्ति इत्यर्थः । एवम् अग्रेपि द्रष्टव्यम् ।।

**आ.भा. - अथ जुहोति** इत्यादि । **अथ** - अनन्तरं वक्ष्यमाणमन्त्रेण हवनं करोति इत्यर्थः । होममन्त्रमाह **नमोऽग्नये** इत्यादि । नमोऽग्नये लोकनिवासाय ।**पृथिवीक्षिते** - पृथिवीनिवासाय **अग्नये नमः** । **मे** - मह्यं यजमानाय लोकं **विन्द** - प्रापय ।

**एष वै मम यजमानस्य लोकः** । यजमानोऽहम् अत्र लोके **आयुषः परस्तात्** - मरणात् अनन्तरम् । **एतास्मि** - आगन्तास्मि । **स्वाहा** इति जुहोति । **अपजहि** इत्यादि । एवं हवनं कृत्वा तदनन्तरं **परिघं** - लोकद्वारार्गलं **अपजहि** - अपनय इति एतं मन्त्रं **उक्त्वा उत्तिष्ठति** । **तस्मै** इत्यादि । एवं प्रकारेण सामगान-होम-मन्त्रोत्पादककर्त्रे यजमानाय **वसवः** प्रातःसवनसम्बन्धिलोकं **प्रयच्छन्ति** - ददति । अनेनैव प्रकारेण अग्रेपि अर्थो ज्ञातव्यः ।।

**सु. - अथ** - सामाभिगानानन्तरं जुहुयात् अनेन मन्त्रेण । **नमोऽग्नये पृथिवीक्षिते** इत्यादि मन्त्रस्वरूपम् । **पृथिवीक्षिते** - पृथिव्यां निवसते, **लोकक्षिते** - लोकेषु निवसते, पृथिव्याख्यलोकनिवासाय इति समुदिताश्रयो वा, एवंभूताय अग्नये तुभ्यं नमः । **यजमानाय मे** - मह्यम् **लोकं** - पृथिव्याख्यम्, **विन्द** - लभस्व । एष वै यजमानस्य मम फलभूतो लोकः, **आयुषः परस्तात्** यजमानोऽहम् **एतास्मि,** अत्र मदर्थं त्वं प्रथममिमं लोकं लभस्व परस्तात् मदागमने उपरोधो मा भूदिति भावः । स्वाहा इत्यनेन मन्त्रेण जुहोति । अथ **अपजहि परिघमित्युक्त्वोत्तिष्ठति** । **परिघम्** अर्गलं अस्य लोकस्य **अपजहि** - अपसारय, एवं साममन्त्रोत्थानलक्षणैः कर्मशेषैः वशीकृतलोकाय तस्मै वसवः प्रातःसवनसम्बद्धपृथिवीलोकं प्रयच्छन्ति ।।

[माध्यन्दिनसवनप्राप्त्युपायः]

**पुरा माध्यन्दिनस्य सवनस्योपाकरणात्, जघनेनाग्नीध्रीयस्य उदङ्मुखः उपविश्य स रौद्रं सामाभिगायति ।। ७ ।।**

---

1. एवं - इत्यारभ्य - यजमानाय इत्यन्तं नास्ति - अ,आ ।

**लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयं विरा ३ ३ ३ ३ हुं आ ३ ३ जायो आ ३ ३ ३ ४ ५ इति ।। ८ ।।**

**प्र. - पुरा माध्यन्दिनस्य** इत्यादि । **आग्नीध्रीयस्य** - अग्नेः इत्यर्थः । **रौद्रं** - रुद्रदेवताकम् इत्यर्थः । **लोकद्वारम्** इत्यादि । **वैराज्याय** - अन्तरिक्षलोकफलप्राप्तये इत्यर्थः ।।

**आ.भा. - आग्नीध्रियस्य** - अग्नेः । **रौद्रं** - रुद्रदेवताकम् । **वैराज्याय** - अन्तरिक्षलोकफलप्राप्तये इति ।।

**सु. - आग्नीध्रीयस्य** - दक्षिणाग्नेः । **वैराज्याय** - अन्तरिक्षलोकफलाय, **माध्यन्दिनसवनं** - तत्सम्बद्धमन्तरिक्षलोकम् ।।

**अथ जुहोति, 'नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते' लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः एतास्मि ।। ९ ।।**

**अत्र यजमानः परस्तादायुषः स्वाहा । अपजहि परिघम् इत्युक्त्वा उत्तिष्ठति । तस्मैरुद्रा माध्यन्दिनँ सवनँ संप्रयच्छन्ति ।। १० ।।**

**पुरा तृतीयसवनस्योपाकरणात् जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यँ स वैश्वदेवँ सामाभिगायति ।। ११ ।।**

**लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयँ स्वरा ३ ३ ३ ३ हुं आ २ ३ ३ जा ३ यो ३ आ ३ ४ ५ इत्यादित्यम् ।। १२ ।।**

**अथ वैश्वदेवम् - 'लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयँ साम्रा ३ ३ ३ ३ हुम् ३ आ २ ३ ३ जायो ३ आ ३ १ १ १ इति' ।। १३ ।।**

**अथ, जुहोति, नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षद्भ्यो लोकक्षिद्भ्यः । लोकं मे यजमानाय विन्दत ।। १४ ।।**

**एष वै यजमानस्य लोकः । एतास्म्यत्र यजमानः परस्तादायुषः । स्वाहा । अपहत परिघम् इत्युक्त्वोत्तिष्ठति ।। १५ ।।**

**तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनँ सम्प्रयच्छन्ति । एष ह वै यज्ञस्य मात्रां वेद, य एवं वेद य एवं वेद ।। १६ ।।**

।। इति चतुर्विंशः खण्डः ।।

।। इति द्वितीयः प्रपाठकः समाप्तः ।।

**प्र. - अथ नमो वायवे** इति मन्त्रेण जुहोति इत्यर्थः । **अन्तरिक्षक्षिते -** अन्तरिक्षनिवासाय इत्यादि पूर्ववन्नेयम् ।।

**माध्यन्दिनं सवनम् -** माध्यन्दिनसवनसम्बन्धिलोकम् ।

**पुरा तृतीयसवनस्योपाकरणात्** इत्यादि । **आहवनीयस्य -** अग्नेः इत्यर्थः । **आदित्यं -** आदित्यदैवत्यम् । **वैश्वदेवं -** विश्वेदेवदैवत्यम् इत्यर्थः । तत्रादित्यं सामाह - **लोकद्वारम्** इत्यादि । **स्वाराज्याय -** स्वर्गलोकाय इत्यर्थः । **इत्यादित्यं** सामोक्तम् इति शेषः ।

**अथ वैश्वदेवम् -** सामोच्यते इति शेषः । **साम्राज्याय -** उत्तमस्वर्गफलाय इत्यर्थः ।

**अथ जुहोति** इत्यादि । सर्वं पूर्ववत् द्रष्टव्यम् । आदित्यानां विश्वेदेवानां च बहुत्वात् **विन्दत अपहत** इति बहुवचनम् ।

**तृतीयसवनम् -** तत्फलं स्वर्गमित्यर्थः ।। **एष ह वै यज्ञस्य मात्रां वेद । मात्रां -** परिमाणं याथात्म्यम् इत्यर्थः । **य एवं वेद य एवं वेद -** य एवं कर्तुं वेद इत्यर्थः । द्विरुक्तिः अध्यायपरिसमाप्त्यर्था ।।

**।। इति द्वितीयप्रपाठकप्रकाशिका समाप्ता ।।**

**आ.भा. - अथ** इति । **अथ नमो वायवे** इत्यादिमन्त्रेण जुहोति इत्यर्थः । **अन्तरिक्षक्षिते -** अन्तरिक्षनिवासाय इत्यादिकं सर्वं पूर्वमन्त्रवदेव ज्ञातव्यमिति । **माध्यन्दिनमिति -** माध्यन्दिनसवनसम्बन्धिलोकम् । आहवनीयाग्नेः इत्यर्थः ।। आदित्यदेवताकम् **वैश्वदेवम् -** विश्वेदेवदैवत्यम् । **लोकद्वारम्** इति । **स्वाराज्याय -** स्वर्गलोकाय । एतदन्यत् सर्वम् पूर्ववदेव ज्ञातव्यम् । **एष ह वै** इत्यादिमन्त्रः परिमाणं माहात्म्यम् । **य एवं वेद** । यः एवं यथोक्तं कर्तुं जानाति । द्विरुक्तिः आदरार्था ।।

**।। इति द्वितीयप्रपाठक आनन्दभाष्यम् ।।**

**सु. - स्वराज्याय -** स्वर्गे यद्राज्यं तस्मै । तृतीयं सवनं तत्सम्बन्धि द्युलोकं **य एवं -** लोकतत्साधनभावादिकं उक्तेन प्रकारेण **वेद, एष वै यज्ञस्य मात्रां -** याथात्म्यं वेद । समाप्त्यर्थो अभ्यासः ।।

**।। इति द्वितीयप्रपाठकसुबोधिनी ।।**

**।। समाप्तं च द्वितीयप्रपाठकभाष्यम् ।।**

# तृतीयः प्रपाठकः

## प्रथमः खण्डः

### [आदित्ये मधुदृष्टिः]

**असौ वा आदित्यो देवमधु । तस्य द्यौरेव तिरश्चीनवँशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ।। १ ।।**

**प्र.** - मधुविद्या प्रस्तूयते - **असौ वा आदित्यो देवमधु ।** असौ आदित्यो वस्वादीनां देवानां [1]मोदहेतुत्वात्[1] मधु । अत्र मधुत्वदृष्टिः कर्तव्या इत्यर्थः । मधुत्वोपयोगीनि सम्पादयति। **तस्य द्यौरेव तिरश्चीनवंशः । तस्य -** आदित्याख्यमधुनः द्युलोकः एव आधारभूतः तिर्यक्प्रसारितो वंशः इत्यर्थः । **अन्तरिक्षमपूपः -** अन्तरिक्षं मध्वपूपः । मध्वाश्रयः अपूपो हि तिरश्चीनवंशलग्नस्सन् लम्बते । एवम् अन्तरिक्षमपि द्युलोकलग्नं लम्बते इव भाति इति अतः मध्वपूपत्वम् । **मरीचयः पुत्राः** । मरीचिशब्देन मरीचिस्थाः [2]सवित्राकृष्टाः[2] भौम्य आप उच्यन्ते । ताः पुत्राः इव पुत्राः भ्रमरबीजभूताः मध्वपूपच्छिद्रस्थाः सूक्ष्मकीटा इत्यर्थः ।।

**आ.भा.** - द्वितीयाध्यायस्य अन्तिमभागे 'यज्ञस्य मात्रां वेद' इत्यादिना यज्ञस्य निर्देशः कृतः सर्वयज्ञानां कार्यनिवृत्तिलक्षणः सूर्यः । स च सर्वप्राणिनाम् उपकारकः इति यज्ञकथनानन्तरं तदीयकार्यसूर्यविषयकम् उपासनं विशिष्टफलप्राप्तये मधुविद्यानामकं प्रस्तूयते - **असौ वा आदित्यः** इत्यादि । **असौ -** प्रत्यक्षतया समुपलभ्यमानः **आदित्यः -** सूर्यः **देवमधु -** देवानां वसुप्रभृतीनां मधु इव मधु । यथा प्राकृतं माक्षिकं मधु लोकानाम् आमोदजनकं तथैव सूर्यात्मकमधु वस्वादीनां देवानाम् आमोदकारणत्वात् मधु इति व्यपदिश्यते । सर्वयज्ञफलात्मकत्वात् सूर्यस्य। तस्मात् सूर्ये मधुदृष्टिः कर्तव्या इत्यर्थः । कथं सूर्यो मधुरूपः तत्राह - **तस्य** इत्यादि । **तस्य** - मधुरूपस्य सवितुः **द्यौरेव तिरश्चीनवंशः** तिरश्चीनश्चासौ वंशश्च इति तिरश्चीनवंशः अवलम्बनस्थानम् । अत एव तिर्यग्गत एव लक्ष्यते । **अन्तरिक्षमपूपः** । तस्य सूर्यलक्षणमधुनः अन्तरिक्षमपूपः मधुनामाश्रयलक्षणः अपूपः तिरश्चीनवंशाश्रितः सन् लम्बमानो भवतीति । मरीचेः पुत्राः मरीचयः । सूर्येण आकृष्टाः भौमा आपः पुत्राः इव पुत्रा भ्रमरबीजभूताः मध्वपूपान्तर्गतछिद्रे विद्यमानाः सूक्ष्मकीटाः इत्यर्थः ।।

---

1. आमोदहेतुत्वात् । 2. सवितृकृष्टाः - अ ।

**सु. -** अध्यायद्वयेन कर्माङ्गावलम्बनानि उपासनानि उपदिष्टानि । तेन उपासनवर्त्मनि कर्मपराणामपि रुचिः उदपादि । अथ उपासनविशेषाः निःश्रेयसैकान्ताः उपदिश्यन्ते । तत्र योऽयमादित्यो ज्योतिष्मान् सर्वेषाम् अध्यक्षः, तद्द्वारा परस्य ब्रह्मणः उपासनम् इह उपदिश्यते । यद्यपि 'असौ वा आदित्यः' इति अविशेषेण उपक्रम्य मधुत्वम् आदित्ये निरूप्यमाणं मधुविद्याया ब्रह्मविद्यात्वाभावम् आपाततः अवगमयति । अथाप्यन्ते 'य एतामेव ब्रह्मोपनिषदं वेद' इत्युपसंहारात् 'न वै तत्र स निम्लोच नोदियाय कदाचन' (छां.उ.३-११-२) इति ब्रह्मलिङ्गश्रवणाच्च सेयं मधुविद्या आदित्यद्वारा ब्रह्मणि वर्तते इत्येव निश्चीयते । तथा च इह आदित्यशब्दः आदित्यद्वारा परमात्मानम् अवगमयति इति बोध्यम् । **असौ वा -** यः प्रत्यक्षम् ईक्ष्यते सर्वैः अस्माभिः यः पुण्यकर्मिणां परलोके अयनम्, अयमादित्यः **देवमधु -** देवानां मधु । देवाः हि अस्य रूपविशेषम् अनुभूय मोदन्ते तत् देवमधु । अथ अस्मिन् प्रसिद्धमधुदृष्टये रूपयति मधुसम्पत्तिम् - **तस्य** इत्यादिना । **तस्य** - आदित्यलक्षणस्य मधुनः **द्यौरेव तिरश्चीनवंशः** - मधुनिष्पादनावलम्बनदण्डस्थानापन्नः द्युलोकः । स च तिर्यक्प्रसृतः इव लक्ष्यते इति तिरश्चीनवंशः इति रूप्यते । तस्य **अन्तरिक्षमपूपः** - सूर्यमण्डलावच्छेदकः आकाशप्रदेशः मध्वपूपस्थानीयः । द्युवंशे लग्नो मध्वपूप इव अन्तरिक्षं लक्ष्यते । **मरीचयः पुत्राः** - मरीचयो रश्मयः । रश्मिस्थाः आपो लक्ष्यन्ते । आदित्येन रश्मिभिः आकृष्यन्ते भौमाः आपः । ताः एव पुत्राः भ्रमरस्य । भ्रमरबीजभूताः कीटाः इति यावत्। मध्वपूपे हि सूक्ष्मच्छिद्रेषु कीटाः सन्निहिताः भवन्ति ।।

**तस्य ये प्राञ्चो रश्मयः, ता एवास्य प्राच्यो मधुनाड्यः; ऋच एव मधुकृतः, ऋग्वेद एव पुष्पम्, ता अमृताः आपः ।। २ ।।**

**प्र. - तस्य ये प्राञ्चो रश्मयः । तस्य -** आदित्यस्य ये प्राञ्चो रश्मयः । **ता एवास्य प्राच्यो मधुनाड्यः,** ता एव प्राग्दिगवच्छिन्नाः **मधुनाड्यः** - मधुच्छिद्राणि । **ऋच एव मधुकृतः** । ऋङ्मन्त्राः एव भ्रमराः । **ऋग्वेद एव पुष्पम्** । ऋग्वेदविहितं कर्म पुष्पस्थानीयम् । अस्मिन् पुष्पस्थानीये ऋग्वेदविहिते कर्मणि मधुकरस्थानीयैः ऋङ्मन्त्रैः आकृष्य मधुत्वेन निर्वर्त्यमानो रसः कः? इत्यत्राह**ता अमृता आपः । ताः** - कर्मणि प्रयुक्तसोमाज्यपयोरूपाः आपः अग्नौ प्रक्षिप्ताः [1]पाकाभि[1]निर्वृत्ताः अमृताः अत्यन्तरसवत्यः भवन्ति इत्यर्थः ।।

---

1. पाकादिभिः - अ,आ ।

**आ.भा. - तस्य ये प्राञ्चः** इत्यादि । **तस्य** - मध्वाधारसूर्यस्य मधुनः **ये प्राञ्चः -** प्राग्दिगवस्थिताः **रश्मयः** - किरणसमुदायाः **ता एव प्राच्यः** - पूर्वदिगवच्छिन्नाः **मधुनाड्यः** मधुच्छिद्राणि, मधूनामाश्रयभूतछिद्राणि इत्यर्थः । **ऋच एव** - ऋग्वेदसम्बन्धिनः मन्त्राः एव **मधुकृतः -** मधुसम्पादकाः भ्रमराः ईषद्रक्तवर्णं सूर्याश्रितं मधु यत् तस्य सम्पादकाः, **ऋग्वेद एव पुष्पम्** । तत्र **ऋग्वेदः** - ऋग्वेदविहितं कर्म तदेव पुष्पस्थानीयम् । शब्दराशेः वेदस्य भोग्यरसनिःश्रावाऽसम्भवात् । कर्मणा कर्मफलभूतमधुरसनिःश्रावसम्भवात् इति । पुष्पस्थानापन्नऋग्वेदप्रतिपादितकर्मणि मधुकरलक्षणऋग्वेदमन्त्रैः आकृष्य मधुरूपेण सम्पाद्यमानो रसः कीदृशः तत्राह**ता अमृता आपः** इति । ताः कर्मणि प्रयुज्यमानाः सोमघृतदुग्धादिलक्षणा आपः जलानि संस्कृते वह्नौ प्रयुक्ताः पाकाभिनिर्वृत्ताः **अमृताः -** अमृतवद् विलक्षणाः अत्यन्तरसवत्यः भवन्ति ।।

**सु. - तस्य -** आदित्यस्य **ये प्राञ्चः रश्मयः** - प्राचीदिगवच्छिन्नाः रश्मयः ता एव अस्य प्राच्यः **मधुनाड्यः -** मध्वाश्रयभूता नाड्यः - छिद्राणि इति यावत् । **ऋच एव** - ऋङ्मन्त्राः एव **मधुकृतः** - मधुकराः । **ऋग्वेद एव पुष्पं,** ऋग्वेदविहितं कर्म इह ऋग्वेदशब्देन लक्ष्यते । नहि केवलशब्दराशौ कश्चन रसः, येन पुष्पता घटेत । येन रसेन पुष्पता कर्मणः, यो रसो नीतः मधुकरैः मधुतां प्राप्नोति स रसः कः? इत्यत्र आह - **ता अमृता आपः,** याः कर्मसु सोमाज्यपयोरूपा अग्नौ प्रक्षिप्यमाणाः प्रसिद्धाः ता एव इह अमृता आपः स्वादुतमाः रसांशाः । अस्य उपासनस्य अमृतत्वोपयोगितया अमृताः वा ।।

**ता वा एता ऋच एतमृग्वेदमभ्यतपन् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ।। ३ ।।**

**प्र. - ता वा एता ऋच एतमृग्वेदमभ्यतपन् । ता वा एता ऋचः** - ऋङ्मन्त्राः भ्रमरस्थानीयाः पुष्पेभ्यः रसम् आददानाः भ्रमराः इव एतत् ऋग्वेदविहितं कर्म पुष्पस्थानीयम् । **अभ्यतपन्** - अभितापं कृतवत्यः इव । **तस्य......अजायत ।** यशस्तेज इन्द्रियवीर्यान्नाद्यलक्षणो रसः अजायत इत्यर्थः । ऋग्भिर्मन्त्रैः स्तोत्रशस्त्राद्यङ्गभावम् उपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं सोमाज्यादिरसं मुञ्चति पुष्पमिव **भ्रमरैः** [1]आचोष्यमाणं[1] । तेन च यशस्तेज-इन्द्रियपाटववीर्यादिलक्षणं फलम् उत्पन्नं भवति इत्यर्थः ।।

---

1. आकृष्यमाणम् - अ,आ आचूष्यमाणम् - क,ख ।

**आ.भा. - ता वा एता ऋचः** - ऋङ्मन्त्राः भ्रमरसदृशाः पुष्पेभ्यः रसम् आददानाः **एतम् ऋग्वेदं** - ऋग्वेदविहितं कर्म पुष्पलक्षणम् । **अभ्यतपत्** - अभितापं कृतवत्य इव तस्य अभितप्तस्य यशोविश्रुतत्वम्, तेजो विलक्षणा दीप्तिः शरीरादिगता । **इन्द्रियं वीर्यम्** - सामर्थ्यविशिष्टे इन्द्रियद्वारेण जायमानं विलक्षणं बलम् । **अन्नाद्यम्** - अन्नं च तत् आद्यं च। यदुपभोगात् प्रतिदिनं वस्वादिदेवानां स्थितिः भवति तत् अन्नाद्यम् । एतादृशो विलक्षणो रसः अजायत । वेदविहितयागादिलक्षणकर्मसकाशात् समुत्पन्नः अभूत् । ऋङ्मन्त्रैः स्तोत्रशस्त्राद्यङ्गस्वरूपताम् उपगतैः क्रियमाणं यागादिलक्षणं कर्म मधुसम्पादकं सोमाज्यपय आदिरसं पुष्पमिव भ्रमरैः आकृष्यमाणं मुञ्चति । तेन यशस्तेज-इन्द्रियपटुत्वादिस्वरूपं फलं समुत्पन्नं भवति इति भावः ।।

**सु. - ता वा एता ऋचः** - मधुकराः **एतमृग्वेदम्** - पुष्पम् **अभ्यतपन्** - आचूषणमिह अभितापः उच्यते । आचूष्यमाणं हि पुष्पं मुखोष्मणा संसृज्यते । एवं ऋङ्मन्त्रैः शस्त्राद्यङ्गभावम् उपगतैः अतिशयं गमितात् कर्मणः मधुनिर्वर्तकः रस इव सोऽयं प्रास्रवत् इति यावत् । कोऽसौ रसः ? यशः तेजः शारीरम् , **इन्द्रियम्** - अविकलेन्द्रियता **वीर्यं** बलं, अन्नाद्यं च ।।

**तद् व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतत् यदेतदादित्यस्य रोहितँ रूपम् ।। ४ ।।**

**।। इति प्रथमः खण्डः ।।**

**प्र. - तद् व्यक्षरत् । तत्** - यश आदिलक्षणं फलं **व्यक्षरत्** - विशेषेण अगमत् । **तदादित्यमभितोऽश्रयत् ।** गत्वा **च आदित्यमभितः** [1]आश्रितवदित्यर्थः[1] । **तद्.... रूपम् ।** आदित्ये प्रत्यक्षतः परिदृश्यमानं यद् रोहितरूपम्, तत् कर्मनिर्वर्त्ययशस्तेजआदिलक्षणफलरूपम् इत्यर्थः । रोहितरूपे तद्बुद्धिः कर्तव्या इति यावत् ।।

**आ.भा. - तद् व्यक्षरत्** इत्यादि । ततः यश आदि-अन्नाद्यलक्षणं फलम् **व्यक्षरत्** - अपगतमभूत् । गत्वा च तत्फलं **आदित्यम्** - सूर्यम् **अभितः** - पार्श्वतः

---

1. आश्रयत् इत्यर्थः - अ,आ ।

**अश्रयत्** - आश्रयं कृतवत् । तदेतत् सवितरि प्रत्यक्षतः परिदृश्यमानं यत् रोहितं रूपं तत् । यागादिकर्मसम्पादितयशस्तेजप्रभृतिफलमेव इति ।।

**सु. - तद् व्यक्षरत् -** तत् मधुविशेषेण अक्षरत् । तदेव आदित्यमण्डलम् अभितः अश्रयत्, यदेतत् आदित्यस्य रोहितं रूपं दृश्यते तदेव एतत् मधु । तथा च दिवि तिरश्चीनवंशदृष्टिः, अन्तरिक्षे मध्वपूपदृष्टिः, मरीचिसम्बद्धासु अप्सु कीटदृष्टिः, कर्मणि पुष्पदृष्टिः आज्यादिषु पुष्पदृष्टिः, यशःप्रभृतिषु फलेषु आपन्नमधुभावपुष्परसदृष्टिः, आदित्यस्य लोहिते रूपे तन्मधुदृष्टिः इत्येवं क्रमेण आदित्ये देवमधुत्वसम्पत्तिः इति भावः ।।

**।। इति प्रथमखण्डभाष्यम् ।।**

## द्वितीयः खण्डः

**[दक्षिणदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः]**

**अथ येऽस्य दक्षिणा रश्मयः, ता एवास्य दक्षिणा मधुनाड्यः ; यजूँष्येव मधुकृतः, यजुर्वेद एव पुष्पम् ; ता अमृता आपः ।। १ ।।**

**तानि वा एतानि यजूँषि एतं यजुर्वेदमभ्यतपत् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ।। २ ।।**

**तद् व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतत्, यदेतदादित्यस्य शुक्लँ रूपम् ।। ३ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र. - अथ येऽस्य दक्षिणा रश्मयः** इत्यादि । सर्वं पूर्ववन्नेयम् ।

**आ.भा. - अथ** - अनन्तरम् **अस्य** - आदित्यस्य **ये दक्षिणाः** - दक्षिणदिगवस्थिताः **रश्मयः** - किरणसमुदायाः **ता एव अस्य** - आदित्यस्य **दक्षिणाः** - दक्षिणदिगवच्छिन्नाः **मधुनाड्यः** - मध्वाधारछिद्राणि **यजूंष्येव** - यजुर्मन्त्रा एव **मधुकृतः** - भ्रमराः, भ्रमरवत् मधुसम्पादकाः । यजुर्वेदः एव पुष्पम् । यतो मधुकरसदृशाः मन्त्राः फलम् अभिनिर्वर्तयन्ति । **ताः** - सोमाज्यपयःप्रभृतिकाः **आपः अमृताः** - अत्यन्तरसवत्यः इति ।

**तानि वा एतानि यजूंषि** । यजुर्वेदमन्त्राः यजुर्वेदम् **अभ्यतपन्** - अभितापं कृतवन्तः तस्य अभितप्तस्य यशस्तेजः, इन्द्रियं वीर्यम्, अन्नाद्यं रसः अजायत । पूर्ववदेव व्याख्यातव्यो मन्त्रः इति ।

**तद्व्यक्षरत्** । **तत्** - यश आदि स्वरूपं फलं कर्मजनितं **व्यक्षरत्** - विशेषेण अगमत् । **तदादित्यम्** इत्यादि । तत्फलम् गत्वा च **सूर्यमभितः** - पार्श्वतः **अश्रयत्,** आश्रितवत् इत्यर्थः **तद्वा एतत्** आदित्ये प्रत्यक्षतः परिदृश्यमानं यत् शुक्लम् सर्वतः श्वेतरूपं तत्कर्मसम्पादितयशस्तेजप्रभृतिफलरूपम् । अर्थात् श्वेतरूपे तद्बुद्धिः कर्तव्या इति ।।

**सु.** - अथ अस्य रूपान्तरे मध्वन्तरदृष्टिः उच्यते । अयं हि चित्रभानुः । **यजूंषि** - कर्मणि उपयुज्यमानानि तान्येव मधुकरः, **यजुर्वेदः पुष्पम्** - यजुर्वेदविहितं कर्म पुष्पम् । स्पष्टमपरम् ।।

**।। इति द्वितीयखण्डभाष्यम् ।।**

## तृतीयः खण्डः

**[पश्चिमदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः]**

**अथ येऽस्य प्रत्यञ्चो रश्मयः, ता एवास्य प्रतीच्यो मधुनाड्यः ; सामान्येव मधुकृतः, सामवेद एव पुष्पम् ; ता अमृता आपः ।। १ ।।**

**तानि वा एतानि सामानि एतँ सामवेदमभ्यतपन् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ।। २ ।।**

**तद् व्यक्षरत् ; तदादित्यमभितोऽश्रयत् ; तद्वा एतत्, यदेतदादित्यस्य कृष्णं रूपम् ।। ३ ।।**

**।। इति तृतीयः खण्डः ।।**

**प्र. - अथ येऽस्य प्रत्यञ्चो रश्मयः** इत्यादि । पूर्ववदेव ।।

**आ.भा. - अथ येऽस्य प्रत्यञ्चः** - प्रतीचीदिगवस्थिताः रश्मयः ता एवास्य आदित्यस्य **प्रतीच्यः** - प्रतीचीदिगवच्छिन्नाः **मधुनाड्यः** - मधुच्छिद्राणि । **सामानि एव** - साममन्त्रा एव **मधुकृतः** - भ्रमरसदृशाः रसनिष्पादकाः **सामवेद एव पुष्पम्** -

रसनिष्पत्तिस्थानम् । **ताः** - कर्मणि प्रयुज्यमानाः सोमाज्यपयोरूपाः **आपः** - जलानि **अमृताः** - अत्यन्तरसवत्यः ।

**तानि वा एतानि सामानि** - साममन्त्राः **सामवेदमभ्यतपन्** इत्यादि क्रमेण पूर्वप्रकरणवदेव इदं प्रकरणमपि व्याख्येयम् इति ।।

**सु.** - पूर्ववत् ।।

**।। इति तृतीयखण्डभाष्यम् ।।**

## चतुर्थः खण्डः

**[उत्तरदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः]**

**अथ येऽस्योदञ्चो रश्मयः, ता एवास्योदीच्यो मधुनाड्यः, अथर्वाङ्गिरस एव मधुकृतः, इतिहासपुराणं पुष्पम् ; ता अमृता आपः ।। १ ।।**

**ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन्, तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ।। २ ।।**

**तद् व्यक्षरत्, तदादित्यमभितोऽश्रयत् ,तद्वा एतत्, यदेतदादित्यस्य परः कृष्णं रूपम् ।। ३ ।।**

**।। इति चतुर्थः खण्डः ।।**

**प्र. - अथ येऽस्योदञ्चो रश्मयः** इत्यादि । **अथर्वाङ्गिरस एव मधुकृतः ।** अथर्वणा अङ्गिरसा च दृष्टा मन्त्राः अथर्वाङ्गिरसः । **इतिहासपुराणं पुष्पम् ।** इतिहासपुराणविहितकर्मसु अथर्वाङ्गिरसां मन्त्राणां विनियोगात् ऋग्वेदादिवत् पुष्पत्वोक्तिः इति द्रष्टव्यम् ।

**तद्व्यक्षरत्.....परःकृष्णं रूपम् । परःकृष्णं रूपम् -** अतिशयितं कृष्णरूपम् इत्यर्थः। अन्यत्सर्वं पूर्ववत् नेयम् ।।

**आ.भा. - अथ ये** इत्यादि । पूर्वप्रकरणवदेव व्याख्येयम् । **अथर्वाङ्गिरसः** इत्यादि। अथर्वणा तन्नामकेन ऋषिणा तथा अङ्गिरसा अङ्गिरोनामकेन ऋषिणा दृष्टा ये

मन्त्राः ते अथर्वाङ्गिरसो मन्त्राः ते एव मधुकृतः । **इतिहासपुराणं पुष्पम् ।** इतिहासपुराणप्रतिपादितकर्मणि अथर्वाङ्गिरोमन्त्राणां विनियोगात् ऋग्वेदादिवत् इतिहासपुराणानां पुष्पत्वकथनम् इति ज्ञातव्यम् । **तद्वा एतत्** इत्यादि । **परःकृष्णं रूपं** - अतिशयेन कृष्णरूपम् इत्यर्थः ।।

**सु. - अथर्वाङ्गिरसो मधुकृतः** - अथर्वणा अङ्गिरसा च दृष्टाः मन्त्रविशेषाः मधुकृतः । **इतिहासपुराणं पुष्पम्** - इतिहासपुराणोक्तं कर्म पुष्पम् । इह इतिहासपुराणशब्देन आथर्वणानामङ्गिरसां च प्रसिद्धं यद्ब्राह्मणं तदुदितं कर्म गृह्यते । प्रसिद्धेतिहासपुराणोदितं कर्म वा । 'मनुर्वैवस्वतो राजा' इत्येवंप्रकारकेतिहासपुराणविनियोगो यस्मिन् पारिप्लवाख्य[1]कर्मणि तद्वा गृह्यते । व्याख्यातप्रायमितरत् ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

**[ऊर्ध्वदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः]**

**अथ येऽस्योर्ध्वा रश्मयः, ता एवास्योर्ध्वा मधुनाड्यः, गुह्या एवादेशा मधुकृतः ब्रह्मैव पुष्पं, ता अमृता आपः ।। १ ।।**

**ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपन् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ।। २।।**

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य मध्ये क्षोभत इव ।। ३ ।।**

**ते वा एते रसानां रसाः ; वेदा हि रसाः, तेषामेते रसाः, तानि वा एतान्यमृतानाममृतानि, वेदा ह्यमृताः, तेषामेतान्यमृतानि ।। ४ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र. - अथ येऽस्योर्ध्वा रश्मयः** इत्यादि । **गुह्या एवादेशा मधुकृतः ।** ब्रह्मविषयकोपनिषद्रहस्योपदेशाः इत्यर्थः ।

---

१. पारिप्लवः - अश्वमेधे जामितापरिहाराय आख्यानानि शंसन्तीति प्रथमाख्यानकथनरूपं कर्म पारिप्लवः इति उच्यते ।।

**तद्वा......क्षोभत इव** । समाहितदृष्टिभिः वीक्ष्यमाणम् आदित्यमण्डलमध्ये चलतीव स्फुरति इत्यर्थः ।

**ते वा एते रसानां रसाः** इत्यादि । लोकसारभूत ऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यत्वात् रोहितादिरूपाणाम् अतिरसत्वम् । तथा वेदेभ्योपि इष्टतत्साधनप्रतिपादकतया भोग्यभूततया अमृतेभ्यः रोहितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानाम् अतिभोग्यत्वात् अमृतादपि अमृतत्वम् इत्यर्थः। अयमत्र निर्गलितार्थः । प्रागाद्यूर्ध्वदेशान्तरस्थितरश्मिनाडीतः तत्तद्वेदोक्तकर्मकुसुमेभ्यः तत्तद्वैदिकमन्त्रमधुकरैः आदित्यमण्डलम् आनीतानि सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजोवीर्यमिन्द्रियम् इत्येवमात्मकानि रोहितं शुक्लं कृष्णं परःकृष्णं **मध्ये क्षोभते** इव इत्युक्तानि रोहितादीनि पञ्चामृतानि आदित्यमध्वाश्रितानि इति ।।

**आ.भा. - अथ येऽस्योर्ध्वा रश्मयः** इत्यादिकं पूर्ववदेव व्याख्येयम् । **गुह्या एवादेशा मधुकृतः** - तत्र गुह्याः गोप्याः रहस्याः एव **मधुकृतः** - भ्रमराः ब्रह्मविषयकोपनिषद्रहस्याः आदेशाः इत्यर्थः । **ब्रह्मैव** प्रणवाख्यं **पुष्पं** - पुष्पस्थानीयम् । अन्यत्सर्वं पूर्ववत् । **आदित्यस्य मध्ये क्षोभते इव** - समाहितदृष्टेः पुरुषस्य सूर्यमण्डलमध्ये **क्षोभते इव** - सञ्चलतीव दृश्यते । न हि सर्वैः तथानुभूयते । किन्तु ये समाहितदृष्टयः ते एव तथा पश्यन्ति इति भावः । **ते वा एते रसानां रसाः** इत्यादि । ते वा एते रोहितादिकारसानां वेदानामपि **रसाः** - सारभूताः लोकसारत्वात् । **वेदाः** - ऋग्वेदादयः रसाः तेषां सारभूतानां वेदानां **एते** - रोहितादयो रसाः । अतिशयेन सारभूताः सारसारत्वात् । **तानि वा एतानि** रोहितादीनि **अमृतानाम्** - विलक्षणकर्मप्रतिपादकानां वेदानामपि **अमृतानि** - वेदप्रतिपादितानाम् अतिभोग्यत्वात् अमृतादपि अमृतम् । लोके हि सारभूतो वेदः । तत्प्रतिपादितकर्मनिष्पाद्यत्वात् रोहितादिरूपाणाम् अतिसारत्वम् । तथा इष्टसाधनकर्मप्रतिपादकतया वेदोऽमृतः । वेदेभ्योऽपि रोहितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानां विस्पष्टं भोगजनकत्वात् अमृतादपि अमृतत्वं भवतीति भावः। तदयमत्र संक्षेपः। आदित्यस्य प्राच्यादिदेशस्थितरश्मिलक्षणनाडीतः तत्तद्वेदोक्तकर्मात्मकपुष्पेभ्यः तत्तद्वेदान्तर्गतमन्त्रात्मभ्रमरद्वारा सूर्यमण्डले प्रापितानि सोमाज्यपयःप्रभृतिद्रव्येभ्यो जायमानानि यशस्तेजोलक्षणानि रोहितं शुक्लं कृष्णं मध्ये **क्षोभते इव** इत्यादिना कथितानि रोहितादीनि पञ्च अमृतानि आदित्यमध्वाश्रितानि ।।

**सु. - ऊर्ध्वा रश्मयः -** ऊर्ध्वं प्रसृता रश्मयः, **गुह्या एवादेशा मधुकृतः -** गुह्याः गोप्याः ये **आदेशाः -** विधयः उपासनविधयः कर्माङ्गावलम्बनाः इति यावत् । यशः[१]प्रभृतिकमेव इहापि रसतया रूप्यते । तच्च कर्मणः फलात् अनन्यतया गृह्यते । **ब्रह्मैव पुष्पं,** ब्रह्मैव प्रणवः । इदम् उपलक्षकम् उद्गीथात् अन्यस्यापि कर्माङ्गस्य । ताः अमृताः आपः इति च अविशेषेण पुष्परसः श्रूयते । **ते वा एते गुह्याः** इत्यादि व्याख्यातप्रायम् । **ते वा एते** आदित्यं मण्डलमभिसम्बद्धाः रोहितादयः मधुनिष्यन्दाः **रसानां रसाः -** अतिशयिता रसाः, कुतः ? वेदा हि लोकेषु रसाः । तेषाम् एते रसाः, वेदविहितकर्मनिष्पाद्यफलपरिणतिरूपत्वात् । **अमृतानाममृतानि** - स्वादुतमानामपि स्वादुतमानि, उत्तमफलावाप्तिसाधनत्वात् ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

**[प्रथमामृतस्य वसूनाम् उपजीव्यत्वम्]**

**तद् यत् प्रथमममृतम्, तद् वसव उपजीवन्त्यग्निना मुखेन, न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।**

**प्र. -** एषां पञ्चानाम् अमृतानां वसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वं तदुपासीनानां वसुत्वादिप्राप्तिपूर्वकब्रह्मप्राप्तिं च प्रतिपादयति - **तद्यत्.....मुखेन** । अग्निमुखाः वसवः रोहितरूपलक्षणं प्रथमम् अमृतम् उपजीवन्ति इत्यर्थः । उपजीवनं भक्षणमिति शंकां प्रतिषेधति । **न वै देवा अश्नन्ति न पिबन्ति** इति । चन्द्रमिव इति भावः । पुनः कथम् उपजीवनम् इत्यत्राह - **एतदेवामृतं दृष्ट्वा तृप्यन्ति** । यशस्तेजआदिलक्षणं रोहितं रूपं सर्वैः [1]करणैः[1] उपलभ्य तृप्यन्ति इत्यर्थः ।।

**आ.भा. -** एतानि पञ्चापि अमृतानि वसुरुद्रादित्यमरुत्साध्यगणदेवैः उपभोग्यानि भवन्ति तथा तदुपासकानां पुरुषाणां वस्वादिदेवत्वप्राप्तिपूर्वकश्रीरामात्मकब्रह्मप्राप्तिरपि भवतीति प्रतिपादयितुमाह - **तद्यत्प्रथमम्** इत्यादि । **तद् यत् प्रथमममृतं** रोहितादिलक्षणकम् । तदमृतम् वसवस्तदा देवगणाः **अग्निना मुखेन -** वह्न्यात्मकमुखद्वारेण **उपजीवन्ति** - उपभोगं

---

१. परब्रह्मोपासनविधय एव किं न गृह्येरन्नित्यत आह यश इत्यादिना ।

1. कारणैः - अ,आ ।

कुर्वन्ति । न हि देवा अस्मदादिवत् देहावयवमुखद्वारा भक्षयन्ति । किन्तु वह्न्यात्मकमुखेनैव उपभुज्यमानं वस्तु खादन्ति 'अग्निमुखा वै देवाः' ( ) इति श्रुतेः । तत्र देवानाम् अस्मदादिवत् कवलाहारं प्रतिषेधति श्रुतिः । **न ह वै देवाः** इत्यादि । **न वै देवाः अश्नन्ति पिबन्ति** - ते देवाः रोहितादिलक्षणम् अमृतं न अश्नन्ति चर्वणादिव्यापारं न कुर्वन्ति । न वा अस्मदादिवत् पानमेव वा कुर्वन्ति । किन्तु एतदेव अमृतं दृष्ट्वा तृप्यन्ति । यशस्तेजप्रभृतिकरोहितादिकरूपं यथायथं चक्षुरादिकरणद्वारेण समुपलभ्य तृप्यन्ति । यथा 'स्वकृतकर्मफलोपभोगाय चन्द्रमण्डलं ये प्राप्ताः तान् तत्र देवाः भक्षयन्ति' इति श्रुतौ यथा देवाः तैः सह विहरणादिकं कुर्वन्ति इत्यर्थः तथैव अत्रापि इति ।।

**सु.** - एवं पञ्चामृतसम्पन्नम् आदित्याख्यं देवमधूक्तम्। तत्र इमे देवा इदममृतम् उपजीवन्तीति उपदिश्यते, तद्देवभोग्यत्वेन तत्तदमृतचिन्तनार्थं **तत् यत्** इत्यादिना । एतेषु पञ्चसु यत्तत् प्रथमम् अमृतं रोहितलक्षणं तद्वसवो देवाः उपजीवन्ति अग्निना मुखेन, अग्निप्रधाना भुञ्जतीति यावत् । यथा लोकोऽयम् अन्नमश्नाति न तथा देवा अश्नन्ति न पिबन्ति, किन्तु दृष्ट्वा एतदेव अमृतं तृप्यन्ति । ग्रासेन या तृप्तिः मनुष्यणां सेयं तृप्तिः दर्शनेन देवानाम् एषां भवतीति यावत् । दर्शनमिह स्वकरणैः अनुभवमात्रम् ।।

**त एतदेव रूपमभिसंविशन्ति ; एतस्माद्रूपादुद्यन्ति ।। २ ।।**

**प्र. - त एतदेव रूपमभिसंविशन्ति ।** एतदेव रूपमभिलक्ष्य - अनुभूय इति यावत् । **संविशन्ति** - भोगानन्तरम् उदासीनाः भवन्ति इत्यर्थः । **एतस्माद्रूपादुद्यन्ति ।** प्राप्ते भोगकाले इति शेषः । एतस्माद्रूपात् इति ल्यब्लोपे पञ्चमी । एतद्रूपानुभवमुद्दिश्य **उद्यन्ति** - [1]सोत्साहाः[1] भवन्ति इत्यर्थः ।।

**आ.भा. - ते** - देवा वसवः **एतदेव रूपं** - रोहितादिलक्षणम् अभिलक्ष्य अनुभूय **संविशन्ति** - भोगकरणानन्तरमुदासीनाः भवन्ति । **एतस्माद्रूपादुद्यन्ति ।** एतेषाम् अमृतानां भोगकाले समुपस्थिते तद्रूपानुभवम् उद्दिश्य **उद्यन्ति** - सोत्साहाः सावधानाश्च भवन्तीति ।।

---

1. अनुभवितुमुत्साहयुक्ताः - अ,आ ।

**सु. - ते -** वसवः **एतदेव -** अमृतम् आद्यं रूपम् आदित्यरोहितलक्षणम् अभिलक्ष्य **संविशन्ति** - भोगावसरावसाने । पुनर्भोगावसरे प्राप्ते **एतस्माद्रूपात् -** निमित्तात् **उद्यन्ति -** एतद्रूपं भोक्तुम् उद्युक्ताः भवन्तीति यावत् । यद्वा दृष्ट्वा तृप्यन्ति इत्युक्तम्। सा दृष्टिः विशिष्यते, न केवलमिदं रूपम् इतरसामान्यं चक्षुषा पश्यन्ति किन्तु - **अभिसंविशन्ति -** आभिमुख्येन सम्यक् विशन्ति । सर्वैः करणैः इतरप्रत्ययानवरुद्धैः अस्पन्देन चेतसा अनुभवन्ति । अथ प्रणिधानोपरमसमये एतस्माद्रूपात् **उद्यन्ति** उद्गच्छन्ति । तैस्तैः करणैः एतस्मात् रूपात् अन्यदखिलं यथायथम् अनुभवन्ति इति यावत् । इदं च रूपं प्रथमामृतम् आदित्यद्वारा आदित्यान्तर्यामिणः एवेति प्रणिधानं समुचितं नाम ।।

[अमृतोपासकस्य फलम्]

**स य एतदेवममृतं वेद, वसूनामेवैको भूत्वाऽग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति, स एतदेव रूपमभिसंविशन्ति, एतस्माद्रूपादुदेति ।। ३ ।।**

**प्र. - स य एतदेवममृतं वेद । एवम् -** अनेन प्रकारेण वसुतृप्त्याधायकदर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिना रोहितामृतं यो वेद इत्यर्थः । **वसूनामेव....मुखेन** इत्यादि तत्क्रतुन्यायेन **सः -** तदुपासीनोऽपि वसुत्वं प्राप्य तथैव भवति इत्यर्थः ।

**आ.भा. -** मधुविद्योपासकस्यापि एतादृशफलप्राप्तिं दर्शयितुमाह **- स य एतदेवामृतम्** इत्यादि । **स यः -** उपासकः **एवं -** यथोक्तप्रकारेण । **अमृतम् -** वसुदेवतृप्तिप्रयोजकदर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिना रोहिताद्यात्मकम् अमृतं **वेद -** विजानाति तादृशं उपासनं करोति तादृशः उपासकः तत्क्रतुन्यायेन तादृशम् उपासनं कुर्वन् **वसूनामेवैकः** - वसूनां मध्येऽन्यतमः भूत्वा वसुत्वं प्राप्य तथैव भवति । **अग्निनैव मुखेन -** वह्निद्वारेण एतदमृतं दृष्ट्वा करणग्रामेण अनुभूय **तृप्यति -** अतिशयेन तृप्तो भवति । **स एतदेव रूपमभिसंविशति।** एतद्रूपम् अनुभूय भोगानन्तरम् उदासीनः भवति । **एतस्माद्रूपादुद्यति ।** भोगकाले प्राप्ते सति एतद्रूपानुभवम् उद्दिश्य सोत्साहः भवति अतिशयेन उत्साहयुक्तः भवति इत्यर्थः।।

**सु. - स एतदमृतमेवं वेद -** एतदादित्यं रूपं वसूपजीव्यामृतत्वेन **वेद -** उपास्ते स वसूनाम् एव एको भूत्वा अग्निना मुखेन एतदमृतम् आदित्यरूपं दृष्ट्वा तृप्यति । स चायम्

एतदेव रूपम् अभिसंविशति एतस्मात् रूपात् उदेति, वसूनां भोगमखिलमयं प्राप्नोति इति यावत् ।।

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, वसूनामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ।। ४ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र.** - कियन्तं कालमित्यत्राह - **स यावत्......अस्तमेता** इत्यादि । आदित्यस्य प्राच्यां दिशि उदयः, प्रतीच्यां अस्तमयश्च यावन्तं कालम् अनुवर्तते, तावन्तं कालं **वसूनां यदाधिपत्यं** यदप्रतिहतसंकल्पत्वलक्षणं **स्वाराज्यं च तत् पर्येता** - परितो गन्ता इत्यर्थः ।।

**आ.भा.** - कियत्कालपर्यन्तं मधुविद्योपासकः अमृतम् उपजीवति तत्राह - **स यावदादित्यः** इत्यादि । **सः** - विद्वान् यावत्कालपर्यन्तम् **आदित्यः** सूर्यः **पुरस्तात्** - पूर्वदिशि **उदेता** - उदयं यास्यति **पश्चात्** - प्रतीच्यां **अस्तमेता** - अस्तं यास्यति । एतावान् हि वसुदेवस्य भोगकालः, तावत्कालपर्यन्तम् स उपासकः **वसूनामाधिपत्यं स्वाराज्यं पर्येता** - परितो गन्ता भवति । यथा चन्द्रमण्डलस्थः केवलकर्मकारी देवाधीनो देवानामन्नभावं गच्छति न तथा मधुविद्योपासकः वसूनां पराधीनो भवति, किन्तु आधिपत्यं स्वराड्भावं च प्राप्नोति । वस्वादिलोकगतोऽपि वसूनाम् अङ्गभावं न अधिगच्छति इति ।।

**सु.** - यावत्कालम् आदित्यः पुरस्तात् उदेता पश्चात् अस्तमेता तावत्कालं **पर्येता** - पर्येष्यति । प्राप्स्यति यत् **वसूनामाधिपत्यं** यच्च **स्वाराज्यं** स्वातन्त्र्यम्, अव्याहतसंकल्पत्वम् ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

## सप्तमः खण्डः

**[द्वितीयामृतस्य रुद्रस्य उपजीव्यत्वम्]**

**अथ यद् द्वितीयममृतम्, तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन । न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।**

**त एतदेव रूपमभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ।। २ ।।**

**स य एतदेवममृतं वेद, रुद्राणामेवैको भूत्वा इन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति, स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ।। ३।।**

**स यावदादित्यः पुरस्तादुदेता, पश्चादस्तमेता, द्विस्तावत्, दक्षिणत उदेतोत्तरतोऽस्तमेता, रुद्राणामेव तावदाधिपत्यँ, स्वाराज्यं पर्येता ।। ४ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र. - अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्ति** इत्यादि । सर्वं पूर्ववद्द्रष्टव्यम् ।

**स यावदादित्यः पुरस्तात्** इत्यादि । पुरस्तादुदयपश्चादस्तमयापेक्षया द्विगुण कालं **दक्षिणतः** उदयम् **उत्तरतः** अस्तमयं च कल्पयित्वा श्रुतिः [1]ब्रवीति इति[1]नात्र कथन्ता कार्या । शिष्टं स्पष्टम् ।।

**आ.भा. - अथ** इत्यादि । अथ यत् द्वितीयं शुक्लरूपाख्यम् अमृतम् अतिसारतमम् तदमृतम् । रुद्राः तन्नामकाः देवाः **उपजीवन्ति** - तदुपभोगं कुर्वन्ति। **इन्द्रेण मुखेन ।** न अस्मदादिवत् ते रुद्रादयो भुञ्जन्ति, किन्तु **एतदेवामृतं दृष्ट्वा** सर्वैः करणग्रामैः यथास्वम् उपलभ्य **तृप्यन्ति** - तृप्ताः भवन्ति ।

**एतदेव रूपमभिसंविशन्ति** - तत्कालम् उपभोगे उदासीनाः भवन्ति । **तस्माद्रूपादुद्यन्ति** । यदा वै पुनः भोगावसरो जायते तदा उपभोगार्थम् अतिशयेन उत्साहवन्तो भवन्ति । सम्प्रति उपासकस्यापि फलं दर्शयति - **स यः** इत्यादि । **स यः** उपासकः **एतदेव** - पूर्वोक्तम् **अमृतम्** - शुक्लरूपात्मकं **वेद** - विजानाति तदुपासनं करोति स रुद्राणाम् एव एकः अन्यतमो भूत्वा रुद्रत्वम् अवाप्य इन्द्रात्मकमुखेन अमृतम् दृष्ट्वा यथायथम् अनुभूयेत । **एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुदेति ।** पूर्ववदेव अर्थो ज्ञातव्यः । भोगकालावधिं दर्शयति **स यावदादित्यः** इत्यादि । **सः** - उपासकः यावत्कालपर्यन्तम् आदित्यः पूर्वस्यां दिशि उदेता, पश्चिमायां च दिशि अस्तमेता । यावता कालेन आदित्यस्य उदयास्तमयौ। ततो **द्विः** - द्विगुणं कालं यावत् **दक्षिणतः** - दक्षिणस्यां दिशि उदेता । **उत्तरतः** - उत्तरस्यां दिशि **च अस्तमेता ।** एतावान् हि कालो रुद्राणाम् भोगकालः तावन्तमेव कालम् उपासकोऽपि रुद्राणाम्

1. ब्रुवतीति - अ,आ ।

आधिपत्यं स्वाराज्यं **पर्येता** - परितो गन्ता । नहि केवलकर्मिवत् पराधीनः स्यात् , अपि तु सर्वथैव स्वातन्त्र्यं भजते ।।

**सु.. - अथ यद्द्वितीयम् इत्यादि ।** पूर्ववत् । प्रथमामृतोपासकानां यावान् भोगकालः ततो द्विगुणो द्वितीयामृतोपासकानाम् इत्याह **स** इति । यावत्कालम् आदित्यः पुरस्तात् उदेता पश्चात् अस्तमेता **द्विस्तावत् -** ततो द्विगुणं कालं **दक्षिणतः** उदेता **उत्तरतोऽस्तमेता** तावान् **रुद्राणां** भोगकालः, तावत्कालं स रुद्रोपजीव्यद्वितीयामृतोपासकः रुद्राणां यदाधिपत्यं यच्च **स्वाराज्यं तत्पर्येता ।**

ननु - दक्षिणतः उदेता उत्तरः अस्तमेता इति कथम् ? अत्र केचित् - कल्पनया भोगकालद्वैगुण्यं लक्षयति श्रुतिः । भोगकालद्वैगुण्यमात्रे तात्पर्यात् न शंकावकाशः इति । परे तु मेरोः शिखरे मेरोः मूर्धनि संलग्नरथचक्राक्षस्य प्रदक्षिणं परिभ्रमतः प्राच्यादिदिक्क्रमेण माहेन्द्रादिपुराणि क्रमशः करैः स्पृशतः सवितुः तत्तद्दिक्सम्बन्धकालसाम्येऽपि उदयास्तमययोः दर्शनादर्शनरूपतया दर्शनादर्शनयोश्च द्रष्टृपुरुषसद्भावासद्भावनिबन्धनतया अमरावत्यादीनां पुराणां यथाक्रमं द्विगुणेन कालेन उद्वासात् , माहेन्द्रात् नगरात् सांयमिन्याम् उदयास्तमयौ द्विगुणौ भवतः । एवमेव वारुणादिषु । दक्षिणतः उदेता उत्तरतः अस्तमेता इति दिग्विशेषनिर्देशस्तु अस्मद्बुद्ध्यपेक्षया, न हि सांयमने पुरे निवसताम् उदयास्तमयव्यवहारो दक्षिणतः उत्तरतः इति भवति । येषां या दिगुदयोपाधिः सैव प्राच्याद्युपाधिरपि इति । अपरे तु - साध्यमरुदादित्यरुद्रवसूनां भोग्यः कालः यथाक्रमं द्विगुणः । तच्च द्वैगुण्यं अनुदिनम् अहोऽर्धरात्रतदर्धतदर्धतदर्धभेदैः यथाक्रमं वस्वाद्युपजीव्यैः भवति, श्रुतेश्च अयमर्थः, **स आदित्यः यावत् -** यावता कालेन अहर्लक्षणेन पुरस्तात् उदयाद्रौ उदेत्य पश्चात् अस्ताद्रौ अस्तमेता तावत् अहर्लक्षणात्मकं कालं वसूनाम् आधिपत्यं स्वाराज्यं पर्येता । स यावता कालेन पूर्वार्धरात्ररूपेण **दक्षिणतः उदेता उत्तरतोऽस्तमेता तावत्** तावतः कालात् **द्विः -** द्विगुणकालेन अहर्लक्षणेन **पुरस्तादुदेता पश्चादस्तमेता,** तावत्कालम् अर्धरात्रलक्षणं **रुद्राणामाधिपत्यं स्वाराज्यं पर्येता ।** एवम् उत्तरत्रापि । भाषितं च तथा -

"उदेत्यस्तमयं यावद्याति भानुस्तु पर्वते ।
उदयास्ताद्रिमध्यस्य वसवः पतयः स्मृताः ।।
ततश्चास्तमयाद्यावदर्धरात्रं दिवाकरः ।
दक्षिणादुत्तरं याति किञ्चित्पूर्वसमन्वितम् ।।

तद्देशकालयोरीशा रुद्रा वायुपुरःसराः ।
वसुभोग्यादर्धकालमर्धदेशस्तथैव च ।।
रुद्रभाज्योऽर्धरात्रात्तु याम आदित्यदैवतः ।
पश्चिमात्पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः ।।
ततः परोऽर्धयामस्तु सौम्याद्दक्षिणमार्गकः।
मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः ।।
पश्चात्पश्चादुदेत्येव पूर्वतोऽस्तमुपैति च ।
ततस्तदर्धकालेन चोत्तरादुदितस्तदा ।।
अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः ।
उदेत्यैन्द्रपुरे चोर्ध्वमर्वागुदयपर्वते ।।
अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः ।
एकत्रिंशत्तु घटिकाः साधिका वसुदेवताः ।।
तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः ।
तदर्धा मारुता ब्राह्मास्तदर्धा दशतस्तथेति च" ।। इति

तत्र यः पक्षः भोगकालद्वैगुण्यमात्रे तात्पर्यं, उदयास्तमयविशेषनिरूपणं तु द्वैगुण्यम् उपलक्षयितुं कल्पना एवेति, तत्र कल्पना क्लेशो दोषः । यावत् वसूनाम्। आधिपत्यं द्विस्तावत् रुद्राणाम् इत्यक्लेशेन द्वैगुण्यं हि सूपपादम् । यश्च परेषाम् आशयः स तु उद्वासकालद्वैगुण्ये प्रमाणाभावादिना अपरैः दूषितः । अपरेषां पक्षे अस्तं गच्छति इति लाक्षणिकं दूरगत्वसाम्यात् अस्तं गच्छति इत्युक्तिः इति हि तैरेव उक्तम् । किञ्च वसूनामेव एको भूत्वा किमेकाहर्मात्रम् आधिपत्यं भुङ्क्ते ? उत द्वित्राणि ? उत यावद्वसूनाम् अधिकारकालम् ? अवधारयितव्योऽयं विशेषस्तु नावधारितः । एकाहःपरिमितभोगप्रदर्शनेन एव तद्वाक्यं लब्धावकाशमिति नाधिको भोगकालः स्यात् । तदिह श्रौतम् अमानुषं दर्शनम् इत्येव समाधानं रमणीयम् । अत एव आनन्दगिरिटीकायां "श्रुतिविरोधे स्मृतिः अप्रमाणं, तथापि यथाकथञ्चित् विरोधपरिहारं द्रविडाचार्योक्तम् उपपादयति" इत्युक्तम् ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टमः खण्डः

[तृतीयामृतोपासनेन आदित्यानां तृप्तिः]

**अथ यत् तृतीयममृतम् , तदादित्या उपजीवन्ति वरुणेन मुखेन । न वै देवा अश्नन्ति, न पिबन्ति ; एतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।**

**त एतदेव रूपमभिसंविशन्ति, एतस्माद्रूपादुद्यन्ति ।। २ ।।**

**स य एतदेवममृतं वेद, आदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति, स एतदेव रूपमभिसंविशति, एतस्माद्रूपादुदेति ।। ३ ।।**

**स यावदादित्यो दक्षिणत उदेता उत्तरतोऽस्तमेता द्विस्तावत् ,पश्चादुदेता पुरस्तादस्तमेता आदित्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ।। ४ ।।**

**प्र. - अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति** इत्यादि । सर्वं स्पष्टम् ।।

**आ.भा. -** तृतीयामृते स आदित्यो यावत्कालपर्यन्तं दक्षिणस्यां दिशि उदयं याति उत्तरस्यां च अस्तमयं याति तदपेक्षया द्विगुणं कालं यावत् पश्चिमायां उदयं याति पूर्वस्यां च अस्तमयं गच्छति तावत्कालं आदित्यस्य इति तावत्कालपर्यन्तम् उपासकः तत्रत्यम् **आधिपत्यं स्वाराज्यं** लभते । चतुर्थामृतभोगावसरे तु यावत्कालपर्यन्तम् आदित्यः पश्चिमायाम् उदयं लभते पूर्वस्यां च अस्तमयं तदपेक्षया द्विगुणितं कालं यावदादित्यः उत्तरस्याम् उदेता दक्षिणस्यां च दिशि अस्तमयं यास्यति, तावान् कालो मरुताम् तावत्कालं यावत् तदुपासकः तदाधिपत्यं स्वाराज्यं लभते । पञ्चमामृते तु यावत्कालं यावदादित्यः उत्तरस्याम् उदयं यास्यति दक्षिणस्यां च अस्तमयं आप्स्यति तदपेक्षया द्विगुणितकालेन ऊर्ध्वम् उदेष्यति अर्वाक् अस्तमयं यास्यति । एतावांश्च कालः साध्यानाम् तावत्कालपर्यन्तं तदुपासकः तदाधिपत्यं स्वाराज्यम् आप्स्यति इति । अन्यत्सर्वं प्रथमखण्डव्याख्यानुसारेणैव ज्ञातव्यम् इति । यद्यपि पश्चात् उत्तरतः ऊर्ध्वम् एता विपरीतक्रमेण अस्तमयं यास्यति, पूर्वस्मात् पूर्वस्मात् द्विगुणोत्तरेण कालेनेत्यादिकथनम् अपौराणिकमतम् इव आभाति । यत् आदित्यस्य चतुर्दिशम् इन्द्रयमवरुणसोमपुरीषु उदयास्तमयकालस्य समानत्वमेव पुराणेषु उक्तत्वात् मानसात् उत्तरे स्थितस्य मेरुपर्वतस्य शिरसि सूर्यस्य प्रदक्षिणावृत्तेः समानत्वादिति तथापि अमरावत्यादिनगरीणां द्विगुणोत्तरोत्तरेण समयेन उद्वासः स्यात् । तत्रोदयः आदित्यस्य तल्लोकवासिनां लोकानां चक्षुर्विषयता इव तदभावः एव अस्तमयः न तु परमार्थतः उदयोऽस्तमयनं वा । आदित्यस्य सर्वदा एवोदितत्वादेव । यदा खलु तत्तल्लोके लोका न भवन्ति तदा तत्र गच्छन्नपि नैव उदेता नास्तम् एता चक्षुर्विषयत्वस्य तदभावस्य च अभावात् । तथा अमरावत्याः सकाशात् द्विगुणकालं यमपुर्यां वसति अतः तल्लोकवासिनः प्राणिनः प्रति दक्षिणत एव उदेति सूर्योऽस्तमेति उत्तरत इति कथ्यते अस्मद्बुद्ध्यपेक्षया । एवमेव तदुत्तरासु अपि नगरीषु योजना कर्तव्या । सर्वतः उत्तरे एव मेरुः भवतीति नियमात् । यथा खलु अमरावतीनगर्या

मध्याह्नगतः सूर्यो भवति तस्मिन् समये यमपुर्याम् उदयन् सविता दृष्टो भवति । यमपुर्यां यदा मध्याह्नगतो भवति सूर्यः तदा वारुण्याम् उदयः दृश्यः । तथैव उत्तरस्यामपि प्रदक्षिणावृत्तेः समानत्वात् । इलावृत्ते तु सर्वतः पर्वतप्राकारावृतत्त्वेन आदित्यरश्मयो निवारिता इति सविता ऊर्ध्वः इव उदयं यातीव । अर्वाक् अस्तमेता दृश्यते, पर्वतोर्ध्वच्छिद्रप्रवेशात् आदित्यप्रकाशस्य इति । अन्यत्सर्वं पूर्ववदेव ज्ञातव्यम् ।।

सु. - अथ **यत्तृतीयम्** इत्यादि समानं पूर्वेण ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

**[मरुदुपजीवनभूतचतुर्थामृतोपासने मरुत्वप्राप्तिपूर्वकब्रह्मप्राप्तिः]**

**अथ यच्चतुर्थममृतम्, तन्मरुत उपजीवन्ति सोमेन मुखेन, न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।**

**त एतदेव रूपमभिसंविशन्ति, एतस्माद्रूपादुद्यन्ति ।। २ ।।**

**स य एतदेवममृतं वेद, मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति ; स एतदेव रूपमभिसंविशति, एतस्माद्रूपादुदेति ।। ३ ।।**

**स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता, द्विस्तावत् , उत्तरत उदेता दक्षिणतोऽस्तमेता, मरुतामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ।। ४ ।।**

**।। इति नवमः खण्डः ।।**

**प्र. - अथ यच्चतुर्थममृतम्** इत्यादि । पूर्ववत् ।।

**आ.भा. -** पूर्ववदेव ज्ञातव्यम् ।।

**सु. -** समानं पूर्वेण ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**(पञ्चमामृतं साध्योपजीवनभूतं यत्तदुपासनम्)**

**अथ यत् पञ्चमममृतम् , तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन, न वै देवा अश्नन्ति, न पिबन्ति ; एतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।**

**त एतदेव रूपमभिसंविशन्ति ; एतस्माद्रूपादुद्यन्ति ।। २ ।।**

**स य एतदेवममृतं वेद, साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति; स एतदेव रूपमभिसंविशति ; एतस्माद्रूपादुदेति ।। ३ ।।**

**स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता, द्विस्तावत्, ऊर्ध्व उदेताऽर्वागस्तमेता, साध्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ।। ४ ।।**

**।। इति दशमः खण्डः ।।**

**प्र. - अथ यत्पञ्चममृतम्** इत्यादि । सर्वं समानम् ।।

**आ.भा.-** पूर्ववदेव ज्ञातव्यम् ।।

**सु.-** समानं पूर्वेण ।।

**।। इति दशमखण्डभाष्यम् ।।**

## एकादशः खण्डः

**[नामरूपकृत्यादिरहितकार्यावस्थादित्यजीवशरीरकब्रह्मोपासनम्]**

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता, एकल एव मध्ये स्थाता । तदेष श्लोकः ।। १ ।।**

**प्र. -** एवं वसुरुद्रादित्यमरुत्साध्यगणभोग्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रय-देवमधुत्वरूपितज्योतिर्मण्डलाख्यरूपयुक्तस्य उदयास्तमयादि[1]कृत्य[1]विशिष्टस्य आदित्य-नामकस्य आदित्यशरीरककार्यावस्थब्रह्मणः उपासनम् उपदिश्य, नामरूपकृत्यादि रहिताकार्यावस्थादित्यजीवशरीरकब्रह्मोपासनं दर्शयति । **अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता । अथ -** ब्रह्मदिवसरूपस्य कल्पस्य समाप्त्यनन्तरं **तत ऊर्ध्व उदेत्य -** उदयास्तमयाभ्यां प्राण्यनुग्रहात् ऊर्ध्व उदेत्य, उदयास्तमयकृत्यप्रयुक्तप्राण्यनुग्रहरहितः इत्यर्थः । **नैवोदेता नास्तमेता, एकल एव मध्ये स्थाता ।** उदयास्तमयशून्यः एकस्वभावः एव उदासीनतया वर्तते इत्यर्थः। अत्र हि भाष्ये, (भाष्ये, अत्र हि?)

---

1. कृति - अ ।

'कार्यकारणावस्थब्रह्मोपासनं विधीयते । 'असौ वा आदित्यो देवमधु' इत्यारभ्य, 'अथ तत ऊर्ध्व उदेत्य' इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यम् उपदिश्यते । 'अथ तत ऊर्ध्व उदेत्य' इत्यादिना आदित्यान्तरात्मतया अवस्थितं कारणावस्थमेव ब्रह्म उपदिश्यते' इत्युक्तम् । तत्र 'अथ तत ऊर्ध्व उदेत्य' इत्यस्य मुक्तावस्थादित्यान्तर्यामिब्रह्मोपासनपरत्वे अथशब्दादिस्वारस्यात् कारणावस्थम् इति भाष्यस्य अकार्यावस्थं - मुक्त्यवस्थम् इत्यर्थः एव उचितः । न तु आदित्यभावप्राप्तिपूर्वावस्था । व्यासार्यैस्तु - भाष्यस्वारस्यं अवलम्ब्य आदित्यनामरूपभाक्त्वावस्थापूर्वभाव्यवस्थैव 'अथ तत ऊर्ध्व उदेत्य' इत्यादिसंदर्भेण प्रतिपाद्यते इति वर्णितम् । तेषाम् अयम् आशयः अथशब्दो न निर्दिष्टानन्तर्यार्थः। अपि तु [1]अर्थान्तर[1]प्रस्तावार्थः । 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता' इत्यस्यापि उदयास्तमयतत्कार्यशून्यत्वमर्थः । तथा आदित्यभावपूर्वावस्थायां कल्पादौ सम्भवतीति ।

**तदेष श्लोकः । तत् -** तस्मिन् विषये देवान् प्रति केनचित् योगिना गीतः श्लोकः । उच्यते इति शेषः ।।

**आ.भा. -** पूर्वोक्तप्रकारेण वसु-रुद्रादित्य-मरुत्-साध्य-देवगणोपभोगयोग्यरोहित-शुक्लकृष्णपरःकृष्णादिपञ्चरूपात्मकपञ्चामृताश्रयदेवमधुत्वरूपितज्योतिर्मण्डलाख्यरूप-संवलितस्य उदयास्तमयानादिकार्यविशिष्टस्य सूर्यनामकसूर्यशरीरककार्यशरीरविशिष्टस्य रामाख्यपरब्रह्मणः उपासनं समुपदिश्य तदनन्तरं नामरूपादिकार्यरहितस्य अकार्यावस्थ-सूर्यजीवशरीरकस्य तस्यैव परब्रह्मणः उपासनं प्रदर्शयितुमाह **- अथ तत ऊर्ध्व** इत्यादि । **अथ -** कार्यब्रह्म दिनात्मककल्पस्य समाप्तेः अनन्तरम् **ततः ऊर्ध्व उदेत्य ।** उदयाग्रास्तमयद्वारेण प्राणिनाम् अनुग्रहकरणात् ऊर्ध्व उदेत्य । उदयास्तमयादिप्रयुक्तप्राणिनाम् अनुग्रहरहितो भूत्वा । **नैवोदेता -** पुनः न उदयं यास्यति । न **अस्तमेता ।** न वा पुनः अस्तमयं यास्यति किन्तु **एकल एव मध्ये स्थाता ।** एकस्वभावः उदासीनतया स्थाता इत्यर्थः । **तदेतत् श्लोकः** तदेतस्मिन् विषये देवं प्रति केनचित् योगिना कथितः श्लोकः ।।

**सु. -** एवम् उदयास्तमयविभागविशिष्टवस्वादिभोग्यामृतलक्षणरूपविशेषसम्पन्ना-दित्यशरीरकपरमात्मोपासनम् उक्त्वा तद्रहितकारणावस्थपरमात्मोपासनमाह **- अथ** इति ।

---

1. उपासनार्थान्तर - अ, आ ; उपासनान्तर - क ।

अथ इत्यर्थान्तरोपक्रमे । परे तु आनन्तर्यार्थकतायाम् अस्य स्वारस्यं मन्यन्ते । अस्मिन् पक्षेऽर्थतो वैरूप्यम् आलक्ष्यते । अथ यद्द्वितीयं, अथ यत्तृतीयं, 'अथ यच्चतुर्थं अथ यत्पञ्चमम् इति हि प्रतिवाक्यं श्रूयते अथ शब्दः । तथा अथ येऽस्य दक्षिणा रश्मयः अथ येऽस्य प्रत्यञ्चो रश्मयः' इत्यादिषु न ह्यत्र आनन्तर्यार्थकता सम्भवः । **तत ऊर्ध्व उदेत्य** - ततः ये दिग्विभागाः उदयास्तमयाद्युपाधितया निरूपिताः प्रागादयः अर्वागन्ताः तेभ्योपि ऊर्ध्वे अतिक्रान्ततद्विभागे इति यावत् । स च देशाः ब्रह्मैव कारणावस्थम् । तत्रोदेत्य सङ्गत्य, सङ्गतिश्च इह कार्यावस्थाप्रहाणपूर्वककारणावस्थया तत्प्रकारतापत्तिरेव । **नैवोदेता नास्तमेता** तदानीम् उदयास्तमयकार्याभावात्। कुतः तदभावः ? **एकल एव मध्ये स्थाता । एकलः** - विभागरहितः, प्रतिसर्गे ब्रह्मणा सह एकीभावात् । यावदिह नामरूपभेदः तावदुदयास्तमयविभागः । अवसिते च तस्मिन् अविभागं च ब्रह्मणा प्राप्ते तदा अयम् एकलः कथम् उदयास्तमयविभागः ? **मध्ये स्थाता** - मध्ये तिष्ठति ह्यादित्ये न उदयास्तमयव्यपदेशः । ऊर्ध्वादपि ऊर्ध्वे मध्ये तिष्ठतिं कथमयं व्यपदेशः स्यात् ? ब्रह्म ऊर्ध्वादूर्ध्वं मध्यं सर्वस्य, मध्यं हि निराबाधं प्रशस्तम् आश्रयस्थानं, ब्रह्मैव तु तथा, तदुच्यते मध्ये स्थाता इति । **तदेष श्लोकः** - यत्र उदेत्य नैव उदेता न अस्तमेता तदुत्क्रान्तप्राच्यादिदिग्विभागम् अपेतनामरूपविभागं कारणदशापन्नं परं ब्रह्म अधिकृत्य केनचित् महर्षिणा समुदाहृतः एषः वक्ष्यमाणः श्लोकः ।।

**न वै तत्र स निम्लोचः नोदियाय कदाचन ।**
**देवास्तेनाहँ सत्येन मा [1]विराधिषि[1] ब्रह्मणा ।। इति ।। २ ।।**

**प्र. - नवै......ब्रह्मणा इति** । हे **देवाः ! तत्र** - तस्मिन् आदित्यभावमुक्तिकाले **सः** - मुक्तादित्यान्तर्यामी परमात्मा **न निम्लोचः** - नास्तमितः । **नोदियाय** - नोदितश्च । [2]**तेन**[2] **सत्येन** [3]वचनेन[3] **ब्रह्मणा** अहं **मा विरोधिषि** - विरोधं न [4]गच्छामीति[4] यावत् ।।

**आ.भा. -** हे **देवाः तत्र**तस्मिन् आदित्यभावमोक्षसमये **सः**मुक्तादित्यान्तर्यामी परमात्मा **न निम्लोचे** - कदाचिदपि अस्तं नो याति । कदाचन कथमपि **नोदियाय** - नोदयं याति। **तेन** - सत्येन वाक्येन ब्रह्मणा **अहं** न **विरोधिषि** - विरोधं न गच्छामि । ब्रह्मणा सह मम अप्राप्तिः कदाचिदपि न भवतीति ।।

---

1. **विरोधिषि** इति आनन्दभाष्यसम्मतः पाठः
2. तेन - तादृशेन - अ,आ,क । 3. निर्विकारेण - अ,आ,क ।
4. अप्राप्तं न गच्छामीति यावत् इत्यधिकः पाठः - ख ।

**सु.** - योऽयम् इदानीं प्राच्यादिषु उदयास्तमयौ एति **सः तत्र** अपेतदिग्विभागे ऊर्ध्वादपि ऊर्ध्वभूते नामरूपविभागविधुरे परे ब्रह्मणि कदाचन **न वै निम्लोच नोदियाय च** - नैव अस्तं जगाम न उदयं प्राप । **न वै तत्र न निम्लोच** इति पाठे **न वै तत्र** - नैव तत्र इदानीन्तनो नामरूपभेदः। अत एव **न निम्लोच नोदियाय कदाचन** इत्यर्थः । हे **देवाः !** हे मुमुक्षवः! । **अहं तेन** उदयास्तमयादिकार्यविभागविधुरेण, **सत्येन** - सत्यमिति अविकृतं लक्ष्यते । अविकृतेन - नामरूपविभागरहितेन ब्रह्मणा सर्वकारणभूतेन, **मा विराधिषि** - विरोधं असम्बन्धलक्षणं नैव विन्देयम् । सर्वकारणपरब्रह्मप्रणिधानविच्छेदो मम न स्यात् इति भावः । मुमुक्षून् प्रति इदम् उपदेशपर्यवसायि ब्रह्मनिष्ठस्य वचनम् ।।

**न ह वा अस्मा उदेति न निम्लोचति । सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ।। ३ ।।**

**प्र.** - **न ह वा अस्मा उदेति न निम्लोचति** इत्यादि । **यः एताम्** - मधुविद्यारूपां **ब्रह्मोपनिषदं** - ब्रह्मविद्यां **वेद** - अनुतिष्ठति **अस्मै** - ब्रह्मविदे आदित्यो न उदेति, नास्तमेति, [1]आदित्योदयाप्रकाशाभ्यां[1] न किञ्चित् तस्य प्रयोजनम् इत्यर्थः । कुत इत्यत आह - **सकृद्दिवा है वास्मै भवति** इति । **अस्मै** - ब्रह्मविदे **सकृद्दिवैव भवति** - सकृदुदितम् अहरेव भवति । सदैव अहः भवति इत्यर्थः । सन्ततं सर्वविषयकसाक्षात्कारः अस्य भवति इत्यर्थः ।।

**आ.भा.** - सत्यमेव तेन योगिना कथितम् इति श्रुतिर्वदति - **न ह वा** इत्यादि । **यः** खलु उपासकः **एतां** - मधुविद्यालक्षणाम् **ब्रह्मोपनिषदम्** - ब्रह्मविद्याम् **वेद** - विजानाति तादृशम् उपासनं करोति इत्यर्थः । **अस्मै** - ब्रह्मविदे **आदित्यः** - सूर्यः न उदेति न निम्लोचति । अस्तमयमपि नो याति । सूर्यस्य उदयास्तमयाभ्यां तस्य प्रयोजनं न भवति इत्यर्थः । असौ ब्रह्मवित् **सकृत् दिवैव** भवति एकदा एव आदित्योदयः भवति । ततः परं सर्वदा दिवैव, प्रकाशव्यतिरेकः कदापि न भवतीति । सर्वदा सर्वविषयकसाक्षात्कारो भवत्येव इति भावः ।।

---

1. आदित्योदयप्रकाशाभ्यां - अ,आ ।

**सु.** - एवं मधुविद्यां कार्यावस्थादित्यशरीरकपरमात्मोपासनेन उपक्रम्य कारणावस्थ परमात्मोपासनेन उपसंहृत्य तस्याः ब्रह्मप्राप्तिलक्षणं फलमाह - **न ह वा** इति । य एतां ब्रह्मविद्याम् **एवम्** - उक्तेन प्रकारेण वेद, **अस्मै** - ब्रह्मविदे आदित्यः **नैवोदेति न निम्लोचति** - ब्रह्मैकदर्शिनः अस्य प्राकृतज्योतिर्दर्शनादर्शनलक्षणोदयास्तमयप्रयोजनाभावात् । कुत एतत् ? **सकृद्दिवा ह्यस्मै भवति** - सततं दिवा एव भवति ब्रह्मज्योतिःसम्पत्त्या कदापि अप्रकाशवस्त्वन्तराभावात् तदपृथक्सिद्ध्या सर्वस्य सर्वदा प्रकाशात् । अतीतसंसारो ब्रह्मसम्पन्नः भवतीति यावत् ।

अस्या मधुविद्यायाः ब्रह्मविद्यात्वं द्रढयितुम् एतद्विषयकम् अधिकरणम् इह किञ्चित् व्याख्यायते । 'भावं तु बादरायणोऽस्ति हि' (ब्र.सू.१-३-३२) वस्वादीनाम् अपि मधुविद्यायाम् अधिकारस्य सद्भावं बादरायणो मन्यते । तेषां वस्वादिभावरूपफलानन्वयेऽपि अस्ति हि परमं फलं ब्रह्मविद्यायाः । मधुत्वेन इह निरूप्यमाणः अयम् उपास्यो न केवलम् आदित्यः, किन्तु तच्छरीरकः परमात्मा । अतश्च आदित्यरूपभेदसम्पत्तिश्च । श्रूयमाणं तु अप्राप्ततत्पदान् मनुष्यान् अवलम्ब्य भवति लब्धावकाशम् । मनुष्यास्तु वस्वादिभोग्यत्वेन उपासते इति वस्वादिभावप्राप्तिः नान्तरीयकं फलम् एतेषाम् । वस्वादयस्तु मधुमात्रमिति न तत् नान्तरीयकं तेषाम्। न च एतावता मधुविद्यानिष्ठत्वानुपपत्तिः तेषाम् । न हि सा वस्वादिभोग्यत्वेन रूपेण नियम्यते । येन विना तद्रूपं मधुमात्रचिन्तनात् मधुविद्यानिष्ठता नोपपद्येत । श्रुतिस्तु नान्तरीयकफलसम्पत्तियोग्यानां नान्तरीयकफलसम्पत्त्युपायं ज्ञापयन्ती प्रवर्तते । 'स यः एतदमृतं वेद वसूनामेव एको भूत्वा' इति मधुत्वसम्पत्तिश्च वस्वादिभोग्यत्वनिरपेक्षा । खण्डपञ्चकेन हि तत्सम्पत्तिः निरूपिता एव । वस्तुतस्तु न केवलं मधुत्वम् उपक्रान्तम्, किन्तु देवमधुत्वम्, तत्र मधुत्वसम्पत्तिः खण्डपञ्चकेन कृता । देवमधुत्वं च ततः क्रियते । तद्देवमधुत्वेन दृष्टिरेव इह मधुविद्या विवक्षिता। तदस्यां ब्रह्मविद्यायां वस्वादीनां वस्वादिदेवमधुचिन्तनानुपपत्त्या नान्तरीयकवस्वादिभावरूपफलासम्भवाच्च नाधिकारः । अथापि ब्रह्मविद्यामात्रे अनधिकारः इति तु न । अस्ति हि ब्रह्मविद्यान्तरेषु एषामपि फलसाधने अनन्वयः । तत् अधिकारसद्भावं ब्रह्मविद्यायाम् एषां बादरायणो मन्यते । इदं निर्गलितम् । क्वचित् ब्रह्मविद्यायाम् अनधिकारं वस्वादीनाम् आलक्ष्य ब्रह्मविद्यामात्रेऽनधिकारं जैमिनिमतेन आशंका क्वचिदसम्भवोऽन्यत्र असम्भवे न लिङ्गमिति निराचकार आचार्यः इति । यत्तु केवलादित्यस्यैव इह देवमधुत्वेन उपास्यताविधानात् इयं विद्या नाम, न तु तदंशेऽपि इयं ब्रह्मविद्या । अथापि अस्याम् अनधिकारं वस्वादीनाम् आलक्ष्य विद्यात्वाविशेषात् ब्रह्मविद्यायां अनधिकारम् आशंक्य निराचकार आचार्यः इति । तत्

न अतीव रमणीयम् । अर्वाचीनविद्यायां क्वचित् चरितार्थतया अनधिकारदर्शनमात्रेण ब्रह्मविद्यायाम् अनधिकारसम्भावना हि न स्थाने । विद्यात्वाविशेषात् आशंका तु नितरां भ्रान्तिम् आवहति आशङ्कितुः। ब्रह्मविद्यात्वाविशेषात् आशङ्कायां तु नायं दोषः । विद्यात्वात् ब्रह्मविद्यात्वं हि व्यावृत्तं ब्रह्मविद्यामात्रस्य अनुगतं रूपम् । तेन रूपेण एकजातीयेषु एकत्र अनधिकारदर्शनेन अन्यत्रापि अनधिकारशङ्का तु सन्निहितगतिका । यद्वा 'तदुपर्यपि बादरायणः सम्भवात्' । (ब्र.सू.१-३-२५) इत्यनेन देवानां ब्रह्मविद्यासु अधिकारे समर्थिते अविशेषेण सर्वत्र ब्रह्मविद्यायां देवानाम् अधिकारं समर्थितं मत्वा परेण क्रियमाणा मध्वादिषु असम्भवात् अनधिकारशङ्कां स्वाशयप्रकाशनेन निराकरोति, भावं तु इति - 'भावं तु बादरायणः' (ब्र.सू.१-३-३२) बादरायणः यत् प्राह तदुपर्यपीति, भावं तु प्राह - ब्रह्मविद्यायां क्वचित् देवानाम् अधिकारसद्भावमात्रं प्राह ; न तु ब्रह्मविद्यासु अधिकारव्याप्तिम् । अबाधितं च एतत्, अस्ति हि अन्यत्र ब्रह्मविद्यासु अधिकारः । वस्तुतस्तु भगवद्रामानुजाचार्यैः यदभाषि श्रीभाष्ये तदेव रमणीयम् ।।

**[मधुविद्यासम्प्रदायः]**

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः ।**
**स्तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ।। ४ ।।**

**प्र.** - मधुविद्यासम्प्रदायमाह - **तद्धैतद्ब्रह्मा......प्रजाभ्यः । तद्धैतत्** - मधुविज्ञानम् इत्यर्थः। **ब्रह्मा** - चतुर्मुखः **प्रजापतये** - दक्षाय **मनवे** - स्वायम्भुवाय । **तद्धैतदुद्दालकाय......प्रोवाच। तद्धैतत्** ब्रह्म उद्दालकाय पिता प्रोक्तवान् इत्यर्थः ।।

**आ.भा.** - सम्प्रति मधुविद्या येन प्रकारेण लोके समागता तं प्रकारं दर्शयितुं सम्प्रदायमाह - **तद्धैतत्** इत्यादि । **तदेतत्** - मधुविज्ञानं **ब्रह्मा** - हिरण्यगर्भः **प्रजापतये** - विराजे **उवाच** - प्रोक्तवान् । **प्रजापतिः** - विराट्, मनवे मधुविद्यां प्रोवाच । मनुश्च **प्रजाभ्यः** - इक्ष्वाक्वादिभ्यः प्रोवाच । **तद्धैत**दित्यादि । तदनन्तरम् उद्दालकस्य पिता ज्येष्ठाय स्वपुत्राय **आरुणये उद्दालकाय** - तदाख्यऋषये **ब्रह्म प्रोवाच** - प्रोक्तवान् ।।

**सु.** - अथ स्तुवन् इमां विद्याम् उपदेष्टृपरम्पराम् आह **तद्धैत**दिति । **तदेतत्** - मधुविद्यास्वरूपम्; **ब्रह्मा** - विधाता, **प्रजापतये** - दक्षाय, स च मनवे, स च प्रजाभ्यः, इत्ययं विशिष्टो गुरुक्रमः। **तद्धैतद् ब्रह्म** - तदेवं विशिष्टगुरुपरम्परागतं ब्रह्मविज्ञानम् पिता ज्येष्ठाय पुत्राय आरुणये नाम्ना उद्दालकाय प्रोवाच ।।

**इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्, प्रणाय्याय वाऽन्तेवासिने ।। ५ ।।**

**प्र. - इदं वाव.... प्रब्रूयात्** इत्यादि । तस्माद्धेतोः **इदं** - ब्रह्मविज्ञानं **ज्येष्ठाय पुत्राय वा प्रब्रूयात् । प्रणाय्याय** - योग्याय शिष्याय वा प्रब्रूयात् इत्यर्थः । 'प्रणाय्योऽसंमतौ' (पा.सू.३-१-१२८) इति निष्कामार्थे प्रणाय्यशब्दस्य निपातितत्वात् ।।

**आ.भा. - इदं वाव** इत्यादि । **तत्** - तस्मात्कारणात् अन्योऽपि कोऽपि पिता **इदं** - ब्रह्मविज्ञानम् ज्येष्ठाय सर्वप्रियाय पुत्राय प्रब्रूयात् । अथवा **प्रणाय्याय** - योग्याय **अन्तेवासिने** - शिष्याय **इदं** - ब्रह्मविज्ञानं प्रब्रूयात् ।।

**सु. - तदिदं** - विशिष्टगुरुक्रमत्वेन विशिष्टमिदं ब्रह्मविज्ञानं मधुविज्ञानलक्षणम् पिता ज्येष्ठाय पुत्राय प्रब्रूयात् । सः विशिष्टं ब्रह्मविद्यायाः पात्रमिति। तथा प्रणाय्यश्च अन्तेवासी, तत् योग्याय शिष्याय च प्रब्रूयात् ।।

**नान्यस्मै कस्मैचन, यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्, एतदेव ततो भूय इति एतदेव ततो भूय इति ।। ६ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र. - नान्यस्मै कस्मैचन** - उक्तपुत्रशिष्यव्यतिरिक्ताय कस्मैचिदपि न ब्रूयादिति अन्वयः। **यद्यपि....**इति । **अद्भिः परिगृहीतां** - समुद्रावृतां **धनस्य पूर्णां**भोगोपकरणैः पूर्णाम् इमां पृथिवीं यद्यपि **अस्मै** - आचार्याय दद्यात् । तदपेक्षयाऽपि एतद्विज्ञानमेव अधिकम् । नैतस्य अनुरूपो निष्क्रयोऽस्ति इत्यर्थः। **एतदेव..... इति** द्विरुक्तिः [1]विद्यासमाप्त्यर्था[1] ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणम् उपन्यस्यते समन्वयाध्याये - मधुविद्यायाः वस्वादिगणभोग्यरोहितरूपादिपञ्चामृताश्रयादित्योपासनारूपतया अस्यां विद्यायां वस्वादीनां नाधिकारः सम्भवति, उपास्योपासकभावस्य एकस्मिन् असम्भवात् । न हि एकस्यैव प्रीणनीयत्वं प्रीणयितृत्वं च सम्भवति । वसूनामेव एको भूत्वा इत्यादिना वसुत्वादिप्राप्तेः एव मधुविद्याफलत्वेन वस्वादीनामेव सतां वस्वादित्यप्राप्तिकामनाया असम्भवाच्च [2]अर्थित्वाद्यसम्भवात्[2] । 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति

---

1. विद्यापरिसमाप्त्यर्था - अ,आ । 2. अर्थित्वाद्यभावात् - अ ।

परब्रह्मव्यतिरिक्तस्य देवोपास्यत्वनिषेधेन ज्योतिश्शब्दिते ब्रह्मण्येव उपासनसम्भवावगमाच्च मधुविद्यादिषु नाधिकार इति 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः,' (ब्र.सू.१-३-३०) 'ज्योतिषि भावाच्च' (ब्र.सू.१-३-३२) इति सूत्राभ्यां पूर्वपक्षं कृत्वा 'भावं तु बादरायणोऽस्ति हि' (ब्र.सू.१-३-३२) इति सूत्रेण सिद्धान्तः कृतः।

अस्यायमर्थः - अधिकारस्य सद्भावं बादरायणः आचार्यो मन्यते, अस्ति हि तेषामपि अर्थित्वादिसम्भवः इति । अयमाशयः - न हि इयं विद्या वस्वादित्यादिमात्रपर्यवसिता अपि तु तच्छरीरकपरमात्मपर्यन्ता । वस्वादीनामेव सतां स्वान्तर्यामिपरमात्मोपासनं [1]सम्भवत्येव[1]। न चोपास्यप्रतिपादकवस्वादिशब्दानां ब्रह्मपर्यन्तत्वे प्रमाणाभावः, उपसंहारे, 'ब्रह्मोपनिषदं वेद' (छां.उ.३-१२-३) इति श्रवणात् । वस्वादीनामेव सतां कल्पान्तरे वसुत्वादिप्राप्ति[2]पूर्वकब्रह्म[2]प्राप्तेः उद्देश्यत्वसम्भवाच्च। लोके पुत्रिणामेव सतां जन्मान्तरेऽपि [3]पुत्रित्वेप्सायाः[3] दर्शनात्।

ननु वस्वादिपञ्चगणोपजीव्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयादित्यमधूपासनत्वात् मधुविद्यायाः, तस्याश्च विद्यायाम् आदित्यस्य एव उपास्यतया आदित्यस्य तद्विद्याधिकारासम्भवेऽपि वस्वादीनां कथमनधिकारशङ्का । न हि अस्यां विद्यायां वस्वादीनाम् उपास्यत्वम्, अपि तु तद्भोग्यादित्यस्यैव । भाष्यकृता *मधुविद्यायाम् ऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य* रश्मिद्वारेण प्राप्तस्य रसस्य आश्रयतया [4]लब्ध[4]मधुव्यपदेशस्य आदित्यस्य अंशानां वस्वादिभिः भुज्यमानानाम् उपास्यत्वम्' इति पूर्वपक्षे वस्वादिभोग्यभूतादित्यांशस्य विधीयमानम् उपासनं तदवस्थस्य एव ब्रह्मणः इत्यवगम्यते इति सिद्धान्ते चोक्तत्वात् । न हि स्वोपासनवत् स्वोपजीव्यत्वेन अन्यस्य उपासनं विरुद्धम् ; तथा सति उपासनमात्रोच्छेदप्रसङ्गात् । सर्वेष्वपि उपासनेषु उपास्यगतस्वोपजीव्यत्वस्वसेव्यत्व [5]स्वाधारत्व[5]-स्वान्तर्यामित्वादीनाम् अनुसन्धेयत्वात् । ततश्च वसूनामेव सतां स्वोपजीव्यपञ्चामृताश्रयादित्यविषयमधुविद्यानुष्ठानसम्भवात् कुतोऽनधिकारशङ्का इति चेत् -

उच्यते 'वसूनामेवैको भूत्वे'त्यादिना वसुत्वादिप्राप्तेः फलत्वादिकीर्तनेन मधुविद्यायां तत्क्रतुन्यायेन वस्वादीनाम् उपास्यत्वस्यापि अभ्युपगन्तव्यत्वात् । अथ तत ऊर्ध्वं उदेत्य इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यम् उपदिश्यते । अथ तत ऊर्ध्वे उदेत्य इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थं ब्रह्म उपास्यम्

---

1. भवत्येव - क । 2. ब्रह्मत्व - अ । 3. पुत्रितेप्सायाः - क । 4. लब्धस्य - अ ।
5. स्वासाधारणत्व - अ,आ ।

उपदिश्यत इति कार्यावस्थोपासनदशायाम् आदित्यवत् वस्वादीनां च [1]तुल्यत्वस्य[1] भाषितत्वाच्च । मधुविद्याया आदित्योपासनत्वपञ्चामृतोपासनत्ववस्वाद्युपासनत्व-रूपाकारत्रयवत्वात् न पूर्वपक्षोत्थित्यनुपपत्तिरिति द्रष्टव्यम् ।

ननु वस्ववस्थस्य ब्रह्मण उपास्यत्वसम्भवेऽपि 'तद्वसव उपजीवन्ती'ति निर्दिष्टम् उपजीवितृत्वलक्षणं भोक्तृत्वं न ब्रह्मणः सम्भवतीति चेन्न । उपजीवितृत्वस्यापि सद्वारकतया तत्र सम्भवात् । नन्वेवं, तद्वसव उपजीवन्ति इत्यत्र वसुशब्दस्य तदन्तर्यामिपरत्वे 'वसूनामेव एको भत्वा इत्यत्रापि [2]वसुशब्दस्य[2]ब्रह्मपरत्वं स्यात् । न च तद्युक्तम् न [3]ह्युपासकस्य[3] जीवस्य कल्पान्तरे वसुत्वप्राप्तिलक्षणसंसारदशायां वस्ववस्थब्रह्मभावोक्तिः सङ्गच्छते इति चेन्न 'वसूनामेवैको भूत्वा' इत्यत्र यथाश्रुते बाधकाभावेन, ब्रह्मपरत्वे बाधकसम्भवेन, यथाश्रुतार्थस्य एव उपपन्नत्वात् इत्यलम् अतिचर्चया ।

ननु 'वसूनामेवैको भूत्वा सकृद्दिवा हैवास्मै भवति' इति वाक्यद्वयानुसारेण अनया विद्यया कल्पान्तरे कञ्चित्कालं वसुभावं प्राप्य पश्चात् ब्रह्म प्राप्नोति इत्यभ्युपगमो न युक्तः । तथा सति इदानीं मधुविद्योपासकानां प्रायणानन्तरं फलप्राप्तिर्न स्यात् । कल्पान्तरभावित्वात् वसुत्वस्य । न च स विलम्बः सोढव्यः एवेति वाच्यम् । कल्पान्तरेऽपि वस्वादिभावप्रापकमधुविद्यानिष्ठानां तत्प्रापककर्मान्तरनिष्ठानां च अनन्तानां सम्भवेन सर्वेषां च युगपत् वस्वादिभावे वसुगताष्टत्वसङ्ख्याविरोधप्रसंगेन वसुत्वप्रापककर्मनिष्ठानाम् अनन्तानां मध्ये विपाकानुसारेण केषाञ्चित् त्रिचतुरकल्पमध्ये वसुत्वादिप्राप्तिः भवति । केषाञ्चित् अनुष्ठितमधुविद्यानामपि सहस्रकल्पप्रतीक्षणमपि अस्ति इति अभ्युपगन्तव्यम् । न हीदृशः कश्चित् मुमुक्षुः भवति । सहस्रकल्पपर्यन्तविलम्बम् अभ्युपगच्छतः कथं मुमुक्षुता ? हैरण्यगर्भान्तसकलभोगविरक्तिपूर्वकब्रह्मानन्दप्रेप्सा-लक्षणमुमुक्षाशाली हि ब्रह्मविद्यायाम् अधिकरोति ततश्च वस्वादिपदाभिलाषिणः कथं मुमुक्षुता, कथं वा ब्रह्मविद्याधिकारः इति चेत् - सत्यम् - ब्रह्मानन्दैकप्रेप्सुरेव मुमुक्षुः । अथापि यथा देहावसानकाले ब्रह्मानन्दैकप्रेप्सा मुमुक्षा, एवम्, वसुत्वावसाने ब्रह्मैव प्राप्नुवानि इति प्रेप्साऽपि ब्रह्मानन्दैकप्रेप्सा भवत्येव । [4]शास्त्रबलाच्च[4] ईदृशविलम्बसहिष्णवोऽपि अधिकारिणः सन्तीति अभ्युपगन्तव्यम् । तत्र च प्रारब्धवैचित्र्यमेव नियामकम् ।

---

1. आदित्यवस्वादीनां अविशेषेणोपास्यत्वस्य भाषितत्वात् । अस्ति हि आदित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्यप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भव इत्यादित्यस्य वस्वादीनाञ्च तुल्यत्वस्य भाषितत्वाच्च - इत्यधिकः - पाठः - क,ख ।
2. वस्ववस्थ इत्यधिकः - ख । 3. उपासकस्यापि - क । 4. शास्त्रवशात् - क ।

अत एव -

"याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत् ।
काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम् ।।"

इत्युक्तरीत्या विवेकिनः कथं विलम्बसहिष्णुता इत्यपि अपास्तम् । प्रारब्धमहिम्ना सर्वस्यापि उपपत्तेः। वस्तुतस्तु भ्रातॄणां मध्ये त्वमेकः इति लौकिकोक्तेः भ्रातृभोगसाम्याभिप्रायत्ववत् । 'वसूनामेव एको भूत्वा' इत्यस्य च वाक्यस्य किञ्चित्कालम् आनुषङ्गिकवस्वादिभोगसाम्यम् अनुभूय तेन [1]पथा[1] परं ज्योतिरुपसम्पद्यत [2]इत्यभिप्रायत्वात्[2] तादृशभोगसाम्यस्य च देहवियोगानन्तरमेव सम्भवात् नानुपपत्तिः इत्यप्याहुः ।

ननु वस्वादिदेवतानां विग्रहाभावेन उपासनसामर्थ्यासम्भवात् कथम् उपासनाधिकारः? न हि देवादीनां शरीरवत्त्वे प्रमाणम् उपलभ्यते । न तावत् प्रत्यक्षानुमाने; तस्य तदगोचरत्वात् । नापि 'वज्रहस्तः पुरन्दरः', 'तेनेन्द्रो वज्रमुद्यच्छत्' इत्यादीनां प्रामाण्यम् ; मन्त्रार्थवादानाम् [3]अनुष्ठेय[3]स्मृतिस्तुति प्रयोजनकतया विग्रहादौ तात्पर्याभावेन तात्पर्याविषयशब्दस्य अप्रमाण्यात् । अन्यथा श्वेतवर्णरजककर्तृकवस्त्र-शोधनतात्पर्येण प्रयुक्तस्य श्वेतो धावति [4]इत्यस्य[4] शुनकसमीपगमनप्रतीत्युत्पादकत्वसम्भवमात्रेण तत्रापि प्रामाण्यप्रसङ्गात् ।

ननु रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधायके 'रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति वाक्ये' रेवतीषु वारवन्तीयम् इत्यंशस्य 'रेवतीर्नः सधमाद' इति ऋक्त्रयाधारवारवन्तीयसामरूपे अग्निष्टोमस्तोत्रविशेषणे तात्पर्याभावेऽपि प्रामाण्यं दृष्टम् । न हि तद्विशेषणं 'सोमेन यजेत' इत्यादिविशिष्टविधिषु सोमलतादिविशेषणवत् लोकसिद्धम्, नापि विधिसिद्धम्; 'रेवतीषु रथन्तरं गायेत्' इतिवत् रेवतीषु वारवन्तीयं गायेत् इति विध्यदर्शनात् । न चास्यैव विशिष्टगोचरस्य विधेः विशेषणविधौ अपि तात्पर्यं वक्तुं शक्यम् । विध्यावृत्तिप्रसङ्गात् । न च आक्षेपात् विशेषणप्रसिद्धिः, अन्योन्याश्रयात् विशेषणप्रसिद्धौ सत्यां विशिष्टविधिः, विशिष्टविधिनैव विशेषणस्य आक्षेपः इति परस्पराश्रयापत्तेः । तस्मात् विशिष्टविधेः विशेषणस्वरूपे तात्पर्याभावेऽपि, 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारस्यैव प्रामाण्यम् अभ्युपगन्तव्यम् इति चेत् -

मैवं - 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारलभ्यां' रेवत्याधारवारवन्तीयप्रतीतिम् उपजीव्य प्रवृत्तेन विशिष्टविधिना आक्षिप्तस्य 'रेवतीषु वारवन्तीयं कुर्यात्'

---

1. यथा - क । 2. तस्य वाक्यस्य इत्यधिकः पाठः - क । 3. अनुष्ठेयार्थ - अ,आ,ख ।
4. इत्येतस्य - अ ।

इति विशेषणविधेः एव तत्र प्रमाणत्वेन रेवतीषु वारवन्तीयम् इति पदद्वयसमभिव्याहारस्य अप्रमाणत्वात् । इयांस्तु विशेषः - 'सोमलतादि विशेषणं मानान्तरसिद्धं सोमपदात् प्रतीयते । इह तु मानान्तरासिद्धमेव पदसमभिव्याहारात् प्रतीयते' इति । प्रतीयमानेऽपि विशेषणे विशिष्टविधेः प्रामाण्याभावः उभयत्रापि अविशिष्टः । ततश्च यथा सोमप्रत्यायकं सोमपदं न सोमस्वरूपे प्रमाणम्, एवं 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारो रेवतीवारवन्तीयरूपविशेषणरूपार्थप्रत्यायकोऽपि न तत्र प्रमाणम् । अयं च अपरो विशेषः सोमलताद्रव्यस्य लोकसिद्धत्वात् तत्र यागसम्बन्धित्वेनैव विधिः कल्प्यः । इह तु विशेषणस्वरूपस्यापि मानान्तरासिद्धत्वात् । प्रतीयमानेऽपि तस्मिन् विशिष्टविधेः प्राणाण्याभावाच्च तत्सिद्ध्यर्थं स्वरूपे स्तोत्रविशेषसम्बन्धित्वे च विधिद्वयं कल्प्यमिति । तस्मात् मन्त्रार्थवादानां स्वार्थे तात्पर्याभावात् न तेभ्यो देवताविग्रहसिद्धिः ।

ननु मन्त्रार्थवादानां विध्येकवाक्यतापन्नानां स्वार्थेऽपि अवान्तरतात्पर्यं सम्भवत्येव; दर्शपूर्णमासादिप्रधानविध्येकतापन्नप्रयाजादिविधिवत् इति चेत्

सत्यम् । मानान्तराविरोधे प्रतीयमानार्थे तात्पर्यं सम्भवति ; न तु तद्विरुद्धे । अन्यथा 'यजमानः प्रस्तरः' इत्यत्रापि प्रतीयामानभेदे तात्पर्यप्रसङ्गात् । अस्ति च मन्त्रार्थवादवशेन देवताविग्रहाभ्युपगमे मानान्तरविरोधः । देवताविग्रहाभ्युपगमे हि न्यायतौल्येन नानायाग[1]देशे[1] युगपदाहूतानाम् आगमनस्य, अग्निप्रक्षिप्तभस्मीभूतहविःस्वीकारादेः अपि अभ्युपगमात् प्रत्यक्षोपपत्तिविरोधः । अतो न देवताविग्रहे तात्पर्यं सम्भवति । अतो विग्रहाभावात् उपासनासु अनधिकारः इति पूर्वपक्षे प्राप्ते, - उच्यते -

'तदुपर्यपि बादरायणस्सम्भवात्' (ब्र.सू.१-३-२४) **तत्** - ब्रह्मोपासनम् **उपरि** - मनुष्याणाम् उपरि देवादिषु अपि सम्भवतीति भगवान् बादरायणो मन्यते । तेषामति अर्थित्वसामर्थ्ययोः सम्भवात् । अर्थित्वं तावत् आध्यात्मिकादिदुर्विषहदुःखाभितापात् परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धे अनवधिकातिशयासंख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च सम्भवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया [2]सम्भवति[2] । देहेन्द्रियादिमत्त्वं च सर्वेषु सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधसृष्ट्याम्नानात् सिद्धम् । देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृतिचतुर्दश लोकस्थभोगयोग्यदेहेन्द्रियादि योगायत्तः । तथा, 'देवत्वं गच्छन्ति य एता उपयन्ति' इति

---

1. देशेषु - अ,आ । 2. सम्भवतीति - अ,आ ।

विध्यन्यथानुपपत्त्या देशान्तरदेहान्तरभोग्य-ऐहिकसुखलक्षणस्वर्गशब्दोक्तसुखरूपतत्फलभोक्तृ कर्मदेवसिद्धेः अभ्युपगतत्वात्, देवतासायुज्यसालोक्यादिफलकर्मविध्यन्यथानुपपत्त्या देवताविग्रहाणां तद्भोग्यभोगोपकरणानाम् अभ्युपगन्तव्यत्वाच्च ।

'विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्' (ब्र.सू.१-३-२६) ननु एवं मन्त्रार्थवादादिभिः देवतायाः विग्रहाभ्युपगमे कर्मणि विरोधः प्रसज्यते । बहुषु यागेषु युगपत् एकस्य इन्द्रस्य विग्रहवतः, 'अग्निमग्न आवह, इन्द्र [1]आगच्छ'[1] इत्यादिना आहूतस्य सन्निधानानुपपत्तेः विरोधः प्रसज्यते इति चेत्, तन्न - अनेकप्रतिपत्तेः दर्शनात् । दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपत् अनेकशरीरप्रतिपत्तिः ।

'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' (ब्र.सू.१-३-२७) मा भूत् कर्मणि विरोधः । वैदिके तु शब्दे विरोधः प्रसज्यते । देवताविग्रहाभ्युपगमे हि विग्रहस्य सावयवत्वेन अनित्यत्वात्, इन्द्रादेः अर्थस्य विनाशात् ऊर्ध्वं प्राक् उत्पत्तेश्च तदर्थवाचिवैदिकशब्दानां सत्त्वे, शब्दस्य अर्थेन औत्पत्तिकः सम्बन्धो न स्यात्। शब्दस्वरूपस्यापि नाशे अनित्यत्वं स्यात् । ततश्च 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' (पू.मी.सू.१-१-५) इति सूत्रप्रतिपादितं शब्दार्थसम्बन्धानां नित्यत्वं विरुध्येत इति चेत् न । [2]'वेदेन[2] नामरूपे व्यकरोत् सतासती प्रजापतिः' (तै.ब्रा.२-६-२८) -

"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः" ।। (वि.पु.१-५-६३)

इति प्रत्यक्षानुमानशब्दाभ्यां श्रुतिस्मृतिभ्याम् इन्द्राद्यर्थानां वेदप्रभवत्वावेदनात् यथा शिल्पिना शिल्पशास्त्रोदितनामरूपाद्यनुसन्धानपूर्वकं निर्मितं देवताप्रतिमादिकं पूर्वपूर्वसमानरूपम् एवम् इन्द्राद्यर्थोऽपि वेदोक्तनामरूपानुसन्धानशालिना प्रजापतिना निर्मीयमाणः पूर्वपूर्वसमानरूपः एव भवति । ततः समानरूपाभिव्यङ्ग्याकृतिवाचित्वात् इन्द्रादिशब्दानां व्यक्तीनाम् अनित्यत्वेऽपि जातिवाचिगवादिशब्दवत् इन्द्रादिशब्दानामपि जातिवाचितया न अनित्यार्थसंयोगकृतो विरोधः इत्यर्थः । ननु 'मन्त्रकृतो वृणीते' संहिताकारपदकारसूत्रकार ब्राह्मणकाराणां, 'विश्वामित्रस्य सूक्तं भवति' इति मन्त्रादीनां कार्यत्वश्रवणात् न वेदनित्यत्वम् इत्यत्राह - 'अत एव च नित्यत्वम्' (ब्र.सू.१-३-२८)

"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः" ।। (म.भा.शां.२२२-५५)

---

1. हरिरिव आगच्छ इत्यधिकः पाठः - क । 2. इन्द्राद्यर्थानां वेदे - अ,आ ।

इति मन्त्रकृत्वेन प्रसिद्धानामपि वसिष्ठविश्वामित्रादीनां वेदजन्यत्वाम्नानात् मन्त्रकृत्वं मन्त्रद्रष्टृत्वमेव, न तु [1]मन्त्रकरत्वम्[1] इति अवसीयते। अतः वेदनित्यत्वस्य न अनुपपत्तिः ।

ननु एवमपि प्राकृतप्रलये शब्दस्य तदुपादानभूताहङ्कारादेश्च नष्टत्वात् कथं वेदनित्यत्वम् ? कथं वा सर्वेषां वेदशब्दप्रभवत्वं ? तत्राह - 'समाननामरूपत्वाच्चावृत्तावपि अविरोधो दर्शनात् स्मृतेश्च' (ब्र.सू.१-३-२९) कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तौ अपि पूर्वोक्तसमाननामरूपत्वस्य तदवस्थत्वादेव न शब्दानित्यत्वम् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋ.सं.१०-१९०-३),

"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" ।। (महा.भा.शां.८५-५०)

इति श्रुतिस्मृतिभ्यां तथैव प्रतिपादनात् एतस्य नित्यत्वम् अपौरुषेयत्वं च । इदमेव हि वेदस्य अपौरुषेयत्वं यत्पूर्वपूर्वोच्चारणक्रमानुसन्धानसापेक्षोच्चारणक्रमत्त्वं तत् इदानीन्तनवेदे सर्गाद्यवेदेऽपि समानम् । इयांस्तु विशेषः - भगवद्व्यतिरिक्ताः सर्वेऽपि पूर्वपूर्ववेदानुपूर्व्यनुभवजनितसंस्कारवशेन पूर्वानुपूर्वीं स्मृत्वा तयैव आनुपूर्व्या वेदम् उच्चारयन्ति । भगवांस्तु संस्कारनिरपेक्षमेव पूर्वानुपूर्वीम् अनुसन्धाय तयैव आनुपूर्व्या वेदम् उच्चारयति इति । इदमेव हि पौरुषेयप्रबन्धापेक्षया वेदस्य वैलक्षण्यं नित्यत्वं च ।

ननु चतुर्मुखकर्तृक अवान्तरकल्पसृष्टिविषयतयाऽपि 'धाता यथा पूर्वमकल्पयत्' इत्यादि प्रमाणानाम् उपपत्तौ स्वतन्त्रपरमात्मकर्तृकब्रह्मकल्पाद्यसमयप्रवृत्तवेदचतुर्मुखादिसृष्टेः समानानुपूर्वीकत्वसमाननामरूपकृत्यत्वादौ किं प्रमाणम् इति चेत् उच्यते -

चतुर्मुखादेः नामरूपकृत्यादीनि इतिहासपुराणादिभ्यो अवगत्य 'एतादृशनामरूपकृत्यविशिष्टचतुर्मुखो भवानि' इत्येवं संकल्पपूर्वकं भगवन्तम् आराध्य तत्तत्पदं प्राप्नुवन्ति इति हि [2]शास्त्रप्रसिद्धिः[2] । यदि हि कल्पान्तरे उत्पद्यमानः चतुर्मुखो विलक्षणनामरूपकृत्यः स्यात्, - तदा तस्य भगवदाराधकस्य वाञ्छितार्थसिद्ध्यभावात् तदिष्टसाधनत्वावेदकशास्त्रस्य अप्रामाण्यमेव स्यात्। तत्तत्पदाभिलाषिणः प्रवृत्तिश्च कस्यापि न स्यात् । अतः प्राकृतसृष्ट्यावृत्तावपि यथापूर्वमेव सृष्टिः इति देवताधिकरणे स्थितम् इति ।

ननु अग्निलोकात् ऊर्ध्वलोकवर्तिनाम् अर्चिराद्यनतिवाह्यानाम् अर्चिराद्यातिवाहिकचिन्तनरूपाङ्गासम्भवात्, तदङ्गत्वस्य, 'तच्छेषगत्यनुस्मृतियोगाच्च', (ब्र.सू.४-२-१७) 'योगिनः

---

1. मन्त्रकर्तृत्वम् - अ,आ । 2. सिद्धिः - अ ।

प्रतिस्मर्येते स्मार्ते चैते' (ब्र.सू.४-२-२१) इत्यादिषु आविष्कृतत्वात्, तदङ्गहीनानां [1]देवानां[1] कथम् अङ्गिभूतब्रह्मविद्यायाम् अधिकारः इति चेन्न । आतिवाहिकचिन्तनस्य दृष्टार्थतया तत्तल्लोकवर्तिनां तदूर्ध्वलोकवर्त्यातिवाहिकचिन्तनेन एव साद्गुण्योपपत्तेः। [2]मृतयजमाने[2]ष्टिकर्मणि सूक्तवाके यजमानस्य आयुराशासनाद्यभावात्, अनपेक्षितम्, 'आयुराशास्ते' इत्यादिकम् अंशं विहाय अपेक्षितांशपाठस्य अङ्गीकृतत्वात् । तद्वत् इहापि अनपेक्षितातिवाहिकांशत्यागेन अपेक्षित-स्वस्वलोकोर्ध्ववर्त्यातिवाहिकानामेव चिन्तनीयत्वोपपत्तेः ।

ननु 'तदुपर्यपि बादरायणः सम्भवात्', (ब्र.सू.१-३-२५) 'मध्वादिष्वसम्भवात्' (ब्र.सू.१-३-३०) इति अधिकरणद्वयेन किं प्रयोजनम्? देवतानां देवताविशेषाणां च अर्थित्वसामर्थ्यनिर्णयस्य मनुष्याणां प्रवृत्तिविशेषानौपयिकत्वात् । न च देवानाम् अनेन अधिकरणद्वयेन किञ्चिदस्ति प्रयोजनम्। तेषां स्वकीयपटुतरदेहादिमत्त्वे अर्थित्वसम्भव-निर्णये च अधिकरणन्यायानपेक्षणात् इति चेत्, उच्यते - परं ब्रह्म देवानां वस्वादिदेवताविशेषाणां च उपास्यं फलप्रदं च इति ईदृशमहिमविशिष्टतया उपासनकाले अनुसन्धेयत्वसिद्धि - लक्षणप्रयोजनसद्भावात् । देवताविग्रहासिद्धौ मधुविद्यायाः देवतापदप्राप्तिः फलम् इत्यपि न भवेत् । गत्यनुस्मृतौ अचेतनानाम् अर्चिरादीनाम् एव मार्गपर्वत्वेन चिन्तनीयता स्यात्, न आतिवाहिकदेवतानाम् । तथा 'भाक्तं वाऽनात्मवित्त्वात्' (ब्र.सू.३-१-७) इति सूत्रोक्तन्यायेन ज्योतिष्टोमादिकर्मफलं भुञ्जानानां, 'तं देवाः भक्षयन्ति' इति निरन्तराजानदेवकर्मकरभावावगत्या वैराग्यं न सिध्येत् । प्राप्तिविरोधयोः असतोः मन्त्रार्थवादानां प्रतीयमानार्थे प्रामाण्यम् अस्तीति न्यायव्युत्पादनेन, 'प्लवा ह्येते अदृढा यज्ञरूपाः' (मु.उ.१-२-७) 'एतत् तृतीयं स्थानम्' इत्यादिमन्त्रार्थवादैः वैराग्यसंसिद्धिः इत्यादीनि प्रयोजनानि द्रष्टव्यानि । प्रकृतमनुसरामः ।।

**आ.भा. - नान्यस्मै** अन्यस्मै पुत्रशिष्यव्यतिरिक्ताय कस्मैचिदपि एतत् ब्रह्मविज्ञानं न प्रब्रूयात् । अन्यस्मै मधुविद्यादानप्रतिषेधः मधुविद्यायाः गौरवातिशयं दर्शयति । **यद्यपि** इत्यादि। यद्यपि अस्मै मधुविद्यादात्रे आचार्याय कश्चित् **अद्भिः** - जलैः **परिगृहीतां** समुद्रैः परिवेष्टितां महीम् **धनस्य पूर्णाम्** समस्तभोगोपकरणैः युक्तां सम्पूर्णामपि पृथिवीं दक्षिणारूपेण दद्यात्, तथापि एतद्दानात् **एतदेव** मधुविद्यादानमेव **भूयः** - अधिकम् । अर्थात् मधुविद्यादानमेव भूयोऽधिकफलं, न तु तादृशपृथिवीदानम् । **ततो भूय इति ततो भूय** इति द्विर्वचनम् मधुविद्यायाः आदरातिशयं दर्शयति ।।

---

1. देवतानां - क । 2. यजमानके - अ,आ,क,ख ।

**सु.** - आभ्याम् अन्यो यदि पृथिवीम् इमाम् **अद्भिः** - सागरैः **परिगृहीतां** - व्याप्तां **धनस्य पूर्णां** - धनेन पूर्णां **दद्यात्**, न तस्मै प्रब्रूयात्, **एतदेव** विज्ञानं ततो भूयः अधिकम् । अस्य विज्ञानस्य सागरान्ताऽपि पृथिवी न पर्याप्तो निष्क्रयः इति भावः । आदरात् अभ्यासः।। ६ ।।

**।। इति तृतीयप्रपाठके एकादशः खण्डः ।।**

## द्वादशः खण्डः

**[ब्रह्मणि गायत्रीसादृश्यानुसन्धानम्]**

**गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च । वाग्वै गायत्री । वाग्वा इदँ सर्वं भूतं गायति च त्रायते च ।। १ ।।**

**प्र.** - चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणः गायत्रीसादृश्यानुसन्धानरूपा विद्या प्रस्तूयते - **गायत्री वा** इत्यादिना । 'इन्द्रश्शचीपतिः वलेन पीडितः । दुश्च्यवनो वृषा समित्सु सासहिः' ।। [1]इति[1] गायत्री चतुष्पदा, एकैकस्य पादस्य षडक्षरात्मकतया षडक्षरपादवत्त्वेन षड्विधा च । एवं ब्रह्मणोऽपि [2]सर्वभूत[2] [3]शब्दितात्मवर्गः[3] एकः पादः। कर्मार्जितभोगस्थानरूपः पृथिवीलोकः एकः पादः । भोगोपकरणं शरीरम् एकः पादः । आत्मस्थित्यनुगुणप्रदेशविशेषरूपं हृदयम् एकः पादः इति भूतपृथिवीशरीरहृदयानि चत्वारः पादाः । तत्र सर्वभूतलक्षणपादस्य ब्रह्मात्मकवाक्कर्तृकगानकर्मत्वत्राणकर्मत्वलक्षणं विधाद्वयम् । पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्त्यत्वलक्षणं विधाद्वयम् । शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वलक्षणं विधाद्वयमेव । द्वयोः अपि विधाद्वययोः अपि भेदाभावात् । ततश्च [4]परब्रह्म[4]रूपा गायत्री भूतपृथिवीशरीरहृदयरूपपादचतुष्टयवत्तया चतुष्पादा । गानकर्मत्व-त्राणकर्मत्व-सर्वभूतप्रतिष्ठात्व-सर्वभूतानतिवर्त्यत्व सर्वप्राणिप्राणप्रतिष्ठात्व-सर्वप्राणानतिवर्त्यत्व-लक्षणविधाषट्कयुक्ततया षड्विधा च । अतः चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसादृश्यानुसन्धानं कर्तव्यम् इति प्रतिपादयति - **गायत्री वा इदं सर्वं भूतं यदिदं किञ्च।** अत्र गायत्रीशब्देन न प्रसिद्धा गायत्री अभिधीयते । तस्याः भूतादिपादचतुष्टयसम्बन्धाभावात् । 'एतावानस्य महिमा' इति पुंसूक्तमन्त्रप्रतिपाद्यत्वाभावाच्च।

---

1. इति हि - अ,आ । 2. भूत - अ,आ । 3. शब्दितार्थवर्ग - अ,आ ।
4. ब्रह्मानुरूप -अ,आ ।

अपि तु परमात्मा। यथा कुण्डपायिनाम् अयने 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्दः प्रयुज्यमानः तत्सादृश्य[1]विशिष्टानुष्ठानार्थः[1] । तथा गायत्रीशब्दः ब्रह्मणि प्रयुज्यमानः तत्सादृश्यानुसन्धानार्थः। ततश्च गायत्रीशब्देन ब्रह्मैव अभिधीयते । वैशब्दो अवधारणार्थः । ब्रह्मैव परिदृश्यमानसर्वभूतात्मकम् इत्यर्थः। ततश्च [2]ब्रह्मणि[2] भूतलक्षणपादवत्त्वम् उक्तम् । अथ गायत्रीशब्दप्रवृत्तिनिमित्तमपि ब्रह्मणि उपपादयन् विधाद्वयमाह - **वाग्वै गायत्री** - गायत्रीशब्दितं गायत्रीसदृशं ब्रह्मैव वाग्रूपविशिष्टं भवति इत्यर्थः। "शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः" । (वि.पु.१-२२-८५) इति पराशरस्मृत्याद्यनुरोधेन ब्रह्मणः एव शब्दरूपत्वमिति भावः । ततश्च किम् ? इत्यत्राह - **वाग्वा इदँ सर्वं भूतं गायति च त्रायते च ।** वाग्रूपमेव ब्रह्म सर्वाणि भूतानि अभिधत्ते। हिताहितविधिनिषेधमुखेन त्रायते च। अतश्च ब्रह्मणो वाग्रूपस्य सर्वभूतगानत्राणकर्तृत्वाभ्यां गायत्रीशब्दवाच्यत्वम्। भूतात्मकपादवतः [3]ब्रह्मणः वाक्कर्तृ[3]कगानत्राणकर्मत्वाभ्यां द्वैविध्यं च उक्तं भवति ।।

**आ.भा.** - चतुष्पादवत्त्वषड्विधत्वधर्मद्वारा परब्रह्मणः गायत्रीमन्त्रसादृश्यानु - सन्धानलक्षणा विद्या सम्प्रति प्रस्तूयते - **गायत्री वा** इत्यादिना । यथा 'इन्द्रश्शचीपतिः', बलेन पीडितः, दुश्च्यवनो वृषा, समित्सु सा सहिः' इत्यादिरूपेण गायत्री चतुष्पादवती । तथा प्रत्येकपादस्य षडक्षरघटितत्वेन षड्विधा गायत्री । तथैव ब्रह्मापि सर्वभूतशब्दितात्मवर्गः एकः पादः। तथा कर्मसम्पादितभोगायतनलक्षणः पृथिवीलोकोऽपि एकः पादः, भोगोपकरणं शरीरम् एकः पादः, आत्मस्थितिप्रयोजकप्रदेशविशेषलक्षणं हृदयम् एकः पादः इति भूतपृथिवीशरीरहृदयलक्षणाः चत्वारः पादाः । तथा गानकर्मत्राणकर्मत्वसर्वभूतप्रतिष्ठात्व - सर्वभूतानतिवर्त्यत्व-सर्वप्राणिप्रतिष्ठात्व-सर्वप्राणानतिवर्त्यत्व-लक्षणप्रकारषट्कयुक्ततया षड्विधमपि इति गायत्रीसादृश्यानुसन्धानं कर्तव्यम् इत्याशयेन आह - **गायत्री वा** इत्यादि । अत्र गायत्रीपदं न मन्त्रात्मकगायत्रीबोधकम्, अपि तु ब्रह्मबोधकम् । मन्त्रलक्षणगायत्र्यां भूतादिपादचतुष्टयासम्भवात् । तस्मात् गायत्रीशब्देन ब्रह्मैव प्रतिपादितं भवति । **गायत्री वा इदं सर्वम् ।** प्रकृते गायत्री इति पदं न मन्त्रात्मकगायत्रीपरकम् अपि तु परमात्मबोधकम् । यथा 'सिंहो माणवकः' इत्यत्र प्रयुक्तः सिंहशब्दो न सिंहपरकः, किन्तु क्रौर्यादिगुणयुक्तमाणवकबोधकः तथैव गायत्रीशब्दः परमात्मनि प्रयुज्यमानः ब्रह्मणि गायत्रीसादृश्यानुसन्धानप्रयोजकः । ततश्च गायत्री इति पदेन परमात्मा एव कथ्यते । **इदं**

---

1. विशिष्टानुसन्धानमित्यर्थः - अ,आ । 2. ब्रह्मणः - अ,आ,ख । 3. वाग्रूपब्रह्मकर्तृक - ख ।

परिदृश्यमानम् अपरिदृश्यानं सर्वभूतं प्राणिजातं यत्किञ्चित् चराचरात्मकं तत्सर्वं गायत्री एव रामाख्यं ब्रह्मैव ।

एतावता ब्रह्मणः भूतात्मकपादवत्वं प्रदर्शितम् । सम्प्रति गायत्रीपदशक्यतावच्छेदकरूपं ब्रह्मणि प्रतिपादयन् प्रकारद्वयमाह - **वाग्वै** इत्यादि । गायत्रीशब्दप्रतिपादितं गायत्रीसदृशः **परमात्मा** एव **वाक्** - वाग्रूपविशिष्टो भवति । 'शब्दरूपधरस्यैतद्रूपं विष्णोर्महात्मनः' (वि.पु.१-२१-८५) इति पराशरवचनानुरोधेन ब्रह्मणः एव शब्दरूपत्वात् । एतावता प्रकृते किमायातम् ? तत्राह - **वाग्वा इदम्** इत्यादि । **इदं** - परिदृश्यमानं सर्वभूतप्राणिजातं चराचरात्मकं वाग्रूपं ब्रह्मैव **गायति** शब्दायति । **त्रायते च** हिताहितप्राप्तिपरिहारप्रकारप्रतिपादनेन रक्षति च । ततश्च वाग्रूपस्य ब्रह्मणः सर्वभूतगानत्राणकर्तृत्वधर्माभ्यां गायत्रीपदप्रतिपाद्यत्वम् । एवं वाग्लक्षणब्रह्मकर्तृकगानत्राणकर्मत्वधर्माभ्यां भूतात्मपादविशिष्टब्रह्मणः द्वैविध्यमपि कथितं भवति इति ।।

**सु.** - अथ प्रकारान्तरेण ब्रह्मणः उपासनम् उपदिश्यते । नेह गायत्री केवला प्रस्तूयते। अपि तु गायत्रीसाम्यात् गायत्री ब्रह्मैव, तथा चेतोऽर्पणम् इह उपदिश्यते । कथं गायत्रीसाम्यम् ? अनुपदं श्रोष्यते सैषा चतुष्पदा षड्विधा गायत्री' इति । उपपादयामश्च तद्विवरणावसरे । **गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च** - देवमनुष्यपशुपक्षिभावम् आपन्नम् इदम् अखिलं जीवजातं गायत्री एव। सादृश्यात् गायत्रीत्वेन विभाव्यमानं ब्रह्मैव । अस्ति च गायत्रीपदस्य ब्रह्मणि प्रवृत्तौ निमित्तम्, किं तत् ? **वाग्वा इदँ सर्वं भूतं गायति च त्रायते च** । वाचा एव गीयते इदम् इत्थम् इति भूतजातम्। रक्ष्यते च अर्थानर्थविवेचनमुखेन तत् वाक् उच्यते **गायत्री** इति ।

ननु वाचि तद्योगे किम् आयातं प्रक्रान्तस्य ? उच्यते - **वाग्वै गायत्री** - या प्रक्रान्ता गायत्री सा हि वाक् । गायत्रीशब्देन विवक्षितं ब्रह्म वाग्रूपं हि, तद्धि सर्वप्रकारम्। 'शब्दः खे' इति स्मर्यते । तथाच ब्रह्मणा एव वाग्रूपेण सर्वं गीयते, रक्ष्यते च तत् वाग्द्वारा । गानकर्तृत्वत्राणकर्तृत्वगुणयोगात् ब्रह्मणि गायत्रीपदप्रवृत्तिनिमित्तयोगोऽपि अस्तीति भावः । स्यात् गायत्रीपदप्रवृत्तिनिमित्तयोगात् गायत्रीसादृश्यात् वा गायत्री ब्रह्म, अथापि **गायत्री वा इदं सर्वं भूतम्** इति सामानाधिकरण्येन निर्देशः कथम्? इत्थम् - अंशो हि अखिलमिदं गायत्र्याः ब्रह्मणः । विशेषणं हि अंशो विशिष्टस्य, ब्रह्म च विशिष्टं स्वेतरेण समस्तवस्तुना । तदपृथक्सिद्धप्रकारभूतम् इदं भूतजातम् एकः पादः ब्रह्मण इत्यभिप्रेत्य अयं निर्देशः । इमम्

अभिप्रायम् अनुपदं श्रावयिष्यति च श्रुतिः । एतेन गानकर्मत्वत्राणकर्मत्वलक्षणप्रकारद्वयोपेतः प्रथमः पादः भूतलक्षणः ज्ञापितः ।।

**[पृथिव्यात्मिका गायत्री]**

**या वै सा गायत्री इयं वाव सा येयं पृथिवी । अस्याँ हीदँ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ।। २ ।।**

**प्र.** - उक्तार्थानुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येन आह **या वै सा गायत्री इयं वाव सा येयं पृथीवी ।** उक्तरूपविशिष्टप्रकृतधर्मिपरो यच्छब्दः । **या** - सर्वभूतरूपा एकपादयुता **गायत्री** - गायत्र्याख्यं ब्रह्म, तदेव प्रसिद्धा पृथिवी इत्यर्थः । कथं पृथिव्याः ब्रह्मात्मकत्वम् ? इत्यत्राह - **अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् ।** ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम् । नहि केवलपृथिव्याः सर्वभूतधारणशक्तिः अस्ति इत्यर्थः । प्रतिष्ठात्वं च नियतम् इत्याह - **एतामेव नातिशीयते ।** पृथिवीं [1]भूतानि[1] नातिवर्तन्ते । कर्मवश्यात्मनां हि प्रतिष्ठात्वादेव पृथिवी नियमेन अशक्यातिक्रमणा इत्यर्थः । पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते, न ततोऽन्यत्रेति भावः । एवं द्वितीयः पादः, [2]भूत[2]प्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं च उक्तम् ।।

**आ.भा.** - द्वितीयं रूपं गायत्र्यात्मकब्रह्मणः दर्शयितुमाह - **या वै सा गायत्री** इत्यादि। या **वै** खलु सर्वभूतलक्षणप्रथमपादविशिष्टा **गायत्री** - गायत्रीपदबोध्यं ब्रह्म सा तदेव सर्वाधारतया प्रसिद्धा **इयं पृथिवी** यस्मात् कारणात् **अस्यां** - पृथिव्यां **इदं** - परिदृश्यमानं **सर्वभूतं** - चराचरात्मकं **प्रतिष्ठितं** - आधेयतया अवस्थितम्। यतः पृथिवी ब्रह्मात्मिका अत एव सर्वभूतानां प्रतिष्ठा आधारभूता । केवलायाः पृथिव्याः सर्वभूतधारणसामर्थ्याभावात् । **एतां** पृथिवीं सर्वभूतानि **नातिशीयते** - नातिवर्तन्ते, कर्मवशगो हि जीवः तेषां । यतः पृथिवी आधारभूता तस्मादेव कारणात् सर्वभूतैः इयं नियमेन अशक्यातिक्रमणा । पृथिवीमयब्रह्माण्डे जीवः परिवर्तते । न ततोऽन्यत्र भूतानां परिवर्तनम् इति भावः । एतावता द्वितीयः पादो निरूपितः । भूतप्रतिष्ठात्वम् अनतिवर्त्यत्वलक्षणप्रकारद्वयमपि प्रदर्शितम् इति ।।

---

1. भूतजातं - क । 2. सर्वभूत - अ,आ ।

**सु.** - अथ द्वितीयपादयोगः उच्यते । **या वै सा गायत्री** - यस्याः गायत्र्याः सर्वाणि भूतानि अंशः सा गायत्री इयमेव । केयम्? या इयं पृथिवी सा इयम् । येयं पशुपक्ष्यादिभूतभावम् उपागतस्य भोक्तृवर्गस्य जीवराशेः भोगस्थानभूता पृथिवी सा अपि गायत्र्याख्यं ब्रह्मैव। सा अपि भूतवत् तस्य पादः एव इति यावत् । इह पृथिवी इत्येतत् उपलक्षकं प्राणिनाम् आश्रयमात्रस्य । तां पृथिवीं विशिनष्टि - **अस्याम्** इति । **अस्यां** - पृथिव्यां **इदं** - भूतजातं यथा कर्मभोगाय प्रतिष्ठितम् । **एतामेव** - पृथिवीं **नातिशीयते** - अतिलङ्घितुम् अक्षमं च । **हि** प्रसिद्धौ । वाङ्मुखेन गानत्राणसम्बन्धः इव पृथिवीमुखेन भूतप्रतिष्ठात्वभूतानतिलङ्घ्यत्वसम्बन्धो गायत्र्याख्ये ब्रह्मणि गम्यते ।।

[गायत्री ब्रह्मशरीरात्मकम्]

**या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् । अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ।। ३ ।।**

**प्र.** - अथ तृतीयं पादमाह - **या वै सा......शरीरम्** । अत्र पुरुषशब्दः शरीर विशिष्टजीवपरः। **पृथिवी** - पृथिवीरूपपादविशिष्टा **या** गायत्री, गायत्र्याख्यं ब्रह्म **सा शरीरं** - शरीराख्यपादविशिष्टा इत्यर्थः । भूतपृथिव्योः गायत्रीसामानाधिकरण्येन निर्दिष्टतया [1]भूतपृथिवीशब्दयोः[1] ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात् अग्र्यप्रायन्यायेन अत्र शरीरलक्षणपादान्तरनिर्देशकस्य[१] शरीरशब्दस्य निष्कर्षकशब्दत्वेऽपि सामानाधिकरण्येन निर्देशो युक्तः । शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वातदनतिवर्त्यत्वाभ्याम् उपपादयति । **अस्मिन् हि इमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते । नातिशीयन्ते** - नातिवर्तन्ते इत्यर्थः ।।

**आ.भा.** - अथ गायत्र्याख्यस्य ब्रह्मणः तृतीयं पादं दर्शयितुमाह **या वै सा** इत्यादि **शरीरम्** इत्यन्तम् । या वै सा सर्वभूतप्रतिष्ठात्वेन प्रसिद्धा **पृथिवी** - पृथिव्यात्मकपादयुक्ता गायत्री तदाख्यब्रह्म सा **शरीरं** - शरीराख्यपादविशिष्टम् इत्यर्थः । **यदिदमस्मिन् पुरुषे** ।

---

१. अग्र्यप्रायन्यायः - प्रायेवचनाच्च (पू.मी.सू.२-१-१२) इति सूत्रे शाबरभाष्ये प्रधानकर्मप्राये वचनं प्रधानकर्मता-मुपोद्बलयति, यथा अग्र्यप्राये लिखितं दृष्ट्वा भवेत् अयमग्र्य इति मतिः ।। इति ।

1. भूतपृथिवीशब्दस्य - अ,आ ।

अत्र पुरुषपदं शरीरविशिष्टजीवपरकम् । पार्थिवत्वात् शरीरस्य । कथं शरीरस्य गायत्र्याख्यब्रह्मरूपत्वं? तत्राह - **अस्मिन् हीमे** इत्यादि । अस्मिन् शरीरावच्छिन्ने जीवे **इमे** - पञ्चसंख्याकाः प्राणाः प्राणापानादयः भूतपदवाच्याः प्रतिष्ठिताः आश्रिताः । पृथिवीवत् भूतपदवाच्यप्राणानाम् आधारभूतत्वात् । शरीरं गायत्र्याख्यब्रह्मलक्षणमेवं । शरीरस्य ब्रह्मरूपत्वं प्राणप्रतिष्ठात्व-तदनुवर्तित्वधर्माभ्याम् उपपादयति **अस्मिन्** इत्यादि । एतदेव शरीरं प्राणादयो **नातिशीयन्ते** - नातिवर्तन्ते, शरीरम् अतिक्रम्य न कुत्रचित् अन्यत्र गच्छन्ति इत्यर्थः ।।

**सु.** - अथ तृतीयपादयोगः उच्यते - **या वै** गायत्री इत्युक्ता **सा पृथिवी** । पृथिवीत्वेन लक्षिता गायत्री इत्येतत् । **इदं वाव सा** - यदिदम् अस्मिन् दृश्यमाने **पुरुषे** - प्राणिनि **शरीरं** - यदस्य प्राणिनो भोगायतनतया समुपलक्ष्यते शरीरं, तदपि गायत्र्याख्यं ब्रह्मैव। ब्रह्मणः पादः एवेति भावः । शरीरं विशिनष्टि - **अस्मिन्** इति । ये नाम भूतभावम् उपयद्भिः जीवैः प्रधानोपकरणतया स्वीकृताः प्राणाः तेऽपि **अस्मिन् हि प्रतिष्ठिताः, नातिशीयन्ते** च एतत् । शरीरतः प्राणप्रतिष्ठात्व-प्राणानतिलङ्घ्यत्वयोगो ब्रह्मणि गम्यते ।।

**[हृदयात्मकं गायत्रीब्रह्म]**

**यद्वै तत् पुरुषे शरीरमिदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे हृदयम् । अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ।। ४ ।।**

**प्र.** - चतुर्थं पादमाह - **यद्वै तत्.....हृदयम् । पुरुषे शरीरं** - पुरुषशब्दित शरीरविशिष्टजीवनिष्ठशरीराख्यपादविशिष्टं यत् गायत्र्याख्यं ब्रह्म, तदेव **हृदयं** - हृदयशरीरकम् हृदयलक्षणपादकमित्यर्थः । हृदयस्य ब्रह्मात्मकत्वमुपपादयति **अस्मिन्......नातिशीयन्ते।** प्राणशब्देन प्राणापानादयः इन्द्रियाणि वा कथ्यन्ते । तेषां हृदयसम्बन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थपादौ प्राणप्रतिष्ठात्व-तदनतिवर्त्यत्वरूपं विधाद्वयं च उक्तम् ।।

**आ.भा.** - चतुर्थं पादं दर्शयितुमाह - **यद्वै तत्** इत्यादि । **यद्वै तत् पुरुषे शरीरम्** - पुरुषपदप्रतिपाद्यशरीरविशिष्टजीवनिष्ठशरीरलक्षणपादविशिष्टं यत् गायत्रीपदबोध्यं ब्रह्म तदेव ब्रह्महृदयं हृदयशरीरकं हृदयलक्षणपादविशिष्टम् । कथं हृदयं ब्रह्म? तत्राह -

**अस्मिन् हीमे** इत्यादि। **अस्मिन्** - हृदयाख्यब्रह्मणि **प्राणाः** - प्राणापानादयः इन्द्रियाणि वा । तेषां प्राणादीनां हृदयसम्बन्धिनाडीद्वारा हृदये प्रतिष्ठितत्वं भवति । एतदेव **नातिशीयन्ते** - यतः हृदयाश्रिताः प्राणादयः तस्मादेव कारणात् प्राणादयो हृदयं नातिवर्तन्ते । हृदयम् अतिक्रम्य न भवन्ति । एवं प्रकारेण गायत्र्याख्यब्रह्मणः चतुर्थो हृदयाख्यः पादः प्रदर्शितः । तथा प्राणप्रतिष्ठात्व-प्राणानतिवर्त्यत्वलक्षणप्रकारद्वयमपि प्रदर्शितम् इति ।।

**सु.** - अथ चतुर्थः पादयोगः उच्यते - **यद्वै तत्पुरुषे शरीरं** - शरीरत्वेन लक्षितं गायत्र्याख्यं ब्रह्म । **इदं वाव तद्यदिदमन्तःपुरुषे हृदयम्** । भोगाश्रयदेशवत् भोगायतनवत् भोगौपयिकज्ञानप्रभाप्रसरणमूलस्थानभूतं हृदयमपि गायत्र्याख्यं ब्रह्मैव । ब्रह्मणः पादः एव इति भावः । हृदयं विशिनष्टि - **अस्मिन् हीमे प्राणा इति** । अविशिष्टमेतत् ।।

**[गायत्री चतुष्पदा षड्विधा च]**

**सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाऽभ्यनूक्तम् ।। ५ ।।**

**प्र.** - एवमुक्तं चतुष्पात्त्वं षाड्विध्यं च निगमयति - **सैषा चतुष्पदा षड्विधा गायत्री** इति । नन्वेवं चतुष्पात्त्वे ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायाम् उक्तस्य महिम्नः एतावत्त्वप्रतिषेधिकाम् ऋचम् उदाहरति **तदेतदृचाऽभ्यनूक्तम्** । **तदेतत्** - गायत्र्याख्यं ब्रह्म अभिमुखीकृत्य ऋचापि उक्तम् इत्यर्थः ।।

**आ.भा.** - अतःपरं गायत्र्याख्यब्रह्मणः चतुष्पादवत्त्वं षड्विधत्वं च निगमयन्नाह **सैषा** इत्यादि **सा एषा** तदेतत् गायत्र्याख्यं ब्रह्म चतुष्पात् षड्विधं च भवति इति । ननु एवं यदि तादृशं ब्रह्म चतुष्पादादिवत् तदा चतुष्पादवत्वेन परिच्छिन्नत्वं स्यात् इत्याशङ्क्य पूर्वोक्तस्य ब्रह्ममहिम्नः एतावत्वनिषेधिकाम् ऋचम् उपदर्शयति **तदेतदृचाऽभ्यनूक्तम्** इति । तदेतत् गायत्र्याख्यं ब्रह्म लक्ष्यीकृत्य **ऋचा** - मन्त्रेण **उक्तम्** - कथितम् ।।

**सु.** - भूतपृथिवीशरीरहृदयलक्षणैः चतुर्भिः पादैः उपेता इति चतुष्पदा । एकैकस्मिन् पादे उक्तप्रकारद्वयसम्पत्त्या तृतीयचतुर्थयोः प्रकारद्वयानतिरेकात् षड्विधा च । अत एव

सैषा गायत्रीसाम्यात् गायत्री । श्रूयते च गायत्री - 'इन्द्रः शचीपतिः, बलेन पीडितः, दुश्च्यवनो वृषा, समित्सु, सासहिः' इति । इयं च चतुष्पदा प्रतिपदम् अक्षरषट्कयोगात् षड्विधा च । **तदेतत्** गायत्र्याख्यं ब्रह्म, **ऋचाऽभ्यनूक्तम्** - प्रकटीकृतम् ; संशयविपर्ययनिराकरणपूर्वकं प्रकाशितम् ।।

**[गायत्रीब्रह्मणः महिमा]**

**तावानस्य महिमा ततो ज्यायाँश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि । इति ।। ६ ।।**

**प्र.** - तामृचं पठति - **तावानस्य महिमा** । पूर्वोक्तः सर्वोऽपि एतस्य **महिमा** - नियाम्यवर्गः । **ततो ज्यायांश्च पुरुषः** । पूर्वोक्तमहिमापेक्षया पुरुषो **ज्यायान्** - परमात्मा ज्यायान् । ततो अधिकमहिमाशालीत्यर्थः । **पादोऽस्य सर्वा भूतानि** । अत्र सर्वा भूतानि इति कार्यजगदन्तर्गता अचित्संसृष्टाः चेतनाः उच्यन्ते । ते सर्वे पादः - अंशमात्रम् इत्यर्थः । सर्वशब्दात्परस्य शेः 'सुपां सुलुक्' (पा.सू.७-१-३९) इति लुङि नलोपे रूपम् । **त्रिपादस्यामृतं दिवि** । अत्र द्युशब्दः समष्टिव्यष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः इति ।। पुरुषसूक्ते श्रूयते -

"एतावानस्य महिमा अतो ज्यायाँश्च पुरुषः ।
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि "।। इति ।

अप्राकृते स्थानविशेषे **अस्य** - परमात्मनः **अमृतं** पादत्रयमित्यर्थः । त्रिपात्त्वं च अप्राकृतैः भोग्यभोगस्थानभोगोपकरणविशेषैः वा [1]भूषणास्त्रादि[1]रूपेण जगदन्तर्गतवस्त्वभिमानिभिः नित्यैः भगवदनुभवमात्रपरैः नित्यसिद्धैश्च मुक्तैश्च आत्मभिः वा सम्भवति ।।

**आ.भा.** - तामेव ऋचं मन्त्रं स्वरूपं दर्शयति - **तावानस्य** इत्यादि । **अस्य** - गायत्र्याख्यब्रह्मणः **तावान्** - तावत्प्रमाणको **महिमा** - नियाम्यवर्गः । ततः पूर्वप्रतिदर्शितमहिमापेक्षया **पुरुषः** - रामाख्यः परमात्मा **ज्यायान्** - अधिकः । तदपेक्षयापि अधिकमहिमाशाली । **अस्य** - अस्य महिमाशालिनः **सर्वा भूतानि** - सर्वे कार्य जगदन्तर्गताः अचित्सम्बद्धाः चेतनाः **पादः** - अंशमात्रम् । **अस्य** - परमात्मनः **दिवि** - अप्राकृते द्योतमाने स्थानविशेषे साकेते इत्यर्थः । **अमृतं त्रिपात्** - पादत्रयम् । दिवि इत्यत्र

---

1. भूषणान्नादि - क ।

द्युपदेन समष्टिव्यष्टितत्त्वबहिर्भूतालौकिकस्थानविशेषस्य ग्रहणं भवति । तथा च भगवतो रामस्य पादेन एकेन इदं सर्वं चराचरात्मकं जगत् व्याप्तम् । अपरं पादत्रयं तु अप्राकृते स्थानविशेषे इति । तस्मात् स परमात्मा समुक्तमहिमापेक्षयापि अतिशयेन ज्यायान् इति ।।

**सु.** - तामृचम् अनुवदति - **तावानस्य महिमा** - यो भूतादिहृदयान्तः परिदृश्यमानः प्रपञ्चः समुदाहृतः सर्वोऽप्यस्य गायत्र्याख्यस्य ब्रह्मणो महिमा; न तु ब्रह्मैव एतदखिलम् । **ततो ज्यायांश्च पुरुषः** गायत्र्याख्यपरब्रह्मभूतः पुरुषस्तु **ततः ज्यायान्** - अत्यन्तविलक्षणः, अतिशयसम्पन्नः। ननु निर्दिष्टं नाम 'गायत्री वा इदं सर्वं भूतं, इयं वा सा, इदं वाव तत्' इति । सत्यं निर्दिष्टम् । परं तु न स्वरूपैक्यविवक्षया, किन्तु अंशांशिभावेन । **विश्वा भूतान्यस्य पादः** - सर्वमिदं भूतम् अस्य अंशः, **त्रिपात्** - यदस्य भूतस्य उपभोगार्थतया उपलभ्यमानं पृथिव्यादिहृदयान्तं तदपि अस्यैव गायत्र्याख्यस्य ब्रह्मणः पादत्रयम् । अंशांशिभावश्च उपपादितेन वर्त्मना । एतेन योऽपि भ्रमः - अश्रुतवेदान्तानां पृथिव्यादिहृदयान्तम् इदमखिलं भोक्तुः भूतराशेः शेषभूतं, भोक्ता च जीवराशिः, एतच्छेषी स्वतन्त्रतत्वम् इति, सोऽपि निरस्तः । यत्पुनः एतैः भूतादिभिः पादैः अंशिमत्, तदेव **तु अमृतं** - तच्च **दिवि** - अप्राकृते द्योतनैकस्वभावे अनध्यक्षे पदे । पादास्तु न अमृताः यस्य इमे पादाः तत्तु अमृतम्; अध्यक्षपदे च एते, यस्य इमे तत्तु नाध्यक्षे इति विशेषो व्यज्यते ।।

[हृदये गायत्र्याख्यं ब्रह्म उपासनम्]

**यद्वै तद् ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः । यो वै स बहिर्धा पुरुषादाकाशः ।। ७ ।।**

**अयं वाव स योऽयमन्तः पुरुष आकाशः । यो वै सोऽन्तः पुरुष आकाशः ।। ८ ।।**

**अयं वाव स योऽयमन्तर्हृदय आकाशः । यो हे वै सोऽन्तर्हृदय आकाशः । तदेतत् पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते, य एवं वेद ।। ९ ।।**

।। इति द्वादशः खण्डः ।।

**प्र.** - अथ चतुर्थपादत्वेन उक्तस्य उपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदयाकाशस्य बाह्याकाशाभेदेन महत्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं

सामानाधिकरण्येनाह - **यद्वै तत् ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः यो वै स बहिर्धा पुरुषादाकाशः** - स्वकार्यव्याप्तत्वामूर्तत्वाचलत्वादिभिः ब्रह्मतुल्यो बाह्याकाशो यो वर्तते इत्यर्थः ।। ७ ।।

**अयं वाव स योऽयमन्तः पुरुष आकाश इति** । तादृशबाह्याकाशाभिन्नः पुरुषशब्दिते शरीरे अन्तः वर्तमानः आकाशः इत्यर्थः । बाह्यान्तराकाशयोः भेदसत्त्वेऽपि धर्म्यैक्याभिप्रायेण अभेदनिर्देशः **। यो वै सोऽन्तः पुरुष आकाश** इति । एवं ब्रह्म तुल्यबाह्याकाशाभिन्नः शरीरान्तराकाशो यः इत्यर्थः ।। ८ ।।

**अयं वाव स योऽयमन्तर्हृदय आकाशः** । तादृशशरीरान्तःस्थाकाशाभिन्नः हृदयावच्छिन्नाकाशः इत्यर्थः । पूर्ववत् धर्म्यैक्यात् इति भावः । एवं ब्रह्मतुल्यबाह्याकाशा - भिन्नपुरुषान्तर्गताकाशाभेदं हृदयाकाशस्य उक्त्वा एतादृशमहिमशाली हृदयाकाशः इति स्तौति। **यो वै सोऽन्तर्हृदय आकाशः** । अन्तर्हृदये वर्तमानः यः आकाशः **अयं सः** - तादृशमहिमशालीत्यर्थः । अनया च हृदयाकाशस्तुत्या चतुर्थपादत्वेन उक्तं हृदयं स्तुतं भवति । एवं चतुष्पादषड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतया उपासनं मोक्षफलं विदधाति । **तदेतत्पूर्णमप्रवर्ति । पूर्णत्वं** - अपरिच्छिन्नत्वं **अप्रवर्तित्वं** - अचलत्वं, स्थिरत्वम् । **पूर्णामप्रवर्तिनीं श्रियं लभते, य एवं वेद** । अनन्तस्थिरा श्रीः मुक्तैश्वर्यमेव । तदुपासीनः मुक्तिं भजते इत्यर्थः ।।

**आ.भा.** - अत्र भगवतः चतुर्थपादतया उक्तं यत् हृदयं तस्य स्तुत्यर्थं हृदयाकाशस्य भूताकाशभेदेन महत्वातिशयं दर्शयितुं, भूताकाशस्य नित्यत्वव्यापकत्वाभ्यां परमात्मसादृश्यं सामानाधिकरण्येन दर्शयितुमाह - **यद्वै तद् ब्रह्म** इत्यादि । **यद्वै तद् ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः** । पुरुषाद् बहिः बाह्ये विद्यमानः आकाशः भूताकाशः। **यो वै बहिर्धा पुरुषादाकाश स** एवायम् आकाशो **यः** खलु । **यः** पुरुषाभ्यन्तरे विद्यमानः । अयमर्थः स्वकार्यव्याप्तत्वामूर्तत्वाचलत्वादिधर्मैः ब्रह्मतुल्यो बाह्याकाशः तदभिन्नः पुरुषपदप्रतिपाद्यशरीरमध्ये वर्तमानः आकाशः । यद्यपि बाह्याभ्यन्तराकाशयोः भेदः तथापि धर्मिणः ऐक्याभिप्रायम् आदाय भेदव्यवहारः । एवं ब्रह्मसदृशबाह्याकाशाभिन्नः शरीरान्तराकाशो यः तदभिन्नः हृदयाकाशः। अर्थात् बाह्याकाशो ब्रह्मतुल्यः । बाह्याकाशाभिन्नश्च हृदयाकाशः इति तस्य ब्रह्मतुल्यत्वात् यथा गायत्र्याख्यं ब्रह्म महामहिमशालि तथा हृदयाकाशोऽपि महामहिमशाली इति । यथोक्तक्रमेण चतुष्पादयुतस्य षड्विधस्य

ब्रह्मणः प्रपञ्चमध्यान्तर्गतत्वात् परिच्छिन्नत्वं च स्यात् । इमां शङ्कां व्यावर्तयितुं पूर्णत्वाचलत्वगुणकतया परमात्मोपासनं मोक्षफलम् उपासकाय दास्यति इति दर्शयितुमाह **तदेतत्** इत्यादि - **तदेतत्** - गायत्र्याख्यं ब्रह्म **पूर्णं** - सर्वगतम् अपरिच्छिन्नम् इत्यर्थः, न तु हृदयमात्रपरिच्छिन्नम् । **अप्रवर्ति** - अचलम् । न कुतश्चित् क्वचित् प्रवर्तितुं शीलमस्य । तादृशम् - उच्छेदरहितम् इति यावत् । यथा अन्यानि भूतानि परिच्छिन्नानि, नाशवन्ति च न तथा हृदयाकाशः परिच्छिन्नो विनाशी वा इति । एतादृशब्रह्मोपासकस्य मोक्षफलं भवति इति तदेव दर्शयति - **पूर्णाम्** इत्यादि । **यः** - उपासकः **एवं** यथोक्तं ब्रह्म **वेद** - विजानाति तदुपासनं करोति सः तदुपासनाबलात् **पूर्णाम्** अनन्ताम् **अप्रवर्तिनीं** - निश्चलाम् अतिशयेन स्थिरां **श्रियं** - लक्ष्मीम् ऐश्वर्यलक्षणां **लभते** - प्राप्नोति । तदुपासको मुक्तिम् आसादयति । यादृशगुणविशिष्टस्य ब्रह्मणः उपासनं करोति तादृगेव फलम् आप्नोति उपासकः ।।

**सु.** - यत् **ब्रह्म** - गायत्रीशब्दलक्षितम् उपास्यम् उक्तम्, हृदयाकाशे तद्ध्येयम् इति वक्तुं क्रमेण हृदयाकाशम् अवतारयति इत्येके । अथ चतुर्थपादत्वेन उक्तस्य उपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदयाकाशस्य बाह्यकाशाभेदेन महत्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येन आह इत्यपरे[1] ।

**वयं तु ब्रूमः** - यानि इमानि भूतानि पशुपक्ष्यादीनि भोक्तृभावम् आपन्नानि जीवजातानि तानि पृथिवीशरीरहृदयैः एव उपकरणैः जीवन्ति,। तत्र उत्तरोत्तरम् अन्तरङ्गम् उपकरणम् ; तथा विशेषश्च पूर्वस्य । एवमेव बाह्याकाशं यदिदं पृथिव्याम्, यच्च शारीरम् आन्तरम्, यच्च ततोऽपि आन्तरं हार्दम् । अयं हि भूतग्रामो जाग्रद्दशायां बाह्याकाशे चैतन्यरश्मिभिः प्रसृत्य भुङ्क्ते शब्दादीन् विषयान् । स्वप्नदशायाम् असत्यपि तद्योगे, शारीरे एव आकाशे प्रसृत्य भुङ्क्ते स्वाप्नान् अर्थान् । असति तु तद्योगे हार्दाकाशमात्रे प्रसृत्य कमपि आनन्दं भुङ्क्ते । तदुत्तरोत्तरम् अन्तरङ्गता । अदुष्टेनैव बाह्याकाशेन जीवति नाम अयम्, अदुष्टेऽपि तस्मिन् । शारीरे तु दुष्टे न जीवेत् । अदुष्टेऽपि तस्मिन् हार्दे च दुष्टे क्षणमपि न जीवेत् । अतश्च अस्य भूतवर्गं प्रति उत्तरोत्तरम् अन्तरङ्गोपकरणता । तच्च पूर्वत्रिकस्य उपकरणता सर्वतः प्रसिद्धा । अपरस्य तु त्रिकस्य तथात्वं तु न तथा । अतः प्रथमं प्रसिद्धेन उपकरणत्रयेण सह उपकारिणं भूतवर्गं गायत्रीशब्दलक्षितस्य ब्रह्मणः पादतया उपदिश्यते तथा तस्य निध्यानाय । तच्छेषतया ऋगपि श्राविता । अथ द्वितीयम् उपकरणत्रिकं तस्य पादत्वेन इदानीम् उपदिशति -

---

1. अपरे - रङ्गरामानुजीयाः ।

**यद्वै तत्** इत्यादिना । ऋचो मध्यमणिन्यायेन वृत्तवर्तिष्यमाणोपदेशद्वयपरताऽपि घटते । उपकरणिनो भूतवर्गस्य उभयत्र साधारण्यात् षाड्विध्यं च, तैरेव रूपैः इहापि उपपद्यते । पूर्वम् उपकरणत्रयं पार्थिवमपरं तु आकाशरूपमिति वैजात्ययोगात्; विभज्यैव चतुष्पदत्वेनैव प्रकृतस्य ब्रह्मणा उपासनं विवक्षितम् इति ।

**यद्वै तद् ब्रह्मेति** - ब्रह्मेति यदिदम् अभ्यधायि गायत्रीशब्दलक्षितम् अभ्यनूक्तम् ऋचा च इदमेव तत्, योऽयं पुरुषात् शिरःपाण्यादिलक्षणात् **बहिर्धा** - बहिर्वर्तमानः आकाशः । पूर्ववत् अंशांशिभावनिबन्धनम् इदं सामानाधिकरण्यम् । **यो वै बहिर्धा पुरुषादाकाशः** - स ब्रह्मणः पादतया ब्रह्मैव निर्दिष्टः योऽयं बाह्याकाशः। स इति तच्छब्देन ब्रह्मणः पादत्वम् अनूद्य अयमेव स इति निर्देशात् अस्य शरीराकाशस्यापि ब्रह्मांशत्वसिद्धिः । एवमुत्तरत्रापि । **यो वै सोऽन्तःपुरुष आकाशः** । अयमेव सः, योऽन्तर्हृदय आकाशः । यद्यपि न स्वरूपभेदः, अथापि उपाधिभेदम् अवलम्ब्य त्रेधा उपपादनम् । **तदेतत् पूर्णमप्रवर्ति** - यदेतत् निर्दिष्टक्रमेण चतुष्पात् षड्विधं गायत्रीलक्षितं ब्रह्म **तदेतत् पूर्णम्** - अपरिच्छिन्नम् । यच्चतुष्पात्त्वषाड्विध्ये निर्दर्शिते तन्निध्यानाय नहि तावन्मात्रप्रकारः सः । **अप्रवर्ति च** - अचलं च, स्थिरमिति यावत् । **य एवं वेद** - चतुष्पदत्वेन षड्विधत्वेन गायत्रीशब्दलक्षितं ब्रह्म पूर्णम् अप्रवर्ति च **वेद** - उपास्ते, सः **पूर्णामप्रवर्तिनीं** श्रियं लभते । तथाविधा च श्रीः मुक्तिसम्पदेव ।।

**।। इति द्वादशखण्डभाष्यम् ।।**

## त्रयोदशः खण्डः

### [द्वारपुरुषोपासनम्]

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः । स योऽस्य प्राङ्सुषिः, स प्राणः, तच्चक्षुः, स आदित्यः। तदेतत् तेजोऽन्नाद्यमित्युपासीत । तेजस्व्यन्नादो भवति, य एवं वेद ।। १ ।।**

**प्र.** - अथ उक्तब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते - **तस्य हवा एतस्य हृदयस्य पञ्च देवसुषयः । तस्यैतस्य** - चतुर्थपादत्वेन निर्दिष्टस्य प्रकृतस्य हृदयस्य देवताधिष्ठानभूतानि पञ्च द्वारच्छिद्राणि इत्यर्थः । **स योऽस्य प्राङ्सुषिः, स प्राणस्तच्चक्षुः, स आदित्य** इत्यादि । प्राणवृत्तिविशेषाप्यायितचक्षुरनुग्राहकादित्यस्य हृदयप्राक्सुषिरद्वारपालस्य

तेजोऽन्नाद्यतया उपासने उपासकः स्वयमपि तेजस्वी अन्नादो भवति इत्यर्थः । **तदेतत्** इति आदित्यस्य तेजोऽन्नाद्यपेक्षया नपुंसकलिङ्गनिर्देशः । तेजस्वित्वं - लावण्यम् । एवमुत्तरत्रापि ।।

**आ.भा.** - अनन्तरं पूर्वोक्तब्रह्मोपासनाङ्गतया द्वारपालानाम् उपासनं विधातुम् आह - **तस्य ह वा एतस्य** इत्यादि । यथा इह लोके कश्चित् राज्ञः द्वारपालान् धनादिभिः वशीकृत्य अनायासेन राज्ञः सकाशात् द्वारपालानुग्रहेण दुरूहमपि कार्यं साधयति, तद्वत् प्रकृते द्वारपालस्य उपासनं विधाय तदनुगृहीतो विलक्षणं प्राप्स्यति इति द्वारपालोपासनं प्रस्तौति । **तस्य** ब्रह्मणः चतुर्थपादत्वेन विनिर्दिष्टस्य हृदयस्य एतस्य, **पञ्च** - पञ्चसंख्यकाः **देवसुषयः** - देवानां सुषयः देवसुषयः, स्वर्गलोकप्राप्तौ साधनलक्षणानि द्वारच्छिद्राणि देवैः प्राणाऽऽदित्यादिभिः रक्ष्यमाणत्वात् देवसुषय इति कथ्यन्ते । देवतायाः प्राणादित्यादिप्रभृतिकायाः अधिष्ठानभूतानि पञ्चसंख्याकानि द्वारच्छिद्राणि इत्यर्थः । स यः अस्य प्राङ्सुषिः स प्राणः, तदेव चक्षुः, स एवादित्यः, सूर्यः । तत्र द्वारपालस्य तेजोऽन्नाद्यतया उपासकस्य किं फलं भवतीति दर्शयितुमाह - **तदेतत्** इत्यादि । **तदेतत्** - प्राणाख्यं तेजोऽन्नाद्यम् इत्येवं रूपेण उपासीत । स्वर्गप्राप्तिफलाय तादृशद्वारपालम् उपासीत । **यः** खलु उपासकः तेजोऽन्नादिरूपेण द्वारपालं **वेद** - उपासीत **स तेजस्वी भवति** - लावण्यवान् भवति, तथा अन्नादो भवति इति ।।

**सु.** - अथ उपक्रान्तोपासनविशेषशेषभूतम् इदम् अपरं गुणविधानं **तस्य ह** इत्यादिना आरभ्यते । **यत्** - गायत्र्याख्यस्य ब्रह्मणः सर्वभूतपादस्य विशिष्टः पादः यदाकाशश्च तथा, **तस्य हृदयस्य पञ्च देवसुषयः** - देवैः अधिष्ठिताः सुषयः छिद्राणि सन्ति । **योऽस्य प्राङ्सुषिः** - पूर्वदिगवच्छिन्नं छिद्रं **स प्राणः** । तेन हि प्राणः सञ्चरति । तत् तस्येदमिति स इति निर्दिश्यते। **तच्चक्षुः** - तेन छिद्रेण निःसृतः प्राणः चक्षुरधिष्ठाय रूपप्रकाशनाय भवति इति तच्चक्षुः इति व्यपदिश्यते । **स आदित्यः** - प्रतिष्ठितो हि आदित्यः चक्षुषि अधिष्ठानात्। अतो व्यपदिश्यते **स आदित्यः** इति । तदेवम् आदित्यस्य पूर्वसुषिसम्बन्धेन पूर्वद्वारपालता तस्मिन् विभाव्या इति भावः । स चायम् आभ्यां गुणाभ्याम् उपास्यः इत्याह - **तदेतत् तेजोऽन्नाद्यमित्युपासीत** । **तदेतत्** - लिङ्गव्यत्ययश्छान्दसः । अन्नाद्यमिति विधेयप्राधान्यात् वा । पूर्वद्वारपालभूतम् आदित्यं तेजस्वी, **अन्नाद्यम्** - अन्नप्रभृति इति च उपासीत । आदित्यादेव वृष्टिः ततोऽन्नम् इति अन्नाद्यत्वम् एतस्मिन् । अथ फलम् आनुषङ्गिकमाह - **तेजस्व्यन्नादो**

**भवति य एवं वेद** इति । कथम् अवगम्यते फलम् आनुषङ्गिकम् इति? यदनुपदं श्रावयिष्यति मुख्यं फलं 'प्रतिपद्यते स्वर्गं लोकं य ऐतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्वेद' इति ।।

[दक्षिणद्वारपालोपासनम् तस्य फलञ्च]

**अथ योऽस्य दक्षिणः सुषिः, स व्यानः, तच्छ्रोत्रँ, सः चन्द्रमाः । तदेतच्छ्रीश्च यशश्चेत्युपासीत । श्रीमान् यशस्वी भवति, य एवं वेद ।। २ ।।**

**प्र. - अथ योऽस्य दक्षिणः सुषिः सः व्यानः तच्छ्रोत्रं सः चन्द्रमाः** इत्यादि । **श्रीमान् -** सम्पत्तिमान् ।।

**आ.भा. - अथ योऽस्य -** हृदयस्य **दक्षिणः सुषिः -** द्वारच्छिद्रं **सः व्यानः** तदाख्यो वायुः । तदेव तत्सम्बद्धमेव **श्रोत्रम्**[१] । तथा **स** एव **चन्द्रमाः । तदेतत्** व्यानाख्यं वायुविशेषः **श्रीश्च -** विभूतिः, **यशः -** ख्यातिः इति कृत्वा **तत् उपासीत,** उपासनम् ताभ्यां श्रीयशोभ्यां गुणाभ्यां कुर्यात् । यश्च उपासकः श्रीयशोभ्यां तदुपासनं करोति सः **श्रीमान् -** सम्पत्तिमान् तथा **यशस्वी -** ख्यातिमान् भवति इति ।।

**सु. - सः व्यानः -** व्यानस्यार्थे इति सः व्यानः इति उपचर्यते । तेन व्यानेन आप्यायितस्य एव श्रोत्रस्य शब्दग्राहकतया **तच्छ्रोत्रम्** इति । चन्द्रमसाऽधिष्ठितं श्रोत्रम् इति च **सः चन्द्रमाः इति।** तदेवं चन्द्रमसः दक्षिणसुषिसम्बन्धेन दक्षिणद्वारपालता विभाव्या इति भावः । श्रीश्च यशश्च इति उपासीत । श्रीयते हि सर्वैः सुधाकरः चन्द्रमाः ततः श्रीः एवः अयम् । यश इव शीतलोऽयम् आनन्दयति सर्वान् इति यशश्च, तत् श्रीत्वेन यशस्त्वेन च दक्षिणद्वारपालम् उपासीत इति भावः ।।

[पश्चिमद्वारपालोपासनम्, तत्फलञ्च]

**अथ योऽस्य प्रत्यङ्सुषिः, सोऽपानः, सा वाक्, सोऽग्निः । तदेतत् ब्रह्मवर्चसमन्नाद्यमित्युपासीत । ब्रह्मवर्चस्व्यन्नादो भवति, य एवं वेद ।। ३ ।।**

---

१. तथा च श्रुत्यन्तरम् - 'श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च' (ऐतरेयारण्यकं - १-७) इति ।

**प्र. - अथ योऽस्य प्रत्यङ्सुषिः, सोऽपानः, सा वाक्, सोऽग्निः** इत्यादि । **ब्रह्मवर्चसं** - वृत्ताध्ययनजं तेजः ।।

**आ.भा. - अथ योऽस्य प्रत्यङ्सुषिः** इत्यादि । तत्र **ब्रह्मवर्चसं** - शास्त्राध्ययनजन्यं तेजः। तद्वान् भवति उपासकोऽपि । अन्यत् सर्वं पूर्ववदेव अवधेयम् ।।

**सु. - योऽस्य प्रत्यङ्सुषिः** इत्यादि व्याख्यातप्रायम् । **सोऽग्निः** - अग्निना हि अधिष्ठिता वाक् । पश्चिमसुषिसम्बन्धात् अग्नेः तस्मिन् पश्चिमद्वारपालता विभाव्या इति यावत् । तदेतत् ब्रह्मवर्चसम् अन्नाद्यम् इति उपासीत । अग्निना अन्वहं यथाविधि परिचर्यमाणेन भवति ब्रह्मवर्चसम्। ब्रह्मणा वेदेन यद्वर्चः तेजः, तत् **ब्रह्मवर्चसम्** । अद्यते यत्किञ्चत् अग्निनैव बलेन। न हि मन्दाग्निः अत्तुं प्रभवति तदन्नाद्यता चाग्नेः ।।

**[उत्तरद्वारपालस्य उपासनम् तत्फलञ्च]**

**अथ योऽस्योदङ् सुषिः, स समानः, तन्मनः, स पर्जन्यः । तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत। कीर्तिमान् व्युष्टिमान् भवति । य एवं वेद ।। ४ ।।**

**प्र. - अथ योऽस्योदङ्सुषिः, स समानः तन्मनः स पर्जन्यः** इत्यादि । **पर्जन्यः** - देवताविशेषः, **व्युष्टिः** - देहकान्तिः ।।

**आ.भा. - अथ योऽस्योदङ्सुषिः** इत्यादि । **यः** खलु कीर्तिव्युष्टिगुणाभ्याम् उपासते सः **कीर्तिमान्** ख्यातिमान् भवति । **व्युष्टिमान् भवति** । तत्र व्युष्टिर्नाम देहसंबद्धकान्तिः तद्वान् भवति इति ।।

**सु. - तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत** - यस्य हि व्युष्टिः परेभ्य एव सः **कीर्तिमान्** भवति । पर्जन्यस्तु तथा, तदयं कीर्तिरेव इति निर्दिश्यते । पर्जन्यः एव वृष्ट्या अन्नं प्रभूतम् उत्पादयन् अनामयेन प्राणिनः रक्षतीति अस्यैव अवलम्बेन **प्राणिनां व्युष्टिः** - देहकान्तिः अतिशयिता भवतीति अयमेव व्युष्टिरिति निर्दिश्यते । कीर्तित्वेन व्युष्टित्वेन च अयं पर्जन्यः विभावनीयः इति भावः ।।

[ऊर्ध्वद्वारपालस्योपासनं, तत्फलञ्च]

**अथ योऽस्योर्ध्वः सुषिः, स उदानः, स वायुः, स आकाशः । तदेतदोजश्च महश्चेत्युपासीत । ओजस्वी महस्वान् भवति, य एवं वेद ।। ५ ।।**

**प्र. - अथ योऽस्योर्ध्वस्सुषिः स उदानः, स वायुः, स आकाशः** इत्यादि । **ओजः** - बलम्, महत्त्वं **महः आकाशश्च** । देवताविशेषः ।।

**आ.भा. - ओजस्वी महस्वान्** भवति । तत्र **ओजः** बलं महत्वं महः तद्वान् भवति ।।

**सु. - ओजो** - बलं **महः** - तेजः। वायोः ओजस्तु सर्वतः समधिकम् । तेजश्च निखिलं वायुना एव आधीयते । तत् ओजश्च महश्च इत्युपासीत । ननु स्यात् तथा दृष्टिः वायौ, आकाशे कथम् ? आकाशः तस्यापि आश्रयो मूलम् इति तदभेदाध्यवसायगोचरीकृते तस्मिन् तत्सम्भवात् ।।

**ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः । स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ; अस्य कुले वीरो जायते । प्रतिपद्यते स्वर्गं लोकम्, य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ।। ६ ।।**

**प्र. - ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः । ते एते** - उक्तगुणविशिष्टाः आदित्यचन्द्रमाऽग्निपर्जन्याकाशाख्याः **ब्रह्मपुरुषाः** - ब्रह्मसम्बन्धिनः पुरुषाः **स्वर्गस्य लोकस्य** - भगवल्लोकस्य हृदयाकाशाख्यस्य द्वारपालकाः । यद्वा भगवल्लोकस्य **द्वारपाः** - आतिवाहिकाः । **स य एतानेवं पञ्च ब्रह्मपुरुषान्** इत्यादि । **अस्य कुले वीरो जायते** । वीरः पुत्रो जायते । विद्यावीर्यसम्पन्नो जायते इत्यर्थः । आनुषङ्गिकं फलम् उक्त्वा प्रधानफलमाह - **प्रतिपद्यते स्वर्गं लोकं य एतानेवम्** इत्यादि । भगवल्लोकद्वारपालकोपासनया अनिवारितस्सन् भगवल्लोकं प्रतिपद्यते इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - ते वा एते** यथोक्तगुणविशिष्टाः आदित्य-चन्द्रमा-वह्नि-पर्जन्याकाशलक्षणदेवाः **ब्रह्मपुरुषाः** - ब्रह्मसम्बन्धिनः पुरुषाः **स्वर्गस्य लोकस्य** - भगवल्लोकस्य हृदयाकाशलक्षणस्य

**द्वारपाः** - द्वारपालकाः। यद्वा भगवल्लोकस्य आतिवाहिकाः । **सः यः** खलु उपासकः एतान् पञ्च **ब्रह्मपुरुषान् स्वर्गस्य लोकस्य** - भगवल्लोकस्य **द्वारपान्** - द्वारपालान् **वेद** - तदुपासनं करोति। **अस्य** - उपासकस्य **कुले** - वंशपरम्परायाम् **वीरो जायते** - विद्यावीर्यादिना सम्पन्नः पुत्रः प्रादुर्भूतो भवति इत्यर्थः । **प्रतिपद्यते** - प्राप्नोति **स्वर्गं लोकं** - भगवल्लोकं द्वारपालस्य उपासनया तुष्टः द्वारपालः भगवल्लोकप्राप्तौ अप्रतिबन्धकः भवति इति । प्रतिबन्धकरहितो भगवल्लोकम् आसादयति इति ॥

**सु.** - एवमेषाम् उपासनस्य प्रत्येकम् आनुषङ्गिकफलविशेषयुक्तस्य समुदायतः फलविशेषम् अपरम् आनुषङ्गिकं ज्ञापयन् परमफलमाह - **अथ** इत्यादिना । **ते वा** - आदित्यादयः एते **पञ्च ब्रह्मपुरुषाः** - उपास्यमानाः हार्दं ब्रह्म गमयन्ति इति ब्रह्मपुरुषाः उच्यन्ते । गमयितृता च यद्यपि न साक्षादेषाम्, अथापि विरोधिनिबर्हणेन ब्रह्मविद्यानिष्पादनद्वारा तदुपपत्तिः । **स्वर्गस्य लोकस्य द्वारपाः** - येदेते प्रागादिहृदयद्वारपाः, निर्दशितात् सम्बन्धात्, अत एव स्वर्गस्य लोकस्य द्वारपाः। हार्दाकाशो हि स्वर्गलोकः । स हि दुःखासम्भिन्नसुखस्य आश्रयः ब्रह्मैव तु तथाविधसुखस्वरूपम् । योऽयम् अप्राकृतः स्थानविशेषः, स एव इह स्वर्गलोकः, तस्य इमे द्वारपाः । यद्यपि न तद्वारमधिष्ठाय रक्षन्ति एते । अथापि इतो मुच्यमानान् भगवल्लोकम् अतिवहन्ति एते इति आतिवाहिकतया द्वारपाः इत्युक्तिः इत्यपि व्याचक्षते एके । प्रस्तुतात् अप्रस्तुतस्य अवलम्बनं ह्यनुचितम् । प्रस्तुतश्च हृदयद्वारसम्बन्धः पञ्च देवसुषयः इति । उपपादितश्च प्रत्येकम् । अव्यवहितमेव अनूद्यते च 'ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः' इति । यः एतान् पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् **एवं** - उक्तेन प्रकारेण **वेद** - उपास्ते, **अस्य कुले वीरः** पुत्रः **जायते** । इदमानुषङ्गिकं फलम् । मुख्यं तु यस्य इमे द्वारपालाः तस्य लाभः, तदेव श्रावयति - **प्रतिपद्यते स्वर्गं लोकम्** इति । यद्यपि प्रत्येकं पलम् उपन्यस्तं प्राक्, तावता यथाकामम् एषाम् अन्यतमोपासनम् अभ्यनुज्ञातमिति नोत्प्रेक्ष्यम् । आनुषङ्गिकफलवैविध्यमात्रे तात्पर्यात् । य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद प्रतिपद्यते स्वर्गं लोकम् - यस्य इमे द्वारपाः तं हार्दाकाशम्, हार्दाकाशोपलक्षितं परं ब्रह्म प्राप्नोतीति भावः । पूर्णाम् अप्रवर्तिनीं श्रियं लभते । य एवं वेदेति यत्फलम् अश्रूयत प्राग्गायत्रब्रह्मोपासनस्य ततः अनतिरिक्तम् एतदित्यङ्गाङ्गिभावः गायत्रद्वारपालोपासनया अवगम्यते ॥

[ज्योतिर्ब्रह्मोपासनम्]

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तद् यदिदमस्मिन् अन्तःपुरुषे ज्योतिः । तस्यैषा दृष्टिः ।। ७ ।।**

**प्र.** - एवं गायत्रीविद्याप्रकृतस्य द्युसम्बन्धिनः सकलफलप्रदस्य परस्य ब्रह्मणः आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेन उपासनाविधानाय आह - **अथ यदतः......लोकेषु ।** 'तथाक्षरात् सम्भवतीह विश्वम्' (मुं.उ.१-१-७) इत्यत्र जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः । सर्वशब्दः परिशेषात् समष्टितत्त्वपरः । ततश्च **अतः परो दिवः** - अप्राकृतस्थानविशेषस्य उपरिष्टात् समष्टिव्यष्टिबहिर्भूतेषु **अनुत्तमेषु** स्वावधिकोत्तमरहितेषु, उत्तमस्थानविशेषेषु 'तस्य भासा सर्वमिदं विभाति' (मुं.उ.२-२-१०) इत्यवभासकतया ज्योतिश्शब्दितः परमात्मा यो दीप्यते इत्यर्थः । अत्र यच्छब्दस्य सर्वनामत्वेन प्रकृतपरामर्शितया प्रकृतं त्रिपाद् ब्रह्म परामृश्यते । **इदं वाव तद् यदिदमस्मिन् अन्तःपुरुषे ज्योतिः, तत्** दिवः परस्तात् दीप्यमानं त्रिपाद्ब्रह्म, **यदिदमस्मिन्नन्तःपुरुषे** - शरीरस्यान्तः ज्योतिः । **इदं वाव** कौक्षेयज्योतिरेव कौक्षेयज्योतिःशरीरकमेव इत्यर्थः ।।

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" ।। (भ.गी.१५-२४)

इति स्मरणात् । ततश्च तदात्मकत्वानुसन्धानं कर्तव्यम् इत्यर्थः । **तस्यैषा दृष्टिः । तस्य** - परमात्मशरीरभूतस्य जाठराग्नेः **एषा दृष्टिः** - इदं दर्शनम् इत्यर्थः ।।

**आ.भा.** - गायत्रीविद्यायाम् आगतस्य द्युसम्बन्धवतो निखिलफलदायकस्य परस्य ब्रह्मणो रामाख्याभिमुख्यरूप्यकीर्तिमत्वादिलक्षणफलविशेषप्रयोजनाय कौक्षेयज्योतिः स्वरूपत्वेन उपासनां विधातुमाह - **अथ यदतः** इत्यादि । **अथ यदतः** अमुष्मात् **दिवः** - द्युलोकात् **परः** - परज्योतिः सर्वदैव प्रकाशशीलं **दीप्यते** - प्रकाशान्तरसम्बन्धं विनैव प्रकाशते । 'तस्य भासा सर्वमिदं विभाति' (मुं.उ.२-२-१०) इति श्रुतेः । **विश्वतः पृष्ठेषु** अत्र विश्वपदं व्यष्टिपरकम् । 'तथाक्षरात् सम्भवतीह विश्वम्' (मुं.उ.१-१-७) इत्यत्र चराचरात्मकजगदन्तर्गतव्यष्टिजाते एव विश्वशब्दस्य प्रयोगदर्शनात् । **सर्वतः पृष्ठेषु ।** अत्र सर्वशब्दः समष्टिपरकः । तथा च **अतः परो दिवः** अप्राकृतस्थानविशेषस्य उपरिष्टात् । समष्टिव्यष्टिबहिर्भूतेषु **अनुत्तमेषु** - अतिशयेन उत्तमेषु स्वापेक्षया उत्तमरहितेषु **उत्तमेषु लोकेषु** अतिशयेन उत्तमस्थानविशेषेषु **तज्ज्योतिः** - ज्योतिः शब्दशब्दितपरमात्मा दीप्यते

इत्यर्थः । अस्य कुक्षिस्थितज्योतिषि सम्पत्तिमाह - **इदं वाव** इत्यादि । **इदं** - कुक्षिस्थितं ज्योतिः **वाव तत्** दिवः परस्तात् देदीप्यमानं त्रिपाद्ब्रह्म । यदिदम् **अस्मिन् अन्तः पुरुषे** - शरीरमध्ये ज्योतिः। कौक्षेयज्योतिरेव - कौक्षेयज्योतिःशरीरकमेव -

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" ।। (भ.गी.१५-२४)

इति भगवदुक्तेः । ततश्च त्रिपाद्ब्रह्मरूपतया कौक्षेयज्योतिषोऽनुसन्धानं कर्तव्यम् इति भावः। अस्य परमात्मशरीरभूतस्य कौक्षेयज्योतिषः दृष्टत्वश्रुतत्वगुणाभ्याम् उपासनां विधातुं दृष्टश्रुतिलिङ्गावगम्यत्वं दर्शयति । **तस्यैषा दृष्टिः** इति । **तस्य** - परब्रह्मणः शरीररूपेण अवस्थितस्य कौक्षेयज्योतिषो जाठराग्नेः **एषा दृष्टिः** - इदं दर्शनम् ।।

**सु.** - यत् प्रस्तुतं प्राक् गायत्रं ब्रह्म द्युसम्बन्धि, तस्यास्य उपासनान्तरम् उपन्यस्यते - **अथ** इति । **अथ यदतः परो दिवो ज्योतिर्दीप्यते । अतो दिवः** - 'अमृतं दिवि' इति ऋचा या द्यौः अमृतस्य आश्रयतया श्रुता । **अतः** - द्युलोकात् परो **दीप्यते** - उपरिष्टात् दीप्यते यज्ज्योतिः, यद्यपि अमृतं ब्रह्म अमृतस्य आश्रये द्युलाके एव स्यात् न ततोऽन्यत्र उपरि, अथापि तस्यैव उपरितनो भागः आपेक्षिकावधिविभागम् अभिप्रेत्य ततः पर इति निर्देशम् अर्हति । यथा वृक्षाग्रात् परतः श्येनो, वृक्षाग्रे श्येनः इति, तच्च ज्योतिः परं ब्रह्म, इदमेव च मुख्यं ज्योतिः 'तस्य भासा सर्वमिदं विभाति' (मुं.उ.२-२-१०) 'तमेव भान्तमनुभाति सर्वम्' (मुं.उ.२-२-११) । तत्रापि **विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु लोकेषु दीप्यते** । नैको लोकोऽस्य अप्राकृते देशे, किन्तु बहवः स्वेच्छाविहरणस्य अस्य; सर्व एवैते विश्वतः - जगदण्डान्तर्वर्तिनो व्यष्टितत्त्वात् बहिर्भूताः । अत्र पृष्ठशब्दो बहिर्भूते वर्तते । तथा सर्वतः अण्डानन्तर्गतसमष्टितत्वादपि बहिर्भूताश्च । अत एव उत्तमाः । न च उत्तमाः इतोऽन्ये । एवंभूतेषु लोकेषु दीप्यते यत् **इदं वाव तत्**। किं तत् ? **यदिदमन्तः पुरुषे ज्योतिः । अन्तःपुरुषे** - शरीरस्यान्तः । ननु किं तदन्तःपुरुषे ज्योतिः ? यदुपलभ्यते दृष्टेन श्रुतेन च लिङ्गेन किं तथाविधं लिङ्गम् ? उच्यते - योऽयं ज्योतिर्विशेषो वैश्वानरसंज्ञः कौक्षेयः **तस्यैषा दृष्टिः** - तत्सम्बन्धिनी **दृष्टिः** - उपलम्भः, तज्ज्ञापकदृष्टिविशेषः इति यावत् ।।

**यत्रैतदस्मिन् शरीरे सँस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिः, यत्रैतत् कर्णावपिगृह्य, निनदमिव नदथुरिव, अग्नेरिव ज्वलत उपशृणोति । तदेतत् दृष्टश्च श्रुतश्चेत्युपासीत । चक्षुष्यः श्रुतो भवति । य एवं वेद य एवं वेद ।। ८ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**प्र. - यत्र** - यदा **अस्मिन् शरीरे** हस्तस्पर्शेन - **उष्णिमानं विजानाति इति यत् -** यदौष्ण्योपलम्भनम् इत्यर्थः । उपलभ्यमानस्य उष्णस्पर्शस्य जाठराग्निसम्बन्धित्वात् तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कार इत्यर्थः । **तस्यैषा......उपशृणोति । यत्र - यदा** पुरुषः स्वकर्णौ अङ्गुलीभ्याम् अपिधाय **निनदमिव** - रथघोषमिव, **नदथुरिव** - नदथुमिव ऋषभकूजितमिव । बहिर्ज्वलतः अग्नेः शब्दमिव च शृणोति । इति यत्, [1]तदेव[1] जाठराग्निश्रवणम् । आन्तरस्य शब्दस्य जाठराग्निसम्बन्धित्वात् तच्छब्दश्रवणमेव तच्छ्रवणमित्यर्थः ।

**तदेतद् दृष्टं च श्रुतं चेत्युपासीत । तदेतत्** - परमात्मशरीरभूतं कौक्षेयज्योतिः उक्तरीत्या दृष्टत्वश्रुतत्वाभ्यां गुणाभ्याम् उपासीत इत्यर्थः । तस्य फलमाह - **चक्षुष्यः श्रुतो भवति । य एवं वेद य एवं वेद ।** चक्षुष्यत्वम् आभिरूप्यम् । चक्षुषे हितम् इत्यर्थे 'शरीरावयवाच्च' (पा.सू.४-३-५५) इति यत् । **श्रुतत्वं** - कीर्तिमत्त्वम् । द्विरुक्तिर्विद्यासमाप्त्यर्था । उक्तः श्रुत्यर्थः सर्वोऽपि ज्योतिरधिकरणे श्रुतप्रकाशिकायां स्पष्टः ।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणम् उपन्यस्यते अथ 'यदतः परो दिवो ज्योति'रिति ज्योतिःशब्दितं प्रसिद्धम् अग्न्यादिज्योतिरेव कौक्षेयज्योतिषा ऐक्याध्यासस्य भौतिकज्योतिषि एव उपपत्तेः। दीप्तेः रूपवद्विषयत्वेन नीरूपे परमात्मनि दीप्तेरसम्भवात् । 'दिवः परः' इति द्युमर्यादत्वस्यापि निर्मर्यादे परमात्मनि असम्भावात् । लोकेषु इति आधारबहुत्वस्यापि निराधारेऽसम्भवात् । चक्षुष्यत्व - श्रुतत्वरूपाल्पफलश्रवणाच्च । रूपवद्विषयदीप्तिद्युमर्यादत्व-आधारबहुत्व कौक्षेयज्योतिरध्यास-चक्षुष्यत्व-श्रुतत्व-रूपाल्पफलोपासनोपास्यत्वरूपवाक्यशेष-श्रुतलिङ्गानु-गृहीतज्योतिश्श्रुत्या प्रसिद्धम् अग्न्यादिज्योतिरेव इह उपदिश्यते इति पूर्वपक्षे प्राप्ते उच्यते -

'ज्योतिश्चरणाभिधानात्' (ब्र.सू.१-१-२४) । द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुषः एव । 'पादोऽस्य सर्वाभूतानि' इति मन्त्रे द्युसम्बन्धिनः सर्वभूतचरणत्वाभिधानात् । [2]तस्यैव[2] द्युसम्बन्धिनः इहापि द्युसम्बन्धित्वेन प्रत्यभिज्ञानात्, यच्छब्दस्य सर्वनामत्वेन प्रकृतपरामर्शित्वस्य एव युक्ततया द्युसम्बन्धित्वेन प्रकृतत्रिपाद्ब्रह्मपरामर्शस्य एव युक्तत्वात् । फलार्थतया परमात्मनि एव कौक्षेयज्योतिश्शरीरकत्वानुसन्धानस्य उपपत्तेः, रूपवद्विषयदीप्तिद्यु - मर्यादत्वलोकाधारत्वादीनाम् अन्तरादित्यविद्यान्यायेन विग्रहविशिष्टस्य एवोपपत्तेः, भासकत्व - प्रवृत्तिनिमित्तकज्योतिश्शब्दस्यापि तत्र वृत्तिसम्भवात् ज्योतिश्शब्दितः परमपुरुष एव ।

'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथा हि दर्शनम्' (ब्र.सू.१-१-२५)। पूर्वत्र, 'गायत्री वा इदं सर्वम्' इति गायत्र्याख्यच्छन्दसः एव प्रकृतत्वात् तस्यैव, 'पादोऽस्य

---

1. तदेतत् - क । 2. तथैव - क ।

सर्वा भूतानि' इति सर्वभूतचरणत्वाभिधानात् परब्रह्मणः प्रकृतत्वं, येन यच्छब्दश्रुत्या तत्परामर्शः स्यादिति चेत् न । तत्र गायत्रीशब्देनं न छन्दः परामृश्यते । अपि तु ब्रह्मण एव गायत्रीचेतोऽर्पणम् इह निगम्यते । ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलाय उपदिश्यते इत्यर्थः । चतुष्पदश्च ब्रह्मणः चतुष्पदया गायत्र्या सादृश्यसम्भवात् । तथा अन्यत्रापि सादृश्यात् छन्दोभिधायी शब्दः अर्थान्तरे प्रयुज्यमानो दृश्यते - 'यथा संवर्गविद्यायाम् अग्निसूर्यजलचन्द्रवायु-वाक्चक्षुश्श्रोत्रमनःप्राणरूपेषु दशसु दशत्वसंख्यासाम्यात्, 'सैषा विराडन्नादि' इति छन्दोवाचिनो विराट्छब्दस्य प्रयोगो दृष्टः । 'भूतादिपादव्यपदेशोप - पत्तेश्चैवम्'(ब्र.सू.१-१-२७) । भूतपृथिवीशरीरहृदयलक्षणपाद[1]चतुष्टयस्य[1], 'सैषा चतुष्पदा इति प्रतिपादितस्य छन्दोरूपायां गायत्र्याम् असम्भवात् गायत्रीशब्देन ब्रह्मैव अभिधीयते । अतः गायत्री[2]शब्दित[2]त्रिपाद्ब्रह्मैव ज्योतिर्वाक्येऽपि यच्छब्दश्रुत्या पूर्वप्रत्यभिज्ञापकद्युसम्बन्धित्व - लिङ्गानुगृहीतया प्रतिपाद्यते । 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' । (ब्र.सू.१-१-२८) पूर्ववाक्ये त्रिपादस्यामृतं दिवि' इति दिवोऽधिकरणत्वेन निर्देशात्, ज्योतिर्वाक्ये, दिवः परः इति अवधित्वेन निर्देशात् न प्रत्यभिज्ञासम्भवः इति चेत् न - वृक्षाग्रे वर्तमाने श्येने, 'वृक्षाग्रात् श्येनः', 'वृक्षाग्रे श्येनः' इति पञ्चमीसप्तम्योः प्रयोगदर्शनवत् इहापि उपपत्तेः इति भावः इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा. - यत्र** - यस्मिन्काले अस्मिन् शरीरे हस्तसंस्पर्शेन **उष्णिमानं** - उष्णस्पर्शम् एतद्विज्ञातं यथा स्यात् तथा **विजानाति** - सम्यक् अवगच्छति । समुपलभ्यमानस्य औष्ण्यस्य साक्षात् कौक्षेयवह्निसम्बन्धित्वात् तादृशस्पर्शप्रत्यक्षे एव परमात्मशरीरभूतजाठराग्नि - प्रत्यक्षरूपः इति। **तस्यैषा श्रुतिः** इति । **तस्य** - परमात्मनः शरीरभूतस्य जाठराग्नेः **एषा श्रुतिः** - श्रवणोपायः। तत्र क उपायः तत्राह - **यत्रैतत्** इत्यादि । **यत्र** - यस्मिन् काले पुरुषः **कर्णावपिगृह्य** अङ्गुलिभ्यां पिधाय; आच्छादितमिव कृत्वा **निनदमिव** - रथशब्दादिवत् **नदथुरिव** - वृषभादिशब्दवदिव **अग्नेरिव** - वह्नेः **ज्वलतः**, शब्दवत् इव **उपशृणोति। उप** - समीपे स्वकीयान्तर्गतम् एव एतत् शब्दश्रवणं यथा भवेत् तथा **शृणोति** - शब्दसाक्षात्कारं करोति । एतादृशगुणविशिष्टस्य अग्नेः ध्यानं दर्शयति - **तदेतद्** इत्यादि । **तदेतत्** - परमात्मशरीरभूतं कौक्षेयज्योतिः **दृष्टं च श्रुतं चेत्युपासीत** - पुर्वोक्तक्रमेण दृष्टत्वश्रुतत्वगुणाभ्यां तदुपासनं कर्तव्यम् । तादृशोपासनस्य फलमाह - **चक्षुष्यः** इत्यादि ।

---

1. चतुष्टयवत्वस्य - क । 2. शब्दाभिहितं - अ,क ।

**य** - उपासकः **एवं** - यथोक्तगुणकं कौक्षेयज्योतिः **वेद** - विजानाति तदुपासनं करोति सः **चक्षुष्यः** - चक्षुषा दर्शनीयो भवति । **श्रुतः** - विख्यातश्च भवति । द्विरुक्तिस्तु विद्यायाम् आदरातिशयं दर्शयति इति ।।

**सु. -** यत्र अस्मिन् शरीरे संस्पर्शेन उष्णिमानं यदेतत् विजानाति योऽयम् उष्णस्पर्शः उपलभ्यते सः तस्मिन् दृष्टं लिङ्गम् इति भावः । **तस्यैषा श्रुतिः** - तत्सम्बन्धिनी इयं श्रुतिः - तज्ज्ञापकं श्रवणमिति यावत् । कर्णौ अङ्गुलिभ्याम् अपिधाय शृणोति कमपि शब्दं रथघोषम् इव ऋषभकूजितम् इव अग्नेर्ज्वलत इव ध्वनिम् इति यदेतत्, तस्य एषा श्रुतिः इति पूर्वेण सम्बन्धः । शब्दविशेषोऽयं श्रुतं लिङ्गम् इति भावः। यद्यपि इदं ज्योतिः न परं ज्योतिः, अथापि अभेदेन दृष्टिमात्रम् इह विवक्षितम् । फलविशेषार्थं चैतत् । अर्चेवास्य परस्य जयोतिषो वैश्वानरज्योतिरिदं विशेषतः आविर्भावस्थानम् इत्यनुगुणा इह अभेददृष्टिः । स्मर्यते च 'अहं वैश्वानरो भूत्वा' (भ.गी.१५-१४) इति ।

एवं भूतम् इदं परं ज्योतिः एवम् उपासीत । कथम् ? यतः इदं कौक्षेयं ज्योतिः उपलभ्यमानेन औष्ण्येन गृह्यते च श्रूयमाणेन शब्देन, तत एव आभ्यां दृष्टत्वश्रुतत्वगुणाभ्याम् उपासीत परं ज्योतिः यतः इदं वै तत् । यः एवं गुणयोगेन उपास्ते स **चक्षुष्यः** - रूपसम्पन्नो भवति, **श्रुतश्च** - प्रख्यातश्च भवति । इदमिह उन्नीयते - द्वादशः खण्डः ब्रह्मविद्याविशेषम् अवगमयन् प्रवृत्तः क्रमशः अवगमय्य सप्रकारं पूर्णया अप्रवर्तिन्या श्रिया मुक्तिलक्षणेन फलेन उपसमाहरन् अन्ते । त्रयोदशः अयं खण्डः तस्यैव अङ्गम् उपासनविशेषम् अवगमयन् प्रवृत्तः, अन्ते फल्गुफले उपासनविशेषे अवातरत् । किमिह श्रुतिः स्वातन्त्र्यम् अवलम्बते? उत सङ्गतिनियतिम्? स्वातन्त्र्यमिति तु न शोभते प्रतिवचनम् । तत्तु युज्येत खण्डविभागे वा सति । खण्डशेषेण तु कथमपि पूर्वसङ्गतार्थेन भाव्यम् । ननु अस्ति द्युसम्बन्धेन सङ्गतिः, यत् प्राक् ऋचा अभ्युक्तं 'अमृतं दिवि' इति प्रत्यभिज्ञायते च तदेव उपास्यमिह 'अथ यदतः परो दिवः' इति । सत्यम् । अथापि इदं सामान्यं सपदि विषमविन्यासे न पर्याप्तं निमित्तम् । अनल्पानन्तफलनिरूपणैकफले खण्डे तत्परे प्रचलति अन्ते अत्यल्पफलपरम् एकं वचनं यदि श्रूयेत सपदि विषमो हि विन्यासः । ननु अल्पं फलं 'तेजस्व्यन्नादो भवति' इत्यादि प्रागपि श्रूयते एव । सत्यम् । तदानुषङ्गिकं हि ।

अत्र ब्रूमः, - आनुषङ्गिकेण वा वर्त्मना खण्डोऽयं फल्गुफले प्रागेव अवतीर्णः इति तेन प्रसङ्गेन अन्ते तत्फलकोपासनोपन्यासः सपदि विषमविन्यासपदं नार्हति । अथवा

इहापि आनुषङ्गिकमेव इदं फलम् । ननु किं मुख्यं फलम्, येन इदम् आनुषङ्गिकं स्यात् । यदेव तेजस्व्यन्नादो भवति इत्यत्र । कथमेतत्? न हि अङ्गाङ्गिभावोऽत्र, येन तत्रेव अत्रापि उत्प्रेक्ष्येत तत् मुख्यमिति । न च कथञ्चित् प्रस्तुतगायत्र्युपासनशेषभूतम् एतत्, वैरूप्यात् । गायत्र्युपासनं हि भूतादिभिः चतुष्पदत्वादिगुणकम् अप्रतीकालम्बनम् । इदं तु कौक्षेयज्योतिः अवलम्बनं प्रतीकालम्बनम्, तदिदम् उपासनं गायत्र्युपासनात् अन्यदेव । तत्कथम् उत्प्रेक्ष्येत तत् मुख्यं फलम्?

ब्रूमः - नेह कौक्षेयज्योतिषि परस्य ज्योतिषः दृष्टिः विधीयते । किन्तु प्रत्यगात्मज्योतिषः परज्योतिरात्मकत्वेन चिन्तनं विधीयते । इदं च परब्रह्मात्मकप्रत्यगात्मानुसन्धानरूपं साक्षात् ब्रह्मविद्याविशेषः एव । यथाक्रतुन्यायेन प्रकृतिविविक्तब्रह्मात्मकस्वात्मप्राप्त्या मुक्तिरेव अस्य मुख्यं फलम् । अनुदाहृतमपि एतदर्थस्वाभाव्यात् स्फुटम् उत्प्रेक्षाम् अर्हति, दृष्टत्वश्रुतत्वाभ्यां गुणाभ्याम् उपासनादुदाहृतम् आनुषङ्गिकं फलम् । सत्येव शरीरे प्रत्यगात्मनि औष्ण्योपलम्भात् शब्दविशेषोपलम्भाच्च शब्दः स्पर्शश्च तस्मिन् लिङ्गमिति तस्य एषा दृष्टिः इत्यादि सङ्गच्छते । यद्यपि स्पर्शः शब्दश्च न तस्य धर्मः । तथापि तन्नियतधर्मतया भवति लिङ्गम् । 'इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्यातिः' इति सामानाधिकरण्यनिर्देशस्तु शरीरशरीरिभावनिबन्धनः । ज्योतिःशब्दः स्वयंप्रकाशत्वेन प्रवृत्तिनिमित्तेन प्रत्यगात्मनः प्रकृतेः व्यावृत्तिम् अवगमयति ।।

।। इति त्रयोदशखण्डभाष्यम् ।।

## चतुर्दशः खण्डः

### शाण्डिल्यविद्या

[मनोमयत्वादिगुणकब्रह्मोपासनम्]

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषः । यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत ।। १ ।।**

**प्र. -** शाण्डिल्यविद्या प्रस्तूयते - **सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।** जायते इति जम् । लीयते इति लम् । जलशब्दौ डप्रत्ययान्तौ । अनिति इति अन् । अनिति - जीवति इत्यर्थः । क्विबन्तो विजन्तो वाऽयं शब्दः । तस्य जलान् **तज्जलान् । इतिः** हेत्वर्थः । सर्वशब्दः सर्वशरीरकपरः । इदम् इत्येतत् ब्रह्मणः, सर्वस्य वा विशेषणम् । अतश्च तज्जत्वात् तल्लत्वात्, तदनत्वात् सर्वात्मकं ब्रह्म इति शान्तस्सन् उपासीत इत्यर्थः । अत्र तज्जत्वतल्लत्वे स्थूलचिदचिच्छरीरकब्रह्मगते[1] तदनुरूपे । तन्नियाम्यत्वं

1. उपादानोपादेयभावस्य अभिन्ननिष्ठत्वात् - इत्यधिकः पाठः - क ।

तु न ब्रह्मगतम् । ब्रह्मणः तदसम्भवात् । अपितु चिदचिन्मात्रगतम् इति द्रष्टव्यम् । भगवता भाष्यकृता, "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिस्थितिप्रलयकारणत्वेन सर्वस्य आत्मतया, अनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्म उपासीत इति उपासनं विधाय" इति भाषितम् । व्यासार्यैश्च, "ब्रह्मात्मकत्वं सर्वस्य शास्त्रात् अवगम्य,

"सर्वभूतात्मके तात! जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः" ।। (वि.पु.१-१९-३७)

इत्युक्तरीत्या रागद्वेषादिरहितः सन् वक्ष्यमाणगुणकं ब्रह्म उपासीत इत्यर्थः" इत्युक्तम् ।

'वक्ष्यमाणगुणकं ब्रह्म' इति वदतां व्यासार्याणाम् अयम् आशयः । सर्वं खलु इति वाक्योक्तं सार्वात्म्यं तु न उपास्यगुणः । उत्पत्तिशिष्टसार्वात्म्यगुणावरुद्धे मनोमयत्वादिवक्ष्यमाणगुणविधानानुपपत्तिप्रसङ्गात् । न च उपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्य अविवक्षा कथम् अभ्युपगन्तव्या इति वाच्यम् । 'सर्वं खल्विदं ब्रह्म तज्जलान्'[1] इत्यन्तस्य वाक्यस्य खलुशब्दकृतेन प्रसिद्धवन्निर्देशेन एकवाक्यत्वस्य निवारितत्वात् । न हि उपासीत खलु इति वचनव्यक्तिः घटते । अतः सार्वात्म्यस्य उपासनोत्पत्तिवाक्यश्रुतत्वाभावेन शान्तः उपासीत इति वाक्ये उपास्याकाङ्क्षायां पूर्ववाक्यप्रतिपन्नस्य ब्रह्मरूपधर्मिमात्रस्य एव उपास्यतया अन्वयः, न तु सार्वात्म्यविशिष्टस्य । ततश्च उत्पत्तिशिष्टसार्वात्म्यानवरोधात् न वक्ष्यमाणमनोमयत्वादिगुणानन्वयशङ्का । 'सर्वात्मकं ब्रह्म उपासीत' इति तदर्थनिर्देशकभाष्येऽपि सर्वात्मकत्वं न उपास्यगुणतया निर्दिष्टम् । अपितु उपास्यब्रह्मणः स्वरूपकथनमात्रपरम् इति । एतच्च सर्वमपि तैः कण्ठतः एव वर्णितं च ।

ननु 'ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितः सन् वक्ष्यमाणगुणकं ब्रह्म उपासीत इत्यर्थः' इति व्यासार्यैः' एव उक्तत्वात्, तदेकवाक्यत्वसम्भवे, 'तज्जलानिति' इत्यन्तस्य पृथग्वाक्यत्वकल्पनायोगात्, सार्वात्म्यस्य उत्पत्तिवाक्यविहितत्वेऽपि मनोमयत्वादीनाम् उत्पत्तिशिष्टगुणाविरोधिनाम् अन्वये दोषाभावाच्च वाक्यभेदकल्पनं वा, शाण्डिल्यविद्यायां सार्वात्म्यस्य अनुपास्यत्वकल्पनं, वा व्यर्थम् इति चेत् न उपासीत इत्यनेन वाक्यैकवाक्यत्वाभ्युपगमेऽपि पदैक्यवाक्यत्वनिराकरणे दोषाभावात्। शान्तिहेतुतया अन्वितस्य सार्वात्म्यस्य उपास्यत्वे प्रमाणाभावात् इति व्यासार्याभिप्रायात् । ननु ब्रह्मणः सर्वात्मकत्वात् यत्र क्वचित् क्रियमाणस्यापि द्वेषादेः आत्मद्वेषपर्यवसन्नत्वेन अयुक्तत्वात् शान्तस्सन् उपासीत इत्युक्ते ब्रह्म उपासीत इति कथम् अवगम्यते ? सर्वं खल्विदं ब्रह्म

---

1. इत्यन्तेन - क ।

इत्यस्य शमविध्यर्थवादभूतस्य उपास्यसमर्पकत्वाभावात् इति चेत् - सत्यम् - शमविध्यर्थतया निर्दिष्टस्यापि ब्रह्मणः उपास्याकाङ्क्षापूरकत्वस्यपि सम्भवात्, अन्यार्थतया अपि स्ववाक्यनिर्दिष्टं ब्रह्म विहाय उपास्यान्तरकल्पनस्य अनुचितत्वात् । 'मूलतः शाखां परिवास्य उपवेषं करोति' इत्यत्र मूलतः इत्यस्य शाखापरिवासने अपादानतया अन्वितस्यापि आकाङ्क्षावशेन, 'उपवेषं करोति' इत्यनेनापि अन्वयाभ्युपगमात् इति द्रष्टव्यम् ।

विहितम् उपासनं स्तौति - **अथ खलु क्रतुमयः पुरुषः । यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति** इति । 'तं यथा यथोपासते तथैव भवति' (मुद्ग.उ.३) इति श्रुत्यन्तरात् इह लोके पुरुषः, यथाक्रतुः - यथोपासनः, तथैव इतः प्रेत्य अमुष्मिन् लोके भवति । ततोः हेतोः पुरुषः **क्रतुमयः** - क्रतुप्रधानः, उपासनप्रधानः इत्यर्थः । ततश्च उपासनस्य एव हिततमत्वात् सर्वथा अनुष्ठेयम् इत्यर्थः ।

एवं विहितं ब्रह्मोपासनं मनोमयत्वादिगुणान्तरविधानाय अनुवदति - **स क्रतुं कुर्वीत । सः** - उपासकः **क्रतुं** - ब्रह्मणः उपासनं कुर्वीत इत्यर्थः ।।

**आ.भा.** - प्रतीकद्वारा जगत्कारणस्य परमात्मनः उपासनं विधाय संप्रति सगुणस्य परमात्मनः उपासनं विधातुं शाण्डिल्यविद्याम् अवतारयति - **सर्वं खल्विदम्** इत्यादि । **सर्वं** - परिदृश्यमानम् आकाशादिचराचरात्मकम् **इदं** - जगत् **ब्रह्म** - ब्रह्मणः सकाशात् आकाशादिक्रमेण जातम् । कथं सर्वम् एवं परिदृश्यमानं ब्रह्मणः सकाशात् जातं तत्राह - **तज्जलानिति** । तस्मात् ब्रह्मणः सकाशात् जगत् जायते सृष्टिकाले इति तज्जम् । पुनश्च प्रलयकाले सृष्टिव्यतिक्रमेण तस्मिन्नेव ब्रह्मणि सर्वं जगत् लीयते इति तल्लम् । स्थितिकाले तस्मिन्नेव ब्रह्मणि अनिति 'अन प्राणने' (धा.पा.१०७०) चेष्टते जीवति इति तदनं तज्जं च तल्लं च तदनं च इति तज्जलान् । इति शब्दः हेत्वर्थकः । तथा च यस्मात् सर्वं ब्रह्मणः एव उत्पन्नं ब्रह्मणि एव लीयते ब्रह्मणि एव जीवति । तस्मात्कारणात् **शान्तः** - रागद्वेषरहितः सन् **उपासीत** - सर्वात्मकस्य परमात्मनः उपासनं कुर्यात् । अत्र तज्जत्वं तल्लत्वं च स्थूलचिदचिच्छरीरकपरमात्मनिष्ठम् । तदनत्वरूपम् तन्नियामकत्वं तु न परमात्मगतम् । परमात्मनः तदसम्भवात् , किन्तु चिदचिन्मात्रगतम् । तस्मात् परमात्मनः उपासनं विधेयम् इति उपासनपरकमिदं प्रकरणम् । संप्रति विहितस्य उपासनस्य एव स्तुतिं दर्शयति - **अथ खलु क्रतुमयः** इत्यादि । **अथ** - यस्मात्कारणात् **खलु** - निश्चयेन **क्रतुमयः** - क्रतुप्रायः अध्यवसायात्मकः पुरुषः भवति । 'तं यथा यथा उपासते तथैव भवति' (मुद्ग.उ.३) इति श्रुत्यन्तरात् ।

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः" ।। (भ.गी.८-६)

इति स्मृतेश्च । **अस्मिन् -** इह जन्मनि **यथाक्रतुः -** यादृशोपासनकः भवति - **पुरुषः भवति।** अर्थात् वर्तमानदेहे यथोपासनको भवति तथैव तेनैव प्रकारेण । **इतः -** अस्माद् वर्तमानदेहात् **प्रेत्य -** मृत्वा मरणानन्तरं परलोकेऽपि भवति । तस्मात् कारणात् **सः -** उपासकः रागद्वेषादिरहितः भूत्वा **क्रतुम् -** उपासनं कुर्वीत । यस्मात् कीटभ्रमरन्यायेन पुरुषः उपासनप्रधानः भवति तस्मात् उपासनायाः एव हिततमत्वात् उपासनम् एव सर्वथा कर्तव्यम् इति ।।

**सु. -** परस्य ब्रह्मणः प्रकारान्तरेण उपासनं प्रस्तूयते । चेतोऽर्पणाय प्रतीकसाधर्म्यमुखेन ब्रह्मणः उपासनं प्राक् उपदिष्टम् , इह तु साक्षात् उपासनम् उपदिश्यते इति विशेषतः सङ्गतिः । परब्रह्मात्मकस्वात्मोपासनम् उपदिष्टं प्राक्, इह तु स्वात्मतया परस्य ब्रह्मणः उपासनं विधीयते इति वा तथा । रागद्वेषकलुषितचेतसः हि अशान्ताः निःश्रेयससाधनात् उपासनपथात् बहिरेव परिभ्रमन्ति । यो हि विजानाति सकलम् इदम् एकं तस्य भेदग्रहविलोपेन न रागद्वेषाद्यङ्कुरावसरः, तच्चेत् विचार्येत **सर्वं खल्विदं** परिदृश्यमानं ब्रह्मैव, कुतः? **यत इदं तज्जलान् यतः -** यस्मात् ब्रह्मणो जायते, ब्रह्मणि लीयते, ब्रह्मणि अनति - चेष्टते तदेवं ब्रह्मोपादानम् इदम् अखिलं ब्रह्मणः न अतिरिच्यते । उपादानात् उपादेयं हि न अतिरिक्तम् । यस्य उत्पत्तिस्थितिलयाः यतः तस्य हि तदुपादानम् , तदेवम् ऐकात्म्यम् अवधार्य शान्तः भवेत् - रागद्वेषादिरहितः भवेत् । सति स्वपरभेदप्रत्यये रागद्वेषमूलम् । अपगते च तस्मिन् शान्तः सन् उपासीत । कथम् उपासीत ? तत्तु अनुपदम् उपदिश्यते, इह तु उपासनोपयुक्तशान्तौ उपायनिरूपणपूर्वकम् उपासीत इति एतावदेव उच्यते । इतिः हेतौ । सम्बध्यते च अव्यवहितेन शान्तशब्देन । सत्यपि चिदचिदीश्वरविभागे ब्रह्मोपादानकतया जगतः ब्रह्मात्मकता कथम् इति शङ्कां षष्ठे विशेषतः निराकुर्मः । इह सङ्गृह्य उपपादयामः । किं विभागपारमार्थ्यम् एकोपादानताविरोधि ? न किं घटशरावादयः विभागाः एकस्मात् मृत्पिण्डात् ? विभागकल्पनास्पदतामात्रेण निर्विशेषस्य उपादानतां वदन् कथम् उपादानतां समर्थयति नाम । अन्यत् एतत् , घटशरावादिविभाग इव मृत्पिण्डात् एकस्मात् ब्रह्मणः अयं विभागः इति कथं घटेत तव ? यत् मन्यसे स्वरूपतः ब्रह्मणः विलक्षणं चिदचिद्विभागम् इमम् । सत्यम् , तथापि न क्षतिः, यत् ब्रह्मस्वरूपान्तर्गतमेव तु भेदम् इमं ब्रूमः । यतः विशिष्टं ब्रह्मस्वरूपम्,

शब्दादिभिरिव वियदादि, वियदादिभिः तथाविधैः इदम् । अद्रव्यमिव द्रव्यमपि क्वचित् अपृथक्सिद्धविशेषणं स्यादेव । शरीरतया चेतनाचेतनजातम् अखिलं परस्य ब्रह्मणः हि अपृथक्सिद्धविशेषणम् । श्रुत्यन्तराच्च इदम् अवधारितम् । नियतधर्मधर्मिभावापन्नः कश्चन सङ्घातविशेषः ब्रह्मेति स्थितम् , तत्र विशेषणतया व्यवस्थितयोः अपि चेतनाचेतनयोः विशेष्यात् ब्रह्मस्वरूपात् अस्त्येव महत् वैषम्यम्। यथा शब्दादौ इव आकाशादेः, प्रतिक्षणम् उत्पादविनाशशालिनः शब्दादयः श्रवणादिगोचराश्च, आकाशादि तु न तथा । यच्च इदं जगत् तदपि तथाविधः सङ्घातविशेषः एव । 'भोक्ता भोग्यं प्रेरितारं च' इति त्रयाणाम् एषः समुदायः, एकैकमपि परिदृश्यमानं तथैव । नामरूपव्याकरणश्रुत्या च एतत् निश्चीयते, 'तिस्रो देवताः' इति भोग्यजातं निर्दिश्य 'अनेन जीवेन' इति भोक्तुः द्वारता 'अहम् अनुप्रविश्य' इति प्रेरयितुः अनुप्रवेशो 'नामरूपे व्याकरवाणि' इति तन्मूलकं च नामरूपव्याकरणं हि प्रतिपाद्यते । तत्सङ्घातविशेष एव सौक्ष्म्यस्थौल्यभेदात् उपादानात् उपादेयभावम् आप्नोतीति सर्वं खल्विदं ब्रह्मेति श्रवणम् उपपन्नतरं नाम । यदिदं शब्दोऽपि ब्रह्मणि स्वरसतः प्रवर्तते । गवादिशब्दाः हि प्रकारभूतगोत्वेन मुखेन व्यक्तौ । सम्भवति च स्वशरीरभूतचेतनाचेतनद्वारा स्थौल्ययोगोऽपि, इदंशब्दस्य प्रवृत्तौ निमित्तं तु स्थौल्यं यत् उपलम्भाधायकम् । इदंशब्देन चेतनाचेतनमात्रपरिग्रहेऽपि न क्षतिः, विशिष्टे ब्रह्मस्वरूपे तयोः अन्तर्गतत्वात् ब्रह्मैव इदमिति निर्देशोपपत्तेः । विशिष्टं प्रति उपादानत्वे विशेषणांशं प्रति उपादानत्वम् अनपायमिति तज्जलान् इत्यपि न अनन्वितम् । इति ।

ननु कोऽयम् उपासने विशेषः? येन उपासनपथे यतितव्यम् । तत्राह - **अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति अथ** - इति अवान्तरवाक्यभेदे । **खलु** इति प्रसिद्धौ । **क्रतुमयः** - क्रतुः उपासनम्, मयट् प्राचुर्ये, प्राचुर्यं च इह प्राधान्येन, उपासनप्रधानः इति यावत् । पुरुषो हि उपासनप्रधानः । कुतः ? इतः नियमात् । नियमश्चायम् - **यथाक्रतुरस्मिन् लोके पुरुषो भवति इतः प्रेत्य तथा भवति** इह-लोके जीवन् पुरुषः यथा उपास्ते प्रेत्य इतः लोकान्तरं तथैव भवति । तादृक्फलः भवति । तदस्मात् उपासनस्य उपास्यसाधर्म्यापादकत्वनियमयोगात् फलविशेषम् अधिगच्छन् आश्रयेत् उपासनविशेषम् इति भावः। उपासने शान्तेः अन्तरङ्गसाधनता, तस्यां च तत्त्वनिरूपणस्य अभ्युपायता महिमा च उपासनस्य इत्येतत् उपदिष्टम्। अथ कथम् उपासीत इत्येतत् विधास्यन् अनुवदति - **स क्रतुं कुर्वीत** इति । **सः** - उक्तेन तत्त्वनिरूपणवर्त्मना शान्तः, **क्रतुं कुर्वीत** - उपासीत ।।

[ब्रह्मणः मनोमयत्वादिगुणाः]

**मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ।। २ ।।**

**प्र.** - गुणानेवाह - **मनोमयः** - परिशुद्धमनोमात्रग्राह्यः । विवेकादिसाधनसप्तकानु - गृहीतपरमात्मोपासननिर्मलीकृतमनोमात्रग्राह्यः इत्यर्थः । **प्राणशरीरः** - जगति सर्वेषां प्राणानां धारकः । प्राणो यस्य शरीरम् - आधेयं विधेयं शेषभूतं च स प्राणशरीरः; आधेयत्व-विधेयत्व-शेषत्वानामेव शरीरशब्दप्रवृत्तिनिमित्तत्वात् । **भारूपः** - भास्वररूपः । 'आदित्यवर्णं तमसः परस्तात्', (श्वे.उ.३-८) 'पश्यते रुक्मवर्णम्' (मुं.उ.३-१-३) इत्यादि वाक्यप्रतिपन्नाप्राकृतस्वासाधारणनिरतिशयकल्याणगुणगणनिरतिशयदीप्तियुक्तविग्रहशाली इत्यर्थः। **सत्यसङ्कल्पः** - अप्रतिहतसङ्कल्पः । **आकाशात्मा** - आकाशवत् सूक्ष्मस्वच्छस्वरूपः । सकलेतरकारणभूतस्य अव्याकृताकाशस्य आत्मभूतः इति वा आकाशात्मा । स्वयं च प्रकाशते, अन्यांश्च प्रकाशयति इति वा आकाशात्मा । **सर्वकर्मा** - क्रियते इति कर्म । सर्वं जगत् यस्य कर्म असौ सर्वकर्मा । सर्वा वा क्रिया यस्य आराधनम् असौ सर्वकर्मा । **सर्वकामः** - काम्यन्ते इति कामाः । भोग्यभोगोपकरणादयः। ते परिशुद्धाः तस्य सन्ति इत्यर्थः । **सर्वगन्धस्सर्वरसः** - 'अशब्दमस्पर्शम्' इत्यादिना (क.उ.३-२५) प्राकृतगन्धरसादिनिषेधात् अप्राकृताः स्वासाधारणाः निरवद्याः निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसाः तस्य सन्ति इत्यर्थः । **सर्वमिदमभ्यात्तः** - उक्तं सर्वमिदं कल्याणगुणजातं **अभ्यात्तः** - स्वीकृतवान् । 'भुक्ताः ब्राह्मणाः' इतिवत् कर्तरि क्तप्रत्ययः । अर्श आद्यजन्तो वा । **अवाकी** - वाकः उक्तिः, सोऽस्य नास्तीतिं अवाकी । कुतः इत्यत्राह **अनादरः** - अवाप्तसमस्तकामत्वेन आदर्तव्याभावात्, आदररहितः। अत एव अवाकी । परिपूर्णैश्वर्यत्वात् ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषम् आसीनः इत्यर्थः ।।

**आ.भा.** - एवमुक्तप्रकारेण विहितं परमात्मोपासनं मनोमयत्वादि गुणान्तरविधानाय श्रुतिः दर्शयति । **मनोमयः** इत्यादि । **मनोमयः** - मनुते इति मनः, अन्तःकरणम् । तन्मयस्तत्प्रधानः। विशुद्धमनोमात्रग्राह्यः । विवेकादिसाधनसप्तकेन अनुगृहीतः । परमात्मनः उपासनया सर्वथा विशुद्धं यन्मनः तावन्मात्रेण ग्राह्यप्राणशरीरः, चराचरात्मके विश्वे

सर्वेषां प्राणादीनां क्रियाशक्तिविशिष्टानां धारकः प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च स प्राणशरीरः। आधेयत्व-विधेयत्व-शेषत्वानाम् एव शरीरपदप्रवृत्तिनिमित्तत्वात् । **भारूपः** - अतिशयेन स्वच्छरूपः, 'आदित्यवर्णं तमसः परस्तात्' (श्वे.उ.३-८), 'तस्य भासा सर्वमिदं विभाति' (क.उ.२-१५) 'चैतन्येनैव ज्योतिषा', 'पश्यते रुक्मवर्णम्' (मुं.उ.३-१-३) इत्यादिश्रुतिप्रतिपादिता प्राकृतलोकोत्तरासाधारणनिरतिशय-कल्याणगुणातिविलक्षण-प्रकाशात्मकशरीरवान् इति । **सत्यसङ्कल्पः** - अप्रतिहतसङ्कल्पवान्, सङ्कल्पकार्ययोः मध्ये अन्तरायरहितः **आकाशात्मा** - आकाशवत् सूक्ष्मः स्वच्छश्च गगनवत् सर्वगतः । यथा आकाशः स्वकीयं कार्यजातं सर्वं व्याप्नोति तद्वत् अयमपि सर्वस्यापि व्यापकः । आकाश आत्मा स्वरूपं यस्य सः तथा । **सर्वकर्मा** - क्रियते इति कर्म, कार्यम् । सर्वं जगत् चराचरात्मकं कार्यं यस्य सः सर्वंकर्मा । अथवा सर्वापि क्रिया यस्य आराधनार्थं भवति स तथा । **सर्वकामः** - काम्यन्ते अभिलाषाः विषयीक्रियन्ते इति कामाः भोग्यभोगोपकरणादयः ते अतिशयेन विशुद्धाः सन्ति यस्य सः सर्वकामः । **सर्वगन्धः** - सर्वे पुण्यगन्धाः सन्ति यस्य सः सर्वगन्धः । 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्' (क.उ.३-१५) इत्यादिश्रुत्या प्राकृतरसगन्धादीनां परमात्मनि निषेधात् लोकोत्तराः स्वासाधारणाः निरवद्याः निरतिशयाश्च कल्याणलक्षणाः स्वभोग्यभूताः रसादयः विद्यन्ते यस्य इत्यर्थः । एवं **सर्वरसः** इति पदमपि व्याख्येयम् । **सर्वमिदमभ्यात्तः** - पूर्वोक्तं सर्वमिदं मनोमयत्वादि सर्वरसान्तं कल्याणगुणजातम् **अभ्यात्तः** - आप्तवान्, स्वीकृतवान् इत्यर्थः । परमात्मनः गन्धादिग्राहकत्वस्य कथनात् तदर्थं घ्राणादिकरणजातमपि 'कल्पितं स्यात् इति शङ्काम् अपनेतुमाह' - **अवाकी** - न विद्यते वाक् वागिन्द्रियं यस्य सः अवाकी वागादि इन्द्रियरहितः । उपलक्षणमेतत्, इन्द्रियान्तरप्रतिषेधस्य,

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
न तस्य वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्" ।। (श्वे.उ.३-१९)

इति श्रुत्यन्तरात् । **अनादरः** इति । न विद्यते ग्राह्यतया आदरः कुत्रापि यस्य सः अनादरः । अवाप्तसकलकामत्वेन आदर्तव्यवस्तुनः अभावात् विषयाभावेन आदररहितः इति भावः ।।

**सु.** - अथ गुणविधानश्रुतिः । नायं शब्दादिरिव श्रवणादिभिः गृह्यते । केवलं मनसैव । तेन च योगसंस्कृतेन, तत् प्राधान्येन मनोयोगप्राचुर्यात् मनोमयः इत्युक्तिः । विशुद्धमनोग्राह्यः इति यावत् । यद्वा इह मनःशब्देन भावः लक्ष्यते । तथा च भावमयः

इत्यर्थः। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (भ.गी.५-११) इति च स्मर्यते । **प्राणशरीरः** - मुख्यः प्राणो जीवो वा यस्य शरीरं सः प्राणशरीरः । एतेन ताभ्याम् अस्य वैलक्षण्यं गम्यते । उपकरणम् उपकरणी वा यस्य अस्य शरीरं सोऽयं तन्नियमनक्षणैश्वर्यसम्पन्नः ततो हि विशिष्यते । यद्यपि असौ प्राणादिभिः शरीरी, तथापि न क्षेत्रज्ञ इव सुखदुःखसमाकुलः, सः हि आवृतः तमसा अज्ञानेन । अयं तु **भारूपः** - भाः दीप्तिः एव रूपम् असाधारणस्वभावः यस्य । दीप्तिश्च इह ज्ञानप्रकाशः । ज्ञानप्रकाशैकैकस्वभावे अस्मिन् अज्ञानतमसो अन्वयगन्धस्यापि न सम्भावना इति भावः । यद्वा - यद्यपि असौ प्राणशरीरः, अथ अपरम् अस्य असाधारणं प्रकृतितत्संसृष्टविलक्षणं दीप्तिमयं रूपं । तदसौ उच्यते भारूपः इति । स्वयं प्रकाशैकरसदिव्यतनुः इति भावः । **सत्यसंकल्पश्च,** अवितथो हि अस्य सङ्कल्पः । परवशो हि वितथसंकल्पः स्यात् । क्षेत्रज्ञास्तु कर्मणः परवशाः । अयं तु अकर्मवश्यः, स्वतन्त्रश्च । अस्यैव संकल्पविशेषलक्षणे पुण्यापुण्यनामनि कर्मणि नियन्त्रिताः नाम क्षेत्रज्ञाः । इतश्च अयं विशिष्यते तेभ्यः । **आकाशात्मा** - आकाशवत् प्रतिरोधानर्हव्यापनशीलः आत्मा स्वरूपं यस्य सः तथोक्तः, सूक्ष्मतमः इति यावत् । यद्यपि आकाशात् अतिसूक्ष्मः अयम्, अथापि निदर्शनमिदं दृष्टेषु उपात्तम् । यद्वा - आ समन्तात् काशते - प्रकाशते इति आकाशः । परितः प्रकाशमानः आत्मा स्वरूपं यस्य सः । पूर्वं प्रकाशमयता शरीरस्य उक्ता, इह तु स्वरूपस्य इति भेदः । स्वभावस्वरूपभिदया वा तथा । **सर्वकर्मा** - क्रियते इति कर्म, सर्वमिदं जगत् यस्य कर्म, येन कृतम् इति यावत् । **सर्वकामः** - काम्यन्ते इति कामाः, कल्याणगुणाः यस्य कल्याणगुणाः सर्वे एव सः । अकल्याणगुणो न तस्मिन् एकोऽपि स गुणपदगोचरः इति भावः । **सर्वगन्धः सर्वरसः** - सर्वः - निरवशेषो दिव्यो गन्धो यस्य, तथा निरवशेषो दिव्यो रसो यस्य, स तथाविधः । 'तथाऽरसं नित्यमगन्धवच्च यत्' इति निषेधस्तु प्राकृतान् अवलम्बते । अयं तु दिव्यानित्यविरोधः ।। यद्वा यस्यैव विभूतिः सर्वं यज्ञादि सत्कर्म, यस्यैव विभूतिः सर्वो धर्माविरुद्धः कामः, यस्यैव विभूतिः गन्धः, यस्यैव रसो विभूतिः, सोऽयं सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस उच्यते । तथा च स्मर्यते - 'अहं क्रतुरहं यज्ञः', (भ.गी.९-१६) 'तपश्चास्मि तपस्विषु', (भ.गी.७-९) 'धर्माविरुद्धो भूतेषु कामोऽस्मि', (भ.गी.७-८१) 'पुण्यो गन्धः पृथिव्यां च', (भ.गी.७९) 'रसोऽहमप्सु कौन्तेय'! (भ.गी.७-८) इति । यद्वा लोके हि पामराः परमानन्दम् अजानन्तः सुखलवकणिकास्वादलुब्धा इतस्ततो धावन्ति तांस्तान् अर्थाननु कर्मेन्द्रियैः ज्ञानेन्द्रियैः वा द्वारैः समुद्घाटितै ; केषुचिच्च कामेषु द्वारम् अलभमानाः केवलेन मनसा सन्निहिताः सीदन्ति च । यदेषां वागादिकर्मेन्द्रियेण

उपस्पृष्टम् आनन्दाय भवति कर्म, यच्च घ्राणादिभिः ज्ञानेन्द्रियैः उपस्पृष्टं गन्धादि सुखाय भवति, ये च अतिमानुषाः कामाः इन्द्रियस्पर्शानवसरेण चेतसि एव विपरिवर्तमानाः, तदिदम् अखिलम् अस्मिन् परमात्मनि परमानन्दमये सर्वेश्वरे सन्ति हि नाम । ननु कर्मादयः ते ते अर्थाः कथमस्मिन्? समुद्रे गोष्पदम् इतिवत् । अपरिमितानन्दे तदर्थसाध्यानन्दाः सन्त्येव । तदिदमभिप्रेत्य उच्यते । **सर्वकर्मा, सर्वगन्धः, सर्वरसः, सर्वकामः** इति । गन्धरसौ शब्दादीनाम् उपलक्षकौ । श्रूयते च अन्यत्र "येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते" (क.उ.४-३) इति, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' (छां.उ.८-१-३) इति च । **सर्वमिदं जगत् अभ्यात्तः** - अभितो व्याप्तवान् । आत्तः इति कर्तरि निष्ठा । यद्वा - सर्वमिदम् अप्राकृतगन्धादिदिव्यगुणानुसाधारणतया स्वीकृतवान् । यद्वा - ये पुनरिन्द्रियसम्प्रयोगाधीनसिद्धिकाः अत एव अर्थकोटौ भासमानाः रसादयः सर्वं **अभ्यात्तः** - युगपत् अभितो व्याप्तवान् । नैकमपि एषु जातु अनेन अव्याप्तम् इति भावः । एतेन तैः अयं न विचाल्यते इति व्यज्यते । अर्थैर्हि विचाल्यते पुरुषः । न च इमे तस्यार्थाः। यो हि अर्थ्यते स ह्यर्थः । अर्थ्यते च अलब्धः, यश्च येन सर्वदाऽभिसम्बन्धः स कथं तस्यार्थो भवेत्? अभिसम्बन्धश्च अस्य आकाशस्य इव इति आकाशात्मा इत्यनेन प्राक् प्रकाशितं नाम । अत एव अयम् अवाकी परिपूर्णत्वात् । प्रयोजनाभावात् अनादरश्च ।।

[ब्रह्मोपासनारीतिः]

**एष म आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा । एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ।। ३ ।।**

**प्र. - एष म आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा** इत्यादि । मदीये हृदये व्रीह्याद्यपेक्षया अणुत्वेन[1] **एषः** - परमात्मा उपासनार्थम् अवस्थितः इत्यर्थः । तथा अनुसन्धानं कर्तव्यम् इति भावः । अन्तर्हृदये अवस्थितस्य उपास्यमानस्य प्राप्याकारम् अनुसन्धेयं निर्दिशति । **एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या** इत्यादि । अन्तर्हृदये विद्यमानोऽपि स्वरूपतो निरतिशयपरिमाणः इत्यर्थः ।।

---

1. अल्पत्वेन - इत्यधिकः - क ।

**आ.भा. - एष मे आत्मा** इत्यादि । **एषः** - पूर्वोक्तालौकिकसकलगुणविशिष्टः **आत्मा** - परमात्मा । **मे** - मम **अन्तर्हृदये** - पुण्डरीकमध्ये **व्रीहेर्वा** - व्रीहिनामकान्नापेक्षया यवसर्षपाद्योषध्यपेक्षयापि **अणीयान्** - अतिशयेन अणुः । अतिसूक्ष्मतया अवस्थानात् इन्द्रियादिना द्रष्टुम् अतीव अयोग्यः इत्यर्थः । एतादृशः परमात्मा उपासनार्थं मम हृदये अवस्थितः इति भावः । हृदयमध्ये अवस्थितस्य उपास्यमानस्य परमात्मनः प्राप्याकारम् उपासनायोग्यं दर्शयति - **एष म आत्मान्तर्हृदये ज्यायान्** इत्यादि । **मे** - मम **अन्तर्हृदये** - हृदये वर्तमानः पृथिव्यादिगगनान्तमहाभूतेभ्योऽपि **ज्यायान्** - अतिशयेन महान् । पृथिव्यादिभ्योऽपि परममहत्परिमाणवान् । हृदयमध्ये वर्तमानः स्वस्वरूपेण निरतिशयपरिमाणवान् इत्यर्थः ।।

**सु. - यः एषः** - मनोमयत्वादिगुणकः सोऽयम् आत्मा मे - मम अयम् अन्तरात्मा । मे इति व्यतिरेकनिर्देशात् प्रत्यगात्मनः स्वस्यापि अन्तरात्मतया व्यवस्थितोऽयं स्वस्मात् अन्यः इति व्यज्यते । **अन्तर्हृदये** - नातिदूरे, इहैव मम अन्तर्हृदये सन्निहितः । कथम् अणुप्रदेशे अस्य अवस्थितिः ? **अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा** - ये लोके अणवः प्रथिताः व्रीह्यादयः ततोऽयमणुः, सूक्ष्मतमः इति भावः । हन्त ! परिमितः । नेत्याह - एषः मे अन्तर्हृदये सन्निहितोऽपि न परिच्छिन्नस्वरूपः । किन्तु, **ज्यायान् पृथिव्या, ज्यायानन्तरिक्षात्, ज्यायानेभ्यो लोकेभ्यः** पृथिव्यादिलोकान्तं यदिह महत् उपलभ्यते ततः सर्वतो महान् । स्वतः अपरिच्छिन्नोऽपि एषः सूक्ष्मतमतया सर्वत्र सन्निहितः । उपासके प्रेम्णा वा हृदये तदनुगुणदिव्याकृतिः सन्निहितः इति भावः । अणोरणीयस्त्वेन महतो महीयस्त्वेन अप्रतर्क्यमहिमा एषः इति च व्यज्यते । मनोमयत्वादिवत् इदमपि उपास्यकोटौ अन्तर्भवति ।।

**[सगुणोपासनम्]**

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद् ब्रह्म ।। ३ ।।**

**एतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ।। ४ ।।**

**।। इति चतुर्दशः खण्डः ।।**

**प्र. - सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः** इत्यादि । उक्तोऽर्थः । एवम्भूतं परं ब्रह्म परमकारुण्येन अस्मदुज्जिजीवयिषया अस्मद्हृदये सन्निहितम् इति अनुसन्धातव्यम् इत्याह - **एष म आत्मान्तर्हृदय एतद्ब्रह्मेति ।** यथोपासनम् ईदृशं परमात्मानं 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते (छां.उ.८-३-४) इत्युक्तरीया देशविशेषविशिष्टं प्राप्तः अस्मीति निश्चयरूपम् अनुसन्धानं कर्तव्यम् इत्याह - **एतमितः प्रेत्याभिसम्भवितास्मीति ।** अत्र [1]इति[1] इत्यस्य 'स क्रतुं कुर्वीत' इत्यनेन अन्वयः । 'मनोमयः प्राणशरीरः' इत्यारभ्य 'एतमितः प्रेत्याभिसम्भवितास्मीति' एतत्पर्यन्तो अनुसन्धानप्रकारः ।

अत्र च इतिशब्दनिर्दिष्टो मनोमयत्वादिगुणगतः क्रमविशेषः एकः एव विधीयते । मनोमयत्वाद्युपास्यगुणानां तु आक्षेपतो विधानम्, पृष्ठगतसर्वताविधानादिव पृष्ठानाम् । ततश्च प्राप्तानुवादेन मनोमयत्वाद्यनेकगुणविधाने वाक्यभेदः इति शङ्का प्रत्युक्ता । यद्वा विधेयानां बहुत्वेऽपि क्रतुरूपविधेयतावच्छेदकैक्यात् न वाक्यभेदः । 'यदग्नये च प्रजापतये' च इति वाक्ये देवतात्वरूपविधेयतावच्छेदकैक्येन वाक्यभेदस्य तान्त्रिकैः[१] परिहृतत्वात् । केचित्तु प्राप्तोपासनानुवादेन अभ्युदयेष्टिवाक्यवत् प्रयोगविधित्वसम्भवात् न वाक्यभेदः इति वदन्ति ।

एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्य उपासकस्य प्राप्तौ न संशयः अस्तीति उपसंहरति - **यस्य स्यादद्धा न विचिकित्साऽस्ति ।** अत्र इतिशब्दः अध्याहर्तव्यः । **अभिसम्भवितास्मीति** इतीतिशब्दस्य काकाक्षिन्यायेन वा अन्वयः । **इति** - उक्तप्रकारेण **यस्य** - उपासकस्य **अद्धा** - निश्चयोऽस्ति, तस्य प्राप्तौ **विचिकित्सा** - संशयो नास्ति इत्यर्थः । [2]उक्तस्य[2] श्रद्धेयत्वसिद्ध्यै वक्तुराप्तिं दर्शयति - **इति ह स्माह शाण्डिल्यः शाण्डिल्यः** इति । द्विरुक्तिः विद्यासमाप्त्यर्था । अयमर्थः सर्वोऽपि भाष्यश्रुतप्रकाशिकयोः स्पष्टः ।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणम् [3]उपन्यस्यते[3] -

इयञ्च विद्या समन्वयाध्याये द्वितीयपादे चिन्तिता । तत्र हि - 'सर्वं खल्विदं ब्रह्म' इत्यत्र ब्रह्मशब्देन प्रत्यगात्मा एव निर्दिश्यते । तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिस्तम्बपर्यन्तभावश्च प्रत्यगात्मनः एव अनाद्यविद्यामूलकर्मविशेषोपाधिकः उपपद्यते । परमात्मनः निरस्तसमस्तावद्यस्य समस्तहेयाकरसर्वभावो न उपपद्यते । प्रत्यगात्मनि अपि ब्रह्मशब्दः क्वचित् क्वचित्

---

१. तान्त्रिकैः - मीमांसकैः ।

1. प्रेत्य - अ । 2. उक्तार्थस्य - क,ख । 3. लिख्यते - क ।

प्रयुज्यते, 'इदं ब्रह्मायाति' इत्यादौ । अत एव परमात्मा, 'परं ब्रह्म' इति परमेश्वरस्य क्वचित् सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेः ब्रह्मत्वं च विद्यते । 'स चानन्त्याय कल्पते' (श्वे.उ.५-९) इति श्रुतेः । अविदुषः तस्यैव कर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानां एव अत्र सन्दर्भे प्रतिपाद्यते इति पूर्वपक्षे उच्यते - 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू.१-२-१) । सर्वत्र सर्वस्मिन् जगति 'सर्वं खल्विदं ब्रह्म' इति तदात्मतया विधीयमानं परं ब्रह्मैव । कुतः ? प्रसिद्धोपदेशात् । तज्जत्वतल्लत्वादिना 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवत् उपदेशात् यस्मात् जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः । तदेव अत्र ब्रह्मेति प्रतीयते । वेदान्तप्रसिद्धत्वं च परब्रह्मणः एव । 'यतो वा इमानि भूतानि जायन्ते' (तै.आन.१) इत्यादि वेदान्तेषु परब्रह्मणः एव प्रसिद्धेः । तस्य ब्रह्मादिस्तम्बभावेऽपि प्रकारभूतशरीरगतानां दोषाणां [1]प्रकारिणि आत्मनि असंस्पर्शात्[1] निरस्तसमस्तावद्यत्वस्य न अनुपपत्तिः । जीवानां च प्रतिशरीरं भिन्नानां अन्योन्यतादात्म्यासम्भवेन [2]सार्वात्म्यस्य असम्भावितत्वात्[2] । अतः सर्वजगत्कारणत्व प्रयुक्तसर्वात्मकत्वस्य परब्रह्मण्येव सम्भवात् परमेव ब्रह्म इह वाक्ये प्रतिपाद्यते ।

'विवक्षितगुणोपपत्तेश्च' (ब्र.सू.१-२-२) । विवक्षितानां मनोमयत्वसत्यसङ्कल्पत्वादीनां गुणानां परमात्मन्येव उपपत्तेश्च । विवक्षितत्वं - तात्पर्यविषयत्वम् । मनोमयत्वादीनां च 'यथा क्रतुरस्मिंल्लोके पुरुषो भवति' इति वाक्येन मनोमयत्वादिगुणकोपासनेन तद्गुणकब्रह्मप्राप्तेः फलत्वावेदनेन फलरूपतात्पर्यालिङ्ग[3]सम्भवात्[3] मनोमयत्वादीनां तात्पर्यविषयत्वलक्षणं विवक्षितत्वम् अवसीयते । 'अनुपपत्तेस्तु न शरीरः' (ब्र.सू.१-२-३) विवक्षितानां गुणानां शारीरेऽनुपपन्नत्वात् न शारीरपरग्रहशङ्का कार्या इत्यर्थः ।

'कर्मकर्तृव्यपदेशाच्च' (ब्र.सू.१-२-४) । 'एतम् इतः प्रत्यभिसम्भवितास्मि' इति प्राप्यतया परं ब्रह्म व्यपदिश्यते प्राप्तृतया च जीवः । अतः प्राप्ता जीवोपासकः । प्राप्यं परं ब्रह्म उपास्यम् इति । 'शब्दविशेषात्' (ब्र.सू.१-२-५) । 'एष म आत्माऽन्तर्हृदयः' इति शारीरः षष्ठ्या निर्दिष्टः, उपास्यस्तु प्रथमया । अतो न उपासकस्य जीवस्य उपास्यत्वम् । 'स्मृतेश्च' (ब्र.सू.१-२-६) । "सर्वस्य चाहं हृदि सन्निविष्टः मत्तः स्मृतिर्ज्ञानमपोहनं च" (भ.गी.१५-५) इति स्मृतिश्च उपास्यं हृदयगतम् उपासकात् भिन्नं परमात्मानं दर्शयति ।

'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' (ब्र.सू.१-२-७) । अल्पायतनत्वं, - अर्भकौकस्त्वं, तद्व्यपदेशः - अल्पत्वव्यपदेशः । **एष म आत्मान्तर्हृदयः**

---

1. अस्पर्शात् - ख ।  2. सर्वात्मकत्वस्य असम्भावितत्वात् सर्वात्मकत्वं असम्भावितत्वमेव - क ।
3. सद्भावात् - क,ख ।

इति अणीयसि हृदयायतने स्थितत्वात् 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादिना स्वरूपेण अणीयस्त्वव्यपदेशाच्च नायं परमात्मा, अपि तु जीवः एव । परमात्मनः अल्पायतनत्वाल्पत्वयोः सम्भवात् इति चेत् न - एवं निचाय्यत्वात् अल्पायतनत्वाल्पत्वाभ्यां तस्यैव उपास्यत्वसम्भवात् । व्योमवच्च इदं ब्रह्म व्यपदिश्यते 'ज्यायान् पृथिव्या' इत्यादिना । अतश्च ज्यायस्त्वे उपाध्यश्रवणात् जायस्त्वं स्वाभाविकम्, अणीयस्त्वे उपाधिश्रवणात् अणीयस्त्वम् औपाधिकम् इत्यवसीयते ।

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.१-२-८) । परब्रह्मणः शरीरान्तर्वर्तित्वे तन्निमित्तसुखदुःखोपभोगप्रसक्तिः जीववत् स्यादिति चेत् न - तयोः अपहतपाप्मत्वानपहतपाप्मत्व-कृतविशेषसंभवात्, न जीववत् भोगप्रसक्तिः इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा. - सर्वकर्मा** इत्यारभ्य **अनादरः** इत्येतत्पर्यन्तो भागः पूर्ववदेव व्याख्येयः । पूर्वोक्तगुणविशिष्टतया एव परमेश्वरः अन्तर्हृदये उपास्यः, न तु तद्गुणोपलक्षिततया इति दर्शयितुं पुनर्वचनम् इति । एतादृशगुणविशिष्टः परमात्मा अस्मदादिहृदये सन्निहितः इत्येवम् अनुसन्धातव्यः इत्याशयेन आह - **एष म आत्मान्तर्हृदये एतद्ब्रह्म इति** । पूर्वोक्तमनोमयत्वादिगुणकस्य परमात्मनः उपासनम् अन्तिमोच्छ्वासपर्यन्तं क्रियमाणं सदेव फलहेतुः भवति इत्याशयेनाह - **एतमितः प्रेत्य** इत्यादि । **एतं** - मनोमयत्वादिगुणम् उपास्यं परमात्मानमेव **इतः प्रेत्य** । **इतः** - अस्मात् उपासकशरीरात् **प्रेत्य** - मृत्वा मरणानन्तरं **अभिसम्भवितास्मि** - देशविशिष्टपरमात्मानम् उपास्यम् अवश्यं प्राप्तास्मि **इति** - एवं प्रकारेण **यस्य** - उपासकस्य **अद्धा** - निश्चयः स्यात् । **न तु विचिकित्सास्ति** । तत्र विचिकित्सा नाम संशयः । तथा च उपास्यप्राप्तिविषये यस्य उपासकस्य संशयादिः नास्ति तादृशोपासकः अवश्यमेव उपास्यपरमात्मनः कैंकयम् आसादयति । ततश्च कैंकर्यात् तोषितो भगवान् तस्मै यथोक्तं फलम् अवश्यमेव प्रयच्छति इति शाण्डिल्यो ऋषिः उक्तविद्यासम्प्रदायप्रद्योतकः **स्माह** - कथितवान् इति । द्विरुक्तिः विद्यासमाप्तिं प्रद्योतयति ।।

**सु.** - विहितानुवादपूर्वकं चिन्तनीयम् अपरं प्रकारं विधत्ते - **सर्वकर्मा** इति । सर्वकर्मा इत्येतत् मनोमयत्वादेः उपलक्षकम् एतद्ब्रह्म इत्यन्तं विहितोपासकस्य आकारानुवादः । अथ चिन्तनीयम् अपरं प्रकारं विधत्ते - **एतमितः प्रेत्याभिसम्भविताऽस्मि** । **इतः** - शरीरात् प्रारब्धात् **प्रेत्य** - अत्यन्ततो विनिर्गत्य, अनुपदम् **एतम् अभिसम्भविताऽस्मि** -

प्राप्ताऽस्मि । प्रारब्धशरीरावसानानन्तरं प्राप्यत्वेनापि उपासीत इत्युपास्यप्रकारान्तरसमर्पकम् एतत् । इति क्रतुं कुर्वीत इति पूर्वेण सम्बन्धः । यद्वा - एतद्ब्रह्म इत्यन्तम् उपायभूतम् उपासनविशेषं मनोमयत्वादिगुणकं प्रस्तुतम् अनुवादेन उपसंहृत्य तदङ्गतया चिन्तनान्तरं विधीयते - **एतमितः प्रेत्याभिसम्भवितस्मीति** । भाविफलचिन्तनमपि अनेन प्रकारेण कर्तव्यम् इति भावः । एतमितः 'प्रेत्याऽभिसम्भविताऽस्मि' इत्यपि 'क्रतुं कुर्वीत' इति वाक्यान्तरविधया अन्वयः । यद्वा - अथ फलमुच्यते **एतमितः** इत्यादिना । **यस्य** अस्य उपासकस्य **एतम्** - उपास्यमानगुणविशिष्टम् **इतः** - शरीरात् वियुज्य प्राप्ताऽस्मीति स्यात् निश्चयः, तस्य तत्प्राप्तौ न विचिकित्सा, नियतः तल्लाभः इति भावः । एतेन उपासकसामान्यस्य फले असंशयो अवश्यम् अपेक्ष्यते इति व्यज्यते । **इति ह स्म शाण्डिल्य आह** । अनेन अस्याः विद्यायाः प्रवर्तकविशेषगौरवकृतं सम्प्रदायगौरवं व्यज्यते ।।

**।। इति चतुर्दशखण्डभाष्यम् ।।**

## पञ्चदशः खण्डः

**[वीरपुत्रस्य दीर्घायुष्ट्वसिद्ध्यै कोशविज्ञानम्]**

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति ।**
**दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलम् ।।**
**स एष कोशो वसुधानस्तस्मिन् विश्वमिदँ श्रितम् ।। १ ।।**

**प्र.** - पुत्रदीर्घायुष्यफलकं त्रैलोक्यात्मककोशविज्ञानमारभ्यते[१] **अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति** । अन्तरिक्षम् उदरं यस्य सः तथोक्तः । मध्यवर्तित्वात् अन्तरिक्षस्य उदरत्वम् । कोशः इव **कोशः** । कोशसादृश्यात् **कोशः** । भूमिः बुध्नः मूलं यस्य सः **भूमिबुध्नः । न जीर्यति** - न विनश्यति । [1]स्थिरकालत्वादिति[1] भावः । **दिशो ह्यस्य स्रक्तयः** - स्रक्तयः कोणाः इत्यर्थः । **द्यौरस्योत्तरं बिलम् । उत्तरं बिलं** - ऊर्ध्वं मुखम् उत्यर्थः । **स एष कोशो वसुधानः** - कर्मफलाख्यं वसु धीयते अस्मिन् इति वसुधानः । **तस्मिन् विश्वमिदं श्रितम्** । कर्मकर्तृफलात्मकं परिदृश्यमानं कृत्स्नम् अस्मिन् कोशे श्रितम् इत्यर्थः ।।

**आ.भा.** - उपासकस्य कुले वीरः पुत्रः जायते इति पूर्वं कथितमिति पुत्रस्य दीर्घायुष्ट्वसिद्ध्यर्थं त्रैलोक्यात्मककोशविज्ञानमारभते - **अन्तरिक्षोदरः** इत्यादि । **अन्तरिक्षोदरः** -

---

१. इतः परम् ऐहिकफलकम् उपासनाचतुष्टयम् प्रस्तूयते । तत्र प्रथमम् पुत्रदीर्घायुष्ट्वफलकम् निरूप्यते ।

1. चिरकालस्थायित्वादिति - अ,आ,ख । चिरकालावस्थायित्वादिति - क ।

अन्तरिक्षम् उदरं सुषिरं यस्य कोशस्य स अन्तरिक्षोदरः । मध्यवर्तित्वात् अन्तरिक्षस्य उदरत्वम् । अन्तरिक्षे उदरदृष्टिः कर्तव्या इति भावः । कोशः इव कोशः कोशसादृश्यात् । तथा भूमिः पृथिवी बुध्नीभूतं यस्य स **भूमिबुध्नः । न जीर्यति** - न विनश्यति, आभूतसम्प्लवावस्थायित्वात् । चिरकालावस्थायित्वात् इत्यर्थः । **अस्य** - कोशस्य प्रसिद्धाः **दिशः** प्राच्यादिकाः एव **स्रक्तयः** - कोणाः, तथा **अस्य** - कोशस्य द्यौरेव उत्तरं ऊर्ध्वं **बिलम्** - मुखम् । **स एषः** - त्रैलोक्यात्मकः **कोशो वसुधानः । वसु** - सर्वप्राणिजातस्य कर्मफललक्षणं, वसु धीयते निधीयते अस्मिन् इति **वसुधानः ।** कस्मात् कारणात् अयं कोशो वसुधानः तदाह - **तस्मिन्** इत्यादि । **तस्मिन्** - कोशमध्ये **इदं** - परिदृश्यमानं कर्मकर्तृफलात्मकं **विश्वं** - समस्तं **श्रितं** - स्थितम् । तस्मादेव कारणात् अयं कोशो वसुधानः इति ।।

**सु.** - अथ कोशविज्ञानम् ऐहिकफलाधायकम् उपदिश्यते । त्रैलोक्यस्य कोशतया परिकल्प्य वक्ष्यमाणप्रकारेण चिन्तनं कोशविज्ञानम् । फलं च ऐहिकं पुत्रस्य चिरायुष्ट्वम् । पृथिव्यादिद्युलोकान्तम् एकः कोशः, स चायम् **अन्तरिक्षोदरः** - आकाशं हि मध्यवर्तितया अस्य उदरमिव, मध्यवर्तिसुषिरस्थानीयम् इति यावत् । **भूमिबुध्नः** - भूमिरेव अस्य अधस्तया **बुध्नः** - मूलस्थानीयः । कोशश्च अयं **न जीर्यति** - चिरकालस्थायितया दृढः इति भावः । **दिशो ह्यस्य** - कोशस्य **स्रक्तयः** - कोणाः । द्युलोकस्तस्य उत्तरम् उपरितनं **बिलं** - मुखच्छिद्रम् । **स एषः** - पृथिव्यादितत्तदवयवविभागसम्पन्नः कोशः **वसुधानः** - वसवः प्राणिनां कर्मफललक्षणानि अस्मिन् धीयन्ते तदयं **वसुधानः, तस्मिन्** - अस्मिन् कोशे कर्तृकर्मफललक्षणं **विश्वमिदं श्रितम्** - अभिसम्बद्धम् ।।

**[कोशदिग्वत्सविज्ञानं, तस्य फलञ्च]**

**तस्य प्राची दिग् जुहूर्नाम, सहमाना नाम दक्षिणा, राज्ञी नाम प्रतीची, सुभूता नामोदीची । तासां वायुर्वत्सः । स य एतमेवं वायुं दिशां वत्सं वेद, न पुत्ररोदँ रोदिति । सोऽहमेतमेवं वायुं दिशां वत्सं वेद ; मा पुत्ररोदँ रुदम् ।। २ ।।**

**प्र. - तस्य......नाम दक्षिणा** इत्यादि । **तस्य** - उक्तत्रैलोक्यकोशस्य या **प्राची** दिक् सा जुहूनाम्नी ध्यातव्या इत्यर्थः । एवमेव अवशिष्टस्य स्पष्टोऽर्थः । **तासां वायुर्वत्सः** - वायोः दिक्प्रसूतत्वात् वत्सत्वम् । **स एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं**

**रोदिति ।** दिग्वत्सत्वेन वायूपासकः पुत्रनाशननिमित्तं **रोदं** - रोदनं न करोति । पाकं पचति इतिवत् अयं पुत्ररोदनं रोदिति इति निर्देशः । रोदमिति णमुलन्तो वा । **सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदम् । सः** - एतदुपदेष्टा अहमेवम् एतदुपासनम् अनुष्ठाय पुत्ररोदनाभावं फलं प्राप्तवान् अस्मि इत्यर्थः ।।

**आ.भा.** - कोशकोणत्वेन उक्तायाः दिशः एव अन्तरविभागं दर्शयति । **तस्य प्राची दिक्** इत्यादि । **तस्य** - कोशस्य **प्राची दिक्** - पूर्वगतो दिग्विभागः **जुहूर्नाम ।** जुह्वति अस्यां दिशि कर्मकारिणः इति जुहूः । एवं खलु उपासकः चिन्तयेत् । तथा अस्य **दक्षिणा** दिक् **सहमाना नाम ।** सहन्तेऽस्यां पापकर्मफलानि यमनगर्यां प्राणिनः इति सहमाना इति चिन्तयेत् । तथा **प्रतीची दिक् राज्ञी** राज्ञा वरुणेन अधिष्ठितत्वात् । तथा **उदीची** दिक् **सुभूता नाम** भूतिमद्भिः कुबेरादिभिः अधिष्ठितत्वात् । तासां प्राच्यादि **दिशां, वायुर्वत्सः, ।** वत्स इव वत्सः । अमृतभूतः वायोः दिग्जन्मत्वात् इति चिन्तयेत् । एतादृशोपासनस्य फलं दर्शयति । **स य एतमेवम्** इत्यादि । **स यः** - कश्चित् उपासकः एवं यथोक्तं **वायुं दिशां** प्राच्यादीनां वत्सरूपं **वेद** - विजानाति उपासनं करोति । सः उपासकः **न पुत्ररोदं रोदिति ।** तत्र पुत्ररोदं पुत्रमरणादिनिमित्तकं तज्जनितरोदं - रोदनं **न रोदिति** न करोति । पुत्रनाशनिमित्तकरोदनं तद्गृहे न कदाचिदपि भवति इति । **सोऽहं** - स एतदुपदेष्टा अहम् पुत्रजीवनार्थी **एवमेव वायुं दिशां वत्सं वेद** दिक्पुत्रत्वेन वायोः उपासनं कृतवानिति **मा पुत्ररोदं रुदम्** - पुत्ररोदनाभावात्मकं फलं प्राप्तवान् अस्मि इति ।।

**सु.** - **तस्य** - कोशस्य याः स्रक्तयः रूपिताः तासु दिक्षु या **प्राची दिक्** सा **जुहूर्नाम** - यतो हूयते प्राङ्मुखीभूय एव सर्वैः, तदुच्यते जुहूः इति । **सहमाना नाम दक्षिणा** - दक्षिणस्यां दिशि यमपुर्यां सह्यते निरयवेदना सर्वैः नारकिभिः, तदुच्यते सहमाना इति । **राज्ञी नाम प्रतीची** - सन्ध्यारागरञ्जिततया राज्ञी इत्युच्यते । रञ्जयति सर्वान् प्राणिनः इति वा राज्ञी रज्यते हि प्राणिवर्गः सर्वोऽपि आप्रभातं यथायथं व्याप्रियमाणं सायं लब्धविश्रान्तिः स्वस्वानुगुणे स्नेहनिलये । **सुभूता नामोदीची** - भूतिमता कुबेरेण अधिष्ठिता इति सुभूता उच्यते, भूतेश्वरेण अधिष्ठिता इति वा सुभूता । स्रक्तितया विभाव्यमानेषु दिग्विभागेषु जुह्वादिनामकतया विभावनं कार्यम् इति यावत् । **तासां वायुर्वत्सः** - दिग्भ्यो हि वायुः उद्भवति । दिशां स्त्रीलिङ्गतया स्त्रीत्वाध्यासेन, वायोश्च पुल्लिङ्गतया पुंस्त्वाध्यासेन, दिगुद्भवतया च दिशां

वायुः वत्सः इति विभावनम् उपदिश्यते । **स य एतमेवं वायुं दिशां वत्सं वेद यः** - उपासकः, **एतं** - वायुम् **एवं दिशां वत्सं वेद** - त्रैलोक्यात्मककोशस्रक्तिभूतदिग्वत्सत्वेन वायुं चिन्तयति, सः **न पुत्ररोदं रोदिति** - पुत्रविपत्तिनिमित्तकं रोदनं न करोति । न तस्य कदापि पुत्रविपत्तिः स्यात् इति भावः । फलेऽस्मिन् आत्मनः संवादम् उपदेष्टा आह - **सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदम् - यदहमेतं** वायुम् **एवम्** - उक्तेन प्रकारेण दिशां वत्सं विचिन्तितवान्, अत एव पुत्ररोदनं ना अरुदम् पुत्रविपत्तिः मम नाभूत् इति यावत् ।।

**अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना ; प्राणं प्रपद्येऽमुनाऽमुनाऽमुना ; भूः प्रपद्येऽमुनाऽमुनाऽमुना ; भुवः प्रपद्येऽमुनाऽमुनाऽमुना ; स्वः प्रपद्येऽमुनाऽमुनाऽमुना ।। ३ ।।**

**प्र.** - अथ कोशविज्ञानाङ्गभूतान् प्रपदनमन्त्रानाह - **अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना । अरिष्टं** - अविनाशं कोशं प्रपद्ये । **अमुनाऽमुनाऽमुना** इति त्रिः पुत्रस्य नाम गृह्णाति । अमुना पुत्रेण हेतुना अरिष्टं कोशं प्रपद्ये इत्यर्थः । एवम् उत्तरत्रापि **प्राणं प्रपद्येऽमुनाऽमुनाऽमुना** इत्यादि ।।

**आ.भा.** - अतः परं कोशविज्ञानस्य अङ्गलक्षणान् प्रपदनादिमन्त्रपञ्चकान् दर्शयितुम् आह - **अरिष्टम्** इत्यादि । **अरिष्टं** - विनाशरहितं चिरस्थेमानम् इति यावत् । कोशं यथोक्तं **अहं प्रपद्ये** - प्रपन्नोऽस्मि । अमुनामुना इति त्रिवारं पुत्रस्य नाम गृह्णाति । **अमुना** - अनेन अमुकशर्मणा पुत्रनाम्ना निमित्तभूतेन तदीयदीर्घायुष्ट्वं निमित्तीकृत्य इत्यर्थः । **अमुना** - पुत्रेण हेतुना विनाशरहितं कोशं प्रपद्ये । एवं सर्वत्रापि अमुनामुना इति अभ्यासो जपार्थकः । **अमुनाऽमुनाऽमुना** अनेन - अमुकशर्मणा पुत्रेण निमित्तभूतेन **प्राणं प्रपद्ये** - प्रपन्नोऽस्मि ।।

**सु.** - एवं कोशविशेषोपासनम् उक्तम् । अथ तदङ्गभूतं जपं विधास्यन् मन्त्रानाह - **अरिष्टम्** इत्यादिना । **अरिष्टं** - न रिष्टं येन येन साधनेन रिष्टं विनाशो न स्यात्, तदरिष्टम् प्रकरणात् पुत्ररिष्टभयनिवर्तकम् इत्यर्थः । यद्वा - न रिष्टं विनाशो यस्य तदरिष्टम् ।

त्रिलोको हि अयं कोशः चिरकालस्थायी । एवंभूतं कोशं त्रैलोक्यात्मकम् उक्तलक्षणं **प्रपद्ये** - शरणम् उपयामि । कस्मै प्रयोजनाय ? **अमुना** - अमुकनामकेन अनेन पुत्रेण इति यावत् । अस्य चिरजीवनप्रयोजनेन निमित्तेन इति भावः । प्रयोजनस्य हेतुत्वविवक्षया तृतीया । त्रिः ग्रहणं रिष्टभीत्याऽरिष्टदार्ढ्यार्थम् । मन्त्रस्वाभाव्येन वा ।।

**स यदवोचम् - प्राणं प्रपद्य इति, प्राणो वा इदँ सर्वं भूतम्, यदिदं किञ्च, तमेव तत् प्रापत्सि ।। ४ ।।**

**अथ यदवोचम् - भूः प्रपद्य इति, पृथिवीं प्रपद्ये, अन्तरिक्षं प्रपद्ये, दिवं प्रपद्ये इत्येव तदवोचम् ।। ५ ।।**

**अथ यदवोचम् - भुवः प्रपद्य इति, अग्निं प्रपद्ये, वायुं प्रपद्ये, आदित्यं प्रपद्ये, इत्येव तदवोचम् ।। ६ ।।**

**अथ यदवोचम् - स्वः प्रपद्य इति, ऋग्वेदं प्रपद्ये, यजुर्वेदं प्रपद्ये, सामवेदं प्रपद्ये इत्येव तदवोचम्, तदवोचम् ।। ७ ।।**

**।। इति पञ्चदशः खण्डः ।।**

**प्र. - प्राणं प्रपद्ये** इत्यादि स्वोक्तमन्त्रान् स्वयमेव व्याचष्टे । तत्र प्रथममन्त्रस्य कोशविषयस्य पूर्वमेव व्याख्याततत्वात् द्वितीयादीन् व्याचष्टे - **स यदवोचं प्राणं प्रपद्ये इति प्राणो वा इदँ सर्वं भूतं यदिदं किञ्च** इत्यादि । सोऽहं प्राणं प्रपद्ये इति यद्वचनम् अवोचम् - तेन वचनेन प्राणात्मकं सर्वं जगत् **प्रापत्सि** - प्रपन्नो अभवम् इत्यर्थः ।

**अथ यदवोचम् - भूः प्रपद्ये इति पृथीवीं प्रपद्ये** इत्यादि । भूः प्रपद्ये इत्यस्य मन्त्रस्य त्रीन् लोकान् प्रपद्ये इत्यर्थः ।

**अथ यदवोचं भुवः प्रपद्ये इति अग्निं प्रपद्ये** इत्यादि । स्पष्टम् ।

**तदवोचं तदवोचम्** इति । द्विरुक्तिः विद्यासमाप्त्यर्था ।।

**आ.भा. - प्राणं प्रपद्ये** इत्यादि । द्वितीयादिमन्त्राणां प्रतीकग्रहणपूर्वकं स्वयमेव अभिप्रेतार्थं कथयति । **स यदवोचम्** इत्यादि । सोऽहं मन्त्रात्मना **यदवोचम्** - यदुक्तवान् प्राणं प्रपद्ये इति तेन वचनेन प्राणो वै प्राणः एवेदं सर्वं भूतं प्राणिजातं यदिदं

किञ्च तमेव - सर्वतादात्म्यापन्नं प्राणं तत्वेन प्राणप्रतिपादनेन **प्रापत्सि** - प्रतिपन्नो अभूवम् इति ।

**अथयदवोचं भूः प्रपद्ये** इति । तत्र भूः प्रपद्ये इत्यस्य त्रीन् लोकान् प्रपद्ये इत्यर्थः । अन्तरिक्षं प्रपद्ये, दिवं प्रपद्ये, इत्येव तदवोचम् इति । अथ **यदवोचम्** - उक्तवानस्मि भुवः प्रपद्ये इति तेन वचनेन **अग्निं** - वह्निं प्रपद्ये, वायुं प्रपद्ये, आदित्यं प्रपद्ये इत्येव तदवोचम् इति ।

**अथ यदवोचं** समुक्तवानस्मि **स्वः प्रपद्ये** इति तेन वचनेन **ऋग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्ये, इत्येव । तदवोचम् तदवोचम्** इति द्विर्वचनं विद्यासमाप्तिद्योतकम् इति ।।

**सु.** - प्राणादिपदैः विवक्षितं श्रुतिः स्वयमेव व्याचष्टे - **स यदवोचम्** इत्यादिना । सोऽहं **यदवोचं प्राणं प्रपद्ये** इति तेन विवक्षितम् एतत्, किम् ? **प्राणो वा इदं सर्वं भूतं यदिदं किञ्च तमेव प्रापत्सि** इति । सर्वमिदं पशुपक्ष्यादिभूतजातं प्राणो हि, तत्तमेव प्राणात्मकम् अखिलं भूतजातं प्रपन्नो अस्मि इति । एवम् उत्तरत्र **प्रपद्ये** इत्यन्तो अनुवादो व्याख्यातार्थः, पश्चात्तनं व्याख्यानम् । द्विरुक्तिः विद्यासमाप्तौ ।।

**।। इति पञ्चदशखण्डभाष्यम् ।।**

## षोडशः खण्डः

**[दीर्घायुष्ट्वफलकपुरुषविद्या]**

**पुरुषो वाव यज्ञः । तस्य यानि चतुर्विंशतिवर्षाणि, तत् प्रातस्सवनम् । चतुर्विंशत्यक्षरा गायत्री ; [1]गायत्रं[1] प्रातस्सवनम् । तदस्य वसवोऽन्वायत्ताः । प्राणा वाव वसवः । एते हीदँ सर्वं वासयन्ति ।। १ ।।**

**प्र.** - दीर्घायुष्ट्वफलकपुरुषविद्या प्रस्तूयते - **पुरुषो वाव यज्ञः** इति । पुरुषः स्वस्मिन् यज्ञदृष्टिं कुर्यात् इत्यर्थः । पुरुषस्य यज्ञसादृश्यमेव आह - **तस्य यानि चतुर्विंशति वर्षाणि, तत्प्रातस्सवनं** - षोडशोत्तरवर्षशतमिते पुरुषायुषि आद्यानि चतुर्विंशतिवर्षाणि प्रातस्सवनम् इत्यर्थः । तत्र तद्दृष्टिः कर्तव्या इति यावत् । तत्र हेतुमाह - **चतुर्विंशत्यक्षरा**

---

1. गायत्रं हि - इति माध्वपाठः ।

**गायत्री, गायत्रं प्रातस्सवनं** - प्रातस्सवनस्य गायत्रीछन्दस्कत्वात् गायत्रीछन्दसः चतुर्विंशत्यक्षरात्मकत्वात्, चतुर्विंशतिवर्षे प्रातस्सवनत्वाध्यासो युज्यते इति भावः । **तदस्य वसवोऽन्वायत्ताः । अस्य** - उपासकस्य **तत्** - प्रातस्सवनं **वसवः** - स्वामित्वेन अनुगताः । प्रसिद्धयज्ञे प्रातस्सवनस्य वसुस्वामिकत्वात् इति भावः । प्रसिद्धान् वसून् व्यावर्तयति - **प्राणा वाव वसवः** - **वाव** शब्दो अवधारणे । प्राणानां वसुत्वे युक्तिमाह - **एते हीदं सर्वं वासयन्ति** । शरीराणाम् अशैथिल्यलक्षणवासस्य प्राणाधीनत्वात् इति भावः ।।

**आ.भा.** - पुत्रस्य आयुष्कामनया उपासनं पूर्वं कथितं । तदर्थं मन्त्रजपोऽपि प्रदर्शितः । सम्प्रति आत्मनो दीर्घजीवनार्थम् उपासनं जपं च दर्शयितुमाह - **पुरुषो वाव** इत्यादि । दीर्घकालं जीवन्नेव पुरुषः पुत्रादिफलेन संयुक्तः सम्भवेत् । अल्पजीवनवतां तादृशफलप्राप्त्यसम्भवात् । तस्मात् आत्मानं यज्ञं सम्पादयति दीर्घजीवनप्राप्तये पुरुषः । तत्र पुरुषो दीर्घजीवनसहितो देहेन्द्रियादिमान् । **वाव** इति । निपातो अवधारणप्रयोजनकः । स च एतादृशः **पुरुषः** एव **यज्ञः** । कथं पुरुषो यज्ञ इति आशङ्कायां पुरुषस्य यज्ञसादृश्यं दर्शयति **तस्य** इत्यादि । **तस्य** - पुरुषाख्यस्य यज्ञस्य **यानि** - आद्यानि **चतुर्विंशति वर्षाणि** आयुषः तत् प्रातस्सवनम् । तत्र चतुर्विंशतिवर्षे प्रातस्सवनदृष्टिः कर्तव्या इत्यर्थः । तत्र कारणं दर्शयति - **चतुर्विंशत्यक्षरा गायत्री** - गायत्रीछन्दसि चतुर्विंशति अक्षराणि समनुगतानि । **गायत्रं** - गायत्रीछन्दस्कम् विधियज्ञस्य **प्रातस्सवनम्** - प्रातस्सवनस्य गायत्रीछन्दस्कत्वात् गायत्रीछन्दसश्च चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षे प्रातस्सवनदृष्टिः युज्यते एव इति भावः । **तदस्य** इत्यादि । **अस्य** - उक्तोपासकस्य पुरुषयज्ञस्य **तत्** - प्रातस्सवनम्[१] **वसवः** - तदाख्यदेवाः **अन्वायत्ताः** - स्वामित्वेन अनुगताः । सवनदेवतारूपेण स्वामिनः यतः प्रसिद्धयज्ञे प्रातस्सवनस्य वसवः एव देवताः इति । विधियज्ञवत् प्राप्तान् अग्नीन् वसूंश्च निवर्तयति । **प्राणा वाव** इति । **प्राणाः** - वागादयः वायवश्च ते एते एव प्राणाः पुरुषयज्ञे वसुपदबोध्याः भवन्ति । न तु वसुपदवाच्याः

---

१. प्रातःसवनम् - गायत्रीछन्दः - २४ वर्षाणि । माध्यन्दिनसवनम् - त्रिष्टुप् छन्दः - ४४ वर्षाणि । सायंसवनम्- जगतीछन्दः ४८ वर्षाणि । आहत्य - ११६ वर्षाणि ।

गायत्र्या वसवः - (पिङ्गलछन्दस्सूत्रम् - ३-३) यत्र गायत्र्याः पादो अभिधास्यते तत्राष्टाक्षरो ग्राह्यः । त्रिपदा गायत्र्याः चतुर्विंशत्यक्षराणि ।।

वसवः अत्र परिगृहीताः भवन्ति । प्राणानामेव वागादीनां वसुत्वे युक्तिम् आदरयति श्रुतिः **एते हीदम्** इत्यादि । **हि** शब्दो हेत्वर्थकः । यस्मात् कारणात् **एते** - वागादिकाः प्राणाः **इदं** - पुरुषादिप्राणिजातम् अस्मिन् शरीरे **वासयन्ति** - स्थापयन्ति । अस्मिन् देहे प्राणादिषु वसत्सु एव सर्वमिदं प्राणिजातं वसति नान्यथा । तथा शरीराणाम् अशैथिल्यलक्षणवासस्य प्राणाधीनत्वात् । तस्मात् वसनात् वासनाच्च प्राणाः एव वसवः, न तु विधियज्ञीयाः वसवोऽत्र वसवः ।।

**सु.** - उपदिष्टम् उपासनं पुत्रदीर्घायुःफलकम् । अथ उपदिश्यते आत्मनः दीर्घायुःफलकम् उपासनम्; जीवन् हि भद्राणि पश्येत् । **पुरुषो वाव यज्ञः** - योऽसौ जीवनधर्मा प्रसिद्धः पुरुषः सोऽयं यज्ञः । जीवन् तम् आत्मानं यज्ञत्वेन चिन्तयेत् इति भावः । अव्यवहिते खण्डे पुरुषे यज्ञसम्पत्तिप्रकारं वक्ष्यति - **सः यदशिशिषति** इत्यादिना । इदानीं पुरुषस्य आयुः त्रेधा विभज्य तत्र प्रातस्सवनादिदृष्टीः विदधाति । **तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातस्सवनम्** - पुरुषस्य यानि आजन्मतः चतुर्विंशति वर्षाणि प्राथमिकविभागावरुद्धानि तान्येव प्रातस्सवनम् । तत्र प्रातस्सवनदृष्टिः कार्या इति भावः । तत्र तदध्यासे निमित्तसाम्यमाह - गायत्रीच्छन्दस्कं प्रातस्सवनम्, गायत्री च चतुर्विंशत्यक्षरा । आयुषः प्राथमिकोऽयं विभागस्तु चतुर्विंशतिवर्षकः । तत्संख्यासामान्यात् तत्र तदध्यासो युक्तः इति भावः । स चेत् अयम् आयुर्विभागः प्रातस्सवनम् **वसवः** - तदनुबन्धिनः सम्पाद्याः प्रातस्सवनस्य हि ईशानाः वसवः श्रूयन्ते । तत्राह - **तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसवः** - प्रसिद्धयज्ञसम्बन्धिनः प्रातस्सवनस्य वसवः **अन्वायत्ताः** अनुसम्बद्धाः । अस्य प्रातस्सवनस्य अन्वायत्ताः, वसवस्तु प्राणाः । प्राणेषु वसुदृष्टिः कार्या इति भावः । तत्र तदध्यासे निमित्तमाह - **एते हीदं सर्वं वासयन्ति** - **एते** प्राणाः **हि इदं सर्वं** - शरीरेन्द्रियादि पुरुषस्य **वासयन्ति** - स्थापयन्ति, अविशीर्णतया दृढयन्ति इति यावत् । तस्मात् वासयितृत्वगुणयोगात् वसुपदप्रवृत्त्या वसुदृष्टिः प्राणेषु उपपन्ना इति भावः ।।

**तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात् प्राणा वसवः । इदं मे प्रातस्सवनं । माध्यन्दिनँ सवनमनु सन्तनुतेति । माऽहं प्राणानां वसूनां मध्ये यज्ञो विलिप्सीयेति । उद्धैव तत एति, अगदो ह भवति ।। २ ।।**

**प्र. - तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् । तं** - पुरुषविद्यानिष्ठम् **एतस्मिन् वयसि** - चतुर्विंशतिवर्षात्मके वयसि **किञ्चित्** - रोगादिकम् **उपतपेत्** - बाधेत चेत् इत्यर्थः । **स ब्रूयात् प्राणाः वसवः । इदं मे प्रातस्सवनं । माध्यन्दिनँ सवनमनु सन्तनुतेति** इत्यादि । तदा इमं मन्त्रं **सः** - उपासकः **ब्रूयात्** - जपेत् । हे **प्राणा वसवः !** यज्ञरूपस्य मम अधुना **प्रातस्सवनं** प्रवर्तते । **इदं** - प्रवर्तमानं प्रातस्सवनं माध्यन्दिनसवनेन अविच्छिन्नं कुरुत । प्रातस्सवनेशानां **प्राणानां** वसूनां मध्ये **यज्ञोऽहं** - यज्ञरूपोऽहं **मा विलोप्सीय** - लुप्तो मा भूवम् । छान्दसो माङि लुङभावः । मा शब्दो वा । इति मन्त्रं जपेत् इत्यर्थः । **उद्धैव तत एति अगदो ह भवति । ततः** - उपतापात् **उदेति** - उद्गच्छति । **अगदो भवति** - अरोगो भवति इत्यर्थः । एवम् उत्तरत्रापि ।।

**आ.भा. - तं** - यज्ञसम्पादकं पुरुषविद्यानिष्ठम् उपासकं **चेत्** - कदाचित्, कस्मिंश्चित् काले इत्यर्थः । **एतस्मिन्** - प्रातस्सवनसम्पन्ने **वयसि** - चतुर्विंशतिवर्षात्मके अवस्थाविशेषलक्षणे **किञ्चित्** - कफवातपित्तादिवैगुण्यजनितमरणादिशङ्काहेतुभूतं रोगादिकम् **उपतपेत्** - दुःखम् अप्रीतिलक्षणं समुत्पादयेत् यदि तदा सः यज्ञसम्पादकः उपासकः पुरुषः आत्मानं यज्ञं मन्वानः इमं वक्ष्यमाणलक्षणं मन्त्रं **ब्रूयात्** - जपेत् । मन्त्रस्य रूपमेव दर्शयति - **प्राणाः वसवः** इत्यादि । हे **प्राणाः वसवः ! मे** - मम यज्ञरूपस्य सम्प्रति प्रातस्सवनं प्रवर्तते । **इदं** - प्रवर्तमानं प्रातस्सवनं **माध्यन्दिनँ सवनमनुसन्तनुत** - माध्यन्दिनेन सवनेन आयुषा सहितम् एकीभूतं कुरुत । माध्यन्दिनसवनेन अविच्छन्नं कुरुत इत्यर्थः । **अहं** - यज्ञरूपः उपासकः तत्र भवतां प्राणानां **वसूनां** - प्रातस्सवनेशानां मध्ये तेषु पश्यत्सु **मा विलोप्सीय** - विच्छिन्नो लुप्तो मा भूवम् । **इतिशब्दोऽत्र** मन्त्रपरिसमाप्तिवचनः । **उत् ह एव तत एति** । सः यज्ञरूपः पुरुषः एतादृशमन्त्रजपकरणात् **ततः** - उपतापात् मरणादिशङ्काप्रयोजकात् **उदेति** - उद्गच्छति । उपतापात् अतिक्रान्तो भवति । उद्गम्य विमुक्तस्सन् **अगदः** - व्याध्यादिरहितो भवति । मन्त्रजपात् व्याध्यादिकम् अतिक्रम्य सर्वथा नीरुजो भवति इत्यर्थः ।।

**सु. - तं चेदस्मिन्वयसि किञ्चिदुपतपेत्** - एवम् आत्मनि पुरुषे यज्ञभावनां कुर्वन्तम् उपासकं प्रथमे वयसि रोगादिकं पीडयेत्, तदा सः - पुरुषमात्मानं यज्ञं भावयन् एवं **ब्रूयात्** ; किमिति ? हे **प्राणाः वसवः !** प्रातस्सवनेशानाः प्राणलक्षणाः वसवः **इदं मे प्रातस्सवनं माध्यन्दिनं सवनमनु सन्तनुत** - अद्य प्रवर्तमानं चतुर्विंशतिवर्षात्मकप्रात

स्सवनं वर्तिष्यमाणेन चतुश्चत्वारिंशद्वर्षात्मकमाध्यन्दिनसवनेन **अनुसन्तनुत,** सम्बद्धं कुरुत । तेन सह अविच्छिन्नं कुरुत इति यावत् । **माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति -** यज्ञरूपोऽहं प्रातस्सवनेशानां प्राणलक्षणानां वसूनां मध्ये युष्मदाधिपत्यसमये एवेति यावत् । मा विलोपं प्राप्नुयाम्, मृत्युर्माभूदिति यावत् । इति इत्यस्य ब्रूयात् इत्यनेन सम्बन्धः । एवम् अनुध्यानपूर्वकम् इदं पठन् **उद्धैव तत एत्यगदो ह भवति -** तत आपद् **उदेत्येव -** उद्गच्छत्येव । **अगदो भवति -** अरोगो भवति । **ह** इति प्रसिद्धौ । इदं च फलदाढर्याय ।।

**[माध्यन्दिनसवनम्]**

**अथ यानि चतुश्चत्वारिंशद्वर्षाणि, तन्माध्यन्दिनँ सवनम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् ; त्रैष्टुभं माध्यन्दिनँ सवनम् । तदस्य रुद्रा अन्वायत्ताः । प्राणा वाव रुद्राः । एते हीदँ सर्वं रोदयन्ति ।। ३ ।।**

**प्र. - अथ यानि चतुश्चत्वारिंशद्वर्षाणि** इत्यादि । **प्राणा वाव रुद्राः । एते हीदँ सवँ रोदयन्ति ।** यौवने इन्द्रियाणाम् अत्यन्तं विषयप्रावण्यजनकतया पुरुषान् रोदयन्ति इति रुद्रत्वम् उपपन्नम् इत्यर्थः ।।

**आ.भा. - अथ यानि** पुरुषयज्ञस्य चतुश्चत्वारिंशद्वर्षाणि **तत् -** तानि **माध्यन्दिनं सवनं -** माध्यन्दिनप्रभवम् । चतुश्चत्वारिंशद्वर्षात्मके आयुषो भागे माध्यन्दिनसवनदृष्टिः कर्तव्या इति । तत्र कारणं दर्शयति - **चतुश्चत्वारिंशत्** इत्यादि । यतः त्रिष्टुप् **चतुश्चत्वारिंशदक्षरा -** चतुश्चत्वारिंशदक्षरघटिताः ततः **त्रैष्टुभं -** त्रिष्टुप्छन्दस्कं[1] माध्यन्दिनं सवनम् । **तदस्य** अस्य उपासकस्य **तत् -** माध्यन्दिनं सवनम् **रुद्राः अन्वायत्ताः -** स्वामित्वेन अनुगताः । विधियज्ञे माध्यन्दिनसवनस्य रुद्रस्वामिकत्वात् । विधियज्ञप्रथितान् रुद्रान् व्यावर्तयति **प्राणाः वाव** इत्यादि । **प्राणाः** वागादयः वायवश्च रुद्राः न तु विधियज्ञसम्बन्धिनः । कथमेते प्राणाः रुद्राः तत्राह - **एते हीदम्** इत्यादि । **एते -** वागादयः प्राणाः **इदं -** प्राणिजातं **रुदन्ति** - रोदयन्ति इति रुद्राः, क्रूराः हि मध्यमे वयसि, तस्मात् रुद्राः । युवावस्थायाम् इन्द्रियाणाम् अतिशयेन विषयप्राबल्यजनकत्वेन एते पुरुषान् रोदयन्ति । तस्मात् कारणात् एतेषु रुद्रत्वम् उपपद्यते इति भावः ।।

---

१. त्रिष्टुभो रुद्राः - (पिङ्गलछन्दःसूत्रम् ३-६) त्रैष्टुभः पाद इत्युक्ते सर्वत्र एकादशाक्षरो गृह्यते ।

**सु.** - यः पुरुषस्य चतुर्विंशतिवर्षतः उपरितनः चतुश्चत्वारिंशद्वर्षसमुदायात्मकः आयुषो मध्यमो विभागः तदेव माध्यन्दिनं सवनम् । तस्मिन् तद्दृष्टिः कार्या इति यावत् । तत्र निमित्तम् उच्यते - **चतुश्चत्वारिंशदक्षरा** इति । माध्यन्दिनं सवनं त्रिष्टुप्छन्दस्कम् । त्रिष्टुप्छन्दस्तु चतुश्चत्वारिंशदक्षरपरिमितम् । तदेवं सङ्ख्यासामान्यात् तस्मिन् तद्दृष्टिः इति भावः । माध्यन्दिनस्य प्रसिद्धस्य रुद्राः ईशानाः । अस्य च ईशानाः रुद्राः प्राणाः एव । कथं तेषां रुद्रत्वम् ? एते हीदं सर्वं रोदयन्ति, तत् प्राणानां रुद्रत्वं समुचितम् इति भावः ।।

**तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात् प्राणाः रुद्राः इदं मे माध्यन्दिनँ सवनं तृतीयसवनमनु सन्तनुतेति । माऽहं प्राणानाँ रुद्राणां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एति ; अगदो ह भवति ।। ४ ।।**

**प्र.** - **तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् । एतस्मिन् वयसि** - चतुर्विंशतिवर्षात् ऊर्ध्वम् अष्टषष्टिवर्षमध्ये इत्यर्थः । **प्राणानां रुद्राणां मध्ये** - माध्यन्दिनसवनेशानां भवतां मध्ये इत्यर्थः ।।

**आ.भा.** - **तं चेत्** - तम् आत्मानं यज्ञं मन्वानं यदि कदाचित् **एतस्मिन् वयसि** - चतुर्विंशतिवर्षादनन्तरम् अष्टषष्टिवर्षमध्ये किञ्चित् रोगादिकम् **उपतपेत्** - मरणादिशङ्काम् उत्पादयेत् तदा **सः** - उपासकः **प्रब्रूयात्** - वक्ष्यमाणं मन्त्रम् उपजपेत् । **हे प्राणाः रुद्राः ;** यज्ञरूपस्य **मे** - मम उपासकस्य **इदं** - प्रवर्तमानं माध्यन्दिनं सवनम् **तृतीयसवनमनु सन्तनुत** - तृतीयसवनेन अविच्छिन्नं कुरुत इत्यर्थः। इतिशब्दो मन्त्रसमाप्तिसूचकः । प्राणानां रुद्राणां माध्यन्दिनसवनेशानां मध्ये तेषु पश्यत्सु अहं यज्ञलक्षणः पुरुषो **मा विलोप्सीय** - लुप्तो मा भूवम् । **उद्धैव** ततः उपतापात् रोगात् सः **उदेति** - उद्गच्छति, **अगदः ह** - नीरुजः भवति इति । मन्त्रजपकरणेन रुद्रप्रभावात् सर्वरोगविमुक्तः स्वस्थः भवति इत्यर्थः ।।

**सु.** - **तं च** इत्यादि स्फुटम् ।।

**अथ यान्यष्टाचत्वारिँशद्वर्षाणि, तत् तृतीयसवनम् अष्टाचत्वारिँशदक्षरा जगती । जागतं तृतीयसवनं । तदस्यादित्या अन्वायत्ताः । प्राणा वाव आदित्याः । एते हीदँ सर्वमाददते ।। ५ ।।**

**प्र. - अथ यान्यष्टाचत्वारिंशद्वर्षाणि** इत्यादि । **प्राणा वाव आदित्या एते हीदं सर्वमाददते** । सर्वस्य विषयजातस्य आदानात् प्राणानाम् आदित्यत्वम् इत्यर्थः ।।

**आ.भा. - अथ यानि** । उपासकस्य **अष्टाचत्वारिँशद्वर्षाणि** तत् तदेव तृतीयसवनं तत्र अवस्थाविशेषे तृतीयसवनदृष्टिः कर्तव्या इति । तत्र कारणमाह - **अष्टाचत्वारिंशदक्षरा जगती** - तृतीयसवनस्य जगतीछन्दस्कत्वात्, जगती हि अष्टाचत्वारिंशदक्षरघटिता । तस्मात् - **जागतं** - जगतीछन्दस्कं तृतीयं सवनम् । **तदस्य** इत्यादि **अस्य** - उपासकस्य **तत्** - तृतीयसवनम् आदित्याः **अन्वायत्ताः** - आदित्याः स्वामित्वेन अनुगताः । विधियज्ञे तृतीयसवनस्य आदित्यस्वामिकत्वात् इति भावः । प्रसिद्धादित्यान् पुरुषयज्ञे व्यावर्तयति - **प्राणाः वाव** इत्यादि । **प्राणाः** - वागादयः वायवश्चैव आदित्यः न तु विधियज्ञीयाः । सर्वस्यापि विषयजातस्य आदानात् प्राणानाम् आदित्यत्वं भवतीति भावः । एते एव प्राणाः **इदं सर्वं** विषयजातम् **आददते** - आहरन्ति इत्यर्थः ।।

**सु. - एते हीदं सर्वमाददते** - एते प्राणाः चक्षुरादिभिः इन्द्रियैः इदं रूपादि सर्वम् आददते ।। ४-६ ।।

[तृतीयसवनम्]

**तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा आदित्याः इदं मे तृतीयसवनम् आयुरनु सन्तनुते'ति । 'माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीये'ति । उद्धैव तत एति ; अगदो हैव भवति ।। ६ ।।**

**प्र. - तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्** इत्यादि । **एतस्मिन् वयसि** - अष्टषष्टिवर्षात् ऊर्ध्वं षोडशोत्तरशतवर्षमध्ये इत्यर्थः । **तृतीयसवनम् आयुरनुसन्तनुतेति** । तृतीयसवनात्मकम् आयुः आसमाप्ति अविच्छिन्नं कुरुत इत्यर्थः । **प्राणानामादित्यानां मध्ये** । तृतीयसवनस्वामिनां भवतां मध्ये इत्यर्थः ।।

**आ.भा. - तं चेत्** इत्यादि । **तं** - पुरुषम् उपासकं **चेत्** - यदि कदाचित् **एतस्मिन् वयसि** - अष्टषष्टिवर्षात् अनन्तरं षोडशाधिकशतवर्षमध्ये **किञ्चित्** रोगादिकं **उपतपेत्** - पीडयेत् तदा **सः** - उपासकः **ब्रूयात्** - एतत् वक्ष्यमाणं मन्त्रं जपेत् प्रब्रूयात् इति । हे **प्राणाः !** आदित्याः वागादयः ! **मे** - मम यज्ञरूपस्य संप्रति **इदं** - प्रवर्तमानं तृतीयसवनम् । **आयुरनु सन्तनुत** तृतीयसवनलक्षणम् आयुः समाप्तिपर्यन्तम् अविच्छिन्नं कुरुत इति **प्राणानामादित्यानां** - तृतीयसवनेशानां भवतां **मध्ये** - यज्ञरूपोऽहं **मा विलोप्सीय** - लुप्तो मा भूवम् । एतन्मन्त्रजपकरणात् **ततः** उपतापात् । **स उदेति** । उद्गच्छति **अगदः** - रोगरहितश्च भवति इति ।।

**[पुरुषविद्यायाः फलम्]**

**एतद्ध स्म वैतद् विद्वानाह महिदास ऐतरेयः, 'स किं म एतदुपतपसि, योऽहमनेन न [1]प्रैष्यामी'ति[1] । [2]स ह[2] षोडशं वर्षशतमजीवत् । प्र ह षोडशं वर्षशतं जीवति, य एवं वेद ।। ७ ।।**

**।। इति षोडशः खण्डः ।।**

**प्र. - एतद्ध स्म वै तत् विद्वानाह महिदास ऐतरेयः** इत्यादि । हे रोग ! **सः** त्वं **मे** - मां **किं** - कस्मात् **एतत्** - एवं प्रकारेण **उपतपसि, योऽहं** पुरुषविद्यानिष्ठः त्वत्कृतेन **अनेन** उपतापेन **न प्रैष्यामि** - न मरिष्यामि । अतः तव श्रमः वृथा एव इति, **एतत्** - पुरुषविज्ञानस्वरूपं विद्वान् इतरपुत्रो महिदासनामा, आह स्म इत्यर्थः । **ऐतरेयः ।** शुभ्रादित्वात् इतरशब्दात् अपत्यार्थे ठक् । **स ह षोडशं वर्षशतमजीवत् । सः** - महीदासः **षोडशं वर्षशतं** - षोडशाधिकं वर्षशतम् अजीवत् इत्यर्थः । 'तदस्मिन्नधिकमिति दशान्ताड्डः' (पा.सू.५-२-४५) इति षोडशशब्दात् डप्रत्ययः।अतो विद्यायां फलप्रापकत्वनिश्चयवतोऽवश्यं फलप्राप्तिः भवति इति भावः । अन्योऽपि एवंवित् षोडशं वर्षशतं जीवति इत्याह - **प्र ह षोडशं वर्षशतं जीवति, य एवं वेद ।** स्पष्टोऽर्थः ।।

**आ.भा. - एतद्ध** इत्यादि । **एतत्** - पुरुषं यज्ञलक्षणं दर्शनं **स्म वै** किल **विद्वान् महिदासः** - महिदासनामकः ऐतरेयः इतरायाः अपत्यम्, **आह** - उक्तवान् । किमुक्तवान् तत्राह - **स किं मे** इत्यादि। हे रोग ! **सः** त्वं **किं** - कस्मात् कारणात् **एतत्** - एवं प्रकारेण **मे** - माम् **उपतपसि** - पीडां प्रयच्छसि । यस्मात् कारणात् पुरुषविद्यानिष्ठः

---

1. प्रेष्यामि - शाङ्करपाठः तथा माध्वपाठः । 2. स ह - माध्वपाठः ।

अहं भवत्सम्पादितोपतापनेन **न प्रेष्यामि** - न मरिष्यामि। तस्मात् तव श्रमो निरर्थकः एव । इत्येवमाह महिदासः इति । **सः ह** महिदासः, एतद्विद्याप्रभावात् **षोडशवर्षशतमजीवत्** - षोडशोत्तरवर्षशतं यावत् प्राणधारणम् अकुरुत । **यः** - कश्चित् अन्योऽपि उपासकः **एवं** - यथोक्तं यज्ञसम्पादनं **वेद** - विजानाति सोऽपि षोडशाधिकं वर्षशतं जीवति इति ।।

**सु.** - अथ अस्याः पुरुषविद्यायाः फलं संवादेन द्रढयन्नाह - **एत इति** । **तद्विद्वान्** - तदिदं पुरुषलक्षणयज्ञस्वरूपं विद्वान्, पुरुषविद्यानिष्ठः नाम्ना **महिदासः**, **ऐतरेयः** - इतरायाः अपत्यम्, **एतदाह स्म वै** । किमाह? इदमाह - रोगं सम्बोध्य, त्वं **किं वृथा मे** - पुरुषविद्यानिष्ठं मां **एतत्** - उपतपनम् **उपतपसि ?** अनेन उपतपनेन **न प्रेष्याम्यहम्**, तव प्रयासः विफलः इति यावत् । **सः** हि महिदासः **षोडशं वर्षशतमजीवत्** । इदानीमपि **य एवं वेद** - उपास्ते सः **षोडशं वर्षशतं** प्रकर्षेण **जीवति हि** जीवेत् एव इत्यर्थः ।।

**।। इति षोडशखण्डभाष्यम् ।।**

## सप्तदशः खण्डः

### [पुरुषस्य यज्ञसादृश्यनिरूपणम्]

**स यदशिशिषति, यत्पिपासति, यन्न रमते, ता अस्य दीक्षाः ।। १ ।।**

**प्र.** - तथा पुरुषस्य यज्ञसादृश्यमेव निरूपयति । **स......दीक्षाः** । अशनाया-पिपासा-रत्यभावानां दुःखात्मकत्वेन दीक्षात्वं कल्प्यम् इत्यर्थः ।।

**आ.भा.** - पुनरपि पुरुषस्य विधियज्ञसादृश्यमेव दर्शयति - **स यत्** इत्यादि । **सः** - उपासकः **यत्** - वस्तु **अशिशिषति** - अशितुं भोक्तुं इच्छति अथ च **यत्पिपासति** - पातुम् इच्छति **यन्न रमते** इष्टाद्यप्राप्तिनिमित्तम् यदेवं जातीयकं दुःखम् अनुभवति **ता अस्य** - उपासकस्य **दीक्षा** - अशनायापिपासारत्यभावानां दुःखरूपत्वात् दीक्षात्वं कल्पनीयम् इति दुःखसमानत्वात् विधियज्ञस्य वा इति ।।

**सु.** - पुरुषो **यदशिशिषति** अत्तुम् इच्छति इति यत्, **यच्च पिपासति** पातुम् इच्छति, **यन्न रमते** - रतिं न करोति; **ताः** एव इमा अशिशिषादयः **अस्य** -

यज्ञलक्षणपुरुषस्य **दीक्षाः** - दीक्षायाः दुःखरूपत्वात् अशिशिषादीनां च तथात्वात् तासु दीक्षात्वसम्पत्तिः इति भावः ।।

**अथ यदश्नाति, यत्पिबति, यद्रमते तदुपसदैरेति ।। २ ।।**

**प्र. - अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति** । अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत् सुखरूपत्वात् उपसद्रूपत्वम् । **तदुपसदैरेति** - उपसद्भिः साम्यम् एति । उपसद्दृष्टिः तासु कर्तव्या इत्यर्थः ।।

**आ.भा. - अथ यत् अश्नाति । यत् पिबति यद्रमते** - रतिम् अनुभवति इष्टादिसंयोगात् तदुपसदैः समानतामेति । उपसदां च पयोव्रतनिमित्तकं सुखं विद्यते । अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत् सुखरूपत्वेन उपसद्रूपत्वम् इति भावः । अशनपानरतिषु उपसद्दृष्टिः कर्तव्या इत्यर्थः ।।

**सु. - यदश्नाति यत्पिबति यद्रमते,** तदशनादि, उपसदैः प्रसिद्धयज्ञानुबन्धिभिः कर्मविशेषैः **एति** साम्यम् । अशनादिकमेव अस्य पुरुषयज्ञस्य उपसत्क्रिया इति भावः । **तत्** - तेन अशनादिना, विभक्तिलोपः छान्दसः । असौ पुरुषयज्ञः **उपसदैरेति** सम्बन्धमिति वा अर्थः, आशयस्तु स एव । उपसत्क्रियायाः पयोव्रतसान्निध्यात् यजमानस्य भवति मनस्तुष्ट्यवकाशः । अशनादिषु च तद्योगात् उपसद्भावः समुचितः इति बोध्यम् ।।

**[यज्ञस्य स्तुतशस्त्राणि]**

**अथ यद्धसति, यज्जक्षति, यन्मैथुनं चरति, स्तुतशस्त्रैरेव तदेति ।। ३ ।।**

**प्र. - यद्धसति, यज्जक्षति, यन्मैथुनं चरति, स्तुतशस्त्रैरेव तदेति** । हास-भक्षण-मैथुनादीनां शब्दवत्त्वसाम्यात् स्तुतशस्त्रैः साम्यम् एति इत्यर्थः ।।

**आ.भा.** - अथ यत् हसति, यत् जक्षति भक्षयति, यन्मैथुनं चरति तत् स्तुतशस्त्रैः एव समानताम् **एति** - प्राप्नोति शब्दवत्त्वसामान्यात् ।।

**सु. - अथ यद्धसति** इत्यादि हासादीनि शब्दवत्त्वसाम्यात् स्तुतशस्त्रस्थानीयानि भावयेत् इति भावः ।।

**अथ यत् तपो दानमार्जवमहिंसा सत्यवचनमिति, ता अस्य दक्षिणाः ।। ४ ।।**

**प्र. - अथ यत्तपोदानमार्जवमहिंसा सत्यवचनमिति । ता अस्य दक्षिणाः -** दक्षिणादृष्टिः तेषु कर्तव्या इत्यर्थः। [1]धर्मपुष्टि[1]करत्वसाम्यात् इति भावः ।।

**आ.भा. - अथ यत् तपो दानम् आर्जवम् अहिंसा सत्यवचनमिति, ता अस्य** दक्षिणाः । तपःप्रभृतिषु दक्षिणादृष्टिः कर्तव्या ।।

**सु. - अथ यत्तपः** इत्यादि । तपोदानादि **अस्य** - पुरुषलक्षणयज्ञस्य दक्षिणाः धर्मपोषकत्वसामान्यात् ।

**[पुरुषयज्ञस्य सवनावभृथौ]**

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ।। ५ ।।**

**प्र. - तस्मादाहुस्सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य** । यतो हेतोः पुरुषस्य एव यज्ञरूपत्वं अत एव यथा यज्ञं करिष्यमाणे पुरुषे देवदत्तः सोमं सोष्यति इति प्रयुञ्जते तथा यदा माता तं पुरुषं जनयिष्यति - तदा पुरुषस्य उत्पादनं प्रतीक्ष्य - पुरुषं सोष्यति इति प्रयुञ्जते लोकाः । यागानन्तरम् असोष्ट सोमं यज्ञदत्त इतिवत् असोष्ट माता पुरुषमिति उत्पत्तेः पश्चात् प्रयुञ्जते । ततश्च पुरुषस्य उत्पादनमेव सोष्यति असोष्टेति शब्दसम्बन्धित्वसामान्यात् यज्ञानुष्ठानलक्षणम् उत्पादन[2]म् इत्यर्थः[2] । **तन्मरणमेवावभृथः ।** समाप्तित्वसाम्यात् मरणे अवभृथत्वं पश्येत् इति भावः ।।

**आ.भा. -** धर्मपुष्टिकरत्वसामान्यात् ताः यस्मात् कारणात् पुरुषो यज्ञः **तस्मात्** कारणात् तदा तस्य माता तं जनयिष्यति । तदा अन्ये लोकाः एवम् **आहुः सोष्यति**

---

1. धर्मतुष्टि - अ,आ ।
2. यज्ञपक्षे षुञ् अभिषवे इति धातुः, उत्पत्तिपक्षे षूङ्प्राणिप्रसवे इति धातुः । इत्यधिकः पाठः खकोशे ।

इति तस्य मातरम् । यदा पुनः प्रसूता भवति तदा **असोष्ट** पूर्णिका इति विधियज्ञे **असोष्ट** - सोमं देवदत्त इतिवत् असोष्ट माता पुरुषम् इत्युत्पत्तेः पश्चात् प्रयुज्ञते । **पुनः उत्पादनमेवास्य** तत्पुरुषाख्यस्य यज्ञस्य यत् सोष्यति असोष्टेति शब्दसम्बन्धित्वं विधियज्ञस्येव । किञ्च **तन्मरणमेव अस्य** - पुरुषयज्ञस्य **अवभृथः** समाप्तिसामान्यात् इति ।।

**सु.** - यस्मात् पुरुषो यज्ञः, तस्मात् सोष्यति सुतम् इयम्, **असोष्ट** सुतम् इयमिति लोके प्रयुज्यते । प्रसिद्धे यज्ञे ह्यसौ सोमं सोष्यति असौ सोमम् असोष्ट इति प्रयुज्यते । तदेवं सोष्यति इत्यादिप्रयोगसामान्यात् पुरुषो यज्ञ इति भावः । प्रसिद्धे इव यज्ञे इह सोष्यति असोष्ट इत्यस्य विषयः कः इत्यत्राह - **पुनरुत्पादनमेव** तदिति । यत्सोष्यति इत्यादिना व्यवह्रियते **तत्** पुरुषस्य उत्पादनमेव उत्पत्तिरेव । जन्मनि सवनदृष्टिः कार्या इति भावः । मरणमेव **अवभृथः** समाप्तिसाम्यात् ।।

[विद्यास्तुतिः]

**तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच, अपिपास एव स बभूव, सोऽन्तवेलायामेतत् त्रयँ प्रतिपद्येत, 'अक्षितमसि', 'अच्युतमसि', 'प्राणसँशितमसी'ति । तत्रैते द्वे ऋचौ भवतः ।। ६ ।।**

**प्र.** - **तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच** । घोरनामा अङ्गिरोगोत्रः कश्चित् ऋषिः **तदेतत्** - पुरुषयज्ञदर्शनं **देवकीपुत्राय, कृष्णाय** - इति शब्दः अध्याहर्तव्यः । कृष्णशेषभूतम्, तत्प्रीत्यर्थम् इति **उक्त्वा** - इति अनुसन्धाय **उवाच** - अनुष्ठितवान् इत्यर्थः । वचेः लक्षणया अनुष्ठानार्थत्वम् । **अपिपास एव स बभूव** । **सः** घोरनामा भगवच्छेषत्वानुसन्धानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन ब्रह्मविद्यां प्राप्य **अपिपासः** - इदम् उपलक्षणम् अपहतपाप्मत्वादिगुणाष्टकस्य ; मुक्तः बभूव इत्यर्थः। ततश्च षोडशाधिकवर्षशतजीवनफलकस्यापि पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसन्धानपूर्वकम् अनुष्ठितस्य ब्रह्मविद्योपयोगित्वमपि अस्ति इति भावः । **सोऽन्तवेलायामेतत् त्रयँ प्रतिपद्येत** । **सः** - भगवच्छेषत्वानुसन्धानपूर्वकपुरुषविद्यासाधितचिरायुष्ट्वानु-गृहीतब्रह्मविद्यानिष्ठः पुरुषः **अक्षितमसि, अच्युतमसि, प्राणसंशितमसि** इत्येतत् मन्त्रत्रयं मरणकाले जपेत् इत्यर्थः । **अक्षितमसि** - क्षयशून्यमसि । **अच्युतमसि** -

स्वरूपस्वभावप्रच्युतिशून्यमसि । **प्राणसंशितमसि** - जगत्प्राणयितृत्वे सति **संशितं** - सूक्ष्मतत्त्वमसि इति ब्रह्मसम्बोधनं । 'शो - तनूकरणे' (धा.पा.११४५) इति हि धातुः । **तत्रैते द्वे ऋचौ भवतः । तत्र** - परब्रह्मविषये **एते ऋचौ** - [1]मन्त्रौ[1] भवतः इत्यर्थः ।।

**आ.भा. - तदेतत्** - यज्ञदर्शनम् **घोरः** - घोरनामकः **आङ्गिरसः** - अङ्गिरसगोत्रोत्पन्नः कश्चित् ऋषिः **देवकीपुत्राय कृष्णाय** शिष्यत्वेन उपनताय **उक्त्वोवाच** प्रोक्तवान् । स च कृष्णः एतद्दर्शनं श्रुत्वा **अपिपास एव स बभूव।** विद्यान्तरेभ्यः निस्पृहो जातः । **सः** एवं यथोक्तयज्ञवित् पुरुषः **अन्तवेलायां** - मरणसमये एतन्मन्त्रत्रयं **प्रतिपद्येत** - जपेत् । किं तत् मन्त्रत्रयं तत्राह - **अक्षितमसि** इत्यादि । उक्तविद्यानिष्ठः पुरुषो मरणकाले एतन्मन्त्रत्रयं जपेत् । **अक्षितमसि** - अक्षितं क्षयरहितमसि । **अच्युतमसि** - स्वरूपस्वभावप्रच्युतिशून्यमसि **प्राणसंशितमसि** - जगत्प्राणयितृत्वे सति संशिते सूक्ष्मतत्त्वमसि इति । **तत्र** - एतस्मिन्नर्थे विद्यास्तावके **द्वे ऋचौ** - मन्त्रौ भवतः ।।

**सु. - तदेतत्** - उक्तदीक्षाद्युपलक्षितपुरुषलक्षणयज्ञचिन्तनम् । गोत्रेण **आङ्गिरसो** नाम्ना **घोरः**, नाम्ना **कृष्णाय** देवक्याः पुत्राय कस्मैचित् शिष्याय **उक्त्वा उवाच** इदम् । य एवम् उपास्ते **सः** अपिपासः एव भवेत् इति पुरुषविद्या स्तूयते । वैधेऽर्थे लिट् । यद्वा - भाविनि अपि फले स्थैर्याविलम्बौ अभिप्रेत्य तथा प्रयोगः । यथा भिषक् औषधं पाययित्वा आर्तं प्रति ब्रूयात् 'गता ते व्याधिः' इति, तथा इहोच्यते, अपगता तस्य पिपासा इति । पिपासा इत्यनेन क्षुत् उपलक्ष्यते । यदस्याः पुरुषविद्यायाः फलं प्राह- षोडशवर्षशतं जीवति इति । तज्जीवनं क्षुत्पिपासोपहतं न दुःखिजीवनं, किन्तु सुखिजीवनम् इति उक्तमेव फलं विशिष्यते ।

"वचेरर्थान्तरे वृत्तिमध्याहारमितेरपि ।
वदतां वचने श्रद्धा रक्ष्यतां फलगौरवात् ।। १ ।।
वचेर्वृत्तिरनुष्ठाने नेया क्लेशेन केवलम् ।
पिपासादुःखशून्ये तु नापिपासापदं तथा ।। २ ।।
अविलम्बेन लब्धार्थो नेच्छया दुःखमश्नुते ।
इच्छा हि न स्वतो हेतुर्दुःखे किन्तु विनार्थतः ।। ३ ।।

अपिपासपदेनैके विद्यान्तरवितृष्णताम् ।
लक्षयन्त्यभिमन्यन्ते व्यवधानेन चान्वयम्"।। ४ ।।

**सः** - पुरुषविद्यानिष्ठः, **अन्तवेलायाम्** - आयुषः अन्तवेलायाम्, **एतत्** - वक्ष्यमाणम् **त्रयम्** - मन्त्रत्रयम्, **प्रतिपद्येत** जप्यतया, जपेत् इति यावत् । किं तत् ? **अक्षितमसि अच्युतमसि प्राणसंशितमसीति** । **अक्षितम्** - अक्षीणम्, न जातु ते क्षयः स्वरूपः इति यावत् । **अच्युतम्** - स्वभावात्, न जातु ते स्वभावेऽन्यथाभाव इति यावत् । **प्राणसंशितमसि** - प्राणस्य यत्संशितं सूक्ष्मं तत्त्वं तदसि । प्राणस्य आधिदैविकं रूपम् आदित्यं तेजः एवं स्तूयते । कथम् अवगम्यते ? चिरायुष्ट्वफलकपुरुषयज्ञदृष्टेः प्राणस्य आधिदैविकरूपस्तुतिर्हि समुचिता । ननु आयुषोऽन्ते किमनेन जपेन ? अङ्गतया एव तत्प्राप्तेः ।

ननु कोऽयमतिशयाः अनेन पुरुषविद्यायाः ? येन तदपेक्षयाऽङ्गता स्यात् । फलं तु सम्पन्नं चिरायुष्ट्वम्, अनिष्पन्ने साधनस्वरूपे अतिशयशून्ये वा फलनिष्पत्तिस्तु न घटते । तत् न अनेन साधनस्य स्वरूपम् अतिशयो वा आधीयते । सत्यम्, अथापि फलभाक् नियम्यते । विधिविलङ्घने च स्यात् प्रत्यवायस्पर्शः । **सः** - पुरुषविद्यानिष्ठः, **अन्तवेलायाम्** - अन्वहं विधीयमानस्य पुरुषे यज्ञचिन्तनस्य समाप्तिसमये, उपासनतो व्युत्थानसमये इति यावत्। एतत् त्रयं प्रतिपद्येत इत्यर्थः । न अद्य शंकावकाशः इति कश्चित् । अपरस्तु अभिप्रैति - **अपिपास एव स बभूव** - सोऽयं पुरुषविद्यानिष्ठः, अपिपास एव स भवति। लकारव्यत्ययश्छान्दसः। अवश्यभाविताम् अभिप्रेत्य पूर्ववत् लक्षणया वा तन्निर्वाहः । पिपासा इति तृष्णा उच्यते - असंकोचन्यायात् । सर्वतो विषयात् वितृष्णा एव भवति इत्यर्थः । चिरायुःसम्पत्तिमुख्यफलकम् इदं पुरुषे यज्ञदर्शनम्, न तेनैव फलेन विश्राम्यति । योजयति च एनं विषयवैतृष्ण्यापादनद्वारा ब्रह्मविद्यायाम् इति यावत् । तस्मात् सोऽन्तवेलायाम् एतत् त्रयं प्रतिपद्येत इति ।

परे तु - चिरायुष्ट्वानुगृहीतब्रह्मविद्यानिष्ठः आयुषोऽन्तवेलायाम् एतत् त्रयं प्रतिपद्येत इति तु व्याचक्षते । अक्षितमसि इत्यादिभिः त्रिभिर्मन्त्रैः यत्स्तुतं तद्विशेषतः स्तुवन्नाह - **तत्रैते** इति । तत्र मन्त्रत्रयेन स्तुते तेजोविशेषे एते ऋचौ भवतः ।।

**आदित् प्रत्नस्य रेतसः। उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम् स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्मज्योतिरुत्तमम् । इति, ज्योतिरुत्तममिति ।। ७ ।।**

**।। इति सप्तदशः खण्डः ।।**

**प्र. - आदित्प्रत्नस्य रेतसः** इति । तयोः ऋचोः अयम् आद्यो मन्त्रः प्रतीकेन गृहीतः । सोऽयं मन्त्रः 'आदित्प्रत्नस्य रेतसः ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवि'[१] (ऋ.सं.८-२-६-३०) इति । अयमर्थः - **प्रत्नस्य** - पुरातनस्य **रेतसः** - जगद्बीजभूतस्य अव्यक्तस्य **आदित्** - आदिभूतम्, संसारसन्तमसनिवारकतया ज्योतिश्शब्दितं परं ब्रह्म 'सदा पश्यन्ति सूरयः' इत्युक्तरीत्या नित्यसूरयः वासरं नित्यप्रकाशरूपं सर्वकालं पश्यन्ति इत्यर्थः । यत् - ज्योतिः 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्युक्तरीत्या **दिवि** - भगवल्लोके परत्वेन **इध्यते** - निरतिशयदीप्तियुक्तविग्रहयुक्तम् इत्यर्थः । **उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरं स्वः पश्यन्त उत्तरम्** इत्यादि । **तमसः** - प्रकृतेः परस्तात् **उत्तरं ज्योतिः** परब्रह्म परिपश्यन्तः, **उत्तरं** - सर्वलोकोर्ध्वं **स्वः** भगवल्लोकं **परिपश्यन्तः** - अत्र **परिपश्यन्तः** इति उभयत्र हेत्वर्थे शतृप्रत्ययः । भगवल्लोकस्य तद्गतपरमात्मनश्च दर्शनाय इति यावत् **देवत्रा** - देवेषु 'देवमनुष्य'......(पा.सू.५-४-५६) इत्यादिना [1]सप्तम्याः[1]त्राप्रत्ययः । **देवं** - द्योतमानं **उत्तमम्** - अर्चिरादिपर्वभूतम् सूर्यरूपं ज्योतिः वयम् - **उदगन्म** - उद्गत्य प्राप्ताः स्म इत्यर्थः । द्विरभ्यासो यज्ञकल्पनासमाप्त्यर्थः ।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणं [2]लिख्यते[2] - गुणोपसंहारपादे - तैत्तिरीयके - 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी'[3] (तै.आर.६-६४) इति श्रुतायाः पुरुषविद्यायाः, 'पुरुषो वाव यज्ञः' इति छान्दोग्याम्नाता पुरुषविद्या न भिन्ना । पुरुषविद्या इति समाख्यैक्यात् । पुरुषसम्बन्धिषु यज्ञावयवत्वकल्पनासाम्यात् । मरणावभृथत्वसाम्याच्च इति पूर्वपक्षे प्राप्ते उच्यते -

---

१. ऋ.सं. ८-२-६-३० ।
आदित्प्रत्नस्य रेतसः इति मन्त्रस्य सायणभाष्यम् । परः दिवा - दिवः परस्तात् द्युलोकस्य उपरि यत् -यदा अयम् इन्द्रः सूर्यात्मना इध्यते - दीप्यते आदित् - अनन्तरमेव प्रत्नस्य - चिरन्तनस्य रेतसः - गन्तुः । री गतिरेषणयोः । अस्मात् स्रुरीभ्यां तुट् च (उ.सू.४-६४१) इत्यसुन् तुडागमश्च । यद्वा - रेत इत्युदकनाम । रेतस्विन उदकवतः । सामर्थ्यात् मत्वर्थो लक्ष्यते । ईदृशस्य इन्द्रस्य सूर्यात्मनः वासरं - निवासकं वासरस्य निवासस्य हेतुभूतं वा ज्योतिः - द्योतमानं तेजः पश्यन्ति सर्वे जनाः । यद्वा - वासरमिति अत्यन्तसंयोगे द्वितीया । कृत्स्नमहरुदयप्रभृत्यास्तमनं यावज्ज्योतिष्पश्यन्ति इत्यर्थः । 'इसुसोः सामर्थ्ये' इति विसर्जनीयस्य षत्वम् ।।

1. सप्तम्यन्तात् - क । 2. उपन्यस्यते - अ । 3. शरीरमिध्म......य ऋतवः ते पशुबन्धाः इति अधिकः पाठः - क ।

'पुरुषविद्यायामपि चेतरेषामनाम्नानात्' (ब्र.सू.३-३-२४) उभयत्र आम्नातयोः पुरुषविद्यात्वेऽपि विद्याभेदः अस्त्येव । कुतः ? इतरेषाम् अनाम्नानात् । 'यत् सायं प्रातर्मध्यन्दिनञ्च तानि सवनानि' (तै.आर.६-६४) इत्यादीनां तैत्तिरीयकाम्नातानां छान्दोग्येऽनाम्नानात् । त्रेधा विभक्तपुरुषायुषस्य एव छान्दोग्ये सवनत्वाम्नानात् । छान्दोग्यश्रुताशिशिषादिदीक्षादित्वपरिकल्पनस्य तैत्तिरीयके अदर्शनात् । यजमानपत्न्यादिपरिकल्पनानां च भिन्नभिन्नत्वात् ।

छान्दोग्ये - 'पुरुषो वाव यज्ञः' इति श्रुतस्य पुरुषे यज्ञत्व[1]कल्पनस्य[1] तैत्तिरीयके अदर्शनाच्च विद्याभेदः एव । न च 'तस्यैवं विदुषो यज्ञस्य' इत्यत्र षष्ठ्यन्तयोः सामानाधिकरण्याश्रयणेन पुरुषे यज्ञत्वकल्पनं तैत्तिरीयकेऽपि अस्तीति वाच्यम् । पुरुषस्यैव, यज्ञत्वे तस्यैव यजमानत्वं विरुद्धम् । यज्ञत्वयजमानत्वयोः एकस्मिन् विरोधात् । किञ्च पुरुषे यज्ञत्वकल्पने हि, विद्वान् यज्ञः आत्मा यजमान इत्येव वक्तव्यं स्यात्; न तु एकवाक्यतया, 'विदुषो यज्ञस्यात्मा यजमानः' इति । अतो विदुषो यज्ञस्य इति व्यधिकरणे षष्ठ्यौ । विद्वत्संबन्धि यज्ञस्य इत्यर्थः । ततश्च 'प्रणवे एव विस्वरः' इति न्यायेन पुरुषस्य यज्ञत्वकल्पनैकरूप्याभावात् विद्याभेदःएव ।

किञ्च छान्दोग्याम्नातायाः, पुरुषविद्यायाः 'प्र ह षोडशं वर्षशतं जीवति' इति षोडशाधिकवर्षशतजीवनं फलत्वेन आम्नातम् । तैत्तिरीयके तु श्रुतायाः पुरुषविद्यायाः 'ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीत' (तै.आर.६-६३) इति पूर्वानुवाकविहितायाः ब्रह्मविद्यायाः 'ब्रह्मणो महिमानमाप्नोति' (तै.आर.६-६३) इति ब्रह्मप्राप्तिफलिकायाः सन्निधौ पठितत्वात् ब्रह्मविद्याङ्गतया ब्रह्मप्राप्तिफलकत्वमेव । अतः फलसंयोगभेदाच्च पुरुषविद्ययोः भेदः इति सिद्धान्तितम् । प्रकृतमनुसरामः ।।

**आ.भा. - आदित् प्रत्नस्य रेतसः** - प्रत्नस्य पुरातनस्य **रेतसः** - जगद्बीजभूतस्य अव्यक्तस्य **आदित्** - आदिभूतं कारणरूपम् **उद्वयं तमसः** यदि तमसः प्रकृतेः **परि** - परस्तात् **ज्योतिः** - प्रकाशलक्षणम्, **उत्तरमुत्तरम् ज्योतिः पश्यन्तो वयमुदगन्म** इति

---

1. परिकल्पनस्य - क ।

व्यवहितेन सम्बन्धः तथा **स्वः** - भगवल्लोकं **पश्यन्तः उत्तरम्** - सर्वलोकोर्ध्वम् । **देवं** - द्योतमानम् । **देवत्रा देवेषु उत्तमम्** - अर्चिरादिपर्वभूतम् सूर्यरूपं ज्योतिः वयम् **उदगन्म** - उद्गत्य प्राप्ताः स्मः **ज्योतिः उत्तम्** इति द्विरभ्यासो यज्ञकल्पनासमाप्तिपरकः ।।

**सु.** - ऋचौ आह । तत्र प्रथमाम् ऋचं 'आदित्प्रत्नस्य रेतसः' इति प्रतीकग्रहणमात्रेण श्रावयति । इयं च ऋक् समग्रा ; 'आदित्प्रत्प्रत्नस्य रेतसः ज्योतिः पश्यन्ति वासरं । परो यदिध्यते दिवि इति' । (ऋ.सं.८-६-३०) । **प्रत्नस्य** - प्राचीनस्य रेतसः कारणस्य, **आदित्** - आदिं तान्तश्छान्दसः प्रयोगः। यदस्य जगतः समग्रस्य प्रथमं बीजभूतं जलम्, तस्यापि तेज आदिभूतम् इति सावित्रं तेजस्तेजस्तत्त्वाभेदेन स्तूयते । यद्वा **आत् इत्** इति अनर्थकौ निपातौ । प्रत्नरेतः इति सूर्य एव वा स्तूयते । तस्य ज्योतिः इति सम्बन्धः । तदिदं सावित्रं तेजः पश्यन्ति केचन प्रणिधानदृष्ट्या। इदमेव तेजो **वासरं** - वासरविभागापादकम् । उदितमात्रे सूर्ये भूतमात्रेण दृश्यते नामालोकात्मकम् इदं तेजः, न तत् इहोच्यते। किन्तु सूक्ष्मं परो यदिध्यते दिवि - यत् परम् अस्मात् भुवि परिदृश्यमानात् किमपि सवितुः देवस्य सूक्ष्मं तेज इध्यते । ऋगन्तरम् **उद्वयम्** इत्यादि । **यत्तमसः पर्युत्तरम्** - अन्धकारप्रतिभटम्, तत्तेजः पश्यन्तः प्रणिधानेन, **उत्तमम्** - श्रेष्ठम् अस्मात् भौमात्, **स्वः** - द्युसम्बन्धि उक्तं तेजः पश्यन्तः प्रणिधानेन, **उदगन्म** - उत्क्रम्य मानुषात् लोकात् प्राप्ताः स्म । कम् ? **देवत्रा देवं** - देवेषु द्योतमानम्, **उत्तमं ज्योतिः** - उत्कृष्टज्योतिर्लक्षणं सूर्यं । यद्वा - आदित्यस्य एव तेजः य एषोऽन्तरादित्ये तस्यापि निर्वाहकः परः पुरुषः। तस्य तेजसा अभेदेन अध्यस्य स्तूयते । यत्प्रत्नं रेतो जगतोऽस्य प्रधानलक्षणं तस्यापि आदिं, द्युलोके दीप्यमानं वासरविभागनिर्वाहकं पश्यन्ति केचन प्रणिधानपराः । तमसोऽज्ञानलक्षणात् प्रकृतेर्वा परम् इति । अन्यत् समानम् । अभ्यासो विद्यापरिसमाप्त्यर्थः ।। ७-८ ।।

**।। इति सप्तदशखण्डभाष्यम् ।।**

## अष्टादशः खण्डः

**[अध्यात्मं मनसि अधिदैवतमाकाशे च ब्रह्मदृष्टिः]**

**मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् । अथाधिदैवतम् । आकाशो ब्रह्मेति । उभयमादिष्टं भवति अध्यात्मञ्चाधिदैवतञ्च ।। १ ।।**

**प्र. -** अध्यात्मं मनसि, अधिदैवतम् आकाशे च ब्रह्मदृष्टिः उपदिश्यते - **मनो ब्रह्मेत्युपासीत** इत्यादिना । **आदिष्टं भवति** - उपदिष्टं भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. -** पूर्वं मनोमयः साकेताधिपतिः परमात्मा, मनोमय आकाशात्मा च इति कथितः । सम्प्रति मनसि आकाशे च परमात्मदृष्टिविधानार्थम् अयमारम्भः । तत्र अध्यात्मं मनसि अधिदैवतम् आकाशे ब्रह्मदृष्टिः उपदेशार्थमाह - **मनो ब्रह्म** इत्यादि । तत्र मनुते इति मनः । अन्तःकरणम् तत् **मनो ब्रह्म** - मनसि ब्रह्म इति कृत्वा **उपासीत** - उपासनं कर्तव्यम् । **इत्यध्यात्मम्** । आत्मानं शरीरेन्द्रियं चाधिकृत्य प्रवर्तमानम् उपासनम् अध्यात्मम् इति । **अथ** - मनसो ब्रह्मरूपत्वकथनानन्तरम् **अधिदैवतम्** - देवताविषयकं दर्शनम् उपासनम् उपदिश्यते । **आकाशो ब्रह्मेति** । आकाशे ब्रह्मदृष्टिः कर्तव्या इति । यथा च ब्रह्म सर्वगतं तथा आकाशस्यापि सर्वगतत्वात् । एवं यथोक्तक्रमेणा उभयं अध्यात्मम् अधिदैवतं च भयं ब्रह्मदृष्टिविषयकम् उपासनम् **आदिष्टम्** उपदिष्टं **भवति अध्यात्मं चाधिदैवतं च** इति ।।

**सु. -** अथ मनसि आकाशे च उभयस्मिन् ब्रह्मदृष्ट्या उपासनम् उपदिश्यते । **मनो ब्रह्मेत्युपासीत, इत्यध्यात्मम्** - अयम् उपासनप्रकारः शरीरे, शरीरान्तर्गते तत्त्वे ब्रह्मदृष्टिः एवमिति यावत् । **अथाधिदैवतम्** - देवतामध्ये ब्रह्मदृष्टिः अनन्तरमेव उपदिश्यते । सा च इत्थम्, **आकाशो ब्रह्मेति** । उभयम् **आदिष्टं भवति अध्यात्मं चाधिदैवतं च** । एवं युगपत् दृष्टिद्वयम् अध्यात्मम् अधिदैवतं च उपदिष्टं भवति । समस्तम् एकम् उपासनम् इति यावत् । उभयम् आदिष्टं भवति इत्युपसंहारात् एवम् अवगम्यते । शरीरे मनसः भूतेषु आकाशस्य सूक्ष्मतया तयोः ब्रह्मदृष्टिविधानम् ।।

**[ब्रह्मणः चतुष्पात्त्वम्]**

**तदेतच्चतुष्पाद् ब्रह्म । वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं पाद इत्यध्यात्मम् ; अथाधिदैवतम् - अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति । उभयमेवादिष्टं भवति अध्यात्मञ्चैवाधिदैवतञ्च ।। २ ।।**

**प्र. - तदेतच्चतुष्पाद् ब्रह्म । तदेतत्** - मन आख्यं ब्रह्म **चतुष्पात्** इत्यर्थः । कथं मनोरूपस्य ब्रह्मणः चतुष्पात्त्वम् इत्यत्राह । **वाक्पादः प्राणः पादः चक्षुः पादः**

**श्रोत्रं पाद इत्यध्यात्मम्** । वागादीनां चतुर्णां मनोनियाम्यत्वात् मनःपादत्वाध्यासो युक्तः इति भावः । इति अध्यात्मम् उक्तमिति शेषः । **अथाधिदेवतम्** । उच्यते इति शेषः । **अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति** । अग्न्यादयः चत्वारो ब्रह्मरूपाकाशस्य उदरलग्नाः पादाः इव भवन्ति इत्यर्थः । **इत्युभयमेवादिष्टं भवति अध्यात्मञ्चैवाधिदैवतञ्च** इति । स्पष्टोऽर्थः ।।

**आ.भा. -तदेतत्** इत्यादि । **तदेतत्** - मन आख्यं ब्रह्म **चतुष्पात्** - चत्वारः पादाः अवयवाः विद्यन्ते अस्य इति चतुष्पात् । ननु मनोरूपस्य ब्रह्मणः कथं चतुष्पादवत्त्वं ? के ते वा चत्वारः पादाः ? तत्राह **वाक्** इत्यादि **वाक् पादः, प्राणः पादः, चक्षुः पादः श्रोत्रं पादः**, वाक् प्राणः, चक्षुः श्रोत्रम् इत्येते पादा इव पादा इति अध्यात्मं पादा मनोरूपस्य ब्रह्मणः । अथ अधिदैवतम् आकाशलक्षणस्य परमात्मनः **अग्निः पादो वायुः**, पादः आदित्यः सूर्यः **पादः, दिशः** प्राच्यादिकाः **पादः** इति एवं प्रकारेण उभयमेव चतुष्पाद् ब्रह्म **आदिष्टं** - उपदिष्टं भवति अध्यात्मञ्चाधिदैवतं च ।। तत्र वाक् मन आख्यस्य ब्रह्मणः चतुर्थः पादः अन्यपादापेक्षया चतुर्थत्वं वाचः । मनो हि वाचा पादेन वक्तव्यविषयं घटादिकम् अधितिष्ठति । तस्मात् मनसः पादः इव वाणी भवति । एवं प्राणो घ्राणः पादः, घ्राणेन गन्धात्मकविषयं प्रतिक्रामति मनः । एवं चक्षुः पादः, श्रोत्रं पादः, इत्येवं क्रमेण अध्यात्मं चतुष्पादत्वं मनसः परमात्मनो भवति इति । **अथ अधिदैवतम् अग्निः वायु आदित्य दिशः** आकाशलक्षणपरमात्मन उदरः इव गवादीनां पादाः इव संलग्नाः समुपलभ्यन्ते । चत्वारो हि अग्न्यादयो ब्रह्मरूपाकाशस्य उदरसँलग्नपादाः इव भवन्ति इत्यर्थः । तस्मात् कारणात् आकाशस्य अग्निप्रमुखाः पादाः इति कथ्यन्ते । एवं क्रमेण अध्यात्ममधिदैवतं चतुष्पादोपदिष्टं भवति इति ।।

**सु.** - उपदिष्टां दृष्टिं दृष्ट्यन्तरेण विशिनष्टि - **तदेतत्** इति । तदेतद् ब्रह्म मनसि आकाशे च अध्यस्यमानं ब्रह्म, **चतुष्पात्** - पादचतुष्टयविशिष्टम् ; के ते पादाः ? वाक् पादः, प्राणः पादः चक्षुः पादः, क्षोत्रं पादः । प्राणोऽत्र घ्राणः, उभयत इन्द्रियाम्नानात् । मनोऽपेक्षया मुख्यप्राणस्य पादत्वानुपपत्तेश्च । न हि मनसो वशे मुख्यः प्राणः । अस्य तु वशे मनः । श्रूयते च एतदन्यत्र प्राणेन्द्रियसंवादे । या च अस्य प्राणाख्यपादस्य वाय्वाख्यपादोपकार्यता 'प्राण एव ब्रह्मणश्चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च' (छां.उ.३-१८-४) इत्यनुपदं श्रूयमाणा सापि नोपपद्येत । यश्च निर्वाहः वायुप्राणयोः एकतत्वत्वात् इति, स च न हृदयङ्गमः । न हि एकतत्त्वतोपपादनेन

अनयोः उपकार्योपकारकभावः सिध्यति । स हि श्रूयते वायुना ज्योतिषा भाति इति । पादान्तरे च एवमेव "वागेव ब्रह्मणश्चतुर्थः पादः, सोऽग्निना ज्योतिषा - चक्षुरेव ब्रह्मणः चतुर्थः पादः, स आदित्येन ज्योतिषा, श्रोत्रमेव ब्रह्मणः चतुर्थः पादः । स दिग्भिर्ज्योतिषा" इति । निर्वाते प्राणनोच्छित्या अस्ति प्राणने कर्मणि वायूपकार्यता मुख्यस्य प्राणस्य इति चेत्, अथापि पादत्वानुपपत्तिः, पूर्वापराननुगुणता च प्रदर्शिता तथैवा अस्ति ।

ननु दृष्टिमात्रम् इह अभिप्रेतम्, न वस्तुतः पादत्वम्, तत्किम् उपपत्तिविचारेण । नैवं, दृष्टिरपि निमित्तसापेक्षा । अन्यथा सर्वत्र सर्वदृष्टिविधानप्रसङ्गात् । कथमपि सम्बद्धे एव दृष्टिविधयोऽपि लोके वेदे च, 'वागादीनां चतुर्णां मनोनियाम्यत्वात् मनः पादत्वाध्यवसायो युक्तः इति भावः' इत्यनेन निमित्तम् उपपादयता निमित्तसापेक्षता स्वीकृतैव । ननु यन्निमित्तं स्वीकृतम् अस्माभिः तत् अनूद्यते त्वया एव, सत्यम्, अनूद्यते नाम । न तु स्वीक्रियते, असङ्गतेः । उपपादितं च असाङ्गत्यम् । यदि वागादीनां चतुर्णाम् इति ग्रन्थे घ्राणो विवक्षितः, वायुप्राणयोः एकतत्त्वत्वात् इति उत्तरग्रन्थो विरुध्येत । उत्तरग्रन्थाविरोधेन पूर्वग्रन्थे चतुर्णाम् इत्यनेन मुख्यप्राणस्य चेत् ग्रहणं तस्य मनोनियम्यता न कथञ्चिदपि । कथञ्चित् उपपद्येत चेत् आग्रहः एव केवलम्, प्रकरणास्वारस्यं तु तदवस्थम् । न च प्राणशब्दस्य घ्राणपरताश्रयणं दूषणम्, सति औचित्ये सामान्यशब्दस्य विशेष्ये पर्यवसानं हि स्वारसिकम् । न केवलमिह तथा, अन्यत्रापि हि श्रूयते - 'अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायत् यत् कल्याणं जिघ्रति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुह्य पाप्मनाऽविध्यन् स यः स पाप्मा' 'य देवमप्रतिरूपं जिघ्रति स एव पाप्मा' (ब.उ.३-३-३) इति । कथं घ्राणस्य वा वायूपकार्यता इति चेत्, श्रूयते हि 'स वायुना गन्धाय भाति' इति, यथा गवादिचतुष्पात् स्ववशे वर्तमानैः पादैः तत्र तत्र क्रामति तथा इदं मनः स्ववशे वर्तमानैः वागादिभिः तत्र तत्रार्थे क्रामति इति युक्तं वागादीनां मनोऽपेक्षया पादत्वम् । **इत्यध्यात्मम्** - इत्ययं पादविभागः शरीरे । यन्मनोब्रह्म शरीरे तस्य एवं पाददृष्टिः विधेया इति भावः । **अथाधिदैवतम्** इत्यादि - यद्भूतेषु आकाशं ब्रह्म तस्य अग्न्यादयः पादाः, उदरविलग्नत्वसाम्यात् । आकाशस्य उदरे हि अग्न्यादयः विलग्नाः ।।

**वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ।। ३ ।।**

**प्र. - वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना ज्योतिषा भाति च तपति च ।** अध्यात्मं ब्रह्मरूपस्य मनसो वागेव चतुर्थः पादः । सोऽधिदैवतं ब्रह्मरूपाकाशपादतया तत्सम्बन्धिना अग्निना **ज्योतिषा** - प्रकाशकेन **भाति** - प्रकाशते । **तपति** - स्वकार्योत्साही भवति इत्यर्थः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ.उ.२-४) इति अग्निदेवतायाः एव वागधिष्ठातृत्वेन तदधीनप्रकाशप्रवृत्तिकत्वात् इति भावः । एवम् उत्तरत्रापि द्रष्टव्यम् । **भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ।** वितरणविक्रमरूपहेतुभेदात् कीर्तियशसोः भेदः । **ब्रह्मवर्चसं** - वृत्ताध्ययनसमृद्धिः । शिष्टं स्पष्टम् ।।

**आ.भा. - वागेव ब्रह्मणः** इत्यादि । तत्र वागेव मनोलक्षणस्य **ब्रह्मणः** - अध्यात्मं चतुर्थः पादः **सः** - वाग्रूपः पादः अधिदैवतेन **अग्निना** - वह्निसम्बन्धिना **ज्योतिषा** - प्रकाशेन **भाति** - दीप्यते प्रकाशितो भवति । **तपति च** - सन्तापं करोति । स्वकार्ये कर्तव्ये समुत्साही भवति । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ.उ.२-४) इत्यादि श्रुत्यन्तरेण वह्निदेवतायाः एव वाचोऽधिष्टातृतया तदधीनप्रकाशप्रवृत्तिकत्वात् । सम्प्रति मनसो ब्रह्मणः उपासकस्य किं फलं भवति ? तद्दर्शयति **भाति च तपति च** इत्यादि । **यः** - उपासकः **एवं** - यथोक्तं मनोलक्षणं ब्रह्म साकेताधिपतिं परमात्मानं **वेद** जानाति, उपासनां करोति स उपासको यथोक्तोपासनाबलात् कीर्त्या यशसा ब्रह्मवर्चसेन **भाति** - दीप्तो भवति **तपति च** - स्वकार्ये समुत्साहयुक्तो भवति । तत्र सुवर्णधनादीनां दानजनितं यशः कीर्तिः, पराक्रमबलादिजनितं यशः । अतः समानार्थकतया भासमानयोः अपि कीर्तियशसोः भेदः । तथा ब्रह्मवर्चसं वृत्ताध्ययनसमृद्धिः इति ।।

**सु. -** अध्यात्मं ये पादाः अधिदैवतं च ये पादाः उक्ताः, तेषां मिथः सम्बन्धविशेषं तत्तद्विज्ञानस्य फलविशेषं चाह - **वागेव** इत्यादि । **वागेव ब्रह्मणश्चतुर्थः पादः** - अध्यात्मम् उपास्यतया विहितस्य मनोब्रह्मणो वाग्रूपोऽयं चतुर्थः पादः, चतुर्षु एकः इति यावत् । एकैकस्यापि चतुष्ट्वसंख्यापूरकत्वम् इतरापेक्षया अस्त्येव इति चतुर्थः इति निर्देशः । **सोऽग्निना ज्योतिषा** अधिदैवतम् उपास्यतया विहितस्य आकाशब्रह्मणो द्वितीयेन पादेन, **भाति** - स्वयं प्रकाशते, **तपति च** स्वगोचरम्, कार्याधायकं भवति इति यावत् । भातिति स्वरूपयोग्यता अभिप्रेता, तपति इति फलाधायकता । युक्तं च अग्निना ज्योतिषा वाक् भाति इति, अग्निः वाचोऽधिष्ठानम्, 'अग्निर्वाग्भूत्वा मुखं प्राविशत्'

एवं वेद सः **कीर्त्या** - गुणवृत्तादिनिमित्तकया, **यशसा** वितरणनिमित्तकेन **ब्रह्मवर्चसेन** - ब्रह्मणोऽधीतस्य वेदस्य वर्चसा अध्ययननिमित्तकेन च तेजसा **भाति च तपति च** । एवमुत्तरत्रापि बोध्यम् ।। ३-६ ।।

**प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ।। ४ ।।**

**प्र. - प्राण एव** इत्यादि । **प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना** इत्यादि । वायुप्राणयोः [1]एकतत्त्वत्वादिति[1] भावः ।।

**आ.भा. - प्राण एव** इत्यादि । **प्राण एव ब्रह्मणः** मनोरूपस्य परमात्मनः **चतुर्थः पादः** । इतरपादत्रयापेक्षया प्राणस्य चतुर्थपादत्वम् । **सः** - प्राणः **वायुना ज्योतिषा । सः** प्राणः अधिदैवतेन वायुसम्बन्धिना, **ज्योतिषा** - प्रकाशेन **भाति** - दीप्यते, **तपति च** । अन्यत् सर्वं पूर्ववत् । सम्प्रति विद्वत्फलं दर्शयति - **भाति च** इत्यादि । **यः** उपासकः **एवं** - मनोरूपस्य ब्रह्मणः चतुर्थपादत्वेन प्राणं विजानाति उपासते सः **कीर्त्या** - दानादिजनितया **यशसा** -विक्रमादिजनितेन यशसा **भाति च** दीप्यते, **तपति च** इत्यादिकं पूर्ववदेवेति ।।

**चक्षुरेव ब्रह्मणश्चतुर्थः पादः । स आदित्येन ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ।। ५ ।।**

**प्र. - चक्षुरेव ब्रह्मणश्चतुर्थः पादः । स आदित्येन** इत्यादि । [2]आदित्यस्य[2] चक्षुरधिष्ठातृत्वात् इति भावः ।।

**आ.भा. - चक्षुरेव ब्रह्मणः** - मनोरूपस्य **चतुर्थः पादः** - इतरपादत्रयापेक्षया **सः** - चक्षुरात्मकः पादः **आदित्येन ज्योतिषा** - आदित्यसम्बन्धिना प्रकाशेन **भाति च** - दीप्यते **तपति च** । आदित्यस्य चक्षुरधिष्ठातृत्वात् । अयं भावः - आदित्यप्रकाशेन

---

1. ऐक्यात् इति - क । 2. आदित्यस्यैव - क ।

प्रकाशितघटादिविषयग्रहणे चक्षुषः सामर्थ्यम् अन्वयव्यतिरेकाभ्याम् अन्यत्र अवधारितम् । तादृशचक्षुर्द्वारा मनोबाह्यविषयं रूपादिकम् अधितिष्ठति इति । तदन्यत्सर्वं पूर्ववदेव इति ।।

**श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः । स दिग्भिर्ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ।। ६ ।।**

**।। इति अष्टादशः खण्डः ।।**

**प्र. - श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिः** इत्यादि । 'दिशश्श्रोत्रं भूत्वा कर्णौ प्राविशन्' (ऐ.उ.२-४) इति दिग्देवतानां श्रोत्राधिष्ठातृत्वात् इति भावः । अवशिष्टस्य उक्तोऽर्थः । **य एवं वेद य एवं वेद** इति । द्विरुक्तिः विद्यासमाप्त्यर्था ।।

**आ.भा. - श्रोत्रमेव** मनोरूपस्य **ब्रह्मणश्चतुर्थः पादः** । इतरपादत्रयापेक्षया **स** च श्रोत्रात्मकः पादः **दिग्भिर्ज्योतिषा भाति च तपति च** । 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' (ऐ.उ.२-४) इति श्रुत्यन्तरेण दिग्देवतानां श्रोत्राधिष्ठातृत्वात् । तदन्यत् सर्वं पूर्ववदेव व्याख्येयम् ।।

**।। इति अष्टादशखण्डभाष्यम् ।।**

## एकोनविंशः खण्डः

[आदित्ये ब्रह्मदृष्टिः]

**आदित्यो ब्रह्मेत्यादेशः । तस्योपव्याख्यानम् - असदेवेदमग्र आसीत् । तत् सदासीत् । तत् समभवत् । तदाण्डं निरवर्तत । तत् संवत्सरस्य मात्रामशयत । तन्निरभिद्यत । ते आण्डकपाले रजतञ्च सुवर्णञ्चाभवताम् ।। १ ।।**

**प्र.** - पूर्वत्र आदित्यः ब्रह्मणः पादः उक्तः । अथ तस्मिन् सकलब्रह्मदृष्ट्यर्थम् इदम् आरभ्यते **आदित्यो ब्रह्मेत्यादेशः** । आदित्यः ब्रह्म इत्युपदेशः क्रियते इत्यर्थः । **तस्योपव्याख्यानम्** । क्रियते इति शेषः । **असदेवेदमग्र आसीत्** । **इदं** - जगत् **अग्रे असत्** - अव्याकृतनामरूपम् आसीत् । **तत् सदासीत्** । तत् - अव्याकृतनामरूपं जगत् **सदासीत्** - ईषन्नामरूपकार्याभिमुखम् आसीत् । **तत् समभवत्** । अल्पतरनामरूपव्याकरणेन, अङ्कुरीभूतमिव बीजं क्रमेण

स्थूलम् अभवत् इत्यर्थः । **तदाण्डं निरवर्तत** । अण्डं संवृत्तम् इत्यर्थः । आण्डमिति छान्दसः दीर्घः । **तत्संवत्सरस्य मात्रामशयत** । **संवत्सरस्य** - कालस्य **मात्रां** - परिमाणम् एकरूपतया **अशयत** - स्थितं बभूव इत्यर्थः । **तन्निरभिद्यत** । संवत्सरकालात् ऊर्ध्वं तदण्डं निर्भिन्नम् अभवत् । **ते आण्डकपाले** इत्यादि । **ते आण्डकपाले** - अण्डकपाले रजतञ्च सुवर्णञ्च एकैकम् अभवताम् इत्यर्थः ।।

**आ.भा.** - ब्रह्मणः पादरूपेण आदित्यस्य कथनं पूर्वं कृतम् । अथ तस्मिन् आदित्ये सकलब्रह्मदृष्ट्यर्थम् इदं प्रकरणम् आरभ्यते - **आदित्यः** इत्यादि । **आदित्यः** - सकलप्रकाशाधिपतिः **ब्रह्म, इति** एवं **आदेशः** - उपदेशः क्रियते इति क्रियापदाध्याहारः । **तस्य** - आदित्याख्यब्रह्मणः उपव्याख्यानं क्रियते । आदित्यस्य स्तुतये अत्र खलु लोके सर्वोऽपि प्राणिनां व्यवहारः आदित्यनिमित्तकः एवेति भवति आदित्यः स्तुतिविषयः इति । **असदेव** इत्यादि । **इदं** - नामरूपाभ्यां व्याकृतं जगत् चराचरात्मकम् । **अग्रे** - उत्पत्तेः पूर्वम् **असत्** - अव्याकृतनामरूपमेव **आसीत्** - अभवत् । यथा इदं कार्यरूपेण इदं जगत् दृश्यते न तथा उत्पत्तेः प्रागासीत् । किन्तु अव्याकृतनामरूपकं कारणकवलितम् एव आसीत् । न एतावता उत्पत्तेः प्राक् असत् आसीत् 'कथमसतः सज्जायते' (छां.उ.६-२-२) इत्यादि असतः उत्पत्तेः अयोगात् । न हि असन् वन्ध्यापुत्रादि कदाचिदपि जायते । संस्तु तैलादिः कारणव्यापारेण आविर्भवति, कार्याक्षमत्वात् असद्व्यवहारो, न तु अभावात् इति । **तत् सदासीत्** - यत् जगत् प्रागुत्पत्तेः अव्याकृतनामरूपकम् आसीत् तदेव जगत् सदासीत् । ईषत् नामरूप कार्याभिमुखम् अभवत् । **तत्समभवत्** - तत् जगत् समभवत् अल्पतरनामरूपव्याकरणेन । अङ्कुरीभूतमिव बीजं क्रमशः स्थूलम् अभवत् । यथा न्यग्रोधादीनां वृक्षो बीजावस्थायां सर्वथा अपरिदृश्यमानो भवति, पृथिवीजलोष्णवायुसम्पर्कात् अङ्कुरभावम् उपगच्छन् सूक्ष्मरूपेण परिदृश्यते अङ्कुरात्मना तथैव इदं जगत् अङ्कुरमिव परिदृश्यमानम् अभवत् इति । **तदाण्डं निरवर्तत** इति । तत् सूक्ष्मरूपेण परिदृश्यमाने क्रमेण स्थूलोऽभवत् । अण्डनिरसनम् अभवत् । अण्डं संवृत्तम् इत्यर्थः । आण्डम् इत्यत्र छान्दसो हि दीर्घः । तत् संवत्सरस्य मात्राम् अशयत । तत् क्रमेण स्थूलोऽभवत् जगदण्डं संवत्सरस्य कालस्य मात्रां परिणामम् अभिन्नस्वरूपम् एकरूपतया इत्यर्थः । **अशयत** - स्थितमेव अभूत् । यथा हंससारसादिपक्षिजनितम् अण्डम् उत्पत्तेः अनन्तरं किञ्चित्कालं स्थितं भवति, तथैव इदं जगत् अण्डम् अद्भ्यो जातं यथा उत्पन्नं तथैव किञ्चित्कालं स्थितं बभूव । तदनन्तरं **तन्निरभिद्यत** । संवत्सरकालात् अनन्तरं तदण्डं **निरभिद्यत** -

निर्भिन्नम् अभवत् । यथा हंसादिपक्षिजनितम् अण्डं कालपरिपाकम् अपेक्ष्य द्विधा भवति तथैव इदं जगदण्डं संवत्सरपर्यन्तं तथैव स्थित्वा संवत्सरादनन्तरं द्विधा बभूव इत्यर्थः । **ते आण्डकपाले** । अण्डकपाले **रजतं च सुवर्णं च अभवताम्** । तस्य निर्भिन्नस्य अण्डस्य द्वे कपाले अभवताम् । एकं रजतम् अपरञ्च सुवर्णं चेत्यर्थः ।।

**सु.** - अथ आदित्ये ब्रह्मदृष्टिः उपदिश्यते । **आदित्यो ब्रह्मेत्यादेशः, आदेशः** - उपदेशः, प्रवर्तते इति शेषः । आदित्यं ब्रह्मदृष्ट्या भावयेत् इति यावत् । **तस्य** - आदेशस्य आदेशगोचरस्य आदित्यस्य वा, **उपव्याख्यानम्** - सन्निहितं विशेषव्याख्यानं क्रियते । प्रक्रान्तोपदेशोपयोगिविशेषोपदेशः कश्चिदयं विधीयते इति यावत् । **असदेवेदमग्र आसीत्** - यानि इमानि भूतानि, ये च एषाम् इमे कामाः, सर्वमिदमग्रे सृष्टेः असदेवासीत् । न इह अत्यन्ततः सत्ताभावोऽसदेव इत्यनेन अवधार्यते । आसीत् इत्यस्य आनन्त्यात्, तत् सदासीत् इत्यस्य च अनन्वयात्, अपि तु नामरूपभेदसम्पत्त्यभाव एव । अत एव कथम् असज्जायेत ? इति अन्यत्र क्रियमाणः असदुत्पत्तिप्रतिक्षेपोऽपि सङ्गच्छते । असति आदित्ये तम इव तम एव केवलम् आसीत् इति भावः । **तत्सदासीत्** - तमसि निलीनम् उषसि किञ्चिदिदमस्ति इत्यवगम्यमानम् ईषद्विभक्तं तमसः सूक्ष्मं महदादि सद्रूपम् आसीत् । **तत्समभवत्** - तदेव तदनु सम्यक् अभवत् । भवतिः सत्तायाम्, विशेषतः सत्ताम् अगमत् इति यावत् । अभिव्यक्त्यर्हशब्दादिविशेषम् आकाशादिरूपस्थूलम् आसीत् इति भावः । **तदाण्डं निरवर्तत** - तदेव मिथः संसृष्टं कालेन अण्डरूपम् अभवत् । **तत्संवत्सरस्य मात्रामशयत** - तदण्डम् इदानीं प्रसिद्धस्य संवत्सरस्य मात्रां परिमितिम्, तावन्तं समयम् इति यावत् । अत्यन्तसंयोगे द्वितीया, **अशयत** - अस्पन्दम् आसीत् । तत् प्राप्ते समये निरभिद्यत स्वयम् । निर्भिन्ने तस्मिन् ये अण्डकपाले अभवतां ते अण्डकपाले **रजतं च सुवर्णं च** एकैकमभवताम् ।।

**तद् यद्रजतँ सेयं पृथिवी । यत् सुवर्णं सा द्यौः । यज्जरायु ते पर्वताः । यदुल्बँ स मेघो नीहारः । या धमनयस्ता नद्यः । यद्वास्तेयमुदकँ स समुद्रः ।। २ ।।**

**प्र.** - **तद्यद्रजतं सेयं पृथिवी** । यद्रजतमयं कपालं, तत्पृथिव्याद्युपलक्षितम् अधोऽण्डकपालम् इत्यर्थः । **यत्सुवर्णं सा द्यौः** । सुवर्णमयं कपालं द्युलोकोपलक्षितम् ऊर्ध्व[1]कपालम्[1] । **यज्जरायु ते पर्वताः** । **जरायु** - गर्भपरिवेष्टनम्, अण्डस्य शकलीभावदशायां याः स्थूलगर्भपरिवेष्टनसिराः - ते पर्वता बभूवुः इत्यर्थः । **यदुल्बं स**

---

1. लोकम् - अ ।

**मेघो नीहारः । यदुल्बम्** - सूक्ष्मं गर्भपरिवेष्टनं । तत् मेघसहितं हिमम् । **या धमनयस्ता नद्यः - धमनयः** - सिराः इत्यर्थः । **यद्वास्तेयमुदकं स समुद्रः ।** वस्तौ भवं वास्तेयम् ।।

**आ.भा. - तद्यद्रजतम्** इत्यादि । **तत्** - तयोः कपालयोः मध्ये यत् **रजतं** - रजतमयं कपालं तत्, **सेयं पृथिवी** - पृथिव्युपलक्षितम् अधोऽण्डकपालम् इत्यर्थः । **यत्सुवर्णं सा द्यौः ।** अथ यत् सुवर्णं सुवर्णमयं कपालं **सा द्यौः** - द्युलोकोपलक्षितम् ऊर्ध्वं कपालम् इत्यर्थः । **यज्जरायुः** - गर्भपरिवेष्टनम् । अण्डस्य विभागसमये याः स्थूलगर्भपरिवेष्टनशिराः ते **पर्वताः** - हिमाचलादयः, ते एव पर्वताः अभवन् इत्यर्थः । अथ **यदुल्बं** - सुक्ष्मं गर्भपरिवेष्टनम् तत् सह मेघैः नीहारः अवश्यायः अभवत् इत्यर्थः । **या धमनयः** - शिराः, ताः **नद्यः** - जाताः । धमनयः एव नदीरूपेण बभूवः इत्यर्थः । **यद्वास्तेयमुदकं स समुद्रः** - तत्र वस्तिः मूत्रस्थानम् । तत्र भवं जातं यत् जलं तत् वास्तेयम् उदकं **समुद्रः** - समुद्ररूपेण बभूव इति ।।

**सु. - तद्यद्** - अधस्तनं **रजतं सा पृथिवी,** यदुपरिष्टात् **सुवर्णं सा द्यौः** - द्युलोकः । **यज्जरायु** - स्थूलं गर्भपरिवेष्टनं **ते पर्वताः** - तानि एव अधो निपतितानि पर्वताः अभूवन् । **यदुल्बं** - सूक्ष्मं गर्भपरिवेष्टनं **स मेघो नीहारश्च बभूव ।** स मेघ इति समस्तं वा । **या धमनयः** वेष्टनशिराः ताः नद्यः । **यद्वास्तेयमुदकम्** - गर्भवस्तुनि भवत् उदकम्, गर्भस्थम् उदकमिति यावत्, स समुद्रः ।।

**अथ यत्तदजायत, सोऽसावादित्यः । तं जायमानं घोषा उलुलवोऽनूदतिष्ठन् ; सर्वाणि च भूतानिः, सर्वे च कामाः । तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुत्तिष्ठन्ति, सर्वाणि च भूतानि, [1]सर्वे चैव[1]कामाः ।। ३ ।।**

**प्र. - अथ यत्तदजायत, सोऽसावादित्यः ।** तस्मिन् अण्डे गर्भरूपं यदजायत स आदित्यः इत्यर्थः । **तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि सर्वे च कामाः । तं** - आदित्यं **जायमानम् अनु उलूलवः**[१] - उरूरवः - उरूरवाः विस्तीर्णरवाः महाध्वनियुक्ताः । उलूलव इति छान्दसं रूपम् । **घोषाः** - शब्दाः, स्थावरजङ्गमानि **भूतानि च,** तेषां कामाः काम्यमानाः स्त्रीवस्त्रादयश्च **उदतिष्ठन्** - उत्थितवन्तः

---

१. उलूलवः - उत्सवकालीनाः शब्दविशेषाः देशविशेषे प्रसिद्धाः । इति आनन्दगिरिः ।

1. सर्वे च - इति शाङ्करः तथा माध्वसम्मतः पाठः ।

इत्यर्थः । सर्वस्य आदित्योदयानन्तरभावित्वात् इति भावः । **तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति** इत्यादि । तस्मात् अद्यत्वेऽपि आदित्यस्य उदयं प्रति **प्रत्यायनम्** - अस्तमयञ्च प्रति, उरूरवाः शब्दाश्च, भूतानि च, कामाश्च उत्पद्यन्ते इत्यर्थः । [1]उदयास्तमयवेलायां[1] पक्षिघोषादीनां दर्शनात् इति भावः ।।

**आ.भा. - अथ यत्तदजायत** इत्यादि । **अथ** - अण्डकपालनिर्भेदानन्तरं **तत्** - तस्मिन् अण्डे गर्भरूपं **यदजायत** - समुत्पन्नोऽभूत् । **सोऽसौ** - परिदृश्यमानः आदित्यः, तत्र आदित्यस्य समुत्पत्तिः अभूत् इत्यर्थः । यथा इह महिषादिपशूनां गर्भात् वत्सो जायते तथैव इहापि आदित्यलक्षणपुत्रः परमेश्वरस्य बभूव इति । **तं** - आदित्यं **जायमानमनु** - पश्चात् **घोषाः** - शब्दाः **उलूलवाः** - उरूरवाः विस्तीर्णरवाः महाध्वनियुक्ताः **उदतिष्ठन्** - अभवन् । उलूलवः इति छान्दसं रूपम् । पक्ष्यादीनां विस्तीर्णशब्दाः अभवन् इत्यर्थः । तथा **सर्वाणि भूतानि** - स्थावरजङ्गमानि च अभवन् । **सर्वे च कामाः** - मनुष्यादीनां काम्यमानाः स्रगादयः वनितादयश्च उपभोगयोग्याः पदार्थाः अपि अजायन्त । यस्मात् कारणात् आदित्यस्य उद्गमनानन्तरमेव घोषादयः समुत्पद्यन्त, तस्मात् कारणात् तस्य आदित्यस्य **उदयं प्रति** - उदयात् अनन्तरम् **प्रत्यायनम्** - अस्तमयं प्रति सूर्योदय उस्तमयसमये उरूरवाः शब्दाः सर्वाणि भूतानि सर्वे च काम्यमानाः पदार्थाः समुत्पद्यन्ते । सूर्यस्य उदयास्तमयसमये पक्षिशब्दादीनां दर्शनात् इत्यर्थः ।।

**सु. - अथ यत्तदजायत** तस्मिन् अण्डे **सोऽसौ आदित्यः । तं जायमानं** अनु सर्वाणि एतानि उदतिष्ठन् । कानि इमानि ? **घोषा उलूलवाः सर्वाणि च भूतानि सर्वे च कामाः** - उलूलुः इति अनुकरणं घोषस्य । उत्सवसमये ईदृशो घोषः क्वचिद्देशे प्रवर्तते। इह च उलूलवः व्यवहारा एव, यानि इमानि भूतानि ये च इमे कामा यश्च अयं तदुभयमूलको व्यवहारघोषः । सर्वम् इदम् आदित्योदयम् अनु समुत्पन्नमिति यावत् । यस्मादेवं तस्मात् अद्यापि तस्य उदयं प्रति अस्तं प्रति च उलूलवो घोषाः सर्वाणि भूतानि सर्वे च कामा उत्तिष्ठन्ति । उत्थानम् इह प्रवृत्तिः । यद्यपि तस्मात् अस्तं प्रति समुत्तिष्ठन्ति इति न युक्तम्, अथापि अस्तङ्गतस्य अपरतः उदयात् युक्तं तत् । **प्रत्यायनं** - प्रत्यागमनं वा । एतेन आदित्यस्य सर्वभूतादित्वमहिमा निरूपितः । तेन च तस्मिन् ब्रह्मदृष्टौ भूतादित्वं निमित्तम् उक्तं भवति ।।

---

1. उदयास्तमयवेलायां हि - क ।

[आदित्यब्रह्मोपासनस्य फलम्]

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते, अभ्याशो ह यदेनँ साधवो घोषा आ च गच्छेयुः, उप च निम्रेडेरन्, निम्रेडेरन् ।। ४ ।।**

**।। इति एकोनविंशः खण्डः ।।**

**।। इति तृतीयः प्रपाठकः समाप्तः ।।**

**प्र. - स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते** इत्यादि । हशब्दः प्रसिद्धौ । **एतम्** - आदित्यब्रह्मोपासकम्, **अभ्याशः** - क्षिप्रम् । **यत्** ये इत्यर्थः । ये **साधवः** शोभनाः घोषाः ते **उप** - समीपे आगच्छेयुश्च । **निम्रेडेरन्** - सुखं च कुर्युः इत्यर्थः । 'मृड सुखे च' (धा.पा.१५-१७) इति हि धातुः; अन्तर्भावितण्यर्थः । **निम्रेडेरन् निम्रेडेरन्** इति द्विरुक्तिः अध्यायपरिसमाप्त्यर्था ।।

**।। इति तृतीयप्रपाठकप्रकाशिका ।।**

**आ.भा. - स य एतम्** इत्यादि । **स यः** - कश्चिदुपासकः **एतं** - एनं यथोक्तगुणकं आदित्यं **विद्वान्** जानन् आदित्यं **ब्रह्मोपास्ते** - आदित्यप्रतीकब्रह्मणः उपासनं कुरुते स आदित्यभावम् आप्नोति । न केवलम् एतदेव फलम् उपासकस्य भवति, अपि तु दृष्टमपि फलं भवति । तद्दर्शयति **अभ्याशो ह** इत्यादि । हशब्दः प्रसिद्धार्थकः । **अभ्याशः** - झटिति । एवम् आदित्यब्रह्मोपासकम् **साधवः** - समीचीनाः श्रुतिकटुत्वादिदोषरहिताः साध्वर्थवाचकाः **घोषाः** - शब्दाः **आ च गच्छेयुः** - तदीयश्रोत्रकुहरे समाविष्टाः भवन्ति । न केवलं तत् श्रोत्रसमवेताः एव भवन्ति, अपि तु **उप च निम्रेडेरन्** - सुखम् उत्पादयन्ति । शोभनाः शब्दाः उपासकस्य सुखजनकाः अपि भवन्ति इति । द्विर्वचनम् अध्यायसमाप्तिं सूचयति इति ।।

**।। इति तृतीयप्रपाठकआनन्दभाष्यम् ।।**

**सु. - य एतमादित्यमेवं** - घोषाद्युत्थानानुबन्धित्वमहिमपूर्वकं जानन् **ब्रह्मेत्युपास्ते,** एवं ये **साधवः** शोभनाः **घोषाः ते अभ्याशः** - अचिरेण **आगच्छेयुः** - स्वयम् आपतेयुः । अयत्नाहताः **उप च निम्रेडेरन्** - सङ्गत्य च सुखयेयुः । द्विरुक्तिः अध्यायपरिसमाप्तौ ।।

**।। इति तृतीयप्रपाठकसुबोधिनी ।।**

**।। इति तृतीयप्रपाठकभाष्यम् ।।**



## चतुर्थः प्रपाठकः

### प्रथमः खण्डः

[विद्यास्तुत्यर्था रैक्वाख्यब्रह्मर्षेः आख्यायिका]

**ओं । जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान् मापयाञ्चक्रे, सर्वत एव मेऽन्नमत्स्यन्तीति ।। १ ।।**

**प्र. -** संवर्गविद्या प्रस्तूयते - विद्यास्तुत्यर्था आख्यायिका **जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस ।** जनश्रुतस्य अपत्यं जानश्रुतिः । हशब्दः प्रसिद्धौ । पुत्रसंज्ञस्य पुत्रः पौत्रः तस्य अपत्यं **पौत्रायणः** श्रद्धापुरस्सरं देयं यस्य सः **श्रद्धादेयः ।** अतिथिभ्यो बहु दातुं शीलमस्य स **बहुदायी ।** बहु अस्य गेहेऽन्नं पक्तव्यं यस्य स **बहुपाक्यः ।** एवङ्गुणसम्पन्नो जानश्रुतिः कस्मिंश्चित् देशे आस । **स ह सर्वतः आवसथान् मापयाञ्चक्रे** सर्वतः एव **मेऽन्नमत्स्यन्तीति । स ह -** जानश्रुतिः 'सर्वतः एत्य अतिथयो मम अन्नं भोक्ष्यन्ते' इत्यभिप्रायेण सर्वासु दिक्षु ग्रामनगरमार्गारण्यादिषु पान्थानाम् अनाथानां शीतवातवर्षातपवारणान्नोदकशयनाच्छादनादिपूर्णाः शालाः कारितवान् इत्यर्थः ।।

**आ.भा. -** तृतीयाध्याये प्रथमतः एश्वर्यफलसंयुक्तभुक्तिफलवती आदित्यमधुविद्या प्रदर्शिता । तदनन्तरम् एहिकफलरहिता विशुद्धमुक्तिफलिका गायत्रीविद्या प्रदर्शिता । तदनन्तरं तदनुबन्धि क्षुद्रफलककौक्षेयज्योतिर्विद्यापि समाख्याता । तदनन्तरं भारूपज्योतिर्विषयिणी मुक्तिफलवती शाण्डिल्यविद्या कथिता । ततश्च प्राणतत्त्वभूतवायुविषयिणी वायुवत्सककोशविद्या प्राणात्मकपुरुषाणाम् आयुर्विषयिणी पुरुषविद्या आख्याता । वायुप्राणरूपपादविशिष्टमनोब्रह्मदृष्टिः तथा तद्दृष्ट्यन्तर्गता प्रथमतः प्राप्तादित्यविषयकब्रह्मदृष्टिः अपि क्रमेण प्रतिपादिता । तत्र उपसर्जनतया प्रदर्शितयोः वायुप्राणयोः यत्र प्रधानतया ग्रहणं तादृशी वायुप्राणरूपसंवर्गविषयिणी परा विद्या रैक्वनामकब्राह्मणेन जानश्रुतये राज्ञे समुपदिष्टा । सेयं परविद्या चतुर्थाध्यायस्य आरम्भे प्रस्तूयते ।

---

अस्य प्रपाठकस्य आदितः पञ्चखण्डाः प्रायेण उपासनाविधिपराः । सर्वाण्युपासनानि एकेनैव कर्तव्यानीति तु न नियमः, चित्तविक्षेपप्रसङ्गात् । 'अत एव विकल्पोऽविशिष्टफलत्वात्' (ब्र.सू.३-३-५७) इति सूत्रेण उपासनानां विकल्पः उक्तः, न तु समुच्चयः ।।

सम्प्रति संवर्गविद्या इह प्रस्तूयते । आख्यायिकया विद्यायाः स्तुतिः प्रदर्श्यते **जानश्रुतिर्ह** इत्यादिना । **जानश्रुतिः** - स्वकीयविद्यया बलादिशौर्येण लोके श्रुतिः कीर्तिः यस्य स जनश्रुतः जनश्रुतस्य अपत्यं पुमान् इति जानश्रुतिः, तन्नामकः कश्चित् राजा इत्यर्थः । हशब्दः प्रसिद्धार्थकः । प्रसिद्धश्च तत्समये एतन्नामको हि राजा । **पौत्रायणः** - पौत्रसंज्ञकस्य कस्यचित् पुत्रः पौत्रः, तस्य अपत्यं पौत्रायणः, **श्रद्धादेयः** - श्रद्धापूर्वकः याचकाय दातुं शीलं यस्य स श्रद्धादेयः । श्रद्धापूर्वकदानस्य एव परलोकोपकारित्वात् श्रद्धाविरहस्य निन्दनाच्च 'अश्रद्धया हुतं दत्तं तपस्तप्तं' इत्यादिस्मृतेः । **बहुदायी** - बहु अनेकप्रकारकं गोभूमिसुवर्णं रजतविविधान्नं प्रभूतं ब्राह्मणेभ्यो दातुं शीलं यस्य स बहुदायी । स्वभावतः एषः दानशीलो, न तु फलविशेषं कालतीर्थादिविशेषं च आसाद्य दानकर्ता इति भावः, **बहुपाक्यः** - बहु अनेकप्रकरकम् अन्नं पायसं सघुदलम् ओदनं (?) विविधं मिष्टान्नादिकं यस्य गृहे सर्वदैव पक्तव्यः यस्य सः बहुपाक्यः । यो हि यादृशमन्नं यदा इच्छति तस्मै तादृशमेवान्नं दातव्यम् इति कृत्वा स बहुपाक्य आसीत् इति भावः । एतादृशगुणविशिष्टो यत्र कुत्रचित् प्रदेशविशेषे जानश्रुतिनामा राजा **आस** - बभूव । **स ह** - प्रसिद्धः जानश्रुतिः **सर्वतः** - सर्वासु दिक्षु आवसथान् एत्य अतिथयो वसन्ति यस्मिन् स आवसथो गृहम् धर्मशालाः इत्यर्थः **मापयाञ्चक्रे** - कारितवान् । कथं कारितवान् ? तत्राह - **सर्वत एव** इत्यादि । **सर्वतः** - सर्वदिशातः अतिथयः **एत्य** - समागत्य मदीयगृहे निर्वर्तितम् **अन्नम्** ओदनादिकम् **अत्स्यन्ति** - भक्षयिष्यन्ति इत्यभिप्रायेण । सर्वतः समागत्य अतिथयः मम अन्नं भक्षयिष्यन्ति इत्यभिप्रायेण अन्नोदकशयनासनाच्छादनादिपरिपूर्णाः शालाः कारितवान् इति भावः ।।

**सु.** - आख्यायिका इयं सुखप्रतिपत्तये । व्यज्यते च अनया विद्याप्रदाने यथासम्भवम् अधिकारिपरीक्षा कर्तव्या इति । **श्रद्धादेयः** - गोभूहिरण्यादि सर्वं श्रद्धया एव देयं यस्य आसीत् स तथोक्तः, **बहुदायी** - बहुदानशीलश्च, **बहुपाक्यः** - बहु पक्वमन्नं अतिथ्यभ्यागतार्थं यस्य स तथोक्तः। पुत्रायणस्य अपत्यं नाम्ना **जानश्रुतिः आस** - बभूव । **सः** - जानश्रुतिः **सर्वतः** दिक्षु **आवसथान्** - आवासान् पथिकजनवासार्हान्, **मापयाञ्चक्रे** - शिल्पिभिः अकारयत् । **सर्वत एव मे अत्स्यन्तीति** - सर्वत देशात् तत्र तत्र अवसथे समेत्य सर्वे मे अन्नम् अत्स्यन्ति इत्यभिप्रायेण आवसथान् मापयाञ्चक्रे ।।

[हंसकृतजानश्रुतिप्रशंसा]

**अथ ह हँसा निशायामतिपेतुः । तद्धैवँ हँसो हँसमभ्युवाद, '[1]भो भोऽयि[1] भल्लाक्ष ! भल्लाक्ष ! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम् । तन्मा [2]प्रसाङ्क्षीः[2] । तत् त्वा मा [3]प्रधाक्षी'दि[3]ति ।। २ ।।**

**प्र. - अथ ह हँसाः निशायामतिपेतुः ।** एवंसति कस्यांचित् रात्रौ केचन महात्मानः अन्नदानादिगुणैः तोषिताः भूत्वा हंसरूपाः सन्तः राज्ञः दर्शनगोचरे आगताः । **तद्धैवं हंसो हंसमभ्युवाद । तत् -** तस्मिन् काले तेषां हंसानां मध्ये एकः पृष्ठतो गच्छन् **हंसः** अग्रेगामिनं कञ्चन **हंसम्** उवाच । **भो भोऽयि भल्लाक्ष......प्रधाक्षीदिति । भो भो अयि** इति सम्बोध्य, **भल्लाक्ष भल्लाक्ष** इत्यनेन विपरीतलक्षणया मन्दलोचन इति सम्भ्रमेण द्विवारं सम्बोधनम् । **समं दिवा -** स्वर्गेण समम्, **दिवा** - दिवसेन समं वा अस्य राज्ञः तेजः प्रसृतम् । **तत् -** तस्मिन् तेजसि **मा प्रसाङ्क्षीः -** मा प्रसक्तो भूः । प्रसक्तौ को दोषः इत्यत्राह - **तत्त्वा मा प्रधाक्षीदिति । तत् -** तेजः त्वां मा दहेत् इत्यर्थः । इति अभ्युवाद इत्यन्वयः ।।

**आ.भा. - अथ -** कदाचित् निदाघसमये रात्रौ हर्म्यतले सः राजा शयानः आसीत् । **अथ -** तदनन्तरं **हंसाः -** केचन ऋषयः देवाः वा राज्ञः अन्नदाननिमित्तं यशः श्रुत्वा अतीव प्रसन्नाः सन्तः राजानं द्रष्टुकामाः हंसरूपमादाय **निशायां -** रात्रौ हर्म्यतले शयानं राजानं **अतिपेतुः -** समागताः । यत्र राजा शयानो बभूव तद्देशावच्छिन्नगगने उड्डयन्तः सन्तः राज्ञः दर्शनगोचरे समागताः । **तद्धैवम्** इत्यादि । **तत् -** तस्मिन् काले तेषां गच्छतां हंसानां मध्ये एको हंसः पृष्ठे गच्छन् अग्रे गच्छन्तं कञ्चन हंसम् **अभ्युवाद -** उवाच । पृष्ठगामी हंसः पुरस्तात् गच्छन्तं हंसं किम् अवादीत् तत्राह - **भो भो** इत्यादि । **भो भो अयि भल्लाक्ष ! भल्लाक्ष !** भद्राक्ष! भद्राक्ष ! भल्लाक्ष भल्लाक्ष इत्यनेन विपरीतलक्षणया मन्दलोचन इति सम्भ्रमेण द्विवारं सम्बोधनम् । अर्थात् हे अग्रे गच्छन् हंस त्वम् अन्धोऽसि । येन अतितेजस्विनं राजानम् उल्लङ्घ्य गच्छति तत् किं न पश्यसि तमद्भुतं तेजोराशिः इव

---

१. "वस्तुतस्तु - भल्लमित्यायुधविशेषः तदग्रभागे संयोजितो यः खण्डः विशालनेत्राकारो भवति भल्लाक्ष विशालनेत्र इत्यर्थः । भद्राक्ष भद्राक्षेति पदं भल्लाक्ष इति विकृतम्" इति आनन्दगिरिः ।।

1. **हो होऽयि** इति शाङ्कर तथा माध्वसम्मतः पाठः । 2. **प्रसाङ्क्षीत्** इति शाङ्करसम्मतः पाठः ।

3. **प्रधाक्षीः** इति शाङ्करः तथा माध्वसम्मतः पाठः ।

स्थितम् इति । **जानश्रुतेः पौत्रायणस्य दिवासमं** द्युलोकेन स्वर्गेण तुल्यं अथवा **दिवा** - दिवसेन **समं** - तुल्यं **ज्योतिः** - तेजः **आततं** - व्याप्तं प्रसृतम् । दिवासमस्य जानश्रुतितेजसः सर्वतो व्याप्तस्यापि ते दर्शनं नास्ति अस्ति वा इति सावधानं करोति निवृत्त्यर्थम् । **तन्मा प्रसाङ्क्षीः । तत्** - तस्मिन् जनश्रुतितेजसि प्रसक्तो मा भूः । तज्ज्योतिषा सम्बन्धं मा कार्षीः इत्यर्थः । प्रसक्तौ को दोषः तत्राह - **तत्त्वा** इत्यादि । **तत्** - व्याप्तं सर्वतः जानश्रुतेः तेजः **त्वा** - त्वाम् अतिपातिनम् **मा प्रधाक्षीत्** - दहेत् इत्यर्थः । एवं प्रकारेण पुरोगामिनं हंसः परोहंसः प्रत्युवाच इति पूर्वेण अन्वयः इति ।।

**सु.** - अथ धर्मो विविदिषायां द्वारं भवति इत्येतद्द्वयञ्जयन्नाह - **अथ** इति । **अथ** - अस्य वितरणविशेषसन्तुष्टाः महर्षयः देवाः वा **हंसाः** भूत्वा **निशायां** हर्म्यतलम् अधिशयानेऽस्मिन् **अतिपेतुः** - उत्पतितवन्तः । **तत्** - तस्मिन् समये, तेषु एकः **हंसः** हंसम् उपरि पुरतः पतन्तम् **अभ्युवाद, भो भो** इति उच्चैः सम्बोधनं, पुरतः पततः अभिमुखीकरणाय, अवधानाय इत्येतत् । **भल्लाक्ष भल्लाक्ष** - अवधानातिशयावश्यकता - व्यञ्जनाय द्विरुक्तिः । भल्लशब्देन वैपुल्यं लक्ष्यते, परम् अक्षिणी ते विशाले अनर्थम् आत्मनः सन्निहितं तु न पश्यसि इति निन्दागर्भमिदम् । अनर्थमेव सन्निहितमाह - **जानश्रुतेः पौत्रायणस्य ज्योतिः दिवासमं** - सहस्रकिरणभास्वरेण दिवसेन तुल्यम् अद्यापि रात्रौ **आततं** - परितो व्याप्तम्, **दिवा समं** - द्युलोकेन तुल्यमिति वा - यथा द्युलोको दीप्यते तथा इति । तदिदं **ज्योतिः** त्वं **मा प्रसाङ्क्षीः,** - तत्प्रसङ्गः ते माऽस्तु इति यावत् । सति प्रसङ्गे किमनिष्टम् ? **तन्मा प्रधाक्षीत्** - तत्तेजः त्वां मा दहतु ।।

**तमु ह परः प्रत्युवाच, 'कम्वर एनमेतत्सन्तँ सयुग्वानमिव रैक्वमात्थे'ति । 'यो नु कथँ सयुग्वा रैक्व' इति ।। ३ ।।**

**प्र. - तमु ह परः प्रत्युवाच** । एवं जानश्रुतिप्रशंसारूपं वाक्यम् उपश्रुत्य तदसहमानः इव अपरो हंसः प्रत्युवाच इत्यर्थः । प्रत्युक्तिमेवाह - **कं रैक्वमात्थेति** । उ इति अनर्थको निपातः । अरे **कं सन्तं** केन माहात्म्येन युक्तं सन्तम् **एनं** - जानश्रुतिं प्रति **सयुग्वानं** - सशकटं **रैक्वमिव** - रैक्वं प्रतीव **एतत्** - प्रशंसावचनं प्रब्रूषि । रैक्वः एव ब्रह्मज्ञो महाप्रभावः । अब्रह्मज्ञस्य अस्य किं तेजः किं वा मां दहेत् इति भावः ।

एवमुक्तः पश्चात् [1]पतन्[1] हंसः पृच्छति - **यो नु कथं सयुग्वा रैक्क इति** । य उक्तः, सः किं प्रकारः इत्यर्थः ।।

**आ.भा. - तमु ह परः** इत्यादि । **तमेवं** - जानश्रुतेः प्रशंसात्मकं वचनम् उक्तवन्तं पश्चाद्गामिनं हंसं प्रति **परः** - पुरोगामी हंसः **प्रत्युवाच** - प्रत्युक्तवान्। किमुवाच तत्राह - **कंवर** इत्यादि । कम् उ अरे ! अत्र कम् इति आत्थक्रियायाः कर्म । उ इति निपातः अनर्थकप्राय एव । **अरे** इति सम्बोधनम् । **अरे !** पश्चाद्गामी हंस । **कं सन्तं** - केन माहात्म्येन गुणविशेषादिना युक्तं सन्तम् एवं जानश्रुतिं प्रति **सयुग्वानं** - शकटेन सहितं रैक्कमिव रैक्कवत् **एतत्** - प्रशंसावचनम् **आत्थ** - ब्रवीषि । रैक्क एव ब्रह्मज्ञानी, स एव प्रशंसनीयः । अयं तु राजा न ब्रह्मज्ञानी । तस्मात् तस्य किं तेजः **कथं** वा स मां धक्ष्यति ? न हि ब्रह्मज्ञानरहितस्य तेजो भवति । न वा कमपि दग्धुं शक्ष्यति इति भावः । एवं पुरोगामिना हंसेन उक्तः पश्चाद्गामी हंसः पतन् पृच्छति **यो नु कथम्** इत्यादि । यो नु कथं सयुग्वा रैक्क इति । त्वया यो वर्णितो रैक्कः सः कीदृशः किं प्रभावश्च इति भावः ।।

**सु. - तम्** - एवम् उक्तवन्तं **परः** - हंसः प्रत्युवाच । **अरे एनं कमु सन्तं सयुग्वानं रैक्कमिव तदात्थ** - एनं केवलं कर्मरतं कं सन्तं मत्वा केन माहात्म्येन युक्तं मत्वा रैक्कमिव महात्मानं योऽसौ **सयुग्वा** - सशकटः, एतत् सबहुमानं वचनम् आत्थ । सयुग्वानम् इति विशेषकथनं विविदिषायां जानश्रुतेः तदभिज्ञानाय । इतर आह - **यो नु कथं सयुग्वा रैक्क इति** - यः सयुग्वा रैक्कः त्वया उक्तः स **कथं नु ?** सः कीदृशमहिमशाली ।।

**[रैक्कस्य महिमा]**

**'यथा कृताय विजितायाधरेऽयाः संयन्ति, एवमेनँ सर्व तदभिसमेति, यत् किञ्च प्रजाः साधु कुर्वन्ति, यस्तद् वेद, यत् स वेद, स मयैतदुक्तः' इति ।। ४ ।।**

**प्र.** - इतरः आह - **यथा कृताय विजितायाधरेऽयांः संयन्ति एवमेनं सर्वं तदभिसमेति** इत्यादि । यथा लोके कृतनामा **अयः** द्यूतसमयप्रसिद्धः चतुरङ्कायः तत्र **विजितं** जयो यस्य सः कृतायविजितः पुरुषः, अथवा **विजितं** - विजयः । तस्मै इत्यर्थः ।

---

1. द्वितीयः - क ।

तदर्थम् इतरे त्रिद्व्येकाङ्काः **अधरे** - न्यूनाः अयाः **संयन्ति** - सङ्गच्छन्ते, **अन्तर्भवन्ति** - चतुरङ्के कृताय एकाङ्कद्वयङ्कत्र्यङ्कानां 'शतं सहस्रे सम्भवति' इति न्यायेन विद्यमानत्वात् [1]तत्रान्त[1]र्भवन्ति इत्यतः कृताङ्कविजयिनः एकाङ्कादिविजयोऽपि अस्तीति भावः - एवमेवं लोके प्रजाः, **यत्साधु कुर्वन्ति** यद्यत् शोभनं कर्म अनुतिष्ठन्ति तत् सर्वम् **एनं** - कृतायस्थानीयं **रैक्कमभिसमेति** - सङ्गच्छते । तत्कर्मणि सकलं शोभनं कर्म अन्तर्गतम् इति यावत् । किञ्च **यस्तद्वेद यत् स वेद स मयैतदुक्तः इति । सः** रैक्वः यद्वेद, तदेव अन्योऽपि यः कश्चिद्वेद । तद्ज्ञातमेव अन्ये जानन्ति । तद्ज्ञाने सर्वज्ञानम् अन्तर्गतम् इत्यर्थः । **सः** - तादृशो रैक्वः मया **एतत्** - इदानीं 'सयुग्वानमिव रैक्कमात्थ' इत्युक्तः इत्यर्थः । वेदान्ताचार्यैः तत्त्वटीकायाम् अस्यार्थस्य प्रतिपादितत्वात् । उक्तञ्च भगवता भाष्यकृता - 'लोके यत् किञ्चित् साध्वनुष्ठितं कर्म, यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं [2]यदीयज्ञानकर्मान्तर्गतम्,[2] स रैक्व' इत्याह इति ।

यदपि व्यासार्यैः लघुसिद्धान्ते, 'आवृत्तिरसकृदुपदेशात्' (ब्र.सू.४-१-१) इत्यत्र, **यस्तद् वेद** - यो वेदिता, **यत् स वेद** - यद्वेद्यम्, स मया एतदुक्तः स वेदिता रैक्वः, **एतत्** तद्वेद्यं ब्रह्म इत्येतदुभयं मया उक्तम्; तव मया उपदिष्टम् इत्यर्थः इत्युक्तम् तदपि एतत्परं द्रष्टव्यम्; नतु प्रतीयमानार्थपरम् । **यस्तद्वेद यत् स वेद** इति वाक्यात् प्राचीने, **यथा कृताय विजितायाधरेऽयाः संयन्ति, एवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति** इति वाक्ये ब्रह्मप्रसक्तेरेव अभावेन वेदिता वेद्यञ्च तव उपदिष्टम् इत्यस्य अर्थस्य असम्भवेन यस्तद्वेद यत् स वेद वाक्येन प्रतिपादनासम्भवात्; भाष्यविरोधाच्च इति द्रष्टव्यम् ।

केचित्तु - भगवता भाष्यकृता लघुसिद्धान्तभाष्ये, 'यस्तद्वेद यत् स वेद स मया एतदुक्तम् इत्यत्र' इति एतद्वाक्यप्रतीकस्य धृतत्वात् तदनुरोधेन व्यासार्यैः 'स मयैतदुक्तमिति नपुंसकान्तपाठस्य गृहीततया तत्र नपुंसकस्य उक्तशब्दस्य स इति पुल्लिङ्गतच्छब्दविशेषणत्वा-योगात्, यस्तद्वेद यत्स वेद' इति पुंनपुंसकान्तयच्छब्दद्वयनिर्दिष्टयोः वेत्तृवेद्ययोः स मयैतदुक्तम् इत्यत्र क्रमेण प्रतिनिर्देशकयोः स 'एतदिति पुंनपुंसकसर्वनामशब्दयोः श्रवणेन,' **सः** - वेदिता **एतद्** - वेद्यं परं ब्रह्म इत्येतदुभयं मयोक्तम् इत्यर्थस्यैव वाक्यस्वारस्यलभ्यत्वाच्च स एवार्थो युक्तः इति व्यासार्याभिप्रायः । न च अत्र उदाहृतभाष्यविरोधः; 'प्रकाशश्च कर्मण्यभ्यासात्' (ब्र.सू.३-२-२४) इति सूत्रे -

---

1. तत्रैव - क । 2. यदीयज्ञानान्तर्गतम् - अ,आ ।

"वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" ।। (म.स्मृ.१२-९)

इति मनुस्मृतौ च मनोव्यापारात्मके वेदने कर्मशब्दप्रयोगदर्शनेन 'यत् किञ्च प्रजाः साधु कुर्वन्ति' इत्यनेनैव सर्वप्रजानुष्ठितसाधुकर्मणः इव सर्वचेतनगतज्ञानस्य अपि ग्रहणं सम्भवति इत्यभिप्रायेणैव तत्र भाष्ये, 'यत् किञ्चित् साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानम्' इति कर्मापेक्षया ज्ञानस्य पृथङ्निर्देशात्। अत एव पूर्ववाक्ये ब्रह्मप्रसक्तिरेव नास्ति इत्यपि प्रत्युक्तम् । सर्वप्रजानुष्ठितसाधुकर्मणः सर्वचेतनगतज्ञानस्य च रैक्वज्ञानकर्मणोः स्वरूपेण अन्तर्भावस्य दुरुपपादतया कृताय अधरायदृष्टान्तस्वारस्येन च रैक्ववेदनविषये तत्कर्मोद्देश्यभूते च सविभूतिकब्रह्मणि सर्वप्रजानुष्ठितकर्मोद्देश्यसर्वचेतनगतज्ञानविषययोः अन्तर्भावस्यैव वक्तव्यत्वेन पूर्ववाक्ये ब्रह्मप्रसक्तेः आवश्यकत्वात् । तत्त्वटीकाग्रन्थस्तु, 'स मयैतदुक्तः' इति पुल्लिङ्गान्तपाठे च सति तन्निर्वाहमात्राभिप्रायः । अतो व्यासार्यप्रतिपादितार्थः एव भगवद्भाष्यकृदभिमतः इति न कापि अनुपपत्तिः इत्याहुः ।।

**आ.भा.** - ततः इतरो हंसः प्राह - **यथा कृतायः** इत्यादि । **यथा** - येन प्रकारेण लोके **कृतायः** - कृतानामको यः द्यूते प्रसिद्धः चतुरङ्कायः तस्मिन् विजितम् अयः यस्य सः **कृतायविजितः** पुरुषः तदर्थम् इतरे **अयाः** त्रिद्व्येकांकाः **अधरे** - न्यूना **अयाः संयन्ति** - सङ्गच्छन्ते अन्तर्भूता भवन्ति चतुरङ्के कृता ये एकद्वित्र्यङ्कानां विद्यमानत्वात्, 'शते पञ्चाशदिति' न्यायात् । ततः कृताङ्कविजितस्य एकाद्यङ्कविजयो भवत्येव । एवमेव लोके प्रजाः **यत्किञ्च** - यत् किञ्चित् **साधु कुर्वन्ति** - शास्त्रप्रतिपादितस्वकर्मणः अनुष्ठानं कुर्वन्ति तत्सर्वं शोभनं कर्म । एवं कृतायस्थानापन्नं रैक्वम् **अभिसमेति** - सङ्गच्छते । अर्थात् रैक्वकर्मणि तदन्यस्य सर्वाणि शोभनानि कर्माणि अन्तर्भूतानि भवन्ति इति । अपि च **सः** - रैक्वः **यद्वेद** - विजानाति तदेव अन्योऽपि यः कश्चिद् **वेद** - विजानाति रैक्वज्ञाने सर्वमेव ज्ञानम् अन्तर्भूतमित्यर्थः । **सः** - एतादृशगुणसम्पन्नो रैक्वः **मया एतत्** अधुना सयुग्वानं रैक्वः इति वाक्येन **उक्तः** - कथितः इति ।

अत्र कृताय इति पदमादाय किञ्चित् चर्च्यते । तत्रायो नाम अक्षः, अक्षस्य भागः पार्श्वम् अयः इति केचित् । 'अयः शुभावहे दैवगतौ द्यूताक्षपातने' इति निघण्टुदर्शनात् अयः अक्षपातनम् इत्यन्ये । तत् द्यूतम् । तत् द्विप्रकारकम् - एकाक्षपातनलक्षणम् अनेकाक्षपातनलक्षणं च । तत्र अङ्को नाम अक्षपार्श्वेषु बिन्दुरूपं चिह्नम् । यथा एकत्र चत्वारोङ्काः अन्यत्र त्रयः

एव अङ्काः अपरत्र द्वौ एव अङ्कौ एकत्र एकः एवाङ्कः । ततश्च एतादृशाक्षेण द्यूतं कुर्वत्सु बहुषु पुरुषेषु येन पुरुषेण पातितस्य अक्षस्य चतुर्थाङ्कयुक्तो भागः उत्तानः उपरि दृष्टो भवति सः कृतायः विजयी भवति । येन तु पातिताक्षस्य त्र्यङ्कादिलाञ्छितभागाः उत्तानाः भवन्ति सः पराजितः भवति इति व्यवह्रियते इति एकाक्षपातनं लक्षणं द्यूतम् । यत्र अनङ्किताक्षपातनं तत् अनेकाक्षपातनलक्षणं द्यूतम् । यत्र अनियतसंख्याकान् राशिभूतान् अक्षान् विकीर्य्य चतुरक्ष -गणने क्रियमाणे यस्य दीव्यतो अन्तिममपि गणनम् चतुरक्षात्मकं भवति स कृतायेन विजयी भवति । यस्य तु पुरुषस्य दीव्यतः त्र्यादिरूपतया तत् न्यूनं भवति, तस्य पराजयो भवति । अन्येऽपि अनेकप्रकारकाः द्यूतभेदाः सन्ति । ते यथालोकं ज्ञातव्या । अत्र द्यूतनिदर्शनम्, रैक्वविद्यायां राज्ञो व्याकुलभावप्रदर्शनार्थम् । यथा द्यूते पराजितो नरो व्याकुलितहृदयो भवति तथैव रैक्वविद्यायाम् अयमपि व्याकुलहृदयः भविष्यति इति ।।

**सु.** - अपरः प्रत्याह - द्यूतोपकरणम् अक्षः क्रमात् एकद्वित्रिचतुरङ्कैः अङ्कितैः अयसंज्ञैः चतुर्भिः पार्श्वैः उपेतः प्रसिद्धः । तत्र एकाद्यङ्काः अयाः क्रमशः कलिद्वापरत्रेताकृतसंज्ञकाः । सर्वतो विजयस्तु कृतायपतनात् । यस्य द्यूतकारस्य कृतायेन विजितं तस्य कृतायविजितस्य अन्ये अधरे ततो न्यूनाः अयाः त्र्यंकादयः **संयन्ति** - सङ्गता भवन्ति । चतुर्षु त्र्यादीनाम् अन्तर्भावात्, त्र्यङ्कादिभिः योऽर्थः स सर्वोऽप्यस्य अर्थात् न अधिकः इति भावः । यथैतत् तथा, यत् किञ्च प्रजाः साधु कुर्वन्ति तत्सर्वं साधु कर्म, एवं रैक्वम् **अभिसमेति** - अभिसङ्गच्छति । सर्वाणि साधुकर्मणः फलानि एतदनुष्ठानफलतो न बहिर्भूतानि, नाधिकानि इति भावः । ब्रह्मविदो हि आचरणम् अखिलं विद्यासंस्कृतम् । **किञ्च यस्तद्वेद यत्स वेद** - इह यो यद्वेद तदखिलं **सः** - रैक्वः **वेद** न अविदितं किञ्चिदिति यावत्, सर्वमप्यन्यत् विज्ञानफलम् एतद्विज्ञानफलात् न बहिर्भूतम्, नाधिकम् इति भावः । यद्यपि अयमन्वयो व्यवधानेन वर्तते, अथापि पाठक्रमात् अर्थक्रमस्य गरीयस्तया न क्षतिः। यत् पुनरत्र प्राचां भाषितम् - **यत्सः** - रैक्वः **वेद,** इह लोके **यः** - यः कश्चिदपि पुरुषः **तद्वेद** - तदेव वेद, तज्ज्ञातमेव अन्ये जानन्ति, तज्ज्ञाने सर्वं ज्ञानम् अन्तर्गतम् इति भावः इति । तत्राप्यस्ति अवधारणाध्याहारक्लेशः। असति अवधारणे यद्रैक्वो वेद तदपरो यः कश्चिद्वेदेति विप्रतीपार्थावगतिर्हि भवेत्, स्वरसतः तच्छब्दप्रतिसम्बन्धिनो यच्छब्दस्य यः कश्चित् इति अर्थाश्रयणक्लेशश्च । यद्वा - स रैक्वो यद्वेद तद्यो वेद तमेनं सर्वम् अभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति इत्यन्वयः । रैक्वोपज्ञं विज्ञानम् इत्यतिशयोऽपि अस्यां योजनायां व्यज्यते । एतेन रैक्वस्यैव नास्य विज्ञानं । यद्यस्य विज्ञानसम्पत्तिः भवेत् तदा घटेत तथा

यथात्थ इति व्यज्यते । एवं चास्य विज्ञाने त्वरा उत्पादिता भवति । **स रैक्वो मया एतत्** - इदानीम् उक्तेन प्रकारेण उक्तः इत्युवाच अपरः ।।

**तदु ह जानश्रुतिः पौत्रायण उपशुश्राव । स ह सञ्जिहान एव क्षत्तारमुवाच, 'अङ्गारे ! ह सयुग्वानमिव रैक्वमात्थेति, 'यो नु कथँ सयुग्वा रैक्व' इति ।। ५ ।।**

**'यथा कृतायविजितायाधरेऽयाः संयन्ति एवमेनँ सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद, यत् स वेद स मयैतदुक्त' इति ।। ६ ।।**

**प्र. - तदुह जानश्रुतिः पौत्रायण उपशुश्राव । तत् -** ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं वाक्यं सः राजा शुश्राव । **स ह सञ्जिहान एव क्षत्तारमुवाच ।** सः कथमपि निशाम् अतिवाह्य **सञ्जिहान एव** - तल्पं त्यजन्नेव क्षत्तारम् **उवाच** - वक्ष्यमाणम् उक्तवान् । क्षत्ता नाम -

"वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम् ।।"

इत्युक्तरीत्या राजान्तःपुररक्षकः प्रतिलोमजातिविशेषः क्षत्ता । **अङ्ग अरे ह सयुग्वानमिव रैक्वमात्थेति, यो नु कथं सयुग्वा रैक्व इति** इत्यादि । **ह अरे अङ्ग** वत्स इति तं क्षत्तारं राजा सम्बोध्य रात्रौ एवं हंसयोः सल्लापः समजनि इति, सयुग्वानमिव रैक्वमात्थ इत्यादिहंसोक्तिप्रत्युक्तिवाक्यानुवादपूर्वकं रैक्वस्य चिह्नम् उक्तवान् इत्यर्थः ।।

**आ.भा. - यदु ह जानश्रुतिः** इत्यादि । तत् स्वकीयनिन्दायुक्तं रैक्वप्रशंसात्मकं हंसवाक्यं राजा जानश्रुतिः पौत्रायणः **उपशुश्राव** - श्रुतवान् । ततः **सः** - राजा कथं कथमपि रात्रिम् अतिवाह्य **सञ्जिहान एव** - शय्यां त्यजन् एव **क्षत्तारम्** - अन्तःपुररक्षकम् **उवाच** - वक्ष्यमाणम् उक्तवान् । तत्र क्षत्ता नाम राजान्तःपुररक्षकः प्रतिलोमजातिविशेषः -

"वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम्"।। इति स्मृतेः ।

किमुक्तवान् राजा क्षत्तारं तत्राह - **अङ्गारे ! ह इत्यादि । अरे अङ्ग ! हे** अन्तःपुररक्षक ! एवं प्रकारेण सम्बोधनं कृत्वा रात्रौ यथा हंसयोः संवादो जातः तत्सर्वं कथयित्वा रैक्वस्य चिह्नम् उक्तवान् इति । अन्यत् सर्वं पूर्ववदेव व्याख्यातव्यम् ।।

**सु.** - तयोः तत्संवादवाक्यम् उपशुश्राव जानश्रुतिः पौत्रायणः । तदेवानुस्मरन् **सञ्जिहान एव** - त्यजन्नेव शयनतलम् उवाच **क्षत्तारं** - अन्तःपुरपार्श्ववर्तिनं परिचरम् । **अङ्गारे ह** - वत्स भोः, सम्बुद्ध्य एवं जातनिर्वेदः हंसयोः संवादवचनं 'सयुग्वानमिव' इत्यारभ्य 'स मयैतदुक्तः' इत्यन्तेन अनूदितवान् ।। ५-६ ।।

**स ह क्षत्ताऽन्विष्य, 'नाविद'मिति प्रत्येयाय । तँ होवाच ; यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ।। ७ ।।**

**प्र. - स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय । सः** - क्षत्ता शकटलक्षणरैक्वचिह्नम् अनुस्मरन् ग्रामनगरादिकम् अन्विष्य **नाविदं** - नाज्ञासिषम् इति प्रत्यागतवान् । **तं होवाच ; यत्रारे ब्राह्मणस्यान्वेषणा, तदेनमर्च्छेति । अरे !** क्षत्तः ! **ब्राह्मणस्य** - ब्रह्मविदः **यत्र** - [1]विजनेषु[1] नदीपुलिनारण्यादिषु मार्गणं युक्तम्, **तत्** - तत्र गत्वा **एनमर्च्छ** - रैक्वं प्राप्नुहि, मार्गणं कुरु इति तं राजा उवाच इत्यर्थः ।।

**आ.भा. - स ह क्षत्तान्विष्य** इत्यादि । **स ह क्षत्ता** - स चान्तःपुररक्षकः पुरुषविशेषः शकटादिलक्षणरैक्वऋषेः चिह्नम् अनुस्मरन् ग्रामनगरादिलोकसंकुलस्थानविशेषे **अन्विष्य** - अन्वेषणं कृत्वा **नाविदं** - नाहम् अज्ञासिषम् इति राजानं **प्रति एयाय** - प्रत्यागतवान् इति । **तं** - प्रत्यागतं क्षत्तारं राजा प्रत्युवाच । हे क्षत्तः ! न हि एकान्तवासी ऋषिः लोकसंकुलस्थानेषु समुपलब्धो भविष्यति । किन्तु ब्राह्मणस्य अन्वेषणाय यत्र जनरहितनदीपुलिनारण्यादिषु ब्राह्मणाः वसन्ति तादृशविजनप्रदेशेषु गत्वा **एनं** - रैक्वऋषिं प्राप्नुहि । तादृशस्थानेषु गत्वा तदन्वेषणं कुरु इत्यर्थः ।।

**सु. - स च क्षत्ता** राज्ञो निर्वेदं त्वरां च रैक्वदर्शनेऽवगत्य निर्गतः तत्र तत्र **अन्विष्य नाविदितमिति प्रत्येयाय । तं** राजा उवाच, **अरे यत्र ब्राह्मणस्य** - ब्रह्मविदः **अन्वेषणा** घटेत तत्र विजने देशे सरित्सरोवरतरुलतादिप्राये **तदेनमर्च्छ** - तत्र एनम् अन्वेषणेन गच्छ इति ।।

---

1. विविक्तेषु - क ।

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश । तँ हाभ्युवाद, 'त्वं नु भगवः ! सयुग्वा रैक्व ' इति । 'अहँ ह्य रा ३' [1]इति ह प्रतिजज्ञे[1] । स ह [2]क्षत्ता[2], अविदमिति प्रत्येयाय ।। ८ ।।**

**।। इति प्रथमः खण्डः ।।**

**प्र. - सोऽधस्तात् शकटस्य पामानं कषमाणमुपोपविवेश ।** अथ पुनः **सः** - क्षत्ता गत्वा विजने कस्मिंश्चिद्देशे **शकटस्याधस्तात् पामानं कषमाणं** - कण्डूयमानं रैक्वम् एत्य दृष्ट्वा **उपोपविवेश** - समीपे गत्वा विनयेन उपविष्टवान् । **तं हाभ्युवाद, त्वं नु भगवः ! सयुग्वा रैक्व इति** इत्यादि । 'हे भगवन् ! त्वं वा रैक्वः' ? इति क्षत्त्रा पृष्टो ऋषिः अरे ! क्षत्तः ! रैक्वोऽहमेव इति प्रत्युवाच । तच्छ्रुत्वा सः क्षत्ता अहं रैक्वम् **अविदं** - अज्ञासिषम् इति प्रत्यागतः इत्यर्थः ।।

**आ.भा. - सः** - उक्तरूपेण राज्ञा समादिष्टः **क्षत्ता** - पुनः तादृशस्थानेषु गत्वा विजने कस्मिंश्चित् अधिष्ठाने **शकटस्य अधस्तात्** - शकटाधोदेशे **पामानं कषमाणं** - चर्मरोगविशेषं कण्डूयमानं रैक्वऋषिं प्राप्य, दृष्ट्वा च **उपोपविवेश** - तत्समीपे विनयपूर्वकम् उपविष्टवान् । तदनन्तरं तत्र उपविश्य **तं** - रैक्वऋषिं प्रति **अभ्युवाद** - उक्तवान् । **त्वं नु भगवः स ! सयुग्वा रैक्व इति** । हे भगवन् ! त्वमेव रैक्वऋषिः असि स युग्वा ? इत्येवं क्रमेण पृष्टवान् । तदनन्तरं क्षत्त्रा पृष्टः ऋषिः **अहँ ह्यरा इति ह प्रतिजज्ञे** । हे क्षत्तः अऽहमेव सयुग्वा रैक्वः इत्येवं क्रमेण प्रोक्तवान् इति । **स ह क्षत्ताऽविदमिति प्रत्येयाय** । रैक्वस्य स्वीकारात्मकं वचनं श्रुत्वा मया ज्ञातो ऋषिः इति मन्वानः राजानं प्रत्यागतः इति ।।

**सु.** - एवम् आज्ञप्तः क्षत्ता यथानिर्दिष्टे स्थाने अन्विष्यन् एनं कस्मिंश्चित् **शकटस्याधस्तात् पामानं कषमाणम्** - कण्डूयमानं दृष्ट्वा **उपोपविवेश** - समीपे उपनतो विवेश । अवसरे **तमभ्युवाद** च, **त्वं नु भगवन् सयुग्वा रैक्व इति** । प्रश्नमनु स रैक्वः **प्रतिजज्ञे** - प्रत्यवदत्, **अहमरे** स इति । ततो निर्गत्य **क्षत्ता अविदमिति** वदन् राज्ञः पार्श्वं **प्रत्येयाय** - प्रत्यागतवान् ।।

**।। इति प्रथमखण्डभाष्यम् ।।**

---

1. इति प्रतिजज्ञे - इति माध्वसम्मतः पाठः । 2. क्षत्ताऽन्विष्य अविदं - इति माध्वसम्मतः पाठः ।

## द्वितीयः खण्डः

### [रैक्काय जानश्रुतेः धनादिदानम्]

**तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे । तँ हाभ्युवाद ।। १ ।।**

**प्र. - तदुह......प्रतिचक्रमे** । उह इति अनर्थको निपातः । **तत् -** तत्र **जानश्रुतिः गवां षट् शतानि, निष्कं -** कण्ठाभरणम् **अश्वतरीयुक्तरथं तदा** गृहीत्वा **रैक्वं प्रतिचक्रमे -** गतवान् । **तं हाभ्युवाद** । गत्वा च राजा तं रैक्वम् इति उवाच इत्यर्थः ।।

**आ.भा. -** रैक्वो मया दृष्टः स च अमुकस्थाने शकटस्य अधस्तात् विद्यते इत्येवं क्षत्तृमुखात् श्रुत्वा **तत् -** तत्र रैक्वसमीपगमनाय विद्याप्राप्त्यर्थं कृतनिश्चयो **जानश्रुतिः पौत्रायणः** 'रिक्तपाणिर्न सम्पश्येत् राजानं देवतां गुरुम्' इति नीतिम् अनुस्मरन् गवां **षट् शतानि निष्कं -** कण्ठाभरणं सौवर्णं बहुमूल्यहारादिकम् **अश्वतरीरथं -** अश्वतरीभ्यां युक्तं रथं **च आदाय -** गृहीत्वा **प्रतिचक्रमे -** गतवान् । **तं -** रैक्वं **हाभ्युवाद -** तत्समीपं गत्वा प्रणामादिकं कृत्वा उवाच ।

ननु नायं रैक्वो धनार्थी येन धनमादाय गतवान्, न वा विद्यादानस्य अयं क्रमः यद्धनं शिष्येभ्यो नीत्वा ततो विद्या दातव्या । विद्याग्रहणाय आचार्यकुले स्थित्वा शुश्रूषा एव विद्याप्राप्तये भवति -

"यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति" ।। (ना.शि.२-८-२८)

इति स्मृतेः इति चेत् सत्यम्, न हि राजसिंहासने समुपविष्टस्य ब्रह्मचर्यपूर्वकदीर्घकालपर्यन्तं गुरुकुले निवासः सम्भवति येन गुरुशुश्रूषया विद्याप्राप्तिः स्यात् । न वा केवलं शुश्रूषा एव विद्याप्राप्तौ साधनम्, तदन्यस्यापि तत्साधनस्य सत्वात् । तदुक्तम् स्मृतौ -

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपपद्यते" ।।

तथा च यथा तृणारणिमणिस्थलीयवह्निं प्रति एकैकस्य तृणादेः स्वातन्त्र्येण कारणता, न तु दण्डचक्रादिन्यायेन मिलितस्य, तद्वत् प्रकृते विद्याप्राप्तौ शुश्रूषापि कारणम् । पुष्कलं धनमपि कारणम् । विद्यापि कारणम् । एवं च शुश्रूषा विद्यालक्षणकारणस्य राजनि

अभावात् तृतीयं धनात्मककारणम् आदाय विद्याप्राप्तये रैक्वसमीपगमनं राज्ञः न विरुद्धम् । अत एव अल्पधनसहितस्य राज्ञः प्रथमावृत्तौ रैक्वस्य उपालम्भवचनम् । द्वितीयावृत्तौ पुष्कलधनयुक्तस्य विद्यां दास्यामि इति स्वीकारवचनमपि संगच्छते । अन्यथा धनग्रहणात् रैक्वस्य धनलोभवत्त्वापत्तेः । लोभादेः ज्ञानपरिपन्थितया तदर्थं राज्ञः रैक्वसमीपगमनं निरर्थकं स्यात् ब्राह्मणस्य प्रतारकत्त्वापत्तेश्च । शूद्र इति सम्बोधनं रैक्वस्य विद्याग्रहणनियमानभिज्ञताप्रदर्शनार्थम् ।।

**सु.** - तदानीमेव जानश्रुतिः गवादिबहुतरोपायनहस्तः प्राप्य रैक्वम् उवाच ।।

**रैक्वेमानि षट् शतानि गवाम्, अयं निष्कोऽयमश्वतरीरथः । अनु म एतां भगवो ! देवताँ शाधि, यां देवतामुपास्से इति ।। २ ।।**

**प्र. - रैक्वेमानि षट् शतानि गवाम्, अयं निष्कोऽयमश्वतरीरथः । हे रैक्व !** एतत्सर्वम् आनीतम् । तद्गृहाण त्वम् इत्यर्थः । **अनु......उपास्से इति ।** एतद् गृहीत्वा, **यां देवतां त्वमुपास्से,** तां देवतां मे **अनुशाधि** - विविच्य ज्ञापय इति प्रार्थयामास ।।

**आ.भा.** - किमुवाच राजा रैक्वं प्रति तत्राह - **रैक्वेमानि** इत्यादि । हे रैक्व ! गवादिकं सर्वं त्वदर्थम् आनीतवानस्मि त्वम् एतत्सर्वं गृहाण । हे भगवन् एतत्सर्वं गृहीत्वा कृपां विधाय **यां देवतामुपास्से** - यस्याः देवतायाः उपासनां करोषि तस्याः एव देवतायाः उपासनं ब्रूहि । अहमपि तदुपासनं त्वदुपदिष्टः करिष्यामि इत्येवं राजा ऋषिं प्रार्थयामास इति भावः ।।

**सु.** - **इमानि** उपायनानि गवादीनि स्वीकृत्य भगवन् **रैक्व !** भवान् **यां देवतामुपास्ते** तामेतां **देवतां** मे शिष्याय **अनुशाधि** - उपदिश इति ।।

**तमु ह परः प्रत्युवाच - अह हारेत्वा शूद्र ! तवैव सह गोभिरस्त्विति । तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ।। ३ ।।**

**प्र. - तमुह परः प्रत्युवाच । परः** - रैक्वः **तं** - राजानं प्रत्युवाच । तदेवाह - **अह हारेत्वा शूद्र ! तवैव सह गोभिरस्तु ।** अह इति निपातः आश्चर्ये । योगमहिमविदितलोकत्रयः ऋषिः

जानश्रुतेः ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां, तदनन्तरमेव ब्रह्मजिज्ञासया उद्योगं च विदित्वा अस्य ब्रह्मविद्यायोग्यताम् अभिज्ञाय सत्यामपि योग्यतायां चिरकालसेवां विना अर्थप्रदानेन शुश्रूषमाणस्य अस्य यावच्छक्तिप्रदानेन विना ब्रह्मविद्या प्रतिष्ठिता न भवति इति मत्वा तम् अनुगृह्णन्, अस्य शोकाविष्टताम् उपदेशयोग्यताख्यायिकां, ब्रह्मजिज्ञासादार्ढ्यसिध्यर्थं स्वयोगमहिमसाक्षात्कृत-सकलवृत्तान्तत्त्वलक्षणस्वमहिमानं च शोचितृत्वप्रवृत्तिनिमित्तकशूद्रशब्दामन्त्रणेन ख्यापयन्, **हारेत्वा** - हारसहितः इत्वा - रथः अश्वतरीरथः - तवैव गोभिः सह अस्तु । कलत्रहीनस्य ग्रामगृहादिशून्यस्य मम गोरथादिरक्षणे का शक्तिः ? मत्प्रयोजनापर्यवसाय्यल्पधनदानेन च कथं तव ब्रह्मविद्या प्रतिष्ठिता भवेत् इति उवाच इत्यर्थः । 'स्फायितची' (उ.सू.१७०) इत्यादिना रक्प्रकरणे पठितेन 'शुचेर्दश्च' (उ.सू.१७६) इति सूत्रेण रक्प्रत्यये, शुचेः चकारस्य दकारे, 'अमितम्योर्दीर्घश्च' (उ.सू.१८६) इति पूर्वसूत्रेण धातोः उकारस्य दीर्घादेशे च शूद्रशब्दो निष्पन्नो भवति ।

**तदुह......प्रतिचक्रमे ।** तदभिप्रायं जानन् अधिकं गवां सहस्रं, रैक्वस्य परिणयार्थं स्वकन्याम् आवासार्थं तत्रत्यं ग्रामं च उपाजहार इत्यर्थः ।।

**आ.भा. - तं -** राजानं जानश्रुतिं प्रति परः - रैक्वऋषिः प्रत्युवाच । स किमुक्तवान् तत्राह - **अह हारेत्वा** इत्यादि । **अत्र अह** इति निपातः आश्चर्यप्रदर्शनार्थः । **हारेत्वा** - हारसहित इत्वा रथः अश्वतरीरथो गोभिः सह तवैव अस्तु । कलत्रादिपरिवाररहितस्य ग्रामगृहादिरहितस्य मे रथादिना नास्ति प्रयोजनम् । अपि तु गृहासक्तस्य पुरुषस्यैव रथादिकं सप्रयोजनकं भवति । तस्मात् गृहस्थस्य तव एव एतत्सर्वं शोभते न मम इति । रैक्वः प्राह इति पूर्वेणान्वयः ।

ननु जानश्रुतिः क्षत्रियः, तदा कथं तं प्रति शूद्रेति सम्बोधनम् इति तत्र उच्यते । हंसवचनात् स्वस्य ब्रह्मविद्याराहित्यं रैक्वस्य ब्रह्मनिष्ठत्वं ज्ञात्वा राज्ञः मनसि महती विलक्षणा च चिन्ता समुत्पन्ना कथं मे ब्रह्मविद्या प्राप्ता स्यात् इति । ततो ब्रह्मविद्याप्राप्त्यर्थं रैक्वं प्रति आगतवान् इति राज्ञः शोकवेगं योगप्रभावाद् ऋषिः अवेत्य शूद्र इति सम्बोधनं कृतवान् त्वं शोकाकुलोऽसि इति ज्ञातवान् अहमिति स्वकीययोगमहिमानं ख्यापयन् । न तु जात्या शूद्र इति कृत्वा तथा सम्बोधनम् इति । अल्पं मया धनमानीतं न तु अधिकं विद्याग्रहणोपयोगि । अतः मां शूद्रपदेन सम्बोधयति निषेधं च करोति । अतो मयाऽधिकम् आनेयम् इति रैक्वाभिप्रायं ज्ञात्वा, **तदु ह पुनरेव जानश्रुतिः** राजा **पौत्रायणः गवां सहस्रं निष्कं** प्रभूतं

सुवर्णम् **अश्वतरीरथं दुहितरं** - परिणयार्थं स्वकीयां कन्यां सर्वाङ्गशोभनाम् रैक्वस्य निवासार्थं तत्रत्यं ग्रामं चादाय गृहीत्वा **प्रतिचक्रमे** - आनीतवान् ।।

**सु. - तं** - राजानं **परः** - रैक्वः प्रत्युवाच श्रद्धां परीक्षमाणः । **अह** - इत्यनौचित्ये, धनेन विद्यां लिप्समानेन त्वया इदमानीतं धनम् अननुगुणं विद्यायाः । धनेन मत्तो विद्यां लिप्समानेन त्वया मम इदानीम् अनुपयुक्तमेव धनम् आनीतम् । हे **शूद्र हारेत्वा** - हारेण सहित इत्वा गमनसाधनं रथोऽयं तवैव अस्तु गावश्च इमाः तवैव सन्तु, किं मे स्यात् एभिः प्रयोजनम्, यत्राश्रमे स्थितस्य स्यात् एभिः प्रयोजनं स तु गृहाश्रमो न मे इति । यद्यपि न असौ शूद्रः । यदयं सपदि शयनतलत् उत्तिष्ठन्नेव क्षत्तारमाह, सम्बोधयति च रे इति । तदयं क्षत्ता शयनतलोपान्तपरिचर इति गम्यते । इदं च क्षत्रियेषु एव घटते न शूद्रे । बहुदायिता च तथा, 'दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्' (भ.गी.१८-४३) इति च स्मर्यते । ग्रामवितरणमपि तथा ग्रामो हि न क्षेत्रमात्रम्, प्रजाभि अधिष्ठितः, पुरात् अल्पीयान् भुवः प्रदेशभेदः । पठ्यते हि संवसथपर्यायः, संव सन्ति अस्मिन् प्रजा इति हि संवसथः उच्यते । दानकर्मता तु स्वीय एव, यथेष्टविनियोगयोग्यमेव च स्वम्, किमिह प्रजासु तथात्वम् उत तदुपभोगोपकरणे गृहक्षेत्रादौ, प्रजास्तु न कस्यापि यथेष्टविनियोगयोग्याः, न हि पशवः ते । गृहादि तु प्रजास्वामिकं कथम् अस्य तथा स्यात् ? तदत्र निवर्त्यमानं स्वत्वम् आपाद्यमानं च परस्वत्वं षष्ठांश एवेति परिशेषात् सिद्ध्यति । स चांशः क्षत्रियस्य एव असाधारणः । भगवान् बादरायणश्चास्य क्षत्रियत्वे लिङ्गं भूरि आह ; तदयं क्षत्रियः एव । अथापि शूद्र इति आमन्त्रणम् अस्य शोकवेगं ज्ञानवैधुर्यकृतम् आद्रवणं च आत्मनः समीपं प्रति अभिप्रेत्य स्वस्य विप्रकृष्टार्थदर्शितां च ज्ञापयतो गुरोः वचनम् इति न क्षतिः । आह च भगवान् आचार्यः शुगस्य 'तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि' (ब्र.सू.१-३-३३) इति । तत् अवधृत्य रैक्वस्य वचनं दुहितरं च आदाय पुनः आगतवान् ।।

**तँ हाभ्युवाद - रैक्वेदँ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्से । अन्वेव मा भगवः शाधीति ।। ४ ।।**

**प्र. - तं ह......शाधीति** । स्वोपहृतं सर्वं समर्प्य, **मा** मां **अनुशाध्येव** । न प्रत्याख्याहि इति प्रार्थयामास इत्यर्थः । **यस्मिन्** ग्रामे त्वम् **आस्से** - निवसिष्यसि, सोऽयं तव वासार्थः **ग्रामः** इत्यन्वयः ।।

**आ.भा.** - एतत्सर्वमादाय तं - रैक्कं **हाभ्युवाद** - प्रोवाच हे रैक्क ! इदं गवां सहस्रम्, अयं निष्कः, सुवर्णाभरणम्, अश्वतरीरथः, इयं जाया, इयं मदीया कन्या, तां जायार्थम् । तथा यस्मिन् सम्प्रति निवासं करोषि अयं ग्रामः । एतत्सर्वं गृहीत्वा हे **भगवः** - भगवन् ! **मा** - मां **शाधि** - ब्रह्मविद्यां प्रब्रूहि । प्रत्याख्यानं मा कुरु । एवंक्रमेण राजा रैक्कं प्रार्थयामास इति ।।

**सु.** - आगत्य इदम् उवाच । एते गवादयः, इयं ते जाया, अयं ते ग्रामो **यस्मिन्नास्से** - निवससि । इदम् उपायनं स्वीकृत्य माम् **अनुशाधि** इति ।।

**तस्याह मुखमुपोद्गृह्णन्नुवाच - आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति । ते हैते रैक्कपर्णा नाम महावृषेषु यत्रास्मा उवास, तस्मै होवाच ।। ५ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र. - तस्याह......उवाच । मुखम्** - उपायनरूपोपायं **तस्य** - जानश्रुतिसम्बन्धिनम् **उपोद्गृह्णन्** - अङ्गीकुर्वन् उक्तवान् इत्यर्थः । उक्तिमेवाह - **आजहार.......आलापयिष्यथा** इति । **इमाः** - दक्षिणाः आजहर्थ । आजहार इति व्यत्ययश्छान्दसः । **अनेनैव मुखेन** - उपायेन मां ब्रह्मोपदेशरूपं वाक्यं आलापयिष्यसे । ब्रह्मविद्योपदेष्टारं करिष्यसि इत्यर्थः । 'थासस्से' (पा.सू.३-४-८०) इति एतदभावः छान्दसः । पुनरपि शूद्रेति सम्बोधनस्य पूर्ववदेव प्रयोजनम् । अत्र [1]शूद्रपदस्य[1] न रूढ्या वर्णविशेषोऽर्थः । चतुर्थवर्णस्य ब्रह्मविद्यायाम् अनधिकारात् इति द्रष्टव्यम् ।

**ते......उवास** । यत्र ग्रामेषु रैक्क उवास, ते महावृषाख्यदेशेषु रैक्कपर्णा इति प्रसिद्धाः । तान् ग्रामांश्च अस्मै ददौ इत्यर्थः । **स तस्मै होवाच** । तत् सर्वं दत्तवते जानश्रुतये रैक्कः स्वोपास्यां देवताम् उपदिदेश इत्यर्थः ।।

**आ.भा. - तस्याह** इत्यादि । **तस्य** - जानश्रुतेः राज्ञः मुखं कन्याद्युपायनलक्षणम् उपायं द्वारम् **उपोद्गृह्णन्** - अङ्गीकुर्वन् रैक्कः **उवाच** - उक्तवान् । किमुक्तवान् **तामेव** उक्तिं स्वीकारलक्षणमाह - **आजहार** इत्यादि । हे **शूद्रः** - हे राजन् **इमाः** दक्षिणाः कन्यादिलक्षणाः

---

1. शूद्रशब्दस्य - अ,आ,क ।

**आजहार** - आजहर्थ । **अनेनैव** - मुखेन उपायेन उपायनलक्षणेन **आलापयिष्यथा** - आलापयिष्यसे, ब्रह्मविद्योपदेष्टारं मां करिष्यसि । अत्रापि शूद्रेति सम्बोधनं न वर्णविशेषाभिप्रायेण । जात्या शूद्रस्य ब्रह्मविद्यायाम् अनधिकारात् । किन्तु पूर्ववदेव प्रयोजनम् । यत्र ग्रामविशेषे रैक्व **उवास** - निवासम् अकरोत् ते **महावृषेषु** - देशविशेषे रैक्वपर्णा इति प्रसिद्धाः । तान् ग्रामान् रैक्वाय ददौ इत्यर्थः । तदनन्तरं **तस्मै** - राज्ञे स रैक्वः **उवाच** - स्वकीयोपास्यां देवताम् उवाच उपदिदेश इति ।।

**सु. - अह** इति अनर्थको निपातः, **तस्य** - राज्ञः सम्बन्धि, **मुखम्** - विद्याद्वारम् **उपोद्गृह्णन्** - स्वीकुर्वन्, उवाच । **आजहारेमाः शूद्रः** - हन्त ते श्रद्धा ! आजहार एव भवान् इमा याभिः जायादिभिः आश्रमकर्म निर्व्यूढं स्यात् । **अनेनैव मुखेन** - चिरकालब्रह्मचर्यपरिपालनपरिचर्यादिनिरपेक्षं पुष्कलधनवितरणद्वारेणैव, माम् **आलापयिष्यथाः** - आलापयसिति यावत् । इति उवाच इति पूर्वेण सम्बन्धः । **ते हैते** रैक्वपर्णा नाम ग्रामाः **महावृषेषु** - देशेषु अद्यापि सन्ति । यत्र असौ रैक्व उवास, ये च अस्मै रैक्वाय राज्ञा दत्ताः । अथ **तस्मै** - जानश्रुतये रैक्व **उवाच** - वक्ष्यमाणप्रकारेण विद्याम् उपदिदेश ।।

**।। इति द्वितीयखण्डभाष्यम् ।।**

## तृतीयः खण्डः

**[संवर्गविद्या - वायुप्राणयोः संवर्गत्वम्]**

**वायुर्वाव संवर्गः । यदा वा अग्निरुद्वायति, वायुमेवाप्येति । यदा सूर्योऽस्तमेति, वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति, वायुमेवाप्येति ।। १ ।।**

**प्र.** - उपदेशमाह - **वायुर्वाव संवर्गः** । [1]संवर्जननाम[1]गुणयोगाद्वायुः एव संवर्गः । संवर्जनं - सङ्ग्रहणम् । एकीकृत्य ग्रहणम् इत्यर्थः । संवर्गत्वगुणको वायुः ध्येयः इति यावत् । संवर्गत्वमेव उपपादयति - **यदा वा वायुमेवाप्येति । उद्वायति** - उद्वासनं प्राप्नोति । विनश्यति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा.** - रैक्वः राजानम् उपदिदेश इति द्वितीयखण्डान्ते कथितम् तत्र कीदृशः सः उपदेशः इति जिज्ञासायां तदुपदेशमाह - **वायुर्वाव** इत्यादि । **वायुर्वाव संवर्गः** - तत्र

---

1. संवर्जनाख्य - अ,आ ।

ईरणस्वभावो बाह्यो वायुरेव संवर्गः । संवर्जनात् संवर्गो वायुः । संवर्जनाख्यगुणसंबन्धात् संवर्गो । वायुरेव । तत्र संवर्जनम् सङ्ग्रहणम्-एकीकृत्य ग्रहणम् इत्यर्थः । ततश्च संवर्गगुणविशिष्टो वायुः ध्यातव्यः । तादृशगुणविशिष्टस्य वायोः उपासनं कर्तव्यम् इति भावः । वायोः संवर्गत्वमेव उपपादयति **यदा वा** इत्यादिना । **यदा** - यस्मिन् काले **अग्निः** - प्रसिद्धः सर्वदाहको वह्निः, **उद्वायति** - उद्वासं प्राप्नोति विनाशप्रतियोगी भवति तदा **वायुमेवाप्येति** - वायुस्वाभाव्यमेव प्राप्नोति । कार्यं खलु स्वकारणे एव विनाशकाले गच्छति इति वह्नेः वायुजन्यत्वात् विनाशकाले वह्निः वायौ लीनो भवति । एवं **यदा** - यस्मिन् काले **सूर्योऽस्तमेति** - दर्शकस्य चक्षुर्विषयताम् अतिक्रामति तदा स सूर्यो **वायुमेवाप्येति** - वायुस्वाभाव्यमेव गच्छति । एवं **यदा** - यस्मिन् काले - **चन्द्रोऽस्तमेति** तदा **वायुमेवाप्येति** - वायुस्वाभाव्यमेव गच्छति ।

ननु वह्निः विनाशसमये स्वरूपं परित्यज्य कारणतादात्म्यम् आप्नोति, सूर्याचन्द्रमसौ तु स्वस्वरूपम् अपरित्यजन्तौ एव उदयास्तमयं प्राप्नुतः । तत्कथम् उच्यते, वायौ तयोः प्रलयः ? इति चेत् सत्यम् । योऽयं सूर्यः अस्तमयकाले अदर्शनभावम् आगच्छति तत्र वायोरेव कारणत्वम् । वायुना एव सूर्यः अस्तं नीयते । चलनादिक्रियायाः वायुकार्यत्वात् । यद्वा प्रलयसमये रविचन्द्रमसोः स्वरूपविनाशे तेजोरूपयोः सूर्याचन्द्रमसोः वायौ एव प्रलयः स्यादिति ।।

**सु.** - संवर्गम् उपास्यम् उपदिशति । तत्र अधिदैवतम् अध्यात्मं च संवर्गम् उपास्यम् उपदिशन् प्रथमम् अधिदैवतं संवर्गम् उपदिशति । **वायुर्वाव संवर्गः** - ननु ब्रह्मवित् असौ रैक्वः, उपश्रुत्यास्य तद्विज्ञानं यस्तद्वेद यत्स वेदेति हंसानुवर्णितं विविदिषातिशयेन एनम् उपातिष्ठत अयम् । कथम् असौ वायुम् उपास्यम् उपदिशेत् ? कथं वाऽस्य विविदिषितम् अनेन विज्ञातं स्यात् ? सत्यम् । नात्र रैक्वस्य हार्दं वायुमात्रे, अखिलात्मकं परमात्मानम् उपास्यम् उपदिशन्, अधिदैवतं वायुना अध्यात्मं प्राणेन च उपलक्षयति । उपास्यगुणश्च संवर्गत्वलक्षणः तस्मिन्नेव मुख्यः । उपदेशश्च गुप्तः एव शोभते रहस्यतमस्य । सुमतिना शिष्येण गुरोः आशयोऽवधार्येत । अन्येन चान्यथा । निगूढम् इमम् अस्य आशयं श्रुतिः अनुपदं विशदयिष्यति च आख्यायिकामुखेन । संवर्गताम् उपपादयति - **यदा** इत्यादिना । **यदाऽग्निरुद्वायति** - उपशाम्यति, तदा **वायुमेवाप्येति** - वायौ विलीयते, यदा सूर्यः अऽस्तमेति तदा वायुमेवाप्येति ।

ननु अनुपपन्नम् एतत्, अन्वहम् अस्तमुपगच्छतोः अपि अविनाशात् । सत्यम्, अथापि अन्वहम् इन्द्रियाणां सतामेव स्वापसमये यथा प्राणे अप्ययः श्रूयते तथा । ननु अनुपपन्नार्थे किं निदर्शनेन ? नैवम्, निदर्शनेन अयं लाभः, अर्थविशेषाश्रयणम् उचितम् इति, अर्थविशेषश्च अयम् । यथा प्राणैकनिर्वर्त्यप्रकाशनकार्याणां चक्षुरादीनां स्वापे निर्वाहकेन प्राणेन एकीभावः तत्कार्यातिरिक्तकार्याकरणं तथा वायुनिर्वर्त्यप्रकाशकस्य आदित्यस्य समयविशेषे देशविशेषे वायुकार्यातिरिक्तकार्याकरणमप्ययः । प्राणेन प्रणीतो वागादिः यथा स्वार्थम् अनुप्रकाशते तथा आदित्योऽपि वायुना प्रणीतो देशविशेषम् अनुप्रकाशते वायुना उन्नीतश्च न तम् अनुप्रकाशते, इति इमम् उत्पादाप्ययविभागम् अभिप्रेत्य 'वायुमेवाप्येति' इति उक्तमिति भावः । यद्वा - **अस्तमेति** - स्वरूपतो नाशमेति (प्रलये) तदा **वायुमेवाप्येति** - आदित्यमण्डलस्य तेजोरूपस्य विलये कारणे वायुस्वरूपे विलयो युक्तो नाम । एवं चन्द्रमसः जलस्य च एवं बोध्यम् । वायुः ह्येव एतान् सर्वान् **संवृङ्क्ते** - अपीयमानान् एतान् अग्न्यादीन् वायुर्हि संकलय्य एकीकृत्य पृथक्प्रतिपत्त्यनर्हताम् आपाद्य स्वयं धत्ते । तेनायं संवर्गत्वगुणविशिष्टः उपास्यः । इदं च एकीकृत्य धारणं मुख्यं तच्छरीरकपरमात्मनि एव, धारकता हि आत्मन एव मुख्या, परमात्मा एव च सर्वेषामेव आत्मा । अन्यतोऽस्य विस्तरोऽवगन्तव्यः ।।

**[वायुः अधिदैवतसंवर्गः]**

**यदाप उच्छुष्यन्ति, वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् ।। २ ।।**

**प्र. - यदापः......संवृङ्क्ते** इति । अग्निसूर्यचन्द्राणां तेजोरूपाणां जलस्य च लये वायौ एकीभावात् वायुः संवर्गः इत्यर्थः । प्रक्रमे हि 'एनं सर्वं तदभिसमेति' इत्यादि ब्रह्मविद्याप्रशंसावगमात् वक्ष्यमाणलिङ्गानुपपत्तेश्च वायुशब्देन वायुशरीरकपरमात्मा उच्यते । **संवृङ्क्ते** - एकीकृत्य गृह्णाति इत्यर्थः । **इत्यधिदैवतम्** - एवं देवेषु संवर्गः अयम् इत्यर्थः ।।

**आ.भा.** - एवं **यदा** - यस्मिन् काले **आपः** - जलानि **उच्छुष्यन्ति** - शोषभावम् आगच्छन्ति, तदा **वायुमेवापियन्ति** - वायुभावम् आगच्छन्ति । वायुरेव हि **एतान्** - सर्वान् वह्न्यादीन् **संवृङ्क्ते** - स्वात्मभावम् आपादयति । तेजोलक्षणानाम् अग्निसूर्यचन्द्राणां जलस्य च लयकाले बाह्यवायौ एकीभावात् वायुः संवर्गः । 'प्रकृते च एनं सर्वं तदभिसमेति' इत्यादिब्रह्मविद्यायाः प्रशंसादर्शनात् वायुशब्देन वायुशरीरकः परमात्मा

श्रीराम एव विवक्षितः । स च सर्वकारणत्वात् सर्वम् एकीकृत्य महाप्रलये गृह्णाति इति । **इत्यधिदैवतम्** देवतासु संवर्गोपासनं कथितं भवति इति ।।

**सु.** - व्याख्यातप्रायमेतत् ।।

**[अध्यात्मसंवर्गः प्राणः]**

**अथाध्यात्मम् - प्राणो वाव संवर्गः । स यदा स्वपिति, प्राणमेव वागप्येति, प्राणं चक्षुः, प्राणँ श्रोत्रम्, प्राणं मनः, प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ।। ३ ।।**

**प्र.** - तथा प्राणः संवर्गः इत्याह - **अथाध्यात्मम्, प्राणो वाव संवर्गः** । तदुपपादयति - **स यदा स्वपिति । सः** - पुरुषः **यदा** - यस्मिन् काले स्वपिति, तदा तस्मिन् काले **प्राणमेव......संवृङ्क्ते** । प्राणे वाक्चक्षुश्श्रोत्रमनसाम् एकीभावात् प्राणं संवर्गम् उपासीत इत्यर्थः । अत्रापि प्राणशब्दः तच्छरीरकपरमात्मपरो द्रष्टव्यः ।।

**आ.भा.** - यथा वायुः संवर्गः तथा वायुविशेषः अध्यात्मं, प्राणोऽपि संवर्गः इत्याह - **अथाध्यात्मम्** - आत्मानम् अधिकृत्य संवर्गदर्शनम् इदं कथ्यते **प्राणो वाव संवर्गः** । प्राणे संवर्गगुणकत्वमेव उपपादयति - **स यदा** इत्यादि । **सः** - पुरुषः **यदा** - यस्मिन् काले **स्वपिति** - स्वापं करोति, तस्मिन् काले **प्राणमेव वागप्येति** यथा प्रलयकाले अग्निः वायुभावं प्राप्नोति तथा वागपि स्वापकाले प्राणभावम् आगच्छति प्राणे तल्लयो भवति इत्यर्थः । एवं प्राणं चक्षुः इत्याद्यपि व्याख्येयम् । **प्राण एवैतान्** - वागादीन् **सर्वान्** संवृङ्क्ते । प्राणे वाक्चक्षुश्श्रोत्रमनसाम् एकीभावात् प्राणं संवर्गम् उपासीत । संवर्गगुणविशिष्टस्य प्राणस्य उपासनं विधेयम् इति भावः । अत्रापि प्राणपदं प्राणशरीरकपरमात्मबोधकमेव इति ।।

**सु.** - व्याख्यातप्रायमेतत् ।

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ।। ४ ।।**

**प्र.** - उक्तमर्थम् उपसंहरति - **तौ वा एतौ......प्राणेषु** । स्पष्टोऽर्थः ।।

**आ.भा.** - **तौ वा एतौ** वायुप्राणौ द्वावपि **संवर्गौ** - संवर्जनादिगुणविशिष्टौ । तत्र **देवेषु** अधिदैवत**वायुरेव** संवर्गः । प्राणेषु वागादिषु **प्राणः** एव संवर्गो मुख्यः संवरणादिगुणविशिष्टः इति ।।

**सु. - देवेषु -** अग्न्यादिषु, **प्राणेषु -** वागादिषु, प्राणत्वं मुख्यप्राणेन्द्रियसाधारणम् इह बोध्यम् ।।

[संवर्गविद्यास्तुत्यर्था आख्यायिका]

**अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे । तस्मा उह न ददतुः ।। ५ ।।**

**प्र. -** संवर्गविद्यास्तुत्यर्थम् आख्यायिका इयम् आरभ्यते[१] - **अथ ह बिभिक्षे -** कपिगोत्रं शुनकपुत्रं च कक्षसेनसुतम् अभिप्रतारिनामानं च, तौ द्वौ सूपकारैः **परिविष्यमाणौ -** भोजनाय उपविष्टौ कश्चित् संवर्गोपासको **ब्रह्मचारी** भिक्षितवान् । **तस्मा उह न ददतुः ।** अयं ब्रह्मचारी संवर्गविद्यानिष्ठो दुरभिमानी यत् वक्ष्यति तत् श्रोष्यावः इति बुद्ध्या तस्मै तौ भिक्षां न दत्तवन्तौ ।।

**आ.भा. -** सम्प्रति संवर्गविद्यां स्तोतुम् आख्यायिका इयं प्रस्तूयते - **अथ ह** इत्यादि । तत्र ह शब्द ऐतिह्यार्थकः । पुरा कदाचित् एवम् अभूत् इत्यर्थः । **शौनकञ्च -** शुनकस्य अपत्यम् **कापेयं -** कपिगोत्रोत्पन्नं कमपि संवर्गविद्याविद्वांसम् ब्राह्मणं तथा **काक्षसेनिं -** कक्षसेनस्य अपत्यम्, नामतः अभिप्रतारिणम् ब्राह्मणं च । **तौ** एतौ द्वौ ब्राह्मणौ पाचकैः **परिविष्यमाणौ -** मध्याह्नकालिकभोजनाय समुपविष्टौ **ब्रह्मचारी -** संवर्गोपासकः कश्चित् ब्राह्मणवटुः **बिभिक्षे -** भिक्षितवान्, भोजनार्थं याचितवान् इत्यर्थः । **तस्मै -** भिक्षार्थिने ब्रह्मचारिणे, **उह न ददतुः** शौनकाभिप्रतारिणौ योऽयं भिक्षार्थम् आगतो ब्रह्मचारी संवर्गविद्यानिष्ठो दुरभिमानी यत् निषेधानन्तरं वक्ष्यति तत् आवां श्रोष्यावः इति मन्वानौ तौ तस्मै भिक्षां न ददतुः इति भावः ।।

**सु. -** योऽयम् उपास्यः संवर्गत्वगुणको वायुप्राणशब्दाभ्याम् उपदिष्टः तम् आख्यायिकामुखेन व्यक्तम् अवधारयति श्रुतिः रैक्को वा । आख्यायिका च अजामितापनयनेन

---

१. इयं आख्यायिका जैमिनीयोपनिषद्ब्राह्मणे तृतीयेऽध्यायेऽपि श्रूयते । 'तद्ध शौनकं च कापेयमभिप्रतारिणं च (काक्षसेनिं) ब्राह्मणः परिवेविष्यमाणावुपावव्राज ।। तौ ह बिभिक्षे । तं ह नाददाते को वा को वा इति मन्यमानौ । तौ होपजग' इत्यादि ।

सुखप्रतिपत्तये । **अथ** इति आख्यायिकोपक्रमे । कपेः गोत्रापत्यं शुनकस्य सुतम्, अपरं च नाम्ना **अभिप्रतारिणं** कक्षसेनसुतं **परिविष्यमाणौ** - सूपकारौ **ब्रह्मचारी** कश्चित् बिभिक्षे बुभुक्षया । **तस्मै** - भिक्षितवते न **ददतुः** - भिक्षां तौ, परीक्षितुम् अस्य विज्ञानं वचनेन ।।

**स होवाच -**

**महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः ।**
**तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तम् ।।**
**यस्मै वा एतदन्नम्, तस्मा एतन्न दत्तम् इति ।। ६ ।।**

**प्र. - स होवाच । सः** - ब्रह्मचारी उवाच - **महात्मनः......वसन्तम् ।** अधिदैवतं महात्मनः अग्न्यादित्यचन्द्रजलरूपान् अध्यात्मं वाक्चक्षुःश्रोत्रमनोरूपान् **चतुरः** - चतुस्संख्याकान् देवान् सर्वलोकस्य **गोपाः** - गोप्ता स एक एव देवो वायुप्राणरूपी **कः** - प्रजापतिः **जगार** - संहृतवान् । हे कापेयाभिप्रतारिणौ ! एवंभूतं प्रजापतिं **बहुधा** - बहुरूपतया **वसन्तं मर्त्याः** - मरणधर्माणो अविद्या मोहिताः सन्तो न जानन्ति इत्यर्थः । **गोपाः** - 'गुपू रक्षणे' (धा.पा.३९५) [1]असु प्रत्ययान्तः[1] । **यस्मै न दत्तमिति । जगत्सर्वं यस्मै** - यस्य संवर्गस्य प्रजापतेः अन्नम्, **तस्मै** - भिक्षमाणाय मह्यम् **अन्नं न दत्तम् ।** अतः केऽपि न जानन्ति इति उपासनदार्ढ्यायत्तोपास्यैक्यबुद्ध्या भिक्षमाणाय स्वस्मै अप्रदानमेव स्वोपास्यदेवतायै अप्रदानं मत्वा, 'तस्मा एतन्न दत्तमिति' तौ निन्दितवान् इत्यर्थः ।।

**आ.भा. - स होवाच । सः** - भोजनम् अलभमानः ब्रह्मचारी वक्ष्यमाणवचनं प्रोवाच । **महात्मनः** इत्यादि । **महात्मनः** - अधिदैवतम् अग्निसूर्यचन्द्रजललक्षणान् अध्यात्मं वाक्चक्षुःश्रोत्रमनोरूपान् **चतुरः** - चतुःसंख्यकान् देवान्, **भुवनस्य** - सर्वलोकस्य **गोपाः** - गोप्ता रक्षकः **स एक एव देवः** वायुप्राणलक्षणः **कः** - प्रजापतिः **जगार** - संहरणं कृतवान् । सर्वं स्वात्मसात्करोति इत्यर्थः । हे **कापेय** ! हे **अभिप्रतारिन्** ! एवं भूतम् प्रजापतिं **बहुधा** - अनेकरूपतया **वसन्तं** - विद्यमानम् **मर्त्याः** - मरणधर्माणः मनुष्याः अविद्यामोहिताः सन्तः **नाभिपश्यन्ति** - न जानन्ति । **यस्मै वा एतदन्नम् ।**

---

1. असुप्रत्ययान्तं पदम् - ख ।

**एतत्** - परिदृश्यमानम् अग्न्यादिकं सर्वं जगत् **यस्मै** यस्य संवर्गस्य प्रजापतेः **अन्नम्** - अदनीयं **तस्मै** - भिक्षमाणाय मह्यम् एतदन्नं न दत्तम् । **तस्मात्** न केऽपि जानन्ति इति उपासनादार्ढ्याय उपास्योपासकयोः ऐक्यबुध्या भिक्षमाणाय स्वस्मै यत् अप्रदानं तत् स्वकीयोपास्यप्रजापतेः देवस्यैव अप्रदानम् इति मन्वानः ब्रह्मचारी तौ कापेयाभिप्रतारिणौ निन्दितवान् इति भावः ।।

**सु. - स** च अलब्धभिक्षः क्षुधितः क्रोधात् विद्यागर्वनिर्भरं इदमुवाच - **महात्मनश्चतुरो देव एको जगार** - ग्रसितवान्, **भुवनस्य गोपाः** - गोप्ता च भुवनस्य, **स कः ?** दुर्विज्ञेयः अयम् । यदसौ जगार नान्नं साधारणं किन्तु देवान् ; नैकं देवं किन्तु चतुरोऽपि, ते च न ये केचन, किन्तु महात्मानः, स्वयम् एक एव सन् **जगार** - भुवनस्य गोप्ता च सन् जगार इति भावः । हे **कापेय !** हे **अभिप्रतारिन् ! बहुधा वसन्तं तँ नाभिपश्यन्ति मर्त्याः** - स हि एकोऽपि अनेकप्रकारः तत्र तत्र वसति । तं सूक्ष्मं द्रष्टुम् एषां क्व प्रसङ्गः ? यत इमे अविवेकिनो जननमरणमात्रभाजः इति भावः । एवं संवर्गश्च उपास्यः **अयम्** - सर्वसामान्य इति विदुषः स्वस्य अनादरणेन जातापराधौ युवाम् इत्यभिप्रायेणाह - **यस्मै** वा इति, **यस्मै वा एतदन्नं तस्मै न दत्तं** - परामार्थत एतदन्नं कस्मै इति न जानन्ति पामराः । संवर्गाय ह्येतत् देवा अग्न्यादयो यस्यान्नं किं वक्तव्यं-तत्कार्यं, तदन्नं तस्मै इत्यत्र । यत्किञ्चित् इदम् आश्वभ्यः, आशकुनिभ्यः सर्वमन्नं प्राणाय च । तस्मै संवर्गाय एतदन्नं न दत्तं भिक्षणेनापि । उपासकंमन्यः अयं स्वस्मै दत्ते संवर्गाय दत्तं स्यात् न दत्तम् अतः संवर्गस्यैव अनादरणं कृतम् इति आशयेनाह - **न दत्तमिति** ।।

**तदुह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय -**
**'आत्मा देवानां जनिता प्रजानाँ हिरण्यदंष्ट्रो बभसोऽनसूरिः ।**
**महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति ।**
**इति वै वयं ब्रह्मचारिन्नेदमुपास्महे ।। दत्तास्मै भिक्षामि'ति ।। ७ ।।**

**प्र. - तदुह......प्रत्येयाय । कापेयः शौनकः तत्** - ब्रह्मचारिणोक्तं **प्रतिमन्वानः** - मनसा आलोचयन् तत्समीपं **प्रत्येयाय** - प्रत्यागत्य उवाच - **आत्मा......**अत्ति । देवानां **आत्मा** - नियन्ता, **प्रजानाम्** उत्पादकः, **हिरण्यदंष्ट्रः** - कमनीयदंष्ट्रायुक्तः, हिरण्यविदारकदंष्ट्रायुक्तः इति वा, **बभसः** - भक्षणशीलः, असुरसंहारकः इति यावत् । [1]असुरिः न[1] भवति इति **अनसूरिः,** विपश्चित् इति यावत् । अस्य च श्रीनृसिंहस्य परमात्मनो महिमानं महान्तमाहुः । यत्

---

1. असूरिः - अविपश्चित् - क ।

स्वयमन्यैः **अनद्यमानः** - अनाश्यमानः **अनन्नं** - वागादिकं **अत्ति** - नाशयति । एवम्भूतः परमात्मा एव संवर्गः । न त्वदुक्तः प्रजापतिः इत्यर्थः । अतो हे **ब्रह्मचारिन् वयं न** त्वदुक्त-प्रजापतिरूपं संवर्गम् **उपास्महे ।** अपि तु **इति वै** - इत्येव [1]परमात्मानमेव[1] । अतस्त्वं संवर्गं न यथावज्ञानासि इत्युक्त्वा **अस्मै भिक्षां दत्त** - प्रयच्छत इति परिचारकान् आहतुः इत्यर्थः । अनेन संवर्गविद्यायाः वायुप्राणशरीरकपरमात्मपरत्वम् आविष्कृतं भवति ।।

**आ.भा. - तदुह शौनक** इत्यादि । **तत्** - तदन्तरं ब्रह्मचारिणः निन्दावचनं श्रुत्वा **शौनकः कापेयः प्रतिमन्वानः** - ब्रह्मचारिकथितं मनसा विचारयन् **प्रत्येयाय** - तत्समीपं गतवान् । तत्समीपं गत्वा च उवाच **आत्मा देवानाम्** इत्यादि । **देवानाम्** - अग्न्यादीनाम् **आत्मा** - नियन्ता । तथा प्रजानां जायमानसर्ववस्तूनां **जनिता** - समुत्पादकः **हिरण्यदंष्ट्रः** - सुवर्णवत् देदीप्यमानदन्तयुक्तः अविनाशिदंष्ट्रायुक्तः । **बभसः** - भक्षणशीलः, उत्पथगामिनां विनाशकः इत्यर्थः । **अनसूरिः** - सूरिः विद्वान् न सूरिः असूरिः, असूरिः न भवति इति अनसूरिः सर्वविषयकज्ञानवान् । **अस्य** - साकेताधिपतेः परमात्मनो महान्तम् अप्रमेयं महिमानं विभूतिम् **आहुः** - कथयन्ति । यत् स्वयं अन्यैः **अनद्यमानः** - अनाश्यमानः एव । **अनन्नं** - अत्तुम् अयोग्यम् वागादिकम् **अत्ति** - विनाशकाले सर्वमेव स्वात्मसात् करोति । एतादृशगुणयुक्तः साकेताधिपतिरेव संवर्गो । न तु भवता उच्यमानः कोऽपि प्रजापतिः संवर्गः । तस्मात् कारणात् हे **ब्रह्मचारिन् !** त्वदुक्तं प्रजापतिलक्षणं संवर्गं **न वयम् उपास्महे ।** किन्तु **इति वै** इत्येव परमात्मानं साकेताधिपतिलक्षणं संवर्गमेव उपास्महे । अतः त्वं यथावत् संवर्गस्वरूपं न जानासि । इति एवंक्रमेण ब्रह्मचारिणं प्रति कथयित्वा **अस्मै** - भिक्षमाणाय ब्रह्मचारिणे **भिक्षां** - भोज्यद्रव्यं **दत्त** - प्रयच्छत इति क्रमेण परिचारकं सूदं प्रत्यूचतुः तौ इति । एतावता संवर्गविद्यायाः वायुप्राणशरीरकपरमात्मपरत्वं प्रतिपादितं भवति इति ।।

**सु. - तदु ह** - वचः ब्रह्मचारिणः शौनकः कापेयः **प्रतिमन्वानः** - मनसा विमृशन्नेव **प्रत्येयाय** - तत्समीपम् आययौ । आगत्य आह इदम् । हन्त अकृत्स्नविदोऽपि तेऽभिमतिः परम् अधिका । यत्त्वं संवर्गतया उपास्यं न यथावत् अवधारयसि । मन्यसे खलु अधिदैवतं वायुम् अध्यात्मं च प्राणं देवं संवर्गम् । यद्येवं **नेदम् उपास्महे वयम् ।** कः तर्हि

---

1. परमेव - आ ।

सः ? स हि **देवानामात्मा** - वायुः प्राणो वा अद्यमानाग्न्यादिवत् केवलं देवो नाम, न देवानाम् आत्मा । आत्मतया च अयं **भुवनस्य गोप्ता, प्रजानां जनिता च** - जनिमताम् असौ जनकः, प्राणिनां प्राणसंयोगापादकश्च अयम् इति वा । **हिरण्यदंष्ट्रः** - इह हिरण्यशब्दः प्रकाशगुणयोगेन ज्ञानं लक्षयति, दंष्ट्राशब्दो भक्षणसाधनम् । संकल्पः एवास्य ग्रसनसाधनम् इति यावत् । **बभसः** - भक्षणशीलः, सर्वसंहरणकारणम् इति यावत् । इत्थं **देवानामात्मा,** जनिता प्रजानां, हिरण्यदंष्ट्रो बभस इति स्थित्युत्पत्तिलयहेतुत्वेन ब्रह्मासाधारणेन संवर्गत्वेन उपास्यं व्यावर्त्य व्यावर्तयति च सर्वज्ञत्वेन - **अनसूरिः** इति । **सूरिः** - विपश्चित्, नञ्द्वयेन सर्वज्ञता दृढीक्रियते । **अस्य महिमानं महान्तं** - अपरिच्छिन्नमाहुः अभिज्ञाः । किञ्च अपरो वायुप्राणतो विशेषः । यदयम् **अनद्यमान एव अनन्नं** - प्रसिद्धान्नात् इतरत् अग्न्यादिकम् **अत्ति** - अनन्नम् अत्ति इति एतावानेव वायुप्राणयोः **महिमा,** अस्य तु अनद्यमान एव स्वयम् अनन्नम् अत्ति इति । यद्वा ब्रह्मचारी अपि संवर्गं यथावत् जानाति । तस्य प्रश्नाशयं मनसि सम्यक् विचारयन्नेव तस्य समीपम् उपगत्य अवोचत् । असन्देहास्पदेन वचनेन, हे **ब्रह्मचारिन् !** इदं त्वदुपास्यसंवर्गस्वरूपं वयमपि आसमन्तात् निरवशेषम्, यथावदिति यावत्, **उपास्महे** । स्वरूपमेव यथावत् विशदयति - **आत्मा** इत्यादिना । एतेन वायुप्राणशरीरकः परमात्मा एव संवर्गतया उपास्यः इति स्फुटीकृतम् । एवम् उक्त्वा **दत्तास्मै भिक्षामिति** सूपकारान् प्रत्यूचतुः ।।

**तस्मा उह ददुः । ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत् कृतम् । तस्मात् सर्वासु दिक्ष्वन्नमेव दशकृतम् । सैषा विराडन्नादी । तयेदँ सर्वं दृष्टम् । सर्वमस्येदं दृष्टं भवत्यन्नादो भवति, य एवं वेद य एवं वेद ।। ८ ।।**

**।। इति तृतीयः खण्डः ।।**

**प्र. - तस्मा उह ददुः । तस्मै** - ब्रह्मचारिणे परिचारकाः भिक्षां ददुः इत्यर्थः । संवर्गविद्यास्तुतये तत्सम्बन्धिपदार्थान् कृतायत्वेन विराट्त्वेन अन्नत्वेन अन्नादित्वेन च स्तौति - **ते वा एते तत् कृतम्** । अधिदैवतम् अग्न्यादित्यचन्द्रजलरूपाः पदार्थाः अपियन्तः चत्वारः अपीयमानो वायरेकः इति पञ्च, अध्यात्मं वागाद्या अपियन्तः चत्वारः अपीयमानः प्राण एक इति पञ्च आहत्य दशत्वसंख्यां प्राप्ताः सन्तः कृतायतां भजन्ते ।

[1]कृतसंज्ञे[1] तस्मिन् अये चतुरंकायत्र्यंकायद्व्यंकायैकांकायानाम् अनुप्रविष्टतया दशांकत्वम् । एकस्य द्वयोः त्रयाणां चतर्णां च [2]समावेशात्[2] दशत्वसंख्यासम्भवात् इति भावः । **तस्मात्......दशकृतम्** । तस्मात् हेतोः संवर्गविद्योपास्यं [3]दशत्वसंख्यारूपतया[3] कृतायरूपं सत् दशसु दिक्षु विद्यमानम् अन्नमेव भवति । 'दशाक्षरा विराट्', 'अन्नं विराट्' इति श्रुतेः ।।

**सैषा विराडन्नादी** । दशत्वसंख्याश्रयत्वात्, 'दशाक्षरा विराट्' इति विराट्छन्दो भवति । अन्नमत्ति इति अन्नादी । कृतसंज्ञके अये दशसंख्यायाः भक्ष्यवदन्तर्भूतत्वात् दशत्वसंख्यायाश्च विराट्त्वात् विराजश्च अन्नत्वात् दशत्वसंख्यागर्भककृतायस्थानीयस्य संवर्गविद्योपास्यस्य **पञ्चान्ये पञ्चान्ये** इति निर्दिष्टस्य अस्य अन्नादित्वमपि अस्ति इत्यर्थः । **तयेदं सर्वं दृष्टम्** । **तया** - विराजा उपासितया **इदं सर्वं** - दशदिग्वर्तिपदार्थजातं दशत्वसंख्यासाम्यात् **दृष्टम्** - भवति उपासितं भवति इत्यर्थः । तदुपासनस्य फलमाह - **सर्वमस्य वेद** । एतदुपासकस्य सार्वज्ञ्यं ब्रह्मलक्षणान्नानुभवश्च भवति इत्यर्थः । विद्यासमाप्तिद्योतकं द्विर्वचनम् ।

व्यासार्यैस्तु, 'छन्दोभिधानात्' (ब्र.सू.१-१-२६) इति सूत्रे अन्नात् इति पाठमाश्रित्य अन्नं च तत् अत्ति इत्यन्नादिति भोक्तृत्वभोग्यत्वाश्रयपरमात्मपरतया व्याख्यातम् ।

अस्याः संवर्गविद्यायाः परमात्मपरत्वमेव ; न प्रसिद्धवायुप्राणविषयत्वम् । 'यथा कृताय विजितायाधरेऽयाः संयन्ति' इत्यादिना संवर्गविद्यानिष्ठरैक्वप्रभावे सर्वेषाम् अन्तर्भाववर्णनात् ।

"आत्मा देवानां जनिता प्रजानां हिरण्यदंष्ट्रो बभसोऽनसूरिः ।
महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति"।।

इति इतराविनाश्यत्वे सति सकलविनाशकत्व-सर्वसम्प्रतिपन्नमहामहिमशालित्व-सर्वदेवनियन्तृत्व-ब्रह्मादिसकलप्रजोत्पादकत्व-हिरण्यदंष्ट्रत्वाद्युपलक्षितनरसिंहविग्रहवत्त्वादि प्रतिपादनात्, 'वै वयं ब्रह्मचारिन्नेदमुपास्महे' इति कशब्दितप्रजापत्यात्मकसंवर्गप्रत्याख्यानाच्च परमात्मविषया एव इयं विद्या इति द्रष्टव्यम् ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते -

समन्वयाध्याये - जानश्रुतिं शूद्र इति आमन्त्र्य रैक्वो ब्रह्मविद्याम् उपदिदेश इति संवर्गविद्यायां श्रवणात्, विदुरादीनां [4]ब्रह्मविद्या[4]निष्ठानामपि दर्शनात्, अग्निविद्यासाध्ययज्ञादिषु अग्निविद्याशून्यानां शूद्राणां कर्मकाण्डापशूद्राधिकरणन्यायेन अधिकाराभावेऽपि ब्रह्मोपासने

---

1. कृतसंज्ञके - क । 2. समावेशे - क । 3. युक्ततया - अ,आ । 4. ब्रह्म - अ,आ ।

अधिकारः संभवत्येव । न च शूद्रस्य ब्रह्मोपासनोपयुक्तज्ञानासंभवः शङ्कनीयः - इतिहासपुराणादिना तज्ज्ञानसम्भवात् । न चैवं यज्ञादिष्वपि तथा प्रसङ्गः - अग्न्यभावात् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तै.सं.८-१-६) इति यज्ञानुष्ठानस्य निषिद्धतया च तस्य तदसम्भवेऽपि संवर्गविद्यागतशूद्रशब्दामन्त्रणलिङ्गानुग्रहात् ब्रह्मोपासनाधिकारः अङ्गीकर्तव्यः एव इति पूर्वपक्षे प्राप्ते -

उच्यते - 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि' (ब्र.सू.१-३-३३)। शोचितृत्वप्रवृत्तिनिमित्तकेन शूद्रशब्देन जानश्रुतेः, 'कम्वर एनमेतत् सन्तं सयुग्वानमिव रैक्वमात्थेति' हंसोक्तानादरगर्भवाक्यश्रवणात् तदाद्रवणहेतुभूतात् उत्पन्ना शुक् सूच्यते ; न चतुर्थवर्णत्वम् । यौगिकार्थस्य प्रकृतस्य मानान्तराविरुद्धस्य ग्रहणसम्भवे मानान्तरविरुद्धस्य रूढ्यर्थस्य अग्राह्यत्वात् । शूद्रस्य ब्रह्मोपासनौपयिकवैदुष्यलक्षण-सामर्थ्यासम्भवाच्च न ब्रह्मविद्यायाम् अधिकारः । वैदिकविधीनाम् अध्ययनविधिलब्ध-सिद्धवेदजन्यज्ञानवत्त्रैवर्णिकाधिकारिणः आसाद्य निवृत्तानां शूद्राधिकारानाक्षेपकत्त्वात् इति न्यायस्य यज्ञोपासनयोः अविशेषात् 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इत्यस्य न्यायसिद्धैकदेशानुवादित्वेन तस्य विनिगमकत्वासम्भवात् ।

'क्षत्रियत्वगतेश्च' (ब्र,सू.१-३-३४) । पक्वान्नप्रदत्वराजान्तःपुररक्षकक्षत्तृप्रेषण-रैक्वकन्याप्रदान-अनेकग्रामप्रदानादिना जानश्रुतेः क्षत्रियत्वावगतेश्च । एतेषां क्षत्रियधर्मत्वस्य एव शास्त्रीयत्वात् 'उत्तरत्र चैत्ररथे न लिङ्गात्'(ब्र.सू.१-३-३५) । संवर्गविद्यासम्बन्धिनः अभिप्रतारिनाम्नः चित्ररथवंश्यस्य क्षत्रियस्य तादृशेन संवर्गविद्यानिष्ठेन ब्राह्मणेन शौनकेन कापेयेन साहचर्यदर्शनात् इहापि संवर्गविद्यासंबन्धी, रैक्वेन ब्राह्मणेन सहचरितजानश्रुतिरपि क्षत्रियः एव इत्यवसीयते । न तु अभिप्रतारिणः क्षत्रियत्वं कुतोऽवसीयते इति चेत् - चित्ररथवंश्यत्वात् । न च तदपि कुतः अवसितमिति वाच्यम् - कापेययाज्यत्वात् लिङ्गात् । न च कापेययाज्यत्वेऽपि चित्ररथवंश्यत्वं कुतः इति वाच्यम् - 'एतेन वै चित्ररथं कापेया अयाजयन्' (तां.ब्रा.२०-१२-५) इति [1]छन्दोग[1]ब्राह्मणे चित्ररथस्य कापेययाज्यत्वश्रवणात् ।

ननु अभिप्रतारिणः कापेययाज्यत्वं वा कुतो अवसीयते । 'शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' इति एकपङ्क्त्युपवेशमात्रस्य श्रवणात् । नानादेशागतानां परस्परसम्बन्धशून्यानाम् अपि एकपङ्क्त्युपवेशसम्भवात् ।

---

1. छान्दोग्य - अ,आ ।

अस्तु वा कथञ्चित् याज्ययाजकभावः । तावता छन्दोगब्राह्मणे चित्ररथस्य कापेययाज्यत्वश्रवणेन चित्ररथत्वमेव सिद्ध्येत्, न तु तद्वंश्यत्वमिति चेत् - उच्यते । कापेयाभिप्रतारिणोः क्लृप्तसम्बन्धयोः एकपङ्क्त्युपवेशस्य उदितत्वात् कापेयानां चित्ररथवंश्यानां च याज्ययाजकसम्बन्धस्य अन्यत्र प्रसिद्धत्वात् अभिप्रतारी अपि कापेययाज्यचित्ररथवंश्यः [1]इत्यव[1]सीयते । न च कापेययाज्यतया चित्ररथत्वमेव अस्तु इति शंकच्यम् - अभिप्रतारिसंज्ञावरुद्धे चित्ररथसंज्ञानिवेशासम्भवात् । नायं चित्ररथः अपि तु तद्वंश्यः, समानान्वयानां याज्ययाजकभावस्य लोकवेदप्रसिद्धत्वात् । न च कापेययाज्यस्य चित्ररथस्य क्षत्रियत्वे किं प्रमाणम् इति वाच्यम् - 'एतेन वै चित्ररथं कापेया अयाजयन् । तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत' (तां.ब्रा.२०-१२-५) इति चित्ररथोत्पन्नस्य क्षत्रियत्वावेदनात् ।

ततश्च उत्तरत्र ब्राह्मणक्षत्रिययोः शौनकाभिप्रतारिणोः संवर्गविद्यासंबन्धश्रवणात् इहापि तद्विद्यासम्बन्धिनोः रैक्वजानश्रुत्योः [2]ब्राह्मण[2]क्षत्रियत्वम् अवसीयते ।

'संस्कारपरामर्शात् तदभावाभिलापाच्च' (ब्र.सू.१-३-३६) । ब्रह्मविद्योपदेश-प्रदेशेषु, 'उप त्वा नेष्ये ; 'न सत्यादगाः इति' (छां.उ.७-१-१) 'तं होपनिन्ये' (शत.ब्रा.११-५-३-१३) 'अधीहि भगव इति होपससाद सनत्कुमारं नारदः' (छां.उ.७-१-१) 'समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' (प्र.उ.१-१-१) इति संस्कारः परामृश्यते । शूद्रस्य संस्काराभावोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः' (महा.भा.१०-४) 'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति' (महा.भा.१०-१२६) इति ।

'तदभावनिर्धारणे च प्रवृत्तेः' (ब्र.सू.१-३-३७) । शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशाय प्रवृत्तिः दृश्यते, 'नैतदब्राह्मणो विवक्तुमर्हति । समिधं सोम्याहर । उप त्वा नेष्ये । न सत्यादगाः' (छां.उ.४-४-५) इति ।

'श्रवणाध्ययनार्थप्रतिषेधात्' (ब्र.सू.१-३-३८) । 'पद्यु ह वा एतत् श्मशानं, यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येतव्यम्' (वा.धर्म.१८-११) इति शूद्रस्य वेदश्रवणप्रतिषेधेन तदध्ययन - तदर्थानुष्ठानयोः सुतरां प्रतिषेधात् ।

'स्मृतेश्च' (ब्र.सू.१-३-३८)। 'अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः' (गौ.ध.सू.१२-५-६) इति स्मृत्या च श्रवणादिकं शूद्रस्य प्रतिषिद्धम् । अतो न ब्रह्मविद्यायां शूद्रस्य अधिकारः। विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः ; प्रारब्धकर्मवशाच्च ईदृशजन्मयोग इति तेषां ब्रह्मनिष्ठत्वम् । ननु शूद्राणां ब्रह्मोपासनानधिकारे [3]पञ्चरात्राद्यागमोक्ततान्त्रिकमन्त्रानु-

---

1. इत्येवाव - अ,आ,क । 2. ब्राह्मणत्वं - अ,आ । 3. श्रीपाञ्चरात्रा - अ,आ ।

सन्धानपूर्वकब्रह्मोपासनेऽपि अधिकारः न स्यात् । नारदस्य शूद्रजन्मनि महर्षिवचनात् अनुष्ठितम् अच्युतोपासनमपि अप्रामाणिकं स्यात् इति चेत् - न हि ब्रह्मोपासनमात्रे शूद्रस्य अनधिकारे ब्रूमः ; अपितु संवर्गविद्यादिषु वैदिकेषु उपासनेषु । अतो नात्र तद्दोषशंकावकाशः ।

ननु 'सम्बन्धादेवमन्यत्रापि' (ब्र.सू.३-३-२०) इत्यधिकरणे व्याहृतिविद्यायाः अध्यात्माधिदैवतस्थानभेदेन भेदस्य प्रतिपादितत्वात् संवर्गविद्यायाः अपि अध्यात्माधिदैवतस्थानभेदेन भेदः स्यात् । न च इष्टापत्तिः, 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति ब्रह्मविद्यामात्रार्थिने जानश्रुतये विद्याद्वयोपदेशस्य अयुक्तत्वात् इति चेत् मैवम् - व्याहृतिविद्यायाम्, 'य एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' (बृ.उ.५-५-२) इत्यत्र इव वायौ, प्राणे इत्येवं वायुप्राणयोः स्थानत्वेन निर्देशाभावात् स्थानभेदप्रयुक्त-विद्याभेदाप्रसक्तेः । 'यां देवतामुपास्से' इति रैक्वोपास्यदेवताप्रश्नस्य उपासनप्रकारपर्यन्तत्त्वात् तत्प्रकारे पृष्टे, रैक्वोपास्यसंवर्गस्य देवतात्मलक्षणस्थानभेदेन उपासनाद्वयसम्बन्धम् अभिप्रेत्य उपासनाद्वयोपदेशे दोषाभावाच्च । न च, 'विकल्पोऽविशिष्टफलत्वात्' (ब्र.सू.३-३-५७) । इति न्यायेन रैक्वस्य विद्याद्वयानुष्ठानाभावात् स्वानुष्ठीयमानविद्यामात्रोपदेशः एव युक्तः ; नाधिकः इति वाच्यम् - अप्रयोजकत्वात् । परोपदेशे स्वावगतेः एव प्रयोजकत्वेन स्वानुष्ठानस्य अप्रयोजकत्वात् इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा. - तस्मा उ ह ददुः** इति । ततः कापेयेन आज्ञप्ताः परिचारकाः **तस्मै** - भिक्षमाणाय ब्रह्मचारिणे भिक्षां **ददुः** - दत्तवन्तः इति । संवर्गविद्यास्तुत्यर्थं-संवर्गसंबन्धिपदार्थान् कृतायत्वेन विराट्त्वेन अन्नत्वेन अन्नादित्वेन च स्तोतुं प्रस्तौति - **ते एते पञ्चान्ये** इत्यादि । आधिदैवतमग्निसूर्यचन्द्रजललक्षणाः पदार्थाः अपियन्तः चत्वारः अपीयमानो वायुरेकः इति मिलित्वा पञ्च । तथा अध्यात्मं वागादिका अपियन्तश्चतुष्कः अपीयमानश्च प्राणः एकः इति पञ्च । सर्वसंकलनया दशत्वसंख्यां प्राप्ताः भवन्तः कृतायतां प्राप्नुवन्ति । कृतसंज्ञके तस्मिन् अये चतुरंकायत्र्यंकायद्व्यंकायैकाङ्कायानाम् अनुप्रविष्टतया दशांकत्वं भवति । एकस्य द्वयोः त्रयाणां चतुर्णां च समावेशात् दशत्वसंख्यायाः सम्भवात् इत्यर्थः । तस्मात् कारणात् संवर्गविद्योपास्यं दशत्वसंख्यायुक्ततया कृतायरूपं सत् सर्वासु दशसु दिशासु विद्यमानं सर्वम् अन्नमेव भवति । 'दशाक्षरा विराट्' 'अन्नं विराट् इति श्रुत्यन्तरात् । सा **एषा विराट् अन्नादी** दशत्वसंख्याश्रयत्वात् 'दशाक्षरा विराट्' छन्दो भवति। अन्नम् अत्ति इति अन्नादी । कृताख्ये अये दशसंख्याया भक्ष्यपदान्तर्भूतत्वात् दशत्वसंख्यायाः

विराट्त्वात् विराजश्च अन्नत्वात् दशत्वसंख्यागर्भितकृतायस्थानीयस्य संवर्गविद्योपास्यस्य परमात्मनः **पञ्चान्ये पञ्चान्ये** इत्यादिना निर्दिष्टस्य अन्नादित्वमपि भवति इति भावः । **तयेदं सर्वं दृष्टमिति । तया** - समुपासितया विराजा **इदं सर्वं** - दशदिक्षु विद्यमानं पदार्थजातं दशत्वसंख्यासादृश्यात् **दृष्टं** - समुपासितं भवति इति भावः । संवर्गविद्योपासकस्य फलमाह - **सर्वमस्य** इत्यादि । **अस्य** - संवर्गोपासकस्य **इदं** - परिदृश्यमानं सर्वं वस्तु **दृष्टं** - ज्ञातं भवति सर्वज्ञतां प्राप्नोति इत्यर्थः । तथा **अन्नादो भवति** - सर्वप्रकारकान्नस्य भक्षको भवति । **यः** - उपासकः **एवं** - पूर्वोक्तं संवर्गं **वेद** - विजानाति तस्य पूर्वोक्तं फलं भवति, य एवं वेद । द्विर्वचनं विद्यासमाप्तिं सूचयति इति ।।

**सु. - तस्मै** - ब्रह्मचारिणे यथानियोगं ददुः भिक्षाम् । एवम् आख्यायिकया संवर्गस्वरूपं विशदमुपपाद्य स्तुवन् अधुना संवर्गविद्यां फलेन उपसंहरति - **ते वा** इत्यादिना । **ते वा एते** - अग्न्यादयः अपियन्तः, वायुश्च अपीयमानः, अधिदैवतं पञ्च, अन्ये - आध्यात्मिकपञ्चकात्, ते वा **एते** - वागादयः अपियन्तः अपीयमानः प्राणश्च अध्यात्मं पञ्च, अन्ये अधिदैवपञ्चकात्, आहत्य संवर्गविद्यायां दश सन्तः तत्कृतम् - यस्मिन्कृते चतुरङ्कायें एकाङ्कायद्व्यङ्कायत्र्यङ्कायानां समावेशः । स्वतश्चतुरङ्कतया एकाङ्कायादीनां च समावेशेन दशसंख्यासम्पत्त्या संख्यासामान्यात्, कृतायवदियं संवर्गविद्या इति यावत् । कृतायस्य अयोऽन्तरतो यथा श्रैष्ठ्यं तथाऽस्या विद्याया विद्यान्तरतः श्रैष्ठ्यमिति विद्या स्तुता । कृतम् इत्यनेन कृतसाध्यं द्यूतं वा लक्ष्यते । तत्र एकाङ्कायद्व्यङ्कायत्र्यङ्कायचतुरङ्कायानां चतुर्णां सम्पत्त्या दशत्वसङ्ख्यासम्पत्तिः सुगमा । यथा द्यूतं छलयताम् अक्लेशेन प्रभूतार्थदं तथा इयं विद्या प्रभूतार्थदा इति स्तुता भवति । यस्मात् इयं विद्या **दशकृतं** - दशगणनायोगेन कृतस्थानीया अभूत् तस्मात् **सर्वासु दिक्षु अन्नमेव** - सर्वदिक्सम्भूतम् अन्नमेव । अयं भावः - 'विराडन्नम्' इति श्रूयते 'दशाक्षरा विराट्' इति च, तत् दशगणनायोगादियं विराट् भवति, अतश्च अन्नमिति । अत एव सैषा विराट् इत्यनूद्य अन्नादित्वं विधीयते 'सैषा विराडन्नादी'ति । न केवलम् अन्नं किन्तु **सर्वासु दिक्षु अन्नं** - यत्र यत्र यद्यदन्नं तत्सर्वम् इयं विद्या, तत्तदन्नगतभोग्यतातिशयः सर्वोऽपि अस्याम् एकस्यां विद्यायां वर्तते इति विद्या स्तुता भवति । यद्यपि उक्तरीत्या अन्नत्वापादनेन कृतायत्वम् उपयुज्यते, सङ्ख्याविशेषसम्पत्त्या एव तदुपपत्तेः, तत् दशकृतम् इत्यनपेक्षितं वचनम् । अथापि यस्मात् सङ्ख्याविशेषयोगात् दशकृतम् अभूत् तस्मादेव सङ्ख्याविशेषयोगात्

इत्यन्वयविवक्षया नानौचित्यम् । एतेन दशकृतमिति पुनरुक्तम्, तस्मात् इत्यनेनैव तदर्थलाभात्, तच्छब्दो हि अव्यवहितपूर्वे स्वरसः, तत्कृतमिति च पूर्वं श्रूयते इति शङ्का परास्ता । यद्वा - दशकृतम् इत्यस्य उत्तरेण सम्बन्धः, व्याख्यास्यते चानुपदम्, न केवलमन्नम्, **सैषा विराडन्नादी च** - विराट्छन्दस्तु अन्नम् - सैषा विराट् - संवर्गविद्यारूपा इयं विराट्, अन्नत्वोपपादनेनैव विराट्त्वमपि प्राप्तम्, **अन्नादी च** - अन्नमिह दशकमग्न्यादीनाम्, तदुपचर्यते अन्नादि इति । लिङ्गव्यत्ययश्छान्दसः । यद्वा - दशकृतं सैषा विराडन्नादी इत्येकं वाक्यम्, दशकृतमिति हेतुगर्भं विशेषणम् । अन्तर्भवद्भिः एकाङ्कायद्व्यङ्कायत्र्यंङ्कायैः आत्मना चतुरङ्कायात्मना दशत्वमापादयत्कृतं यथा एकाङ्कान् अत्ति स्वस्मिन् अन्तर्भावयति, तथाऽपीयमानैः अग्न्यादिभिः आत्मना च संवर्गरूपेण दशत्वमापादयन् अपीयमानम् अग्न्यादिलक्षणम् अन्नम् अत्ति संवर्गः, तथाविधसंवर्गावलम्बित्वाच्च सा इयं संवर्गविद्या यतः दशकृतम् अतः एव अन्नमत्ति इत्यभिप्रेत्य उच्यते **दशकृतं अन्नादीति । तया** - संवर्गविद्यया करणेन **सर्वं दृष्टं भवति ;** संवर्गत्वगुणकवायुप्राणशरीरकपरमात्मनि दृष्टं सर्वमेव दृष्टं भवति ; ततो वस्त्वन्तरस्य विभक्तस्य अभावादिति भावः । अथ विदुषः फलमाह**सर्वमस्येदम्** इत्यादिना । **य एवं वेद** - उपास्ते **अस्य** - उपासकस्य सर्वमिदं **दृष्टं भवति** - दृष्टिगोचरं भवति ; **अन्नादी च भवति** - सर्वं भुक्तम् अनेन भवति, सर्वतो व्यापिनः परमात्मनः अनुभवात् सर्वतः परिपूर्णतृप्तिलाभात् सर्वतः अन्नादः भवतीति भावः । यद्यपि अन्नादः भवति इत्येव श्रूयते न तु सर्वतः इति, अथापि सर्वमिदं दृष्टं भवति इत्यस्य सहपाठात् असङ्कोचन्यायावतारेण तथा व्याख्यानम्, अनुगुणं च प्रकरणस्य । द्विरुक्तिः विद्यासमाप्तौ ।।

।। इति तृतीयखण्डभाष्यम् ।।

## चतुर्थः खण्डः

### [षोडशकलब्रह्मविद्या]

### [जाबालसत्यकामोपाख्यानम्]

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे - ब्रह्मचर्यं भवति ! [1]विवत्स्यामि[1] । किंगोत्रोऽहमस्मीति ।। १ ।।**

---

1. निवत्स्यामि इति आनन्दभाष्यसम्मतः पाठः ।

**प्र.** - षोडशकलब्रह्मविद्यां प्रस्तौति - **सत्यकामो......चक्रे । ह** इति ऐतिह्यार्थः । जबालासुतः सत्यकामनामा जबालां मातरम् आमन्त्रितवान् । किमिति इत्यत्राह - **ब्रह्मचर्यं......अहमस्मीति । हे भवति !** स्वाध्यायग्रहणाय आचार्यकुले ब्रह्मचर्यं **विवत्स्यामि ।** मे गोत्रं किमिति पृष्टवान् ।।

**आ.भा.** - "गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपपद्यते "।। (ना.शि.२-८-२७)
इति स्मृतेः, तृतीयखण्डे पुष्कलेन धनेन जानश्रुतेः राज्ञः विद्याप्राप्तिः कथिता । सम्प्रति -
"यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ।। "(ना.शि.२-८-२८)
इति स्मृतेः महत्या शुश्रूषया विद्याप्राप्तिं दर्शयितुं षोडशकलब्रह्मविद्यां प्रस्तौति - **सत्यकामो ह** इत्यादि । सत्यकामो नामतः **ह** इति ऐतिह्यार्थकः **जाबालः** - जबालायाः ऋषिपत्न्याः अपत्यं जाबालः **जबालां** - स्वकीयमातरम् **आमन्त्रयाञ्चक्रे** - पृष्टवान् । किमिति पृष्टवान् तत्राह - **ब्रह्मचर्यम्** इत्यादि । **भवति !** हे मातः ! स्वाध्यायग्रहणाय आचार्यकुले **निवत्स्यामि** - निवासं कर्तुमिच्छामि, **किंगोत्रोऽहमस्मीति** - मम किं गोत्रं तत्कथय इत्येवं पृष्टवानिति ।।

**सु.** - कश्चित् बालः नाम्ना सत्यकामः जबालायाः पुत्रः **मातरं जबालां आमन्त्रयाञ्चक्रे ! भवति !** ब्रह्मचयम् अध्ययनार्थं **विवत्स्यामि** - गुरुकुलम् उपगम्य। अज्ञातगोत्रं मां गुरवः कथम् उपनयेरन्? तत् ब्रूहि **किं गोत्रोऽस्मि अहम्** इति ।।

**सा हैनमुवाच - नाहमेतद्वेद तात! यद्गोत्रस्त्वमसि । बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्न वेद, यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसि । स सत्यकाम एव जाबालो ब्रवीथा[1] इति ।। २ ।।**

**प्र. - सा......ब्रवीथा** इति । अहं भर्तृगृहे [2]अतिथ्यभ्यागतादिभ्यो[2] बहुपरिचर्याजातं चरन्ती **परिचारिणी** - गुर्वादिपरिचरणशीला च सती तद्व्यासङ्गेन गोत्रानभिज्ञा एव यौवनकाले

---

1.ब्रुवीथाः इति शाङ्करभाष्य तथा सुबोधिनीसम्मतः पाठः । 2. आगतेभ्योऽतिथिभ्यः - अ ।

त्वां लब्धवती । अतः गोत्रं न जाने । अतः जाबालायाः पुत्रः सत्यकामनामा अहमस्मि । नाहं गोत्रं वेद इति गुरुसमीपे ब्रूहि इत्युक्तवती इत्यर्थः ।।

**आ.भा. - सा -** पुत्रेण यथोक्तप्रकारेण पृष्टा जबाला आह एवं पुत्रं वक्ष्यमाणम् **उवाच -** प्रोक्तवती। हे **तात !** पुत्र ! **अहमेतत्** भवत्पृष्टं गोत्रं **न वेद -** न विजानामि । यद्गोत्रः त्वम् असि इति । भवतः किं गोत्रं तदहं न जानामि इत्यर्थः । अज्ञाने कारणमाह - **बह्वहम्** इत्यादि। **बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि । स सत्यकाम एव जाबालो ब्रवीथा इति** । हे पुत्र ! भवतः पितुः आश्रमेऽनेके अभ्यागताः आगच्छन्तः आसन् । तेषां परिचरणे व्यग्रा अहं । भवत्पितुः सकाशात् नैव किमपि विज्ञातं गोत्रादिकम् । अतः न जानामि गोत्रं। त्वया आचार्यकुले गत्वा अहं सत्यकामः जबालापुत्रः इति वक्तव्यः इति । एतावतैव ऋषिः त्वां ज्ञास्यति नैवान्यत्प्रवक्ष्यति इति भावः । मूलाक्षरम् अतिरोहितार्थम् ।।

**सु. - सा हैनमुवाच......तात ! नाहमेतद्वेद -** अध्ययने स्वतः एव सञ्जातां त्वरां बालस्य विलोक्य प्रेमपेशलया गिरा सम्बोधयति - **तात !** इति । **यद्गोत्रस्त्वमसि, नाहमेतद्वेद,** कुतः? **अहं बहुचरन्ती -** गृहव्यापारं बह्वाचरन्ती **परिचारिणी -** श्वश्रूश्वशुरादिगुरुजनपरिचरणैकशीला आसम् । तत् भर्तुः गोत्रावधारणे न मम प्रवृत्तिः आसीत्, **यौवने त्वामलभे -** अपगते यौवने न प्रसूतेः अवसरः, अतोऽत्र यौवनशब्दः अभिनवयौवनपरः। नवे यौवने लज्जाप्राचुर्यात् न भर्तृतोऽपि गोत्रावधारणावसरः। अथ च तदैव उपरतः ते पिता । तत् यद्गोत्रः त्वमसि एतत् न वेद अहम्। अहम् एतावत् जाने **जबाला नामाहमस्मि सत्यकामो नाम त्वमसि,** पृष्टो गुरुणा हि **सत्यकाम एव जाबालोऽहमस्मीति** ब्रुवीथाः इति ।।

**स ह हारिद्रुमतं गौतममेत्योवाच - ब्रह्मचर्यं भगवति वत्स्यामि उपेयां भगवन्तमिति ।। ३ ।।**

**प्र. - सः - उवाच ।** अथ **सः -** सत्यकामः हरिद्रुमत्पुत्रं गोत्रतो **गौतममेत्य** उक्तवान् । उक्तिमेवाह - **ब्रह्मचर्यं.... भगवन्तमिति । भगवति -** पूजावति त्वयि ब्रह्मचर्यं **वत्स्यामि** शिष्यत्वेन भगवन्तम् उपगच्छानि इत्युक्तवान् ।।

**आ.भा. - स ह हारिद्रुमतम्** इत्यादि । **सः** - सत्यकामः मात्रा जबालया अनुमत आज्ञप्तश्च **हारिद्रुमतं** - हरिद्रुमतः अपत्यं **गौतमं** - गौत्रतो गौतमीयम् **एत्य** - प्राप्य, तत्समीपं गत्वा इत्यर्थः । **उवाच** - प्रोक्तवान् ; भगवन् ! **भगवति** - पूजनीये त्वयि **ब्रह्मचर्यं** - स्वाध्यायग्रहणाय **वत्स्यामि** - भवत्समीपे निवासं कर्तुम् इच्छामि । अतः भगवन्तं पूजनीयम् **उपेयां** - शिष्यत्वेन उपगच्छामि । कृपया माम् उपनीय वेदं सरहस्यं सकल्पं साङ्गम् अध्येतुम्[1] इत्यर्थः ।।

**सु. - सः** - जाबालः हरिद्रुमतः सुतं गौतममेत्य उवाच - **भगवति** - पूज्ये भवति - **ब्रह्मचर्यम्** - अध्ययनार्थं वत्स्यामि । ततः भगवन्तं शिष्यतया अहम् उपगच्छेयम् इति ।।

**तँ होवाच - किंगोत्रो नु सोम्यासीति । स होवाच, नाहमेतद्वेद भो ! यद्गोत्रोऽहमस्मि । अपृच्छं मातरम् ! सा मा प्रत्यब्रवीत् - बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्न वेद, यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसीति । सोऽहँ सत्यकामो जाबालोऽस्मि भो इति ।। ४ ।।**

**प्र. - तं......असीति** । हे सोम्य ! किंगोत्रस्त्वम् ? ज्ञातकुलगोत्रः उपनेतव्यः । अन्ततः शूद्रत्वाभावो वा (हि) निश्चेतव्य इत्यभिप्रायः । **स होवाच । सः** - सत्यकामः प्रत्युवाच इत्यर्थः । तदेवाह - **न भोः इति** । स्पष्टोऽर्थः ।।

**आ.भा.** - शिष्यभावम् आसाद्य अध्येतुं समागतं **तं** - सत्यकामं **ह** प्रसिद्ध्यर्थकः। **उवाच** - प्रोक्तवान् गौतमः, हे **सोम्य ! किं गोत्रो नु असि** - भवतः किं गोत्रमिति । कथय एवमुक्तवान् । यो हि ज्ञातकुलगोत्रः स एव उपनेतव्यः । अन्यथा गोत्राद्यपृच्छते शूद्रस्यापि प्रवेशापत्तेः एवं गौतमेन पृष्टः सत्यकामः सः **उवाच** - उक्तवान् । **भो गुरो ! एतत् गोत्रं नाहं वेद** - न विजानामि यद्गोत्रोऽहमस्मि । गोत्रज्ञानं मे नास्ति इत्यर्थः । यदि न ज्ञायते तदा मातरं पितरं वा पृष्ट्वा आगन्तव्यम् तत्राह - **अपृच्छं मातरम् ।** गोत्रविषये मातरं पृष्टवान् अहम् इत्यर्थः । मातुः प्रतिवचनम् अनुवदति **सा मा** इत्यादि **सा** - माता जबाला मां प्रति **अब्रवीत्** - कथितवती । **बह्वहं चरन्ती** इत्यारभ्य **जाबालोऽस्मि भो इति** मन्त्रपर्यन्तं व्याख्यातपूर्वः एव ग्रन्थः ।।

---

१. अध्यापयतु इत्यर्थः ।

**सु. - तं -** एवम् उक्तवन्तं जाबालं गौतमः उवाच - **किंगोत्रो नु सोम्यासीति** अयं च प्रश्नः जन्मना अस्य उपनयनार्हतावधारणाय, तदर्हता हि द्विजत्वसापेक्षा । एवं गौतमेन पृष्टो जाबाल आह । **नाहमेतत्** इत्यादि स्फुटम् ।।

**[सत्यकामस्य प्रतिज्ञा]**

**तँ होवाच - नैतदब्राह्मणो विवक्तुमर्हति । समिधँ सोम्याहर । उपत्वा नेष्ये । न सत्यादगा इति । तमुपनीय कृशानामबलानां [1]चतुःशता[1] गा निराकृत्योवाच - इमाः सोम्यानुसंव्रजेति । ता अभिप्रस्थापयन्नुवाच - नासहस्रेणावर्तेयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रं संपेदुः ।। ५ ।।**

**।। इति चतुर्थः खण्डः ।।**

**प्र. - तं......होवाच । तं** गौतमः प्रत्युवाच । किमिति । **नैतद्** इति । **एतत् -** एतादृशम् आर्जवयुक्तं वचः न अब्राह्मणः विशेषेण वक्तुम् अर्हति । अत्र ब्राह्मणशब्दः त्रैवर्णिकमात्रपरः । **अब्राह्मणः -** अत्रैवर्णिकः शूद्रः इति यावत् । शूद्रो न विवक्तुम् अर्हति ; शूद्राणां कुटिलस्वभावत्वात् इति भावः । हे **सोम्य !** उपनयनसंस्कारार्थं समिधम् आहर । त्वाम् उपनेष्ये **न सत्यादगाः -** सत्यं नातिक्रान्तवानसि । सत्यमेव उक्तवान् असि । अतः त्वाम् उपनेष्ये इत्यर्थः । सूत्रितञ्च, 'तदभावनिर्धारणे च प्रवृत्तेः' (ब्र.सू.१-३-३७) इति । शूद्रत्वाभावनिश्चये सत्येव, 'उपत्वा नेष्ये' इत्युपनयनप्रवृत्तेः दर्शनात् इत्यर्थः । अतः अब्राह्मणशब्दः शूद्रपरः **तमुपनीय - उवाच ।** तमेवम् आचार्यः उपनीय कृशानाम् अबलानां गवां मध्ये अतिदुर्बलानि कृशानि गवां चत्वारि शतानि **निराकृत्य -** पृथक्कृत्य इदं वक्ष्यमाणम् उवाच इत्यर्थः । **इमाः......व्रजेति । हे सोम्य !** सोमार्ह ! इमाः गाः अनुगच्छ इत्युवाच इत्यर्थः । **ताः......आवर्तेयेति । सः -** सत्यकामः 'सहस्रसंख्यापूरणात् प्राक् न प्रतिनिवृत्तः भवानि' इति, गाः अरण्यम् अभिप्रस्थापयन् उवाच इत्यर्थः । **स ह वर्षगणं प्रोवास ।** चिरकालं [2]तृणोदक[2] पूर्णे वने गाः प्रवेश्य उषितवान् । **ताः...... सम्पेदुः ।** यस्मिन्काले ताः सहस्रं सम्पन्नाः बभूवुः, तावन्तं वर्षगणं वने उषितवान् इत्यर्थः ।।

**आ.भा. - तं होवाच । तं -** सत्यकामं गौतमः **उवाच -** उक्तवान् । **अब्राह्मणः -** ब्राह्मणभिन्नः त्रैवर्णिकेतरः **एतत् -** एतादृशं सत्यविनयादियुक्तं वचनम् **विवक्तुं -**

---

1. चतुःशतं इति माध्वसम्मतःपाठः । 2. तृणोदकादि - क ।

विशेषेण वक्तुं **नार्हति** - न प्रभवति । यद्यपि प्रकरणात् ब्राह्मणपदं ब्राह्मणस्यैव बोधकं तथापि त्रैवर्णिकानां वेदाध्ययने अधिकारात् ब्राह्मणपदं त्रैवर्णिकस्य उपलक्षणम् । अत्रैवर्णिकः शूद्रः, शूद्र एतादृशम् आर्जवादिवचनं वक्तुं नार्हति । शूद्रस्य कुटिलस्वभावत्वात् विलक्षणमेतत् वचनं यत् गोत्ररहितस्य अध्ययने अनधिकृतस्य अध्ययनार्थिनः न भवति इति भावः । हे **सोम्य !** सत्यकाम ! **समिधम्** - उपनयनसंस्काराय समिधम् **आहर** - आनय । **त्वा** - त्वां **उपनेष्ये** - भवतः उपनयनसंस्कारं करिष्ये ।

ननु गोत्रानिर्णये कथम् उपनयनं, तत्र कारणमाह - **न सत्यादगाः** इति । सत्यं न अतिक्रान्तवान् असि सत्यमेव उक्तवानसि । तस्मात् कारणात् त्वं ब्राह्मणः एव इति मम निश्चयो जातः । अहं भवन्तं प्रथमम् उपनीय वेदम् अध्यापयिष्यमि इति भावः । **तमुपनीय** इत्यादि । **तं** - सत्यकामं गौतमः **उपनीय** - उपवीतसंस्कारं विधाय **कृशानां** - क्षीणानाम् **अबलानां** - दुर्बलानां गवां मध्यात् गोयूथात् अति दुर्बलानि **चतुःशताः गाः** - गवां चत्वारि शतानि **निराकृत्य** - पृथक्कृत्य वक्ष्यमाणं वचनं **उवाच** - प्रोक्तवान् । किमुक्तवान् गौतमः तत्राह - **इमाः** इत्यादि । हे **सोम्य !** प्रियदर्शन ! **इमाः** गाः चतुःशतसंख्याकाः गाः **अनुव्रज** - अनुगच्छ । एताः गाः नीत्वा वनं गच्छ । तत्र गाः पालय - चारय च इत्येवंक्रमेण गुरुः आज्ञप्तवान् इति भावः । तदनन्तरं **सः** - सत्यकामः, 'सहस्रसंख्याः यावत् गवां न भविष्यति तावत्पर्यन्तं वनात् नागमिष्यामि' इति प्रतिज्ञाय ताः गाः **अभिप्रस्थापयन्** - नीयमानः उवाच । **सः** - सत्यकामः । **ह वर्षगणं** - बहुकालं यावत् तृणजलादिपूरिताबाधितवने गाः पूर्वोक्ताः प्रवेश्य **उवास** - उषितवान् । **यदा** - यस्मिन् काले ताः गाः **सहस्रं** - सहस्रसंख्याकाः **सम्पेदुः** - सम्पन्नाः बभूवुः तावन्तं वर्षगणं वने उषितवान् इति ।।

**सु.** - उपनयनार्हतौपयिकं जन्म अस्य निश्चेतुं प्रवृत्तो गुरुः अस्य सत्यवचनेन विनिश्चित्य जन्मना उपनयनार्हम् एनम् आह - **तं** - एनं सत्ये निष्ठितमिदम् इवाच । **अब्राह्मणः** - ब्राह्मणात् द्विजात् अन्यः - शूद्रः, **नैतद्विवक्तुमर्हति** - सत्यमिदं वचः विशेषेण वक्तुं नार्हति, त्वं तु सत्यात् **नागाः** - न प्रस्खलितवान् असि, तदनेन लिङ्गेन त्वम् अवगम्यसे ब्राह्मणः इति, तदाहर समिधम्, त्वामुपनेष्ये इति । आनीतसमिधं तम् उपनीय विशेषतो विद्यया अनुजिघक्षुः एनम् आत्मीयात् **कृशानाम् अबलानां** गवां मण्डलात् **चतुःशताः गाः निराकृत्य** - पृथक्कृत्य उवाच । चत्वारि शतानि संख्याविशेषो यासु इति बहुव्रीह्याश्रयणात् छान्दसतया वा चतुःशताः इति। **इमाः** गाः **सोम्यानु संव्रज** -

अनुयाहि । इमाः पालय परिचरन्निति यावत् । स च सत्यकामः श्रद्धातिशयसम्पन्नः गाः चारणाय **अभिप्रस्थापयन् उवाच नासहस्रेणावर्तयेति** - न यावत् सहस्रसंख्यया आसां वृद्धिः न तावत् प्रत्यावर्तेय इति । एवम् अवधार्य प्रविश्य तृणोदकपरिपूर्णं हिंस्रसत्त्वरहितं वनं **वर्षगणं प्रोवास** - बहुवर्षपरिमितं दीर्घं कालं प्रोषितवान् । ताः गावः यदा **सहस्रं सम्पेदुः** - सहस्रसङ्ख्यासम्पन्नाः बभूवुः ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

**[ऋषभेण सत्यकामाय चतुष्कलैकपादोपदेशः]**

**अथ हैनमृषभोऽभ्युवाद - सत्यकामा ३ इति । भगव इति ह प्रतिशुश्राव । प्राप्ताः सोम्य सहस्रँ स्मः । प्रापय न आचार्यकुलम् ।। १ ।।**

**प्र. - अथ......इति** । एवं गवां रक्षणेन प्रीतदेवताविशेषाधिष्ठितः ऋषभः **सत्यकामा ३ इति अभ्युवाद** - आमन्त्रितवान् । **सत्यकामा ३** इति 'दूराद्धूते च' (पा.सू.८-२-८४) इति प्लुतः । **भगव इति ह प्रतिशुश्राव । प्रतिशुश्राव** - प्रत्युत्तरं ददौ । सत्यकामः इति शेषः। ऋषभः आह - **प्रापय आचार्यकुलम् । सहस्रं** - सहस्रसंख्यां वयं **प्राप्ताः स्मः** । तव प्रतिज्ञा च निर्व्यूढा । अस्मान् **आचार्यकुलं प्रापय** इत्यर्थः ।।

**आ.भा. - अथ** - गोसहस्रसंख्यासम्पत्यनन्तरम् श्रद्धया तपसा गवां रक्षणेन च प्रीता देवता । तया अधिष्ठितः **ऋषभः एनं** - सत्यकामम् **अभ्युवाद** - उवाच । हे **सत्यकामा ३** इति । सम्बोधने प्लुतिः । ऋषभस्य सम्बोधनानन्तरम् **भगव इति प्रतिशुश्राव** - प्रत्युत्तरं दत्तवान् सत्यकामः । तदनन्तरं पुनः ऋषभः प्राह हे सत्यकाम ! **सोम्य !** वयं ऋषभाः **सहस्रं** - सहस्रसंख्यां देवतानुग्रहेण ऋषेः अनुभावेन **प्राप्ताः अस्मः** - अर्थात् गवां सहस्रसंख्याः सम्पन्नाः । अतः **नः** - अस्मान् आचार्यगृहं **प्रापय** - नय ।।

**सु.** - अथ अस्य श्रद्धातपोविशेषसुप्रसन्नो देवो वायुः दिक्सम्बन्धी **स्वयम् ऋषभः** भूत्वा बलीवर्दः भूत्वा अभ्युवाच एनम्, **सत्यकामा ३** इति प्रथमं सम्बोधयति

स्म। सम्बोधितश्च स जाबालः सपदि **भगवः** ! हे भगवन् ! इति विनयोपेतेन वचसा प्रत्युत्तरयति स्म । यथासंकल्पं वयं **सहस्रं** - सहस्रसंख्याः **प्राप्ताः स्मः । प्रापय न आचार्यकुलम्** ।।

**ब्रह्मणश्च ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच - 'प्राची दिक् कला ; प्रतीची दिक् कला; दक्षिणा दिक् कला; उदीची दिक् कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान् नाम' ।। २ ।।**

**प्र. - ब्रह्मणश्च ते पादं ब्रवाणीति** । प्रीतश्च तेऽहं ब्रह्मणः पादं ब्रवाणीति वृषभ उवाच इत्यर्थः । इतर आह - **ब्रवीतु मे भगवानिति । तस्मै होवाच** । ऋषभ इति शेषः । किमिति ।

**प्राची.....नाम । कलाः** - अवयवाः, एकैकस्य हि गोः पादस्य चत्वारः अवयवाः पुरतः खुरद्वयं, पृष्ठतः पार्ष्णिद्वयं च । अतः पादः चतुष्कलो भवति । अतः प्रागादिदिक्चतुष्टयं ब्रह्मणः पादत्वेन प्रकाशवन्नामकत्वेन च उपास्यम् इत्यर्थः ।।

**आ. भा.** - तव तपःसाहसाभ्यां गवां सहस्रं सञ्जातम् । तव प्रतिज्ञापि सम्पन्ना, वयं त्वयि प्रसन्नाः स्मः । तस्मात् गुरुकुलम् अस्मान् नय इति भावः, तथा प्रीतश्चाहं **ते** - तव ब्रह्मणः पादं **ब्रवाणि** - कथयामि । एवंप्रकारेण श्रद्धातपोभ्यां प्रीतः ऋषभवचनं श्रुत्वा सत्यकामः **ब्रवीतु मे भगवानिति** वचनम् उवाच । तदनन्तरं **तस्मै** - सत्यकामाय ऋषभः किल उवाच । वक्ष्यमाणं वचनमिति । **प्राची दिक् कला** - अवयवः ब्रह्मणः पादस्य चतुर्थो भागः **प्रतीची दिक् कला, दक्षिणा दिक् कला उदीची दिक् कला** । हे **सोम्य ! एष वै चतुष्कलः पादो ब्रह्मणः** स च **प्रकाशवान् नाम** प्रकाश इति पदवाच्यः। एकैकस्य गोः पादस्य चत्वारः अवयवाः भवन्ति । पुरतः खुरद्वयं पृष्ठतः पार्ष्णिद्वयं च। तस्मात् कारणात् पादः चतुष्कलो भवति । ततः प्राच्यादिदिक्चतुष्टयं ब्रह्मणः पादत्वेन प्रकाश इति नामकत्वेन चा उपास्यं भवति इति भावः ।।

**सु.** - इदं च अपरं शृणु **ब्रह्मणः पादं ब्रवाणीति** । अवहितोऽस्मि **ब्रवीतु मे भगवानिति** जाबाल आह - **तस्मै होवाच** ऋषभः - प्राची दिक् एका कला - पादस्य चतुर्थांशः, प्रतीची अपरा कला, एवं दक्षिणा, उदीची च । एवम् ताभिः

चतसृभिः कलाभिः अवयवैः उपेतः ब्रह्मणः पादोऽयम् एकः चतुष्कलः प्रकाशवान् नामायम्, यतो दिशः प्रकाशन्ते ।।

[चतुष्कलैकपादोपासनस्य फलम्]

**'स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः, प्रकाशवानित्युपास्ते, प्रकाशवानस्मिन् लोके भवति । प्रकाशवतो ह लोकान् जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते' ।। ३ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र. - एतं** - पादम् उक्तप्रकारेण **य उपास्ते,** स इह **लोके प्रकाशवान् भवति** इत्यर्थः । न एतावन्मात्रं फलम् इत्याह - **प्रकाशवतो ह लोकान् जयति** इत्यादिना । कस्य इदं फलम् इत्यत्र उक्तम् अधिकारिणम् उपसंहरति - **य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते** । उक्तोऽर्थः ।।

**आ.भा. - सः यः** - उपासकः विद्वान् **एतं** - ब्रह्मणः चतुष्कलं पादम् उक्तप्रकारेण **प्रकाशवानित्युपास्ते** - समुपासनं करोति सः तथोपासकः अस्मिन् लोके प्रकाशवान् भवति । न केवलं प्रकाशवानेव भवति अपि तु **प्रकाशवतः** - प्रकाशविशिष्टान् **लोकान् जयति** । को हि प्रकाशवान् लोकान् जयति तत्राह - **यः उपासकः एतं** चतुष्कलं ब्रह्मणः पादं प्रकाशवान्नामकम् उपास्ते तस्य अधिकारिणः प्रकाशात्मकलोकजयफलं भवति इति भावः ।।

**सु.** - ब्रह्मणः चतुष्कलं पादं **एवं प्रकाशवानित्युपास्ते** । स **लोके अस्मिन् प्रकाशवान् भवति,** नैतावत्, अमुत्र च फलम् अन्वेति । किं तत्? **प्रकाशवतो ह लोकान् जयति, य एतमेवं विद्वान् चतुष्कलं ब्रह्मणः । पादं प्रकाशवानित्युपास्ते ।।**

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

[अग्निना सत्यकामाय ब्रह्मणः द्वितीयपादोपदेशः]

**'अग्निष्टे पादं वक्ते'ति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभिसायं बभूवुः ; तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ्मुखोपविवेश ।। १ ।।**

**प्र. - अग्निष्टे पादं वक्तेति** । एवं स्वयं पादम् उक्त्वा पादान्तरम् अग्निः उपदेक्ष्यति इत्युक्त्वा ऋषभः तूष्णीं बभूव इत्यर्थः । **सः विवेश । स ह** - सत्यकामः **श्वोभूते** - अपरेद्युः नित्यनैमित्तिकं कर्म कृत्वा आचार्यकुलाभिमुख्येन गाः **प्रस्थाप्य** - सर्वाः गावः **यत्र** - देशे सायंकाले **अभिबभूवुः** - परितः स्थिताः भवन्ति । तत्र अग्निम् आहृत्य गाश्च उपरुध्य सन्ध्याम् उपास्य समिदाधानं कृत्वा ऋषभवचः ध्यायन् अग्नेः पश्चात् प्राङ्मुखः उपविष्टवान् इत्यर्थः ।।

**आ. भा.** - एवम् ऋषभः स्वयं ब्रह्मणः पादं सत्यकामाय उपदिश्य **ते** - तुभ्यं **पादं** - पादान्तरम् अग्निः वक्ता । पादान्तरं ब्रह्मणः ते अग्निः उपदेक्ष्यति इति कथयित्वा ऋषभः तूष्णीं जातः इति । ततश्च **सः** - सत्यकामः **श्वोभूते** - अपरदिवसे नित्यनैमित्तकं सन्ध्यावन्दनादिकम् आवश्यकं कर्म कृत्वा आचार्यगृहं प्रति गाः **अभिप्रस्थापयाञ्चकार** - गाः चारयन् शनैः शनैः आचार्यकुलं प्रस्थितः अभूत् इत्यर्थः । **ताः** - गावः शनैः चरन्त्यः गुरुकुलाभिमुखेन गच्छन्त्यः **यत्र** - यस्मिन् काले देशे च **अभिसायं** - निशायां, रात्रौ **अभिसंबभूवुः** - मिलित्वा एकत्र संस्थिताः । **तत्र** - तस्मिन् स्थाने, तस्मिन् निशामुखे च सत्यकामः **अग्निं** - आहवनीयाग्निम् **उपसमाधाय** - आहृत्य **गाश्च उपरुध्य** सायं सन्ध्याम् उपास्य **समिधमाधाय** - समिदाधानं कृत्वा ऋषभवचनम् अनुस्मरन् **अग्नेः** - आहवनीयाग्नेः पश्चात् दिशि स्वयं प्राङ्मुखो भूत्वा **उपविवेश** - उपविष्टवान् इत्यर्थः ।।

**सु.** - एवम् उपदिश्य **पादम्** - एकम् अपरं तु पादम् **अग्निस्ते** वक्ष्यति इति उपरराम। स जाबालिः श्वोभूते गाः आचार्यकुलम् अभिप्रस्थापयाञ्चक्रे । अथ सायं यत्र गा अभितो बभूवुः, **तत्राग्निमुपसमाधाय** - यथाविधि समिधम् आधाय गाश्च एकत्र उपरुध्य अग्नेः पृष्ठतः समीपे प्राङ्मुखः उपविवेश ।।

**तमग्निरभ्युवाद सत्यकामा ३ इति भगव इति ह प्रतिशुश्राव ।। २ ।।**

**प्र. - तमग्निरभ्युवाद** इत्यर्थः । **तं** - एवम् उपविष्टं सत्यकामम् अग्निः आमन्त्रयाञ्चकार इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - तं -** अग्रेः पश्चात् समुपविष्टं सत्यकामम् अग्निः **अभ्युवाद -** प्रोवाच, सत्यकामा इति । हे भगवन् ! इत्येवंक्रमेण सत्यकामः **प्रतिशुश्राव -** प्रोवाच।।

**ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच - 'पृथिवी कला, अन्तरिक्षं कला, द्यौः कला, समुद्रः कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान् नाम' ।। ३ ।।**

**प्र. - ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति** इत्यादि । **पादं** द्वितीयम् इत्यर्थः । **अनन्तवान्नाम -** अनन्तवन्नाम्ना उपास्यः इत्यर्थः ।।

**आ.भा. - सोग्य ! ते -** तुभ्यं **ब्रह्मणः द्वितीयं पादमहं ते ब्रवाणि -** कथयामि इति । **ब्रवीतु मे भगवानिति** सत्यकामः प्रोवाच । **तस्मै -** सत्यकामाय अग्निः प्रोवाचेति । **पृथिवी कला -** ब्रह्मणः अवयवेत्यादि । **अनन्तवान्नाम** । अनन्तव अन्नाम्ना उपास्यः इत्यर्थः ।।

**सु. -** अयं द्वितीयः पादः ब्रह्मणः चतुष्कलोऽनन्तवान्नाम, पृथिव्यादीनां वैपुल्यातिशयेन उच्यते - **अनन्तवान्नाम** इति ।।

**[द्वितीयपादोपासनस्य फलम्]**

**'स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिन् लोके भवति । अनन्तवतो ह लोकान् जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते' ।। ४ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र. -** फलमाह - **सः......भवति । अनन्तवान् -** केनचिदपि पारं गन्तुम् अशक्यः इत्यर्थः । अजेयः इति यावत् । **अनन्तवतो ह लोकान् जयति । अनन्तवतः -** अविनाशिनः इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा - सः यः** इत्यादि खण्डान्तः मन्त्रार्थः स्वयमूहनीयः ।।

**सु.** - लोकेऽस्मिन् **अन्तवान् भवति** - विपुलसम्पत्तिमान् भवति । न एतावन्मात्रम्, अमुत्र च अनन्तवतो लोकान् (अतिविस्तीर्णान्) जयति ।।

।। इति **षष्ठखण्डभाष्यम्** ।।

## सप्तमः खण्डः

[हसंस्य सत्यकामाय तृतीयपादोपदेशः]

**हँसस्ते पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभिसायं बभूवुः तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ।। १ ।।**

**प्र.** - **हंसस्ते पादं वक्तेति,** इत्यादि । सर्वं स्पष्टम् ।।

**आ.भा.** - अग्निदेवतोपदेशं समाप्य आदित्याधिष्ठितहंससंवादं दर्शयितुमाह - **हंसस्ते पादं वक्तेति** इति । हे सत्यकाम ! अहं ते ब्रह्मणः पादैकम् उपदिष्टवानस्मि । अपरं पादं ब्रह्मणः आदित्यप्रतिनिधिहंसः ते कथयिष्यति इति कथयित्वा उपरराम । अत्र हंसः आदित्यशौक्ल्यात् पतनसमानत्वाच्च । **स ह श्वोभूते गाः** इत्यादि । **स ह** - सत्यकामः **श्वोभूते** - अपरेद्युः नित्यनैमित्तिकं सन्ध्यावन्दनादिकं आवश्यकं कर्म कृत्वा गाः **अभिप्रस्थापयाञ्चकार** - आचार्यकुलाभिमुख्येन गाः प्रस्थापयामास । **ताः यत्राभिसायं बभूवुः । ताः** - सर्वाः गावः **यत्र** - यस्मिन् देशे यत्र काले च निशामुखे इत्यर्थः । परितः स्थिताः अभवन् तत्र देशे काले च **अग्निमुपसमाधाय** - अगिम् आहृत्य गाः **उपरुध्य** - सन्ध्यादिकम् उपास्य **समिधमाधाय** - समिधाधानं कृत्वा अग्निवाक्यं ध्यायन् अग्नेः पश्चात् प्राङ्मुखो भूत्वा **उपोपविवेश** - उपविष्टवान् ।।

**सु.** - एवम् उपदिश्य तृतीयं पादं हंसो वक्ष्यति इत्युक्त्वा उपरराम अग्निः । **स ह** इत्यादि स्पष्टम् ।।

**तँ हँस उपनिपत्याभ्युवाद, सत्यकामा ३ इति । भगव इति ह प्रतिशुश्राव ।। २ ।।**

**ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच 'अग्निः कला, सूर्यः कला, चन्द्रः कला, विद्युत्कलैष वै सोम्य ! चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान् नाम ।। ३ ।।**

**स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते, ज्योतिष्मानस्मिल्लोके भवति । ज्योतिष्मतो ह लोकाञ्जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ।। ४ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र. - ज्योतिष्मानस्मिन्लोके भवति** । तेजस्वी भवति इत्यर्थः । **ज्योतिष्मतो ह लोकान् जयति** । अग्निसूर्यादिलोकान् इत्यर्थः ।। ४ ।।

**आ.भा. - तं हंस उपनिपत्य** - तत्समीपम् आगत्य **अभ्युवाद** - प्रोवाच । हे **सत्यकाम ! इति भगवः** इत्येवंरूपेण **प्रतिशुश्राव** - प्रोवाच । हंसः प्राह **ब्रह्मणः सोम्य ! ते पादं ब्रवाणि** - कथयामि **इति** । इतरः प्राह - **ब्रवीतु मे भगवानिति । तस्मै** - सत्यकामाय सः हंसः उवाच । हंसवचनमेव दर्शयति - **अग्निः कला, सूर्यः कला, चन्द्रः कला विद्युत् कला** इत्यादिकं सर्वं पूर्ववदेव व्याख्येयम् । **ज्योतिष्मान् अस्मिन् लोके भवति** । अग्न्यादिकलात्मकब्रह्मणः पादम् उपासकोऽस्मिन् लोके ज्योतिष्मान् तेजस्वी भवति । तथा ज्योतिष्मतः सूर्यादिलोकान् **जयति** - प्राप्नोति इति ।।

**सु.** - सूर्यादीनां ज्योतिष्मत्त्वात् एष तृतीयः पादो ज्योतिष्मान् नाम ।। २-४ ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टमः खण्डः

**[मद्गोः सत्यकामाय चतुर्थपादोपदेशः, तस्य फलञ्च]**

**मद्गुष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभिसायं बभूवुः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ।। १ ।।**

**तं मद्गुरुपनिपत्याभ्युवाद, सत्यकामा३ इति । भगव इति ह प्रतिशुश्राव ।। २ ।।**

**ब्रह्मणः सोम्य ! ते पादं ब्रुवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच प्राणः कला, चक्षुः कला, श्रोत्रं कला, मनः कला । एष वै सोम्य ! चतुष्कलः पादो ब्रह्मणो आयतनवान् नाम ।। ३ ।।**

**स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवान् इत्युपास्ते, आयतनवानस्मिन् लोके भवति । आयतनवतो ह लोकान् जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ।। ४ ।।**

**।। इति अष्टमः खण्डः ।।**

**प्र. - मद्गुष्टे पादं वक्तेति । मद्गुः -** जलपक्षिविशेषः । हंसमद्गू अपि वृषभवदेव देवताविष्टौ द्रष्टव्यौ ।। १-२-३।।

**आयतनवान् -** आश्रयवान् भवति इत्यर्थः । **आयतनवतः -** सावकाशान् इत्यर्थः । शिष्टं पूर्ववत् ।। ४ ।।

**आ.भा. -** हंससंवादम् उपदर्श्य मद्गुसंवादं दर्शयितुमाह - **मद्गुष्टे पादं वक्तेति** इति । हे **सत्यकाम !** ब्रह्मणः पादं कथयिष्यति इति कथयित्वा हंसः उपरराम । तत्र मद्गुर्नाम जलचरः पक्षिविशेषः । स चाप्सम्बन्धात् प्राणः, अयमपि वृषभवत् देवताविष्टः एव ज्ञातव्यः । **स ह श्वोभूते गाः** इत्यादि प्रकरणं पूर्ववदेव व्याख्येयम् । प्राणादिकलात्मकब्रह्मणः पादम् उपासकस्य किं फलं भवति तत्राह - **आयतनवान्** इत्यादि । प्राणादिकलानाम् उपासकः पुरुषः अस्मिन् लोके **आयतनवान् -** आश्रयवान् भवति । न तु कदाचित् सः निराश्रितो भवति । **आयतनवतो ह लोकान् जयति ।** तत्र **आयतनवतः -** सावकाशान् लोकान् **जयति -** प्राप्नोति । अन्यत् सर्वं पूर्ववदेव व्याख्येयम् इति ।।

**सु. - मद्गुः -** पक्षिविशेषो जलचरः । भोगानाम् आयतनानि नाम प्राणादीनि तत्संश्लेषादेव भोगः, तदुच्यते आयतनवान् नाम इति ।।

**।। अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

**[गुरुणा सत्यकामाय षोडशकलोपदेशः]**

**प्राप हाचार्यकुलम् । तमाचार्योऽभ्युवाद सत्यकामा ३ इति । भगव इति ह प्रतिशुश्राव ।। १ ।।**

**प्र. - प्राप हाचार्यकुलम् ।** गोभिः सह सत्यकामः इति शेषः । शिष्टं स्पष्टम् ।।

**आ.भा. - प्राप ह** इत्यादि । सः सत्यकामः गाः चारयन् नयन् च ब्रह्मवित् सन् गोभिः सहैव **आचार्यकुलं** - गुरुगृहं **प्राप** - प्राप्तवान् । गोभिः सह समागतं ब्रह्मतेजसा भासमानं तं सत्यकामं दृष्ट्वा **तमभ्युवाद** - प्रोक्तवान्, आचार्यो गुरुः - हे **सत्यकाम !** इति सम्बोधयन्, ततो गुरुणा सम्बोधितः सत्यकामो **भगवः** - भगवन् इति सम्बोधयन् **प्रतिशुश्राव** - प्रोक्तवान् सत्यकामः ।।

**सु.** - एवम् अधिगम्य देवताभ्यः ब्रह्मविद्याम् **आचार्यकुलं प्राप ।** प्राप्तवन्तं तं प्रेमविह्वलो गुरुः दूरादेव सम्बोधयन्नाह - **सत्यकामा ३ इति ।** सः भगवन्निति **प्रतिशुश्राव ।।**

**ब्रह्मविदिव वै सोम्य भासि ; कोनु त्वाऽनुशशासेति । अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे । भगवाँस्त्वेव मे कामे ब्रूयात् ।। २ ।।**

**प्र. - ब्रह्मविदिव वै सोम्य भासि कोऽनु त्वाऽनुशशासेति ।** को वा ते ब्रह्म उपदिष्टवान् इत्यर्थः । शिष्टं स्पष्टम् । **अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे ।** मनुष्याः मां न अनुशिष्टवन्तः । न हि भगवतः शिष्यं मां कश्चित् मनुष्योऽनुशासितुम् उत्सहते । अपि तु देवाः एव अनुशिष्टवन्तः इति प्रतिज्ञातवान् । **भगवांस्त्वेव मे कामे ब्रूयात् । कामे** - इच्छायां सत्यां मे भगवानेव वक्ष्यति । अतो मम किमर्थम् इतरप्रार्थनम्? इत्यर्थः ।।

**आ.भा. - हे सोम्य ! त्वं ब्रह्मवित्** - ब्रह्मज्ञानी **इव वै** प्रतिभासि । तेजसा तर्कयामि यत्त्वं ब्रह्मज्ञानी संवृत्तः इत्यर्थः । **कोऽनु त्वानुशशासेति** - कस्ते ब्रह्म उपदिष्टवान् ? इत्यर्थः । इतरः प्राह - **अन्ये मनुष्येभ्यः इति प्रतिजज्ञे ।** मनुष्येभ्योऽन्येः देवाः एव माम् अनुशिष्टवन्तः । न हिं मां मनुष्या उपदिष्टवन्तः । किन्तु तदतिरिक्ताः देवाः एव इति प्रतिज्ञातवान् सत्यकामः इति । **भगवान्** इत्यादि । **भगवानेव कामे** - इच्छायां सत्याम् **मे** - मह्यं **ब्रूयात्** - वक्ष्यति । अतः इतरप्रार्थनं निरर्थकमेव इति ।।

**सु.** - प्राह आचार्यः, हे **सोम्य !** प्रियदर्शन ! **ब्रह्मविदिव भासि** - यत्त्वं सम्प्रसन्नो मुखेन लक्ष्यसे, कस्त्वाम् उपदिदेश ? इति । **अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे** - एवं

पृष्टः सत्यकामः आचार्यातिलङ्घनापराधशङ्काम् अपजिहीर्षुः प्रतिजज्ञे । सत्यमेव न मनुष्यो माम् उपदिदेश । अन्ये देवाः एव प्रसन्नाः उपदिदिशुः इति प्रतिजज्ञे । सति मे **कामे** - इच्छायां सत्यां विविदिषायाम् इति यावत् । **त्वमेव मे ब्रूयात्** - तत् भवन्तम् आचार्यम् अतिलङ्घ्य अन्यं न गणयामि इति चाह ।।

**श्रुतँ ह्येव मे भगवद्दृशेभ्यः, आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदि'ति । तस्मै हैतदेवोवाच अत्र ह न किञ्चन वीयायेति वीयायेति ।। ३ ।।**

**।। इति नवमः खण्डः ।।**

**प्र.** - किञ्च **श्रुतं......प्रापदिति । आचार्यादेव विद्या** अधिगता **साधिष्ठं** - साधुतमत्वं **प्रापत् इति** - प्राप्नोति इति **भगवद्दृशेभ्यः** - भवादृशेभ्यः **मे** - मया **श्रुतम् ।** अतो नाहं भगवत्तः अन्यस्मात् अनुशासनं वाञ्छामि इति भावः । **तस्मै हैतदेवोवाच** - एवमुक्तः आचार्यः **तस्मै** - सत्यकामाय **एतदेव** - षोडशकलब्रह्मविज्ञानमेव उवाच । तदेव अन्यूनानतिरिक्तम् उवाच इत्यर्थः । तत्र हेतुमाह - **अत्र ह न किञ्चन वीयायेति वीयायेति । अत्र** - षोडशकलविद्यायां किञ्चिदपि **न वीयाय** - वैविध्यं न प्राप्तम् । अतः हेतोः विद्याप्रकारे भेदाभावात् अन्यूनानतिरिक्तं तदेव उवाच इत्यर्थः । द्विरुक्तिः [1]विद्यासमाप्त्यर्था[1] ।।

**आ.भा.** - किञ्च **भगवद्दृशेभ्यो** - ब्रह्मज्ञानिभ्यः श्रुतं यत् आचार्यमुखादेव **विदिता** - ज्ञाता **विद्या साधिष्ठं** - साधुतमत्वं **प्रापत्** - प्राप्नोति । यद्यपि ब्रह्मोपदेशो मेऽभवत् तथापि गुरुमुखात् श्रुतैव विद्या हितकारिणी भवति इति भवानेवं सर्वम् उपदिशतु इति शिष्याभ्यर्थनम् । ततो गुरुः **तस्मै** - सत्यकामाय एतत्सर्वं यथावत् ब्रह्म उवाच। ब्रह्मोपदेशं कृतवान् । षोडशकलब्रह्मविज्ञानमेव उक्तवान् इति यावत् । **अत्र ह** इत्यादि। **अत्र** - षोडशकलब्रह्मविद्यायां किञ्चिदपि न **वीयाय** - पार्थक्यं न प्राप्तवान् । तस्मात् विद्याप्रकारे भेदाभावात् अन्यूनानतिरिक्तं तदेव उवाच । अर्थात् वृषभादिभिः देवाधिष्ठितैः यदुपदिष्टं तदेव उपदिष्टवान् आचार्यः इति पार्थक्यं किमपि न प्राप इति भावः । **वीयाय वीयाय** इति द्विरुक्तिः विद्यासमाप्तिं द्योतयति ।।

---

1. विद्यापरिसमाप्त्यर्था - अ,आ ।

**सु.** - अपरं चाह, भगवन्! भवादृशेभ्यः श्रुतमिदं यदाचार्यादेव विदिता विद्या **साधिष्ठं प्रापत्** - साधुतमत्वं प्राप्नोति नान्यथा इति । तत् भवानेव उपदिशतु इति । एवं प्रार्थितो गुरुः **एतदेव** - देवताभिः उक्तां षोडशकलब्रह्मविद्यामेव उवाच तस्मै । **अत्र ह न किञ्चन वीयाय** - आचार्योपदिष्टायाम् अस्यां विद्यायां देवतोपदिष्टविद्यातः न किञ्चिदपि विगतम् अभूत् न्यूनम् अभूत् । अन्यूनातिरिक्तमेव उपदिष्टम् आचार्येण इति यावत् । समाप्तौ अभ्यासः ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**[उपकोसलविद्या - उपकोसलस्य गुरुशुश्रूषा]**

**उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार । स ह स्मान्यान् अन्तेवासिनः समावर्तयँस्तँ ह स्मैव न समावर्तयति ।। १ ।।**

**प्र.** - उपकोसलविद्यां वक्तुमाह - **उपकोसलो......उवास** । कमलसुतः उपकोसलनामा अत्र पूर्वोक्ते जाबाले सत्यकामे विद्यार्थं ब्रह्मचर्यम् अवात्सीत् । **तस्य......परिचचार** । तदग्निशुश्रूषां द्वादशवर्षं कृतवान् । **स ह......समावर्तयति** । स्वाध्यायार्थिनः इतरान् ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयन् । तं ब्रह्मविद्यार्थिनं ज्ञात्वा, चिरसेवाम् अन्तरेण ब्रह्मविद्या न उपदेष्टव्या इति मत्वा, तमेव न समावर्तयति स्म ।।

**आ.भा.** - षोडशकलब्रह्मविद्यां परिसमाप्य सः उपकोसलविद्यां वक्तुकामः प्राह - **उपकोसलो ह वै** इत्यादि । इतोऽनन्तरपूर्वं सत्यकामस्य जाबालस्य विद्या प्रदर्शिता ततो जाबालशिष्यस्य विद्याप्राप्तिप्रकारः प्रदर्श्यते । अत्रापि विद्याप्राप्तिः अतिशयितशुश्रूषया एव भवति इति दर्शयिष्यति । पूर्वप्रकरणे गोसहस्रवृद्धिपर्यन्तं कालम् अवधिं कृत्वा गुरोः शुश्रूषां कुर्वन् वर्षगणं प्रोष्य त्वरारहितो यथासमये देवादिना उपदेशं प्राप्य कृतार्थोऽभवत् । अत्र तु आचार्यकुले वसन्नेव सत्वरः शुश्रूषया विद्यां प्राप्तवान् इति दर्शयिष्यति इति **उपकोसलो ह** । उपकोसलनामकः **कामलायनः** - कमलऋषेः अपत्यं पुमान् **सत्यकामे जाबाले** - पूर्वोक्ते जबालासुते ब्राह्मणे तदन्तेवासित्वम् अङ्गीकृत्य **ब्रह्मचर्यमुवास** - विद्याप्राप्तये निवासं कृतवान् । **तस्य ह** - गुरोः सत्यकामस्य **अग्नीन्** - गुरुप्रतिष्ठितान् आहवनीयादिकान् अग्नीन् **द्वादशवर्षाणि** - द्वादशवर्षं यावत् **परिचचार** - तदग्निशुश्रूषां

कृतवान् । **सः ह** - सत्यकामः **तदन्यान्** - तद्व्यतिरिक्तान् **अन्तेवासिनः** - विद्यार्थिनः समावर्तयन्नपि एनं ब्रह्मविद्यार्थिनं न समावर्तयति स्म । स्वाध्यायार्थिनः अन्यान् ब्रह्मचारिणः स्वाध्यायम् अध्याप्य समावर्तनं कुर्वन्नपि ब्रह्मविद्याभिलाषुकः अयम् इति मन्वानः पुष्कलशुश्रूषाम् अन्तरेण ब्रह्मविद्या न उपदेष्टव्या इति मत्वा तमेव केवलं नैव समावर्तनं करोतिस्म इति भावः ।।

**सु.** - आचार्यपरिचर्यया भूयिष्ठया श्रद्धया च विद्यासिद्धिम् अवधारयन् पुनः आख्यायिकामुखेन विद्यान्तरं वक्तुम् आरभते - **उपकोसलः** इति - नाम्ना उपकोसलः, सुतः कमलस्य, जाबाले सत्यकामे विद्यार्थं ब्रह्मचर्यम् उवास । परिचचार च नियमेन श्रद्धया द्वादशवर्षाणि अग्नीन् । **तस्य** - गुरोः । **सः** - गुरुः अन्यान् अन्तेवासिनः स्वाध्यायम् अध्याप्य समावर्तयन् गृहान्, **तं ह न समावर्तयति स्मैव** - अग्निपरिचर्यापरायणमपि तम् उपरुरोध केवलम्, न उपदिदेश उपदेष्टव्यम् इति यावत् । ह स्म इत्यनर्थकौ निपातौ ।।

**तं जायोवाच, तप्तो ब्रह्मचारी कुशलमग्नीन् [1]पर्यचारीत्[1] । मा त्वाऽग्नयः परिप्रवोचन् ; प्रब्रूह्यस्मा इति । तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ।। २ ।।**

**प्र. - तं जायोवाच** । तस्य आचार्यस्य पत्नी वक्ष्यमाणम् उवाच इत्यर्थः । **तप्तः** इति । तपसा तप्तः ब्रह्मचारी **कुशलं** - सम्यक् अग्निशुश्रूषां कृतवान् । एतस्य विद्यानुपदेशे तत्परिचरणप्रीता **अग्नयः** एव तव गर्हां कुर्युः । अतः यथा त्वां **मा परिप्रवोचन् अग्नयः**, तथा **अस्मै** - उपकोसलाय विद्याम् उपदिश इति तस्य भार्या उक्तवती इत्यर्थः । **तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे** । एवं जायया उक्तोऽपि आचार्यः तस्य विद्याम् अनुपदिश्यैव देशान्तरं प्रोषितः ।।

**आ.भा. - तं** - सत्यकामं - **जायोवाच** - तत्पत्नी प्रावोचत् । अयं ब्रह्मचारी त्वदीयः शिष्यः तपसा **तप्तः** कृततपस्यः इत्यर्थः । **कुशलं** - सम्यग् यथा स्यात् तथा तव **अग्नीन् पर्यचारीत्** - तवाग्नेः शुश्रूषाम् अकरोत् । एतादृशपरिचारकाय कुशलाय यदि त्वं विद्यां न उपदेक्ष्यसि तदा तदीयशुश्रूषया सन्तुष्टाः अग्नयः तव निन्दां करिष्यन्ति । अतः **प्रब्रूहि अस्मै इति** । तस्मात् तव निन्दां यथा न करिष्यन्ति अग्नयः तथा **अस्मै** -

---

1. परिचचारीत् - इति शाङ्करः तथा माध्वसम्मतः पाठः ।

उपकोसलाय विद्योपदेशं झटिति कुरु । एवं प्रकारेण तस्य भार्या कथितवती इत्यर्थः । **तस्मै** - उपकोसलाय **एवं** - यथोक्तप्रकारेण **जायया** - स्वपत्न्या नोदितोऽपि आचार्यः तस्मै **अप्रोच्य** - अनुपदिश्यैव **प्रवासाञ्चक्रे** - देशान्तरं प्रति प्रोषितः ।।

**सु.** - तदानीं **तं जायोवाच, तप्तो ब्रह्मचारी** - तपःसम्पन्नोऽयं ब्रह्मचारी, **तवाग्नीन् कुशलम्** - सम्यक् **पर्यचारीत्** - शुश्रूषितवान् । तपःश्रद्धापुरस्कृतया परिचर्यया परितुष्टाः भूत्वा इमे अग्नयः त्वां **मा परिप्रवोचन्** - मा अपवदेयुः । अस्मिन् तुष्टाः देवाः इमे अग्नयः तव गर्हां कदाचित् कुर्युः । तत् गर्हायाः पात्रं मा भूः, **प्रब्रूहि अस्मै** - उपदेष्टव्यम् उपदिश इति । एवं प्रतिबोधितोऽपि भार्यया **तस्मै अप्रोच्यैव** - अनुपदिश्यैव **प्रवासाञ्चक्रे** - प्रवासम् अकरोत् । जानन्नपि अस्य अग्निपरिचरणातिशयं परीक्षितुम् अस्य श्रद्धातिशयम्, अनुपदिश्यैव प्रवासितवान् आचार्यः । उपदेष्टव्यं हि सर्वतो विलक्षणमेव किञ्चित् । यस्मिन् उपदिष्टे नान्यत् उपदेष्टव्यं स्यात् । अस्य च विविदिषा तस्यैव, नेतरस्यैव स्वाध्यायमात्रजिघृक्षा । तदस्य आशयं जानन्नेव परीक्षते अस्य श्रद्धाम् ।।

**स ह व्याधिनाऽनशितुं दध्रे । तमाचार्यजायोवाच - ब्रह्मचारिन् ! अशान ; किन्तु नाश्नासीति । स होवाच - बहव इमेऽस्मिन् पुरुषे कामाः नानात्ययाः । व्याधिभिः प्रतिपूर्णोऽस्मि ; नाशिष्यामीति ।। ३ ।।**

**प्र.** - **स ह व्याधिनाऽनशितुं दध्रे । सः** - उपकोसलः **व्याधिना** - मानसेन दुःखेन पीडितस्सन् अनशनाय मतिं चक्रे[1] इत्यर्थः । 'धृञ् अवस्थाने'[2] (धा.पा.९००) इति हि धातुः । **तम् इति । अशान** - भुङ्क्ष्व इत्यर्थः । शिष्टस्य स्पष्टोऽर्थः । **स होवाच । सः** - ब्रह्मचारी **अस्मिन् पुरुषे** - जीवे ब्रह्मप्राप्तिव्यतिरिक्ताः **कामाः** - काम्यमानाः विषयाः **नानात्ययाः** - नानाविधगर्भ-जन्म-जरा-मरणादिलक्षणफलजनकाः मनसि विपरिवर्तमानाः सन्ति । अतः तद्विषयभयरूपव्याधिभिः पूर्णोऽस्मि । अतो न भुञ्जे इति प्रत्युवाच इत्यर्थः ।।

**आ.भा.** - **स ह व्याधिनाऽनशितुं दध्रे** । उपकोसलो ह **व्याधिना** मानसेन दुःखेन पीडितस्सन् 'दुःखाधीर्मानसी व्यथा'[3] इति कोशात् व्याधिशब्दो मानसिकदुःखद्योतकः ।

---

1. अवतस्थे - क,ख । 2. धृञ् धारणे इति धातुपाठे । 3. 'पुंस्याधिर्मानसी व्यथा' (१-७-२८)इति अमरकोशपाठः ।

सर्वानेव समावर्तयति मां तु न समावर्तयति न उपदिशति च । कदा माम् उपदेक्ष्यति? समावर्तयिष्यति च इत्याकारकं हृद्गतदुःखं तस्य इति । **अनशितुं** - भोजनाभावाय **दध्रे** - अवतस्थे । भोजनाभावविषयकनिश्चयं कृतवान् इत्यर्थः । एवम् अनशनाय व्यवस्थितं तम् उपकोशलं ज्ञात्वा **आचार्यजाया** - गुरुपत्नी प्रोवाच, हे ब्रह्मचारिन् ! **अशान** - भोजनं कुरु, परित्यज्य मानसं दुःखम् । **किं नु नाश्नासीति** - किं कारणं विद्यते यत् त्वं भोजनं न करोषि? कुरु भोजनम् । एवम् आचार्यजायया प्रतिबोधितः स उपकोसलः **उवाच** - प्रोक्तवान् । किम् उक्तवान् तत्राह - **बहवः** इत्यादि । **अस्मिन्** - अहं सुखी अहं दुःखी इत्यादिमानसप्रत्यक्षविषयीभूते **पुरुषे** - पुरि शयनात् पुरुषः, कर्मफलभोक्ता वा पुरुषो जीवः । तस्मिन् **बहवः** - अनेकप्रकारकाः ब्रह्मप्राप्तिव्यतिरिक्ताः **कामाः** - काम्यमानाः विषयाः कलत्रपुत्रादयः **नानात्ययाः** - अनेकप्रकारकगर्भजन्म - जरा-मरणादिलक्षणफलोत्पादकाः मनसि अनुक्षणं विपरिवर्तमानाः सति । अतः तद्विषयभयात्मकव्याधिभिः **प्रतिपूर्णोऽस्मि** - तैः दुःखैः अनवरतं समाविष्टोऽस्मि । तस्मादेव कारणात् **नाशिष्यामि** - भोजनं न करिष्यामि इत्येवंक्रमेण गुरुपत्नीम् उवाच इति ।।

**सु.** - अनुपदिश्यैव प्रोषितवति आचार्ये तापत्रयतीव्रवेदनया अयम् अनशितुं **दध्रे** निश्चयम्, अनशनसंकल्पम् अकरोत् । **तम्** - एनम् आत्मानम् अनशनेन शोषयन्तम् **आचार्यजाया** वात्सल्यात् उवाच - **ब्रह्मचारिन् ! अशान किन्नु नाश्नासीति ।** सः च प्रत्युवाच आचार्याणीम्, न मे अशिशिषा, यदहं **व्याधिभिः प्रतिपूर्णोऽस्मि,** व्याधयश्च **इमे कामाः,** कामैर्हि तापत्रयमूलैः पीड्यते विशेषतः पुरुषः । तदिमे कामलक्षणाः व्याधयः **पुरुषे बहवः** वर्तन्ते, **नानात्ययाश्च** ते, **अत्ययः** - विनाशः तेन अनर्थ इह लक्ष्यते । नानानर्थावहाः इति यावत् । कामव्याधिः एकोऽपि अनेकानर्थावहः । बहुभिः तैः **प्रतिपूर्णोऽस्मि** न अशिष्यामि इति । यद्वा - अत्ययः - अतिक्रम्य गमनम्, उद्वेलम्, उत्सर्पणम्, तच्च नानाप्रकारं कामव्याधीनाम् । कामो हि अर्थसिद्धिम् उपगतो न उपरमते । वर्धते च पुनः पुनः, उत्कटश्च भवति । अलब्धार्थश्च क्रोधात् परिणमन् परोपमर्दाय च भवति, तदेवम् उद्वेलम् अस्य उत्सर्पणम् इति नानात्ययाः इमे कामाः ।।

**अथ हाग्नयः समूदिरे - तप्तो ब्रह्मचारी कुशलं नः [1]पर्यचारीत्[1] । हन्तास्मै प्रब्रवामेति । तस्मै होचुः ।। ४ ।।**

---

1. परिचचारीत् - इति माध्वसम्मतः पाठः ।

**प्र. - अथ हाग्नयः समूदिरे ।** एतद्वाक्यं श्रुत्वा तत्परिचरणप्रीताः गार्हपत्यादयः अग्नयः दयमानमानसाः सम्भूय उक्तवन्तः इत्यर्थः । किमिति? **तप्तो—प्रब्रवामेति । हन्त** इति अनुकम्पायाम् । **प्रब्रवाम** । ब्रह्म इति शेषः । शिष्टस्य स्पष्टोऽर्थः ।

**तस्मै होचुः । तस्मै** - उपकोसलाय अग्नयः वक्ष्यमाणम् ऊचुः इत्यर्थः ।।

**आ.भा. - अथ हाग्नयः** इत्यादि । **अथ** - अनन्तरं शिष्यगुरुपत्न्योः वाक्यश्रवणानन्तरं शुश्रूषाप्रीताः **अग्नयः** - गार्हपत्यादयो अग्निदेवताः तदुपरि दयां कुर्वाणाः **समूदिरे** - सम्भूय मिलित्वा उक्तवन्तः । किमुक्तवन्तः? तत्राह - **तप्तः** इत्यादि । **तप्तः** - तपसा युक्तोऽयं **ब्रह्मचारी** - व्रती **कुशलं** - समीचीनरूपेण **नः** - अस्मान् **पर्यचारीत्** परिचरणं कृतवान् । बहुकालात् तपस्तपन् शास्त्रीयविधानेन अस्माकं शुश्रूषां कृतवान् । **हन्त** - हन्त इति अनुकम्पायाम् । **अस्मै** - तपोयुक्ताय ब्रह्मचारिणे **प्रब्रवामेति** - ब्रह्मविद्यां कथयिष्यामः । एवं संप्रधार्य **तस्मै** - उपकोसलाय ते प्रीताग्नयो वक्ष्यमाणं प्रोचुः इति ।।

**सु. - अथ** - एनम् अनशनेन क्षीयमाणम् आत्मनः भक्तम् **अग्नयः** सम्भूय कृपया जीवितवियोगभयात् रक्षन्तः **समूदिरे** - ऊचुः मिथः । **ब्रह्मचारी** एषः **नः** सम्यक् **पर्यचारीत्** - परिचरितवान् । **हन्त** इति एतदनुकम्पायाम्, **अस्मै प्रब्रवाम** येनायं यावत् आचार्यागमनम् आत्मानं धारयेत् । इति विचार्य तस्मै ऊचुः इदं - **प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ।।**

**[अग्निभिः उपकोसलाय ब्रह्मोपदेशः]**

**'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति' । स होवाच - 'विजानाम्यहं यत् प्राणो ब्रह्म ; कं च तु खं च न विजानामी'ति । ते होचुः, 'यद्वाव कम्, तदेव खम्, यदेव खम् तदेव कमि'ति । प्राणं च हास्मै तदाकाशं चोचुः ।। ५ ।।**

**।। इति दशमः खण्डः ।।**

**प्र.** - तदेवाह - **प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति । स होवाच** । एवमुक्तः **सः** - उपकोसलः **उवाच । विजानामि- - - - न विजानामीति** । अस्य अयमभिप्रायः - न तावत् प्राणादिप्रतीकोपासनम् अग्निभिः अभिधीयते, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोः मोक्षोपदेशाय प्रवृत्तत्वात् । अतः ब्रह्मैव उपास्यम् उपदिष्टम् । तत्र प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तत्र सकलजगत्प्राणयितृत्वयोगेन प्राणशब्दिततत्वस्य ब्रह्मणः उपपन्नत्वात्, यत् प्राणो ब्रह्म इत्युक्तम्, तत् जानामि । कं ब्रह्म खं ब्रह्म इत्युक्तं तु न विजानामि । यद्यपि कंशब्दस्य सुखम् अर्थः - खम् इत्यस्य च आकाशोऽर्थः ।

ततश्च वैषयिकसुखशरीरकम् आकाशशरीरकञ्च ब्रह्म इत्यभिप्रायः । [1]उत[1] कम् इत्यनेन सुखम् अभिधीयते । खम् इत्यनेन आकाशवाचिना अपरिच्छिन्नत्वम् अभिधीयते । तयोः अन्योन्यविशेषणविशेष्यभावे अपरिच्छिन्नसुखं ब्रह्म इत्यस्य अर्थो लभ्यते । ततश्च अनयोः मध्ये कस्मिन्नर्थे तात्पर्यम् इति न जाने [2]इति[2] । **ते- - -कमिति** । तदभिप्रायज्ञाः अग्नयः कंखम् इत्यनयोः विशेषण-विशेष्यभावोऽभिप्रेत इति स्वाभिप्रायम् उक्तवन्तः इत्यर्थः । ननु **यद्वाव कं तदेव खम्** इति अनेनैव विशेषणविशेष्यभावप्रतिपादनेन अपरिच्छिन्नसुखं ब्रह्म इत्यस्य अर्थस्य लाभात् **यदेव खं तदेव कमिति** पुनरुक्तिः व्यर्था इति चेत् न - दार्ढ्यार्थं वा, अपरिच्छिन्नसुखत्वेन, सुखरूपापरिच्छिन्नत्वेन, च उपासनासिद्ध्यर्थं वा परस्परविशेषणविशेष्यभावोपदेशसार्थक्यात् ।

**प्राणञ्च हास्मै तदाकाशं चोचुः** । जगत्प्राणयितृत्वेन प्राणत्वविशिष्टं यद्ब्रह्म, तदेव अपरिच्छिन्नसुखरूपञ्च इति अग्नयः उक्तवन्त इत्यर्थः ।।

**आ.भा.** - किमुक्तवन्तः अग्नयः तत्राह - **प्राणः** इत्यादि । **प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति** । एवम् अग्निभिः उपदिष्टः **सः** - उपकोसलः **उवाच** - प्रोक्तवान् - हे अग्नयः एतदहं विजानामि यत् **प्राणो ब्रह्म** - यस्य प्राणस्य शरीरे सन्निधानात् जीवनं भवति, यस्य प्राणस्य वियोगे जीवनं न भवति एतादृशवायुविशेषे प्राणस्य रूढिः विद्यते । अतः युक्तं प्राणस्य ब्रह्मत्वम् । कंखमोः तुः प्रसिद्धिः विद्यते । अतः तयोः कथं ब्रह्मत्वम् इति । अयमाशयःअग्निभिः प्राणादिप्रतीकोपासनं न उपदिश्यते । जन्मजरामरणादिसंसारभयाकुलस्य मुमुक्षोः मोक्षायैव प्रवृत्तत्वात् । ततो ब्रह्मैव उपास्यम् अग्निभिः उपदिष्टम् । तत्र प्राणसामानाधिकरण्येन ब्रह्म निर्दिष्टम् । तत्र अशेषजगत्प्राणयितृत्वयोगेन प्राणशब्दितत्त्वं ब्रह्मणः उपपद्यते इति यत् प्राणो ब्रह्म इत्युक्तम् अग्निभिः तत् विजानामि इति कथितम् उपकोसलेन । कं खं ब्रह्म इत्युक्तं तत्तु न विजानामि इति कथितम् उपकोसलेन इति । **ते होचुः** इत्यादि । तदभिप्रायं विजानन्तः अग्नयः ते **होचुः** - उक्तवन्तः - **यद्वाव कं तदेव खं यदेव कमिति** । कं खम् इत्यनयोः परस्परं विशेषणविशेष्यभावः इति एवंक्रमेण स्वकीयाभिप्रायं ते उक्तवन्तः इति । यद्यपि 'यद्वाव कं तदेव खम्' इत्यनेनैव विशेषणविशेष्यभावस्य परस्परप्रतिपादनसम्भवेन अपरिच्छिन्नसुखरूपं ब्रह्म इत्यर्थो लब्ध एव । ततश्च यदेव खं तदेव कमिति कथनं पुनरुक्तमिव भवति । तथापि 'द्विर्बद्धं सुबद्धं भवति' इति न्यायात्

---

1. यद्वा - अ । 2. इत्यर्थः - अ ।

दार्ढ्यार्थं । तथा कथनम् । यद्वा अपरिच्छिन्नसुखरूपत्वेन सुखरूपापरिच्छिन्नत्वेन च उपासनासिद्धये परस्परविशेषणविशेष्यभावोपदेशस्य सार्थक्यं सम्भवति इति भावः । **प्राणं च हास्मै** इत्यादि । जगत्प्राणयितृत्वेन प्राणत्वविशिष्टं यद् ब्रह्म तदेव अपरिच्छिन्नसुखरूपमपि भवति इति ते अग्नयः तस्मै ऊचुः इति ।।

**सु.** - अथ एतदग्नीनां वचनम् उपश्रुत्य **सः होवाच** उपकोसलः । **विजानाम्यहं यत्प्राणो ब्रह्मेति, कं च तु खं च न विजानामि** - अबाधितम् इदं प्राणो ब्रह्म इति, प्राणनगुणयोगात्, सर्वस्य प्राणयित्रा एव हि भाव्यं ब्रह्मणा । तदवधारयामि तावत् प्राणो ब्रह्मेति । इदं तु न अवधारयामि यत् कं ब्रह्म खं ब्रह्मेति । न हि अवयवार्थः प्राणशब्दस्य इव कशब्दस्य खशब्दस्य च, येन प्रवृत्तिनिमित्तेन ब्रह्म कं खं च भवेत् । यत्तु भूतं विकारि यच्च सुखम् अन्वहम् अनुभूयमानं तत्कथं ब्रह्म भवेत्, तन्नावधारयामि कं ब्रह्म खं ब्रह्मेति । अथ अग्नयः ऊचुः **यद्वाव कं तदेव खं यदेव खं तदेव कमिति ।** न केवलं कं ब्रह्म, न वा खं केवलं ब्रह्म, किन्तु यत् कम् उक्तं तदेव खम्, खशब्देन विशेषितं नाम । ननु विशेषणेन किं सिद्धम् ? निरतिशयसुखरूपँ ब्रह्मेति । यद्यपि खशब्दः आकाशे प्रसिद्धः, अथापि अत्र विभौ लक्षणया वर्तमानो निरतिशयत्वम् अवगमयति । तेन च कशब्दवाच्यसुखस्य विशेषणात् उक्तार्थलाभः । **प्राणं च हास्मै तदाकाशं चोचुः** - तत् कं सुखं प्राणं च आकाशं च ऊचुः । खशब्देन इव प्राणशब्देनापि विशेषितम् ऊचुः । मध्ये निर्दिष्टं कं पूर्वोत्तराभ्यां प्राणखाभ्यां विशेषितं नाम । तथा च सर्वप्राणयितृनिरतिशयसुखरूपं ब्रह्म इति उपास्यमिति यावत् ।।

**।। इति दशमखण्डभाष्यम् ।।**

## एकादशः खण्डः

### [गार्हपत्याग्निना स्वविद्यारूपाग्निविद्योपदेशः]

**अथ हैनं गार्हपत्योऽनुशशास - 'पृथिव्यग्निरन्नमादित्यः' इति । 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि ; स एवाहमस्मी'ति ।। १ ।।**

**प्र.** - एवं ब्रह्म उपदिश्य अग्निभिः एतद्विद्याङ्गभूता अग्निविद्यापि उपदिष्टा इत्याह - **अथ......शशास** । जगत्प्राणयितृ अपरिच्छिन्नसुखरूपं च ब्रह्म इत्युपदिश्य, एवम् उपदिष्टब्रह्मविद्यम् **एनं** - उपकोसलं गार्हपत्योऽग्निः स्वविद्यां वक्ष्यमाणाम् उपदिदेश

इत्यर्थः । **अथ**शब्दश्च प्रकृतविषयत्वद्योतनार्थः । अत्र च अथैनम् इति शब्दाभ्यां वक्ष्यमाणाग्निविद्यायाः प्रकृतब्रह्मविद्याङ्गत्वम् उच्यते । अनुशासनप्रकारमेवाह - **पृथिवी** इति । मे गार्हपत्याग्नेः एताः चतस्रः तनवः इत्यर्थः । **यः** इति । पृथिव्यग्न्यन्नादित्यलक्षणानां चतुर्णां रूपाणां मध्ये अग्न्यादित्यरूपयोः पक्तृत्वप्रकाशकत्वरूपधर्मसम्बन्धात् ऐक्यम् । अग्नेः आदित्येन यादृशमैक्यम्, न तादृशमैक्यं पृथिव्यन्नाभ्याम् । तस्मात् आदित्य एव अहमस्मि इति अग्निः उवाच इत्यर्थः ।।

**आ.भा.** - यथोक्तप्रकारेण अग्निभिः ब्रह्मोपदेशं कृत्वा ब्रह्मविद्याया अङ्गभूता विद्यापि उपदेष्टव्या इत्याशयेन अग्निविद्या उपदिश्यते । **अथ हैनम्** इत्यादि । **अथ** - अनन्तरं जगत्प्राणयितृ-अपरिच्छिन्नसुखात्मकब्रह्मोपदेशानन्तरं समुपदिष्टब्रह्मविद्यम् **एनम्** - उपकोसलम् **गार्हपत्यः** - तन्नामकोऽग्निः अग्निविद्यां वक्ष्यमाणाम् **अनुशशास** - समुपदिष्टवान् । अथशब्दः प्रकृतविषयतां दर्शयति तस्मात् अथशब्द एनमिति च पदम् अग्निविद्यायाः ब्रह्मविद्याङ्गत्वं **सूचयतः** । अतो अङ्गिनः उपदेशानन्तरम् अङ्गोपदेशः आवश्यकः इव भवति इति अङ्गभूताम् अग्निविद्यामाह । उपदेशप्रकारं दर्शयति **पृथिव्यग्निरन्नमादित्यः** इति । हे उपकोसल! **पृथिवी** इयं परिदृश्यमाना, **अग्निः** आहवनीयादिकः सर्वः, **अन्नम्** अदनीयं सर्वं व्रीहियवादिकम्, **आदित्यः** सूर्यः सर्वेषां पाचकः इत्येताः चतस्रः गार्हपत्यस्य अग्नेः चतस्रः तनवः इति । **आदित्ये** - आदित्यमण्डले **य एषः पुरुषः** - पुरुषविधः **दृश्यते** - संमुपलभ्यते **सः** - पुरुषः **अहमस्मि** - स एवाहमस्मि, न ततो भिन्नोऽहमस्मि । गार्हपत्यस्य अग्नेः चत्वारि पृथिव्यादीनि रूपाणि । तेषां चतुर्णां रूपाणां मध्ये अग्न्यादित्ययोः पक्तृत्वप्रकाशकत्वरूपसाधर्म्यात् यादृशम् ऐक्यं विद्यते न तादृशम् एकत्वम् अन्नपृथिवीभ्यां सह । अन्ने पृथिव्यां च पाचकत्वप्रकाशकत्वयोः अभावात् ।

ननु तर्हि अग्नितनुत्वं कथं तयोः इति न शंकनीयम् व्यापकधर्मवत्वं द्रव्यत्वप्रमेयत्वादिकम् आदाय कथंचित् तनुत्वसम्भवात् । ततश्च अग्नेः आदित्येन सह यादृशम् एकत्वं विद्यते न तादृशम् एकत्वम् अन्नपृथिवीभ्यां सह इति । अतः आदित्यः एव अहमस्मि । न तु पृथिवी अहम् अन्नोऽहम् इति कथयति अग्निः इति ।।

**सु.** - तत्र प्रथमम् एनं **गार्हपत्योऽग्निः अनुशशास** । ममैव एताः विभूतयः **पृथिव्यग्निरन्नमादित्य इति** । तेषु च यः **आदित्ये पुरुषो**ऽहमस्मि, स **एवाहमस्मि** -

पृथिव्यादेरिव न अन्तरम् एतेन मम, अत्यन्तम् अभिन्न एवास्मि तेन इति भावः । तेजोभूयस्तया साम्यात् तथोक्तिः । इदमत्र बोध्यम् । यद्यपि पृथिव्यादयो न गार्हपत्यादेः विभूतयः । अथापि आध्यानशेषोऽयम् उपदेशः ।।

[गार्हपत्याग्नेः उपासनाफलम्]

**स य एतमेवं विद्वानुपास्ते अपहते पापकृत्यां ; लोकीभवति ; सर्वमायुरेति ; ज्योग् जीवति ; नास्यावरपुरुषाः क्षीयन्ते । उपवयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ।। २ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र. - स - क्षीयन्ते ।** एतदुपासकः ब्रह्मप्राप्तिविरोधि पापकर्म अपहन्ति । **लोकीभवति -** तद्विरोधिनि [1]पाप्मनि[1] निरस्ते ब्रह्मलोकं प्राप्नोति इत्यर्थः । यद्यपि ब्रह्मप्राप्तिविरोधिपापनिवृत्तेः ब्रह्मप्राप्तेश्च प्रधानभूतब्रह्मविद्याफलत्वमेव तथापि अङ्गिफलेन अङ्गं स्तूयते इति द्रष्टव्यम् । यद्वा पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापपरः । लोकशब्दो ब्रह्मलोकप्राप्तिमार्ग-भूताग्निलोकपरो द्रष्टव्यः । **सर्वमायुरेति ।** ब्रह्मोपासनसमाप्तेः यावत् आयुः अपेक्षितम् ; तत् सर्वमेति । **ज्याग् जीवति ।** व्याध्यादिभिः अनुपहतो यावत् ब्रह्मप्राप्तिः उज्ज्वलो जीवति । **नास्यावरपुरुषाः क्षीयन्ते । अस्य -** अवरपुरुषाः शिष्यप्रशिष्यादयः, पुत्रपौत्रादयोऽपि न क्षीयन्ते । ब्रह्मविदः एव भवन्ति इत्यर्थः । सन्ततौ ब्रह्मविद्यानुवृत्तेः, 'नास्याब्रह्मवित् कुले भवति' (मुं.उ.३-२-९) इति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रवणात् । **उप......उपास्ते ।** य एवम् उपास्ते, तम् अस्मिंश्च लोके अमुष्मिंश्च लोके **वयं -** अग्नयः **उपभुञ्जामः -** यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयामः इत्यर्थः । एवम् उत्तरत्रापि द्रष्टव्यम् ।।

**आ.भा. -** सः यः **विद्वान् -** उपासकः **एतम् -** अग्निम् **एवं -** यथोक्तप्रकारेण **उपास्ते -** उपासनं करोति सः **अपहते पापकृत्याम् -** ब्रह्मप्राप्तिप्रतिबन्धकपापं **कर्मापहन्ति** विनाशयति । अग्निविद्योपासकः अग्निविद्याप्रभावेण ब्रह्मप्राप्तिप्रतिबन्धकपापं कर्म विनाश्य प्रतिबन्धकरहितो ब्रह्मप्राप्तो भवति इति भावः । **लोकीभवति -** अग्नेः उपासकः ब्रह्मलोकप्राप्तिप्रतिबन्धकदुरितविनाशात् निष्प्रत्यूहं ब्रह्मलोकप्राप्तिमान् भवति इति भावः ।

1. पापे - क,ख ।

यद्यपि ब्रह्मलोकप्राप्तिः ब्रह्मविद्याफलमेव, ब्रह्मविद्यया एव तत्प्राप्तिसम्भवात् । दुरितप्रतिबन्धक-निवृत्तिरपि ब्रह्मविद्याप्रभावादेव । दुरितनिवृत्तिम् अन्तरेण ब्रह्मलोकप्राप्तेः असम्भवात् । यथा चक्षुषा जायमानं घटज्ञानं घटचक्षुःसंयोगमन्तरेण असम्भाव्यमानं सत् संयोगं व्यापाररूपेण अपेक्षते तथैव दुरितनिवृत्तिरपि द्वारभूता इति तत्सिद्धिरपि ब्रह्मविद्यया एव आक्षिप्ता भवति इति तदर्थम् अङ्गविद्या निरर्थिका एवेति । तथापि अङ्गिफलेन अङ्गस्तुतेः सम्भवादिति । अथवा अपहते पापकृत्याम् इत्यत्र पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकदुरितपरकः। **लोकीभवति** इत्यत्र लोकशब्दश्च ब्रह्मलोकप्राप्तिमार्गलक्षणाग्निलोकपरकश्च द्रष्टव्यः । यद्यपि अग्निलोकः अर्चिरादिमार्गे प्रथमो भवति । स चायं लोको ब्रह्मविद्यया एव स्यात् । ततश्च अग्निविद्या निरर्थका एवेति तथापि 'उपवयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' इत्यादि फलदर्शनात् । यस्य एतस्मिन् जन्मनि ब्रह्मविद्या न जाता स यदि अग्निविद्याम् उपास्ते तदा अग्नयः ब्रह्मप्राप्तिप्रति-बन्धकपापविनाशद्वारेण अग्निलोकं प्रापयित्वा स्वलोके ब्रह्मविद्याप्राप्त्युपयोगि रक्षणादिकं कुर्वन्ति इति । **सर्वमायुरेति** । यावता आयुषा ब्रह्मोपासनाय समाप्तिः भवति तत् सर्वमायुः प्राप्नोति इत्यर्थः । **ज्योग्जीवति** । व्याध्यादिभिः अदूयमानो यावद्ब्रह्मप्राप्तिम् सम्यगुज्ज्वलो जीवति इत्यर्थः । **नास्यावरपुरुषा क्षीयन्ते** इति । **अस्य** - गार्हपत्याग्न्युपासकस्य अग्निविद्याप्रभावात् तदग्नेः **अवरपुरुषाः** - पुत्रपौत्रशिष्यप्रशिष्यादिकनिष्ठाः **न क्षीयन्ते** - न मृताः भवन्ति । पितरि जीवति पुत्रादेः, ज्येष्ठे जीवति कनिष्ठस्य मरणं न भवति इत्यर्थः । यद्वा **न क्षीयन्ते** न म्रियन्ते अपि तु सर्वे एव ब्रह्मविदो भवन्ति 'न तस्य प्राणाः समुत्क्रामन्ति इहैव समवलीयन्ते' (बृ.उ.६-४-६) इति श्रुत्यन्तरात् । यः एतमेव विद्वान् गार्हपत्याग्निम् **उपास्ते** - तदुपासनं करोति हे उपकोसल ! **तम्** - अग्निविद्योपासकं **वयम्** - अग्नयः **अस्मिन्** - मर्त्यलोके **अमुष्मिन्** - परलोके च **भुञ्जामः** - पालयामः । ब्रह्मप्राप्तिपर्यन्तं विघ्नादिना सततमेव तद्रक्षणं कुर्मः यावता ब्रह्मप्राप्तौ तस्य कश्चित् प्रतिबन्धको न भवति इति । एवं प्रकारेण अग्नयः उपकोसलाय प्रीताः सन्तः प्रोचुः इति ।।

**सु.** - यः **एतम्** - गार्हपत्याग्निम् **एवं** - जानन् पृथिव्यादिविभूतिकतया आदित्यात्मना च उपास्ते स विद्याविरोधिपापम् **अपहते** - हन्ति । पापेन विमुक्तो भवति इति यावत् । आनुषङ्गिकं फलमाह - **लोकीभवति** इत्यादिना । **लोकीभवति** - लोक्यते इति लोकः । अभिलषितं पुत्रपश्वन्नादिलक्षणं फलं तदस्य भवति । **सर्वमायुः**

कृत्स्नं पुरुषस्यायुः **एति** । नास्य अग्निविद्यानिष्ठस्य कुले **अवराः पुरुषाः** - पुत्रपौत्रादयः क्षीयन्ते, शिष्यप्रशिष्यादयो वा । **य एतमेवं विद्वानुपास्ते** वयमेतम् **अस्मिंश्चलोके अमुष्मिंश्च** लोके **उपभुञ्जामः** - पालयामः । लोकद्वयेऽपि अस्य सुखं वयं साधयामः इति यावत् ।।

**।। इति एकादशखण्डभाष्यम् ।।**

## द्वादशः खण्डः

[अन्वाहार्यपचनाग्निविद्या]

**अथ हैनमन्वाहार्यपचनोऽनुशशास - 'आपो दिशो नक्षत्राणि' चन्द्रमा इति । 'य एष चन्द्रमसि पुरुषो दृश्यते, सोऽहमस्मि, स एवाहमस्मीति ।। १ ।।**

**प्र. - अथ......अनुशशास । अन्वाहार्यपचनः** - दक्षिणाग्निः । **आपो दिशो नक्षत्राणि चन्द्रमा इति** मे रूपाणि इत्यर्थः । **य......अस्मीति** । चन्द्रस्य अग्नेश्च प्रकाशकत्वसाम्यात् इति भावः ।।

**आ.भा.** - गार्हपत्याग्नेः अनुशासनानन्तरं दाक्षिणाग्नेः अनुशासनप्रकारं दर्शयितुमाह - **अथ हैनम्** इत्यादि । **अथ** - गार्हपत्याग्नेः अनुशासनानन्तरम् **एनम्** - उपकोसलं श्रद्धातपोभ्यां युक्तम् ह **अन्वाहार्यपचनः** - दक्षिणाग्निः **अनुशशास** - उपदिष्टवान्, वक्ष्यमाणप्रकारेण । किम् अनुशासनं कृतवान् तत्राह - **आपो दिशो नक्षत्राणि चन्द्रमा इति** - हे उपकोसल ! **आपो** - जलानि, **दिशः** - काष्ठाः, **नक्षत्राणि चन्द्रमाश्चेति** ममैव रूपाणि भवन्ति इति । अस्मिन् **चन्द्रमसि** यः **पुरुषः दृश्यते** पुरुषाकारः शिरःपाण्यादिलक्षणः उपलभ्यते सोऽहमेव **स एव अहमस्मीति** ।।

**सु. - अथ हैनमन्वाहार्यपचनः** - दक्षिणाग्निः अनुशशास, **आपा `दिशो** इत्यादि पूर्ववत् ।। १-२ ।।

[दाक्षिणाग्रेरुपासनाफलम्]

**स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम्, लोकी भवति, सर्वमायुरेति ज्योग् जीवति, नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ।। २ ।।**

**।। इति द्वादशः खण्डः ।।**

**प्र. - स य एतमेवं विद्वान्** इत्यादि । व्याख्यातम् ।।

**आ.भा. - स यः** - उपासकः **एतमेवं** - यथोक्तप्रकारेण **उपास्ते** - तदुपासनं करोति **अपहते पापकृत्याम्** इत्यादिकं सर्वं गार्हपत्याग्निप्रकरणवदेव व्याख्येयमिति ।।

**सु. - अथ हैनमन्वाहार्यपचनः** - दक्षिणाग्निः अनुशशास, **आपो दिशः** इत्यादि पूर्ववत् ।। १-२ ।।

।। इति द्वादशखण्डभाष्यम् ।।

## त्रयोदशः खण्डः

[आहवनीयाग्निना उपकोसलाय स्वविद्याग्निरूपोपदेशः]

**अथ हैनमाहवनीयोऽनुशशास - प्राण आकाशो द्यौर्विद्युदिति । य एष विद्युति पुरुषो दृश्यते ; सोऽहमस्मि, स एवाहमस्मीति ।। १ ।।**

**प्र. - अथ हैनमाहवनीयोऽनुशशास** इत्यादि । **प्राण आकाशो द्यौर्विद्युदिति ।** इत्येतानि मद्रूपाणि इत्यर्थः । **य एषः......अहमस्मीति ।** विद्युत्पुरुषस्यापि प्रकाशकत्वात् आहवनीयैक्यं द्रष्टव्यम् ।।

**आ.भा.** - दाक्षिणाग्नेः अनुशासनानन्तरम् आहवनीयाग्नेः अनुशासनं दर्शयितुमाह - **अथ हैनम्** इत्यादि । **अथ** - दक्षिणाग्नेः अनुशासनानन्तरम् **आहवनीयः** अग्निः **एनम्** - उपकोसलम् विद्याप्रार्थिनम् **अनुशशास** - अनुशासनम् उपदेशं कृतवान् । अनुशासनप्रकारमेव दर्शयति **प्राणः** इत्यादि । **प्राण आकाशो द्यौर्विद्युदिति ।** हे उपकोसल ! प्राणादयः चत्वारो ममैव शरीरभूताः इत्यर्थः । **विद्युति य एषः पुरुषः** - पुरुषाकारः दृश्यते **सोऽहमस्मि स एवाहमस्मीति ।** विद्युत्पुरुषस्य प्रकाशकत्वम् आहवनीयोऽपि प्रकाशकः इति प्रकाशकत्वसाधर्म्यात् आहवनीयेन सह ऐक्यं भवति । अन्यत् सर्वं पूर्ववदेव ज्ञातव्यम् ।।

**सु.** - व्याख्यातप्रायम् ।।

[आहवनीयाग्न्युपासनाफलम्]

**स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम् लोकी भवति, सर्वमायुरेति, ज्योग्जीवति, नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ।। २ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**प्र. - स य एतमेवं विद्वान् -** इत्यादि । पूर्ववत् ।।

**आ.भा. -** व्याख्यातप्रायम् ।।

**सु. -** व्याख्यातप्रायम् ।।

**।। इति त्रयोदशखण्डभाष्यम् ।।**

## चतुर्दशः खण्डः

[अग्नीनामुपकोसलं प्रति वचनम्]

**ते होचुः - उपकोसल ! एषा सोम्य ! तेऽस्मद्विद्या चात्मविद्या च । आचार्यस्तु ते गतिं वक्तेति ।। आजगाम हास्याचार्यः । तमाचार्योऽभ्युवाद, उपकोसला ३ इति ।। १ ।।**

**प्र. - ते होचुः......वक्तेति ।** प्रत्येकम् अनुशासनानन्तरं मिलित्वा **ते अग्नयः** अब्रुवन् **अस्मद्विद्या -** अग्निविद्या । **आत्मविद्या -** परमात्मविद्या इत्यर्थः । **च**शब्दः अङ्गाङ्गीभूत-विद्ययोः उपदेशक्रियायां समुच्चयद्योतनार्थः, न तु समप्राधान्यद्योतनार्थः । अग्निविद्या च आत्मविद्या च उपदिष्टा इत्यर्थः । **आचार्यस्तु ते गतिं वक्तेति ।** एवं वदताम् अग्नीनाम् अयमभिप्रायः - **हे उपकोसल !** ब्रह्मविद्याम् अनुपदिश्य प्रोषुषि गुरौ तदलाभात् अनाश्वासं त्वाम् उज्जीवयितुं ब्रह्मस्वरूपमात्रं तदङ्गभूताम् अग्निविद्याञ्च उपादिक्षाम । आचार्याद्धैव विदितायाः विद्यायाः साधिष्ठत्वात् आचार्य एव संयद्वामत्वादिगुणकं ब्रह्म, अक्षिरूपं च तदुपासनस्थानम्, अर्चिरादिकाञ्च गतिम् उपदिशतु इति । ततश्च गतिं वक्ता इत्यस्य अवशिष्टं वक्ता इत्यर्थः । न तु गतिमात्रम् इति द्रष्टव्यम् ।। **आजगाम...... इति ।** स्पष्टोऽर्थः ।।

**आ.भा.** - प्रत्येकस्य गार्हपत्यादेः उपदेशानन्तरम् **ते** - गार्हपत्यादयः मिलित्वाह **ऊचुः** - उक्तवन्तः । किमुक्तवन्तः तत्राह - **एषा** इत्यादि । हे **उपकोसल !** सोम्य ! **ते** - तुभ्यम् कथिता या विद्या एषा **अस्मद्विद्या** च - अग्निविद्या च **आत्मविद्या** - परमात्मविद्या च । अत्र चशब्दो विद्याद्वयस्य अङ्गाङ्गीभूतस्य या उपदेशक्रिया तस्यां समुच्चयं प्रतिपादयति ।। ततश्च अग्निविद्या परमात्मविद्या च उपदिष्टा अस्माभिः इत्यर्थः । **आचार्यस्तु ते गतिं वक्तेति** । हे **उपकोसल !** तव गुरुः त्वां ब्रह्मविद्यार्थिनं ब्रह्मोपदेशम् अकृत्वा देशान्तरं गतवान् प्रोषिते च गुरौ त्वम् अतीव खिन्नो जातः इति त्वाम् आश्वासयितुं ब्रह्मणः स्वरूपमात्रं तदङ्गभूताम् अग्निविद्यां च उपदिशामः आचार्यात् प्राप्ता एव विद्या साधीयसी भवति इति कृत्वा आचार्यः एव संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानम् अक्षिरूपम् अर्चिरादिकां गतिं च उपदिशतु वयं केवलम् अग्निविद्याया एव उपदेष्टारः । अवशिष्टं सर्वं स एव आचार्यो वक्ष्यति । न केवलं गतिमात्रम् इति भावः । **आजगाम हास्याचार्यः** इति । एवंप्रकारेण अग्निभिः वार्तालापं कुर्वतः उपकोसलस्य आचार्यो जाबालः सत्यकामः देशान्तरात् **आजगाम** - आगतवान् । आगत्य च आचार्यः तम् उपकोसलं शिष्यं प्रति **अभ्युवाद** - प्रोवाच हे **उपकोसला३ इति** ।।

**सु.** - अथ मिलित्वा ते होचुः **हे उपकोसल !** सोम्य ! **एषा** उपदिष्टा **अस्मद्विद्या आत्मविद्या च** - आत्मनः सर्वान्तरात्मनः परस्य विद्या । उपदेष्टव्यम् अखिलम् उपदिष्टम्, आचार्यस्तु ते **गतिं** - मार्गम् ; अवशिष्टम् अखिलमिति यावत्, **वक्ता** - वक्ष्यति। आचार्याद्धैव विद्या विदिता श्रेयसे । अस्माभिः अभिभूयमानम् अनशनेन क्षीयमाणम् आश्वासयितुम् इदं किञ्चिदुपदिष्टम् इति । अथ एवमुपदिश्य तिरोभूतेषु अग्निषु आजगाम आचार्यः । आगत्यैव तम् उपकोसलम् आमन्त्रितवान् **उपकोसला३** इति ।।

**भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं भाति । को नु त्वाऽनुशशासेति । को नु माऽनुशिष्याद्भो इतीहापेव निह्नुते, इमे नूनमीदृशा अन्यादृशा इति हाग्नीनभ्यूदे । किं नु सोम्य किल तेऽवोचन्निति ।। २ ।।**

**प्र.** - **भगव इति ह प्रतिशुश्राव** इत्यादि । **ब्रह्मविदः इव सोम्य ते मुखं भाति कोनु त्वाऽनुशशासेति** । गुरुणा एवमुक्तः उपकोसल आह - **कोऽनु माऽनुशिष्याद्भो इति** । हे भगवन् ! त्वयि प्रोषिते इह मां को अनुशिष्यात् ? इत्यर्थः । **हापेव निह्नुते** - ह इति भेदे ।

अपनिह्नुते इव इत्यर्थः । **नापनिह्नुते** - न यथावत् अग्निभिः उक्तमित्यपि ब्रवीति इत्यभिप्रायः । कञ्चित्कालम् अपह्नुत्य, अथाग्नीन् निर्दिश्य इमे एव नूनम् उपदिष्टवन्तः इत्याह - **इमे......अभ्यूदे[1]** । ये इदानीम् ईदृशाः ज्वलनाकारतया परिदृश्यमानाः, एते एव अग्नयः पूर्वम् अन्याकाराः सन्तः मम उपदिष्टवन्तः इत्युक्तवान् इत्यर्थः । आचार्यः आह - **किं नु सोम्य ! किल तेऽवोचन्निति ।।**

**आ.भा. - हे भगवः !** - भगवन् इत्येवंक्रमेण **प्रतिशुश्राव** - प्रतिवचनम् उवाच । ततो गुरुराह - हे **सोम्य !** उपकोसल ! **ते** - तव मुखं **ब्रह्मविदिव** - ब्रह्मज्ञानीव **भाति** - लक्ष्यते । **कोऽनुत्वानुशशासेति** इति । **त्वां** - उपकोसलं **कः** उपदेष्टा **अनुशशास** - उपदेशं कृतवान् ? इति पप्रच्छ आचार्य इति । आचार्येण एवमुक्तः उपकोसलः प्राह - **को नु मानुशिष्यात्** इत्यादि । हे आचार्य ! भगवति प्रोषिते अत्र किल भवन्तं विहाय कः अनुशिष्यादिति **अपेव निह्नुते** - अपनिह्नुते इव इत्यर्थः । **नापनिह्नुते** न यथावत् अग्निभिः कथितम् इत्यपि ब्रवीति इत्यभिप्रायः । ततः अग्नीन् निर्दिश्य इमे अग्नयः **नूनं** - निश्चितम् इदानीम् ईदृशाः ज्वलनाकारतया परिदृश्यमाना एते एव अग्नयः पूर्वम् अन्यादृशा अन्याकाराः सन्तः माम् उपदिष्टवन्तः इति एवं ह उपकोसलः अग्नीन् निर्दिश्य **अभ्यूदे** - उक्तवान् इति । ततः आचार्यः प्राह, हे सोम्य ! तेऽग्नयः **किमवोचन्** - किमुक्तवन्तः तत्कथय इति ।।

**सु. -** स च सपदि भगवन् ! **इति प्रतिशुश्राव** । अस्य आलक्ष्य आकारम् आचार्यः उवाच **ब्रह्मविद इव सोम्य ते मुखं भाति, को नु त्वाम् अनुशशासेति** । एवं पृष्टः शिष्यः आह - को नु मां भवतः शिष्यम् अनुशिष्यात् ऋते भवन्तम् ? **इतीहापेवनिह्नुते** - इत्यनेन वचनेन लब्धम् अनुशासनम् अपह्नुते इव, नापलपति सर्वथा, नापि व्यक्तं कथयति । अतः उच्यते अपनिह्नुते इवेति । अथ भीतः सपदि पुरो विद्यमानान् अग्नीन् निर्दिशन् **अभ्यूदे** - आह । **इमे नूनमीदृशाः अन्यादृशाः इति** - अद्य केवलं ज्वालारूपाः दृश्यन्ते । तदानीं तु अन्यादृशाः एव देवाकाराः अभवन् । नाहम् अन्यस्य पार्श्वम् अभ्यगाम् एते एव अग्नयः देवाः भूत्वा उपादिशन् इति भावः । उपादिशन् इति कण्ठरवेण न निर्दिशति, परमन्यादृशा इति एतावता एव निर्देशेन व्यञ्जयति नाम उपदेशम् । तेन अस्य आचार्यतो भीतिः व्यज्यते । तस्य भयम् अपनुदन् **सोम्य** इति सम्बोधयन् अपृच्छत् - **किन्नु किल तेऽवोचन्निति ।।**

---

१. अभ्यूदे - अभिमुखीकरणेन उक्तवान् इत्यर्थः । *भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः* (पा.सू.१-१-४७) इति सूत्रेण आत्मनेपदम् ।।

**इदमिति ह प्रतिजज्ञे । लोकान् वाव किल सोम्य ! तेऽवोचन् । अहं तु ते तद्वक्ष्यामि, यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै होवाच ।। ३ ।।**

**।। इति चतुर्दशः खण्डः ।।**

**प्र.** - इतर आह - **इदमिति ह प्रतिजज्ञे** । एतावत् उपदिष्टम् इति प्रतिज्ञातवान् । इतरः आह - **लोकान् - इति । हे** सोम्य ! **ते** - अग्नयः पृथिव्यादीन् लोकानेव कात्स्न्र्येन तव उक्तवन्तः । अङ्गभूताम् अग्निविद्यां कात्स्न्र्येन उक्तवन्तः इत्यर्थः । न तु ज्ञातव्यं ब्रह्म कात्स्न्र्येन । अहं तु ते पद्मपत्रजलाश्लेषतुल्यसर्वपापाश्लेषापादकविद्याविषयभूतं ब्रह्म वक्ष्यामि, यदि शुश्रूषसे इत्यर्थः । पापाश्लेषो नाम पापहेतुभूतकर्माचरणेऽपि पापोत्पत्ति-प्रतिबन्धकशक्तिमत्त्वम् । इदञ्च प्रामादिकपापविषयम् । पापशब्दश्च सुकृतदुष्कृतसाधारणः । एतच्च तत्रतत्र उक्तं तत्रैव अनुसन्धेयम् । इतर आह - **ब्रवीतु मे भगवानिति । तस्मै होवाच । तस्मै** - एवम् उपसन्नाय उपकोसलाय आचार्यो वक्ष्यमाणम् आह इत्यर्थः ।।

**आ.भा.** - इतरः प्राह - **इदमिति ह प्रतिजज्ञे** । एतावत् उपदिष्टम् अग्निभिः इति **प्रतिजज्ञे** - प्रतिज्ञातवान् इति । पुनः गुरुराह - **लोकान्** इत्यादि । हे **सोम्य !** उपकोसल ! ते अग्नयः लोकान् - पृथिव्यादीन् लोकानेव **अवोचन्** - ब्रह्मविद्याङ्गभूताम् अग्निविद्याम् एव केवलम् उक्तवन्तः, ननु । यत् ज्ञातव्यं सकलकारणं ब्रह्म तदुपदेशं न कृतवन्तः । **अहं तु ते** - तुभ्यं **तद्** ज्ञातव्यं यद् चराचरशरीरकं कारणकारणं यद्विज्ञातेन सर्वं विदितं भवति तद् ब्रह्म साकल्येन तुभ्यं **वक्ष्यामि** - कथयामि यदि त्वं श्रोतुमिच्छसि तदा । इति कथयित्वा यदुपदेष्टव्यं तत् कथयति हे सोम्य ! **यथा पुष्करपलाशः** - कमलपत्रं **आपो न श्लिष्यन्ते** - जललेपेनापि **लिप्तं** न भवति । **एवमेव एवंविदि** - ब्रह्मज्ञानिनि **पापं कर्म** - दुरितं सुकृतं च **न श्लिष्यते** पापकर्मणा तस्य संश्लेषो न भवति इत्यर्थः । अत्र पापाश्लेषो नाम पापकारणीभूतनिषिद्धकर्मानुष्ठानेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिमत्वमेव । प्रकृते पापशब्दः सुकृतदुष्कृतोभयसाधारणः निषिद्धकर्मवर्मशर्मणामपि ब्रह्मज्ञानप्रतिबन्धकत्वाविशेषात् इति । शिष्यः प्राह **मे** - मह्यं भगवान् ज्ञातव्यं यद् ब्रह्म तद् ब्रवीतु ब्रह्मोपदेशं कुरु इत्यभिप्रायः । **तस्मै होवाच** । एवं श्रद्धाविनयावनताय उपकोसलाय गुरुः वक्ष्यमाणोपदेशं प्राह ।।

**सु.** - अथ शिष्यः प्रतिजज्ञे इदमेव उपदिष्टम् एभिः इति । अथ आचार्यः आह - **लोकान् वाव किल सोम्य तेऽवोचन्** । पृथिव्यादीन् लोकानेव विशेषतः ते अकथयन् ब्रह्मस्वरूपं तु न सम्यग्विवृतम् । लोकाः एव अग्निविद्यासम्बन्धिनो विवृताः । अहं तु ते **तद्वक्ष्यामि** - प्रवक्ष्यामि यत् विशेषतः ते जिज्ञासितम् । **एवंविदि** - वक्ष्यमाणप्रकारेण यस्तद्वेत्ति तस्मिन् **यथा पुष्करपलाशे आपो न श्लिष्यन्ते** तथा **पापं कर्म न श्लिष्यते** - पद्मपत्रे इव पाथः प्रसक्तमपि **पापं न श्लिष्यते** - तेन असौ नानुलिप्यते इति यावत्; प्रसक्तमपि कर्म विद्याबलात् अकार्यकरं भवति विदुषि इति भावः । अत्र पापम् इत्यनेन पुण्यस्यापि सङ्ग्रहः । उभयोः बन्धकत्वाविशेषात् । तच्च प्रमादतो ब्रह्मविद्यापि स्यान्नाम । सोत्साहम् आह शिष्यः **ब्रवीतु भगवान्** इति । **तस्मै होवाच** ।।

## पञ्चदशः खण्डः

### [अक्षिपुरुषविद्या - अक्षिपुरुषोपासना]

**य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच; एतदमृतमभयम् एतत् ब्रह्मेति । तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी[1]ह्येव[1] गच्छति ।। १ ।।**

**प्र.** - **य एषोऽक्षिणि......ब्रह्मेति** । योगिभिः **योऽक्ष्यन्तर्वर्ती पुरुषो दृश्यते,** [2]अयमात्मा[2] - नियन्ता इत्यर्थः । **अमृतत्वं** - निरतिशयभोग्यत्वं **अभयत्वं** - दुःखासंभिन्नत्वम् । **ब्रह्मत्वं** - निरतिशयबृहत्वम् । **तद् - गच्छति** । **तत्** - तस्मात् निर्लेपस्थानिप्रभावात्, **अस्मिन्** - अक्षिणि **यद्यपि सर्पिर्वा उदकं वा** कश्चित् सिञ्चेत्, तत् **वर्त्मनी** - तत्पार्श्वद्वयमेव **हि गच्छति** । न तत् तत्र लिप्यते ।।

**आ.भा.** - उपकोसलाय आचार्यः किमुक्तवान् तत्र तदीयोपदेशप्रकारमेव दर्शयितुमाह - **य एषोऽक्षिणि** इत्यादि । **अक्षिणि** - नेत्रे **एषः** - पुरुषः बिंबरूपो दृश्यते । ब्रह्मचर्यादिसाधनसम्पन्नेन योगिना एषः अयमेव **आत्मा** - सर्वेषां नियन्ता परमेश्वरः इत्येवं क्रमेण आचार्यः **प्रोवाच** - उक्तवान् । **एतदमृतम्** - एष एव आत्मा **अमृतम्** । तत्र अमृतत्वं निरतिशयभोग्यत्वलक्षणमेव । **अभयं** - सर्वप्रकारकभयरहितम् । तत्र अभयत्वं नाम दुःखासम्भिन्नत्वलक्षणम् । एतत् वर्ण्यमानम् **एतद् ब्रह्म** - अग्निभिः उपदिष्टं यद् ब्रह्म

---

1. एव - इति शाङ्कर तथा माध्वसम्मतः पाठः । 2. अयमेवात्मा - क,ख ।

तदेवंभूतम् ब्रह्मत्वं निरतिशयबृहत्वात्मकम् । **तत्** - तस्मात् कारणात् लेपरहितस्थानिपरमात्मप्रभावात् अस्मिन् **अक्षिणि** - नेत्रे यद्यपि **सर्पिर्वा** - घृतादिकं वा **उदकं** जलं वा कश्चित् **सिञ्चति** - निक्षिपति तत् निक्षिप्यमाणं जलं घृतं वा वर्त्मनी नेत्रस्य पार्श्वद्वयमेव **गच्छति** न तु नेत्रे लिप्तं भवति । नेत्रे वर्तमानपरमात्मप्रभावात् जलादिकं तत्र सक्तं न भवति, किन्तु नेत्रात् बहिरेव यातीति भावः ।।

**सु.** - यदवोचन् अग्नयः प्राणो ब्रह्म खं ब्रह्म कं ब्रह्मेति विशेषतः तदवगमयामि त्वाम् **य एषोऽक्षिणि पुरुषो दृश्यते** - निगृहीतबाह्यवृत्तिभिः मुनिभिः आभ्यन्तरया दृष्ट्या स्वचक्षुष्येव दृश्यते **कश्चित्** - पुरुषविशेषः । **आत्मा चैषः** - सन्निहितो नाम चक्षुष्यपि असौ आत्मतया, यः चक्षुषि तिष्ठन् 'चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयति' (बृ.उ. ५-७-२२) इति हि श्रूयते ; तदयं सर्वस्य अन्तरात्मा सर्वेश्वरः । **एतदमृतम्** - अविनाशि, अत एव **अभयम्** - निर्भयं स्थानम्, यदुपगतानाम् अपुनरावृत्त्या न भयप्रसङ्गः । यद्वा - **एतदेवामृतम्** - निरतिशयभोग्यम् अपरिच्छिन्नसुखरूपत्वात् ; **एतदेव चाभयम्** - अनपायप्राणरूपतया । भयं हि प्राणसंयोगवियोगलक्षणजन्ममरणतः । अनपायप्राणलाभे च अकुतोभयः सम्पद्यते । एतद्ब्रह्म - सर्वतो बृहत् । अथ स्तुवन् इमं पुरुषं स्थानं स्तौति - **यद्यपि** इत्यादिना । **सर्पिः** - घृतम्, **उदकं वा सिञ्चति, तत् वर्त्मनी ह्येव गच्छति** - चक्षुषो वर्त्मनी उत्तराधरौ पक्ष्मौ अभिगच्छति । पक्ष्मौ अभिलिप्येते न चक्षुरिति यावत् । तदेवम् अलेपस्थाने तिष्ठतः तस्य अलेपतायां किमु वक्तव्यम् । यश्चैनम् उपास्ते तस्मिन् पापं कर्म न श्लिष्यते इत्यत्र किमु वक्तव्यम् इति भावः ।।

**[अक्षिपुरुषः संयद्वामः]**

**एतँ संयद्वाम इत्याचक्षते । एतँ हि सर्वाणि वामान्यभिसंयन्ति । सर्वाण्येनं वामान्यभिसंयन्ति, य एवं वेद ।। २ ।।**

**प्र. - एतं......आचक्षते । संयन्ति** - सङ्गतानि **वामानि** - वननीयानि प्रार्थनीयानि यस्मिन् सः संयद्वामः । सर्वकल्याणगुणाश्रयत्वं सत्यसङ्कल्पत्वं वा संयद्वामत्वम् । **सर्वाण्येनं......वेद** । तदुपासकस्यापि तत्क्रतुन्यायात् तद्भवति इत्यर्थः ।।

**आ.भा.** - तम् **एतं** - परमात्मानं **संयद्वाम इत्याचक्षते । संयन्ति** - सङ्गतानि **वामानि** - वन्दनीयानि प्रार्थनीयानि यस्मिन् सः **संयद्वामः** । संयद्वामत्वं नाम सर्वकल्याणगुणाश्रयत्वम् सत्यसंकल्पत्वं वा । सः परमात्मा संयद्वाम इति कथ्यते अर्थात् सर्वकल्याणगुणानाम् आश्रयभूतः इत्यर्थः । न केवलं परमात्मैव सर्वकल्याणगुणानाम् आधारोऽपि तु तादृशपरमात्मोपासकस्यापि संयद्वामत्वादिकं भवति इति दर्शयति । **एतं हि सर्वाणि** इत्यादि । **एतम्** - एतादृशपरमात्मोपासकमपि सर्वाणि वामानि प्रार्थनीयानि वस्तूनि **अभिसंयन्ति** - अभिगच्छन्ति । **यः** - उपासकः **एवं** - क्रमेण एतादृशगुणविशिष्टं परमात्मानं **वेद** - जानाति समुपासनं करोति तस्यापि तत्फलं भवतीति भावः ।।

**सु.** - अथ **एतम्** - अक्षिपुरुषं गुणविशेषयोगेन उपास्यं विदधन्नाह - **एतं संयद्वाम इति आचक्षते** महर्षयः । कुतः ? **एतं** - ह्यक्षिपुरुषं **सर्वाणि वामानि** - स्पृहणीयानि शोभनानि अभिसंयन्ति । तदनेन कल्याणगुणयोगेन संयद्वाम इति आचक्षते । य एनमेवं संयद्वामत्वगुणकम् उपास्ते तमेनं सर्वाणि वामानि अभिसमायान्ति ।।

**एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । सर्वाणि वामानि नयति, य एवं वेद ।। ३ ।।**

**प्र.** - **एष उ......वेद । वामनीत्वं** स्वाश्रितेषु शोभनधीप्रापकत्वम् । [1]तत्क्रतुन्यायात्[1]तद्गुणोपासकस्यापि तद्भवति इत्यर्थः ।।

**आ.भा.** - **एष उ एव वामनीः** इत्यादि । **एषः** - अक्षिस्थानगतः परमात्मैव **वामनीः** - पुण्यफलप्रापयिता । यस्मात् कारणात् अयम् अक्षिस्थानाश्रितः परमात्मा स्वभक्तेभ्यः वामानि पुण्यानुरूपं पुण्यकर्मफलानि **नयति** - प्रापयति प्रयच्छति इत्यर्थः । तस्मात् कारणात् अयं वामनीः इति कथ्यते । स च वामनीः अयमेव न तु अन्यः इति । **एष** एव परमात्मा **सर्वाणि वामानि** - पुण्यानुरूपं पुण्यकर्मफलानि **नयति** - प्रापयति । तस्मादयं वामनीः । वामनीत्वगुणविशिष्टपरमात्मनः उपासनं यः करोति तस्यापि तदेव फलं भवति तद्दर्शयति - **सर्वाणि वामानि नयति, य एवं वेद** इति । **यः** - उपासकः

---

1. तत्क्रतुन्यायेन - क,ख ।

वामनीत्वगुणविशिष्टम् एनम् अक्षिस्थानगतपरमात्मानं **वेद** - उपासीत स उपासकोऽपि सर्वाणि वामानि **नयति** - प्रापयति । उपासकोऽपि वामनीत्वगुणविशिष्टो भवति इति भावः ।।

**सु.** - एष एव वामनीः, कुतः ? एष हि उपास्यमानः सर्वाणि वामानि **नयति** - प्रापयति उपासकान्, तदनेन वामप्रापकत्वगुणयोगेन वामनीश्च एषः भवति । एनमेवं वामनीत्वगुणकम् उपास्ते सोऽपि वामनीः भवति । उपास्यसधर्मा भवति ।।

**[अक्षिपुरुषः भामनीः]**

**एष उ एव भामनीः एष हि सर्वेषु लोकेषु भाति । सर्वेषु लोकेषु भाति, य एवं वेद ।। ४ ।।**

**प्र. - एष......वेद । भामनी**त्वं सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम् । उपासकस्यापि तद्भवति अपेक्षायाम् इत्यर्थः । अत्र, संयद्वामत्व-वामनीत्व-भामनीत्वेषु फलकथनं फलरूपतात्पर्यलिङ्गोपन्यासेन तेषु गुणेषु तात्पर्यप्रदर्शनार्थम् । न तु 'सर्पिर्वोदकं वा सिञ्चति' इत्यत्र इवार्थवादमात्रतया स्तुतिरूपत्वम्' इति प्रदर्शनार्थम् । 'सर्पिर्वा' इति वाक्यस्य स्तुतित्वं व्यासार्यैः उक्तम् ।।

**आ.भा. - एष उ एव भामनीः** इत्यादि । **एषः** - अक्षिस्थानगतः परमात्मैव **भामनीः** - सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तः । यस्मात् कारणात् सर्वलोकेषु आदित्यादिदीप्तिभिः **भाति** - दीप्यते,

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।" (क.उ.५-१५)

इति श्रुत्यन्तरात् । अतो भामानि नयतीति भामनीः । अतः भामनीत्वं नाम सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम् इति । भामनीत्वगुणविशिष्टपरमात्मोपासकस्य अपि तादृशभामनीत्वगुणयुक्तत्वं भवति इति दर्शयति - **सर्वेषु लोकेषु भाति य एवं वेद । यः** - उपासकः भामनीत्वगुणविशिष्टम् अक्षिस्थानगतं परमात्मानं **वेद** - विजानाति, समुपास्ते सः सर्वलोकेषु **भाति** - दीप्तिमद्विग्रहयुक्तो भवति इति भावः । अत्र खलु संयद्वामत्व-वामनीत्व-भामनीत्वगुणेषु फलप्रदर्शनम्, फललक्षणतात्पर्यलिङ्गोपन्यासेन संयद्वामत्वादिगुणेषु तात्पर्यप्रदर्शनार्थमेव, न तु 'सर्पिर्वा उदकं वा सिञ्चति' इत्येव अर्थवादमात्रतायाः तावकत्वमिति ।।

**सु. - एष एव भामनीः**, कुतः ? एष हि सर्वेषु लोकेषु असाधारणया भासा **भाति** - प्रकाशते, अप्रतिहतोऽस्य प्रकाशः इति यावत् । तदनेन गुणयोगेन भामनीश्च भवति । **य एनं** - भामनीत्वगुणयोगेन उपास्ते, स सर्वेषु लोकेषु भाति स्वासाधारणया भासा । अप्रतिहतोऽस्य प्रकाशः इति यावत् ।।

**[उपासकस्य अर्चिरादिमार्गेण ब्रह्मप्राप्तिः]**

**अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति, यदि च नार्चिषमेवाभिसम्भवन्ति, अर्चिषोऽहः, अह्नः आपूर्यमाणपक्षम्, आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाँस्तान्, मासेभ्यः संवत्सरम्, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्, तत्पुरुषो अमानवः ।। ५ ।।**

**स एनान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ।। ६ ।।**

**।। इति पञ्चदशः खण्डः ।।**

**प्र. - अथ......गमयति** । अथशब्दः प्रकृतविषयत्वद्योतनार्थः । **अस्मिन्** - ब्रह्मविदि । सामान्याभिप्रायत्वात् अस्य एकवचनस्य, उत्तरत्र **अभिसम्भवन्ति** इति बहुवचनेन न विरोधः । **यत्** यदि **शव्यं** - शवदहनादिकर्म पुत्रादयः कुर्वन्ति, यदि वा न कुर्वन्ति, सर्वथा अपि ते अर्चिषमेव अभिसम्भवन्ति । अर्चिरादिशब्दाश्च 'आतिवाहिकास्तल्लिङ्गात्' (ब्र.सू.४-३-४) इति न्यायेन तदभिमानिदेवतापराः इति अन्यत्र स्थितम् ।

[1]अत्र केचित्[1] - उपकोसलविद्याङ्गभूताग्निविद्यावैभवेन शवदहनादिवैगुण्येऽपि, उपकोसलविद्यानिष्ठस्य न क्षतिः । विद्यान्तरनिष्ठस्य दहनादिवैगुण्ये किञ्चित् वैगुण्यम् अस्तीति वदन्ति । तन्न - 'न कर्मणा लिप्यते' (बृ.उ.४-४-२३) इति श्रुतिसिद्धार्थानु[2]वादित्वात्[2] अस्य वाक्यस्य एतादृशार्थप्रत्यायकत्वाभावात् । अतः **अथ यदु चैवास्मिन्** इत्येतत् सर्वब्रह्मवित्साधारणमेव ।

**यान् षडुदङ्ङेति मासांस्तान्** । यान् षण्मासान् **उदक्** - उत्तरदिशायाम् आदित्य **एति** तान् मासान् इत्यर्थः । शिष्टं स्पष्टम् ।

---

1. अत्र - अ,आ ।  2. वादित्वं - अ ।

**एष......नावर्तन्ते** । देवैः - आतिवाहिकैः नीयमानः पन्थाः **देवपथः** । ब्रह्मप्रापकः पन्थाः **ब्रह्मपथः** । **एतेन** मार्गेण **प्रतिपद्यमानाः इमं** घोरं **मानवमावर्तं** घटीयन्त्रवत् [1]जननमरणप्रापकं[1]मनुष्यादिशरीरोपलक्षितं संसारं **नावर्तन्ते** - पुनः न प्रतिपद्यन्ते । द्विरुक्तिः विद्यासमाप्त्यर्था । अत्र च यत् किञ्चिद्वक्तव्यम् उत्तरत्र वक्ष्यते ।।

अत्र पञ्चाग्निविद्यायाम् उपकोसलविद्यायाञ्च अर्चिरादिगतेः पाठात्, यस्यां विद्यायाम् अर्चिरादिगतिः श्रूयते ; तन्निष्ठानाम् एव अर्चिरादिगत्या ब्रह्मप्राप्तिः न अन्येषाम् । न च, 'तद्य इत्थं विदुः वे चेमेऽरण्ये श्रद्धा तप इत्युपासते', (छां.उ.५-१०-१) 'श्रद्धां सत्यमुपासते' (बृ.उ.६-१२-१५) इति सर्वब्रह्मविद्यासाधारण्यं श्रुतमिति वाच्यम् । तथा सति उपकोसलविद्यायाम् अर्चिरादिगतिश्रुतिवैयर्थ्यप्रसङ्गात् इति पूर्वपक्षे प्राप्ते - उच्यते -

'अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्' (ब्र.सू.३-३-३२) । सर्वेषां - सर्वोपासननिष्ठानाम् अर्चिरादिमार्गेणैव गन्तव्यत्वात् एतद्विद्यानिष्ठानामेव इति नियमो नास्ति । तथा हि नियमे सति 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छां.उ.५-१०-१) 'श्रद्धां सत्यमुपासते' (बृ.उ. ६-२-१५) ।

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।।" (भ.गी.८-२४)

इति श्रुतिस्मृतिभ्यां विरोधप्रसङ्गः । उपकोसलविद्यायां पुनराम्नानं तु ये चेमेऽरण्ये श्रद्धा तप इत्युपासते इति पञ्चाग्निविद्या[2]वाक्यप्राप्त[2]सर्वब्रह्मविद्यासाधारणार्चिरादिगतेः अपुनरावृत्तिविधानार्थम् अनुवादः इति स्थितम् ।

उपकोसलविद्यायाः परमात्मविद्यात्वं च, 'अन्तर उपपत्तेः' (ब्र.सू. १-२-१३) इत्यत्र स्थितम् । तथा हि - 'य एषोऽक्षिणि पुरुषो दृश्यते' इति निर्दिश्यमानः प्रतिबिम्बात्मा प्रसिद्धवन्निर्देशात् । दृश्यते इति अपरोक्षाभिधानाच्च । जीवो वा स्यात् । चक्षुषि तस्य विशेषेण संनिधानात् प्रसिद्धिः उपपद्यते । उन्मीलितचक्षुरुद्वीक्षणेन जीवस्य स्थितिगतिनिश्चयात् दृश्यते इत्युक्तिः उपपद्यते । न तु परमात्मा, तस्य अनाधारत्वात् अदृश्यत्वाच्च । न च आत्मत्व-अमृतत्व-अभयत्व-ब्रह्मत्वादिविरोधः । 'एष आत्मेति होवाच' इति इतिकरणेन 'मनो ब्रह्मेत्युपासीत' (छां.उ. ३-१८-१) इतिवत् पदार्थाविवक्षाया दर्शितत्वात् इत्येवं प्राप्ते-अभिधीयते -

'अन्तर उपपत्तेः' (ब्र.सू.१-२-१३) अक्ष्यन्तरः परमात्मा । तस्यैव आत्मत्व-अमृतत्व-संयद्वामत्व-वामनीत्व-भामनीत्वादिधर्माणां उपपत्तेः । न च इतिकरणे न एतेषाम् अविवक्षा

---

1. जन्मजरामारणाद्यावर्तकं - अ,आ । 2. वाक्यप्राप्त - अ ।

शङ्क्या । यत्र उच्यमानस्य अर्थस्य आप्तवचनसम्बन्धः प्रतिपाद्यः तत्र इतिशब्दो [1]नार्थविवक्षां[1]वारयति यथा 'इति हस्मोपाध्यायः कथयति' इति । तस्मादिह अमृतत्वादीनाम् आचार्यवचनसम्बन्धस्य प्रतिपाद्यत्वात् इतिशब्दः 'मनो ब्रह्मेति' इत्यादाविव न अविवक्षाकारकः । ततश्च स्वाभाविकामृतत्वादीनां जीवेऽसम्भवात् । तथा प्रतिबिम्बे, 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' (बृ.उ.५-५-२) इति चक्षुःप्रतिष्ठितत्त्वेन श्रुतिप्रसिद्धादित्यरूप-देवताविशेषे च असम्भवात् परमात्मैव अक्ष्यन्तर्वर्ती ।

यदुक्तम् - निराधारस्य परमात्मनः [2]चक्षुरवस्थितिः[2] न सम्भवति इति, तत्राह - 'स्थानादिव्यपदेशाच्च' (ब्र.सू.१-२-१४)। 'यश्चक्षुषि तिष्ठन्' (बृ.उ.३-७-३) इत्यादौ अन्तर्यामिब्राह्मणे चक्षुषि स्थितिनियमनादेः परमात्मधर्मतया श्रवणात्, योगिदृश्यतया दृश्यते इत्यस्य उपपत्तेश्च अक्ष्यन्तर्वर्तिनः परमात्मत्वे न अनुपपत्तिः ।

'सुखविशिष्टाभिधानादेव च' (ब्र.सू.१-२-१५) । 'कं ब्रह्म खं ब्रह्मे'ति अपरिच्छिन्नत्वविशिष्टसुखरूपस्य अग्निभिः उपदिष्टस्य ब्रह्मणः एव 'य एषोऽक्षिणि पुरुषो दृश्यते' इति वाक्ये प्रकृतपरामर्शिना य एष इति सर्वनाम्ना अभिधीयमानत्वाच्च । न च तद् ब्रह्म अग्निविद्यया व्यवहितम् इति वाच्यम् । अग्निविद्याया अपि ब्रह्मविद्याङ्गत्वेन 'न हि स्वाङ्गम्' इति न्यायेन अव्यवधायकत्वात् । तदङ्गत्वञ्च तत्प्रकरणमध्यपातात्, 'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैव अग्निविद्योपदेशः इति प्रतिपादनात्; ब्रह्मविद्योपयुक्तफलव्यतिरिक्तफलान्तराश्रवणाच्च ।

ननु 'कं ब्रह्म खं ब्रह्म' इति वाक्येन अपरिच्छिन्नसुखरूपं ब्रह्म इति न उपदिश्यते, अपि तु 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति त्रिभिः वाक्यैः मुख्यप्राणे लौकिकसुखे आकाशे च ब्रह्मदृष्टिः विधीयते । तत्राह - 'अत एव च स ब्रह्म' (ब्र.सू.१-२-१६)। अत एव - अपरिच्छिन्नसुखस्य ब्रह्मत्वाभिधानादेव अपरिच्छिन्नसुखरूपं ब्रह्मैव अत्र प्रतिपाद्यते - न अब्रह्मणि ब्रह्मदृष्टिः, अब्रह्मभूतेषु मुख्यप्राणलौकिकसुखाकाशेषु ब्रह्मदृष्टिविधिरूपत्वे तत्र अनुपपत्तेः अभावेन 'विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि' इति प्रश्नस्य 'यद्वाव कं तदेव खं यदेव खं तदेव कम् इति' प्रतिवचनस्य च असङ्गतत्वापत्तेः । तदसङ्गतिप्रकारश्च प्रागेव वर्णितः । इतश्च परं ब्रह्म, 'श्रुतोपनिषत्कगत्यभिधानाच्च' (ब्र.सू.१-२-१७)। श्रुतोपनिषत्कस्य - अधिगतपरमपुरुषयाथात्म्यस्य अनुसन्धेयतया श्रुत्यन्तरप्रतीयमाना अर्चिरादिका गतिः या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीम् उपकोसलाय अक्षिपुरुषं श्रुतवते 'अथ यदु चैवास्मिञ्छव्यं

---

1. नार्थविवक्षावारकः - ख । 2. चक्षुरुपस्थितिः - क ।

कुर्वन्ति' इत्यादिना आचार्यः उपदिशति । 'अतोऽप्ययमक्षिपुरुषः परमात्मा'। 'अनवस्थितेः असम्भवाञ्च नेतरः' (ब्र.सू. १-२-१८) । प्रतिबिम्बादीनाम् अक्षिणि नियमेन अनवस्थानात्, अमृतत्वादीनां च निरुपाधिकानां तेषु असम्भवात् न परमात्मेतरः छायादिः अक्षिपुरुषो भवितुमर्हति इति स्थितम् । प्रकृतमनुसरामः ।।

**आ.भा.** - यथोक्तब्रह्मज्ञानवतो गतिप्रकारं दर्शयितुमाह - **अथ यदु चैव** इत्यादि । अत्र अथशब्दः प्रकृतविषयत्वज्ञापकः । अथ यदि अस्मिन् यथोक्तब्रह्मज्ञानिनि पुत्रादयो मरणानन्तरं **शव्यं** - शवदहनादिकं कर्म कुर्वन्ति **यदु च** यदि च यदि वा ते पुत्रादयः तस्य ब्रह्मज्ञानिनो मरणानन्तरं शवदहनादिकं कर्म न कुर्वन्ति तथापि-करणेऽकरणेऽपि ते ब्रह्मज्ञानिनः इमं मानवलोकं देहं च परित्यज्य **अर्चिषमेवाभिसम्भवन्ति** । तत् पूर्वोपलक्षितं देवयानपन्थानं ब्रह्मलोकप्रापकमेव प्राप्नुवन्ति । अत्र अर्चिरादिकाः शब्दाः तत्तदभिमानिदेवपरकाः एव 'आतिवाहिकाः तल्लिङ्गात्' (ब्र.सू.४-३-४) इति सूत्रे तथैव प्रतिपादनात् । यद्यपि उपकोसलविद्याङ्गभूताग्निविद्याप्रभावात् शवदहनादिवैगुण्येऽपि उपकोसलविद्यावतः न कापि क्षतिः, किन्तु विद्यान्तरनिष्ठस्य दहनादिवैगुण्ये किञ्चित् वैगुण्यम् अस्तीति, तथापि 'न कर्मणा वर्धते नो कनीयान्' (बृ.उ.४-४-२३) इति श्रुतिसिद्धार्थानुवादित्वात् अस्य वाक्यस्य एतादृशार्थप्रत्यायकत्वाभावात् इति । **अर्चिषोऽभिसम्भवन्ति** । अर्चिरभिमानिनीं देवतां प्राप्नुवन्ति । **अर्चिषोऽहः** - अर्चिभिः अभिमानिनी देवता अहरभिमानिनिं देवतां प्राप्नुवन्ति । एवं **चन्द्रमसो विद्युतं** - विद्युदभिमानिनीं देवतां प्राप्नुवन्ति । **तत्पुरुषोऽमानवः** - मानवभिन्नः **एनान्** - ब्रह्मविदः **ब्रह्म** - सत्यलोकं **गमयति** - प्रापयति । **एष देवपथो ब्रह्मपथः** । देवैः आतिवाहिकैः अमानवैः नीयमानः पन्थाः मार्गो देवपथः तथा ब्रह्मप्राप्तिसाधनो मार्गो ब्रह्मपथः । **एतेन** - देवमार्गेण **प्रतिपद्यमाना** गच्छन्तो ब्रह्मलोकं, पुनरपि **मानवमावर्तं** - संसारसागरं **नावर्तन्ते नावर्तन्ते** - न पुनः संसारम् आगच्छन्ति, मुक्ताः भवन्ति इति ।। ५-६ ।।

**सु.** - एवं विदुषः अस्य अर्चिरादिना ब्रह्मपथेन गमनम् अपुनरावृत्तिमाह - **अथ** इत्यादिना । **अस्मिन्** - ब्रह्मविदि प्रेते देहानुबन्धिनः **शव्यं** - शवसंस्कारं यदु कुर्वन्ति यदि च न, अर्चिषम् एव अभिसम्भवन्ति एते । केवलकर्मिणाम् इव एषां न फले प्रतिबन्धः प्रेतसंस्कारेण अकृतेन । ब्रह्मविद्या एवं स्तूयते । न उपकोसलविद्यामात्रम् । अर्चिरादयो विद्युदन्ताः लोकविशेषाः । ब्रह्मधामाभिगच्छतः पथि प्रसजन्तः अर्चिराद्यभिमानिदेवविशेषाधिष्ठिताः । तेषु

प्रथमम् अर्चिर्लोकम् इतः प्रेतो ब्रह्मवित् अभिसम्भवति । ततो **अहः** - अहरभिमानिदेवताधिष्ठितं लोकं, ततः **आपूर्यमाणपक्षम्** - आपूर्यते चन्द्रमाः कलाभिः यस्मिन् पक्षे तम् । शुक्लपक्षाभिमानिदेवताधिष्ठितं लोकम्, ततो यान् षण्मासान् सूर्यः **उदक्** - उत्तरस्यां दिग्विभागे **एति तान् मासान्** - उत्तरायणाभिमानिदेवताविशेषाधिष्ठितं लोकम्, ततः **संवत्सरम्** - संवत्सराभिमानिदेवताधिष्ठितं लोकम्, ततः **आदित्यम्** - ततः **चन्द्रमसम्**, ततो **विद्युतं** - विद्युदभिमानिदेवताधिष्ठितं लोकम् अभिसमेति । तत्र एनम् अमानवः पुरुषः अप्राकृतलोकात् अभ्येति । स एनं **ब्रह्म गमयति** - परब्रह्म धाम प्रापयति । **एष एव देवपथः ब्रह्मपथश्च** - देवैः अर्चिरादिभिः आतिवाहिकैः अधिष्ठितः इति देवपथः । प्राप्यस्य ब्रह्मणः प्रापकः पन्था इति ब्रह्मपथश्च । इह अर्चिरादिमार्गे वायुप्रभृतयः न श्रूयन्ते । अथापि अन्यत्र श्रूयमाणं सर्वशाखाप्रत्ययन्यायेन इहापि बोध्यम् । **एतेन** पथा **प्रतिपद्यमाना** धामविशेषम् ; इमं **मानवमावर्तं** - संसारावर्तं **नावर्तन्ते** - न विशन्ति ।। ५-६ ।।

**।। इति पञ्चदशखण्डभाष्यम् ।।**

## षोडशः खण्डः

**[यज्ञस्य क्षतप्राप्तौ प्रायश्चित्तं, ब्रह्मणः मौनं च]**

**एष ह वै यज्ञो योऽयं पवते । एष ह यन् इदँ सर्वं पुनाति । यदेष ह यन्निदँ सर्वं पुनाति, तस्मादेष एव यज्ञः । तस्य मनश्च वाक् च वर्तनी ।। १ ।।**

**प्र.** - रहस्यप्रकरणे प्रसङ्गात् आरण्यकत्वसाम्याच्च यज्ञे क्षते उत्पन्ने व्याहृतयः प्रायश्चित्तार्थहोममन्त्रतया विधातव्याः । 'तदभिज्ञस्यैव ब्रह्मत्वलक्षणमार्त्विज्यम् । तस्य च ब्रह्मणो मौनमावश्यकम्' इत्येवमादिविध्यर्थम् इदम् आरभ्यते । **एष ह वै यज्ञो योऽयं पवते** । योऽयं पवते वायुः, स एव यज्ञः इत्यर्थः । कथं वायोः यज्ञत्वम् इत्यत्राह **एष ह यन् इदँ सर्वं पुनाति** । **एषः** - वायुः **ह यन्** - गच्छन् सर्वं पुनाति । वर्षवातातपैः वस्तुशुद्धिः स्मृतिप्रसिद्धा । यन् पुनातीति पदद्वयगतयोः यकारनकारयोः यज्ञशब्दे प्रत्यभिज्ञानात्, ञकारस्य नकारविकारत्वात् यज्ञशब्दस्य यन् पुनातीति निर्वचनमिति भावः । उक्तमेव उपसंहरति - **यदेषः......यज्ञः** इति ।

एवं यज्ञस्य वायोश्च अभेदप्रतिपादनेन यज्ञस्य गन्तृत्वं सम्पाद्य गन्तुः यज्ञस्य मार्गमाह - **तस्य......वर्तनी ।** [1]प्रवृत्तिसाधनभूतो[1] [2]वाङ्मनसमयो[१][2] मार्गः इति यावत् ।।

**आ.भा.** - रहस्यप्रकरणे प्रसङ्गात् तथा अरण्यकत्वलक्षणसाधर्म्यात् यज्ञे **विनष्टे** उत्पन्ने व्याहृतयः प्रायश्चित्तप्रयोजना होममन्त्रतया विधातव्याः । तदभिज्ञस्य एव ब्रह्मत्वलक्षणम् आर्त्विज्यम् । तस्य ब्रह्मणो मौनम् आवश्यकम् इत्येवमादि विधिप्रयोजनकमिदं प्रकरणम् आरभ्यते **एषः ह वै यज्ञः** इत्यादि । **योऽयं वायुः पवते एष ह वै यज्ञः । एष हि** - वायुः **यन्** - गच्छन् **सर्वमिदं पुनाति** - शोधयति 'ऊर्णो वातेन शुद्ध्यति' इति स्मृतिदर्शनात् वस्तुमात्रशोधकत्वं वायोः वर्षवातातपैः वस्तुशुद्धिः भवति इतिं स्मृत्यन्तरादौ लोके च प्रसिद्धेः । वायुप्रतिष्ठो यज्ञः श्रुत्यादिषु प्रसिद्धः 'अयं वै यज्ञो योऽयं पवते' (ऐ.ब्रा.२५-८) वातः एव यज्ञस्य आरम्भको वातः प्रतिष्ठा इत्यादिदर्शनेन वायोः शोधकत्वं यज्ञरूपत्वं च इति । यदेष **ह** - यस्मात् कारणात् **यन्** - गच्छन् वायुः सर्वमिदं **पुनाति** - पवित्रयति ; तस्मादेव कारणात् एषः वायुरेव यज्ञः । यन् पुनाति इति पदद्वयगतयोः यकारनकारयोः यज्ञशब्दे विद्यमानत्वात् अकारस्य च नकारविकारत्वात् यज्ञशब्दस्य यन् पुनाति इति निर्वचनं वायोः भवतीति भावः । पूर्वोक्तप्रकारेण यज्ञस्य वायोश्च तादात्म्यप्रतिपादनात् यज्ञस्य गन्तृत्वं सम्पाद्य तस्य गन्तुः यज्ञस्य गमनमार्गं दर्शयितुमाह - **तस्य मनश्च** इत्यादि । **तस्य** - यज्ञस्य **मनः** - अन्तःकरणं **वाक्** - वाणी च **वर्तनी** - मार्गः । तत्र वाक् मन्त्रोच्चारणद्वारेण, मनश्च मन्त्रार्थध्यानद्वारेण मार्गत्वमापद्यते । यज्ञस्य प्रवृत्तिसाधनभूतो वाङ्मनसयोः मार्गः इत्यर्थः ।।

**सु.** - यदि यज्ञे क्षतं स्यात् तत् परिहर्तव्यम् इत्थमिति आदेष्टुं प्रस्तूयते - **एष** इत्यादिना । यद्यपि उपासनप्रकरणमिदम्, अथापि अस्ति प्रसङ्गोऽस्य, यदुपासनेष्वपि अस्ति कर्मणाम् अङ्गभावः, अङ्गक्षतेः परिहारो हि अङ्गिनि प्रवर्तमानेन ज्ञातव्यः । उपदिष्टा च अग्निविद्याऽव्यवधानेन, तदग्निसाध्यो यज्ञो यथाऽक्षतः स्यात् तथा उपदेष्टव्यमिति भवति प्रसङ्गः । **एष ह वै यज्ञो योऽयं पवते** - योऽयं पवते पवनः एष ह वै यज्ञः । कथमेतत् ? **एष हि यन्निदं सर्वं पुनाति** - यस्मादेष पवनो यज्ञश्च **यन्** - गच्छन्नेव प्रचलन्नेव इदं सर्वं पुनाति । न तु

---

१. तथा च श्रुत्यन्तरम् 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' (ऐ.आ.२-३) इति ।।

1. प्रवृत्तिसाधनभूतौ इत्यर्थः - अ,आ । 2. वाङ्मनस्संयोगः - अ ।

स्तब्धः । पवन इव अयं क्रियैकलक्षणः । स्वक्रियया शोधयति अखिलमिदम् । यज्ञोऽपि क्रियैकलक्षणः क्रियाभिरेव ताभिः ताभिः पुनाति यजमानम् । तदनेन साम्येन पवनो नाम अयम् । एवं वायोरिव यज्ञस्य गतिशीलतया पवित्रताम् उक्त्वा अथास्य गतिसाधनवैकल्ये यजमानस्य अनर्थं वक्ष्यन् गतिसाधनमाह - **तस्य मनश्च वाक् च वर्तनी । तस्य** - यज्ञस्य गत्येकशीलस्य मनश्च वाक् च इति **वर्तनी** - मार्गः ।।

**तयोरन्यतरां मनसा सँस्करोति ब्रह्मा, वाचा होताऽध्वर्युरुद्गाताऽन्यतराम् । स यत्रोपाकृते[१] प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा [1]व्यवदति[1] ।। २ ।।**

**प्र. - तयोः अन्यतराम् । तयोरन्यतरां** - यज्ञस्य मनोलक्षणमार्गं **मनसा** [2]प्रणिहितेन[2] **ब्रह्मा संस्करोति ।** होत्राद्याः त्रयोऽपि वाचैव सम्यक्प्रयुक्तया वाचं संस्कुर्वन्ति इत्यर्थः ।

**स यत्र उपाकृते । व्यवदति** - अत्र क्षेपार्थो नञो नलोपः । 'तिडि क्षेपे' इति निन्दायां नलोपः । **यत्र** - यज्ञे प्रातरनुवाकशस्त्रे **उपाकृते** - आरब्धे सति **परिधानीयायाः** ऋचः प्राक् **ब्रह्मा व्यवदति** - विशब्दो विविधार्थः । नञश्च निन्दितत्वमर्थः । विविधं निन्दितं च वदति, मौनं त्यजति चेत् इत्यर्थः ।।

**आ.भा. -** तयोः द्वयोः वाङ्मनसयोः मध्यात् **अन्यतराम् -** एकैकलक्षणाम् **वर्तनी -** मार्गं **मनसा ब्रह्मा** संस्करोति । होता अध्वर्युः उद्गाता अन्यतरां वर्तनीं वाचा संस्करोति । यज्ञस्य मनः स्वरूपसाधनं प्रणिहितेन मनसा ब्रह्म संस्करोति तथा त्रयोऽपि होत्राद्याः सम्यक् प्रयुक्तया वाचैव वाचं संस्कुर्वन्ति इति भावः । स **यत्र** - यज्ञे **प्रातरनुवाके** प्रातरनुवाकशस्त्रे **उपाकृते** - प्रारब्धे क्षति**परिधानीयायाः** ऋचः प्राक् **ब्रह्मा व्यववदति ।** अत्र विशब्दो विविधार्थकः । निन्दितार्थको नञ् । ततश्च विविधं निन्दितं च वदति मौनं परित्यजेत् चेत् । तदा अन्यतरामेव वाग्लक्षणां वर्तनीं संस्कुर्वन्ति, अन्यतरां मनोलक्षणा वर्तनी हीयते ।।

---

१. प्रातरनुवाको नाम शस्त्रविशेषः । शस्त्रम् - अप्रगीतमन्त्रसाध्या स्तुतिः । होत्रा स्तुत्यादिना प्रातः पठनीयः तत्काले ब्रह्मणा मौनेन स्थेयम् ।।

1. व्यववदति इति शाङ्कर तथा सुबोधिनीसम्मतः पाठः । व्यपदति इति माध्वसम्मतः पाठः ।

2. प्रणिहितेन इति पदं नास्ति अ,आ ।

**सु. - तयोः -** वाङ्मनसोः **अन्यतरां -** मनोलक्षणां पदवीं ब्रह्मा मनसा निजेनावहितेन देवतादिविज्ञानसम्पन्नेन संस्करोति । होता अध्वर्युः उद्गाता चेति एते त्रयः **वाचा -** निजया ऋगाद्युच्चारणसमर्थया तयोः अन्यतरां वाग्लक्षणां पदवीं संस्कुर्वन्ति । ब्रह्मणो मानसं विज्ञानलक्षणं व्यापारं होत्रादीनाम् ऋगाद्युच्चारणलक्षणव्यापारं च आश्रित्य अयं यज्ञः प्रवर्तते इति भावः । **यत्र -** यज्ञे, प्रातरनुवाके - शस्त्रे **उपाकृते -** प्रक्रान्ते, परिधानीयायाः ऋचः पुरा, सः ब्रह्मा **व्यववदति -** यत्किञ्चित्, मौनं त्यजति इति यावत् ।।

**अन्यतरामेव वर्तनीँ सँस्कुर्वन्ति, हीयतेऽन्यतरा । स यथा एकपाद् व्रजन्, रथो वैकेन चक्रेण वर्तमानो रिष्यति एवमस्य यज्ञो रिष्यति, यज्ञँ रिष्यन्तं यजमानोऽनुरिष्यति, स इष्ट्वा पापीयान् भवति ।। ३ ।।**

**प्र. - तदा अन्यतरामेव......हीयतेन्यतरा ।** तदा मनःप्रणिधानस्य नाशेन मनोलक्षणयज्ञवर्तनीसंस्कारकस्य ब्रह्ममनसः अभावात् एषा वर्तनी नश्यति । होत्रादि-वाक्संस्कार्या वाग्रूपा यज्ञवर्तनी परम् आस्ते इत्यर्थः । तर्हि को दोष इत्यत्राह - **स यथा......भवति ।** गच्छन् एकपात् पुरुषो वा एकेन चक्रेण प्रवर्तमानो रथो वा यथा **रिष्यति -** नश्यति, **एवमस्य -** यजमानस्य यज्ञः नश्यति । विगुणो भवति इति यावत् । तस्मिन् नष्टे यजमानोऽपि नष्टफलः पापी च भवति इत्यर्थः ।।

**आ.भा. -** मौनं त्यजेत् चेत् तदा मनःप्रणिधानस्य विनाशात् मनोलक्षणयज्ञवर्तनी संस्कारकस्य ब्रह्ममनसो अभावात् एषा मनोलक्षणावर्तनी विनष्टा भवति । केवलं होत्रादिवाक्संस्कार्या वाक् लक्षणा यज्ञवर्तनी अवशिष्यते इति भावः । वाङ्मनसोः मध्ये एकस्याभावेऽपि प्रकृते का क्षतिः इति दृष्टान्तद्वारेण क्षतिमेव दर्शयति **स यथा** इत्यादि । **यथा -** येन प्रकारेण **सः -** पुरुषः पङ्गुः **एकपात् -** एकेन पदा **व्रजन् -** गच्छन् मार्गमतिक्रामन् यथा वा **एकेन चक्रेण वर्तमानः -** प्रवर्तमानो गच्छन् रथः **रिष्यति -** विनष्टो भवति स्वलक्ष्यात् च्युतो भवति साधनाभावात् गन्तव्यस्थानं न गच्छति इत्यर्थः तथैव अस्य यजमानस्य साधनविरहितो यज्ञः **रिष्यति -** विनश्यति विगुणो भवति इत्यर्थः । यज्ञं **रिष्यन्तम् -** विनश्यत् सत् तदनु यजमानो **रिष्यति -** विनष्टफलको भवति विशेषणाभावेन विशिष्टमपि नष्टं भवति इत्यर्थः । **सः -** यजमानः **इष्ट्वा -** साधनविरहितयज्ञं कुर्वन्

पापीयान् भवति । अङ्गविगुणितकर्म कुर्वन् फलं न प्राप्नोति, परन्तु लक्ष्यात् च्यवनाधोगतिं याति इति भावः ।।

**सु. - अन्यतरामेव वर्तनीं** वाग्लक्षणां संस्कुर्वन्ति होत्रादयः, अन्यतरा तु वर्तनी मनोलक्षणा ब्रह्मणो मौनत्यागलक्षणेन दोषेण **हीयते** - नश्यति, यथैकपात् पुरुषो व्रजन् रथो वैकचक्रेण वर्तमानः **रिष्यति** - नश्यति । एवम् अस्य यज्ञो नश्यति, यज्ञं नश्यन्तम् अनु यजमानोऽपि नश्यति ; कोऽसौ नाशो यजमानस्य ? अर्थहानिरेव, न केवलं इष्टहानिः, **स इष्ट्वा पापीयान् भवति** - पापं च अस्य भवति ।।

**अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदति, उभे एव वर्तनी सँस्कुर्वन्ति न हीयतेऽन्यतरा ।। ४ ।।**

**स यथोभयपाद् व्रजन्, रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठति - एवमस्य यज्ञः प्रतितिष्ठति ; यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति, स इष्ट्वा श्रेयान् भवति ।। ५ ।।**

**।। इति षोडशः खण्डः ।।**

**प्र. - अथ......अन्यतरा ।** न व्यवदति इति सम्बन्धः । अत्र वर्तन्यौ इति वक्तव्ये, 'सुपां सुलुक्' (पा.सू.७-१-३९) इति छान्दसो लुक् । शिष्टं स्पष्टम् ।

**स यथा......भवति । यज्ञः प्रतितिष्ठति** - साद्गुण्यवान् भवति इत्यर्थः । **यजमानः प्रतितिष्ठति** - लब्धफलो भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा.** - अथ **यत्र** - यस्मिन् यज्ञे प्रातरनुवाके शस्त्रे **उपाकृते** - प्रारब्धे सति परिधानीयायाः ऋचः प्राक् ब्रह्मा **न व्यवदति** - विविधं निन्दितं च न वदति उ**भे एव वर्तनी** - मनोवाग्लक्षणे संस्कुर्वन्ति अन्यतरा एकापि न हीयते । **स यथा उभयपात् व्रजन्** - मार्गमतिक्रामन् यथा वा उभाभ्यां चक्राभ्यां प्रवर्तमानो रथः प्रतितिष्ठति तथैवास्य यजमानस्य यज्ञः **प्रतितिष्ठति** - साधनसम्पन्नो भवति । यज्ञं प्रतितिष्ठन्तं तदनु यजमानः प्रतितिष्ठति, स यजमानः साधनसम्पन्नं यज्ञम् **इष्ट्वा** - कृत्वा **श्रेयान्** लब्धफलको भवतीति ।।

**सु. - वर्तनी -** वर्तन्यौ, छान्दसो वचनलोपः । **प्रतितिष्ठति -** न पतति, अवैकल्यात् । साधनभावात् न प्रच्यवति इति यावत् । यज्ञः प्रतितिष्ठति न च्यवति फलतः । श्रेयांश्च भवति लोके ।। ४-५ ।।

**।। इति षोडशखण्डभाष्यम् ।।**

## सप्तदशः खण्डः

**[व्याहृतीनां उत्पत्तिक्रमः तेषां प्रशंसा च]**

**प्रजापतिर्लोकानभ्यतपत् । तेषां तप्यमानानाँ रसान् प्राबृहत् अग्निं पृथिव्याः, वायुमन्तरिक्षात् । आदित्यं दिवः ।। १ ।।**

**प्र. -** तत्र [1]यज्ञभ्रेषे[1] व्याहृतिहोमः प्रायश्चित्तमिति वक्तुं प्रस्तौति - **प्रजापतिर्लोकानभ्यतपत् ।** लोकसारजिघृक्षया लोकान् उद्दिश्य अतपत् । 'तप - आलोचने', (श्रौतोऽयं धातुः) आलोचनरूपं ज्ञानं कृतवान् इत्यर्थः । **तेषां......प्राबृहत् । प्राबृहत् -** उद्धृतवान् । जग्राह इत्यर्थः । **अग्निं......दिवः ।** लोकान् आलोच्य त्रिलोक्याः अग्निवाय्वादित्याः सारभूता इति निश्चिकाय इत्यर्थः । एवम् उत्तरत्रापि ।।

**आ.भा. -** यज्ञसाधनमार्गविनाशेन विशेषणनाशात् विशिष्टयज्ञभ्रंशे व्याहृतिहोमात्मकः प्रायश्चित्तमिति तद्वक्तुं व्याहृतिं प्रस्तौति **प्रजापतिः** इत्यादि । स प्रजापतिः लोकानां सारादानेच्छया लोकानुद्दिश्य **अतपत् -** आलोचनात्मकं ज्ञानं कृतवान् दध्यौ इत्यर्थः । **तेषां तप्यमानानाम्** आलोचनविषयतां प्राप्तानां लोकानां **रसान् -** सारलक्षणान् **प्राबृहत् -** उद्धृतवान् जग्राह इत्यर्थः । कस्य लोकस्य किमात्मकं सारम् उद्धृतवान् तत्राह **अग्निं पृथिव्याः** इत्यादि । **पृथिव्याः -** पृथिवीलोकात् अग्निलक्षणं सारम् उद्धृतवान् अग्निलक्षणो रसः पृथिव्याः इत्यर्थः । **वायुमन्तरिक्षात् ।** अन्तरिक्षलोकात् वायुलक्षणं सारम् उद्धृतवान् । **दिवः -** द्युलोकात् **आदित्यं -** सूर्यलक्षणं सारमुद्धृतवान् अन्तरिक्षदिवोः वाय्वादित्यौ सारभूतौ इति निश्चयं कृत्वा ततः तयोः द्वयोः सारयोः ग्रहणं कृतवान् इत्यर्थः ।।

---

1. यज्ञभ्रंशे - क ।

**सु.** - अथ तयोः वर्तन्योः एकस्याः क्षते यज्ञे समुत्पन्ने प्रायश्चित्तं व्याहृतितो विधास्यन् व्याहृतीनां ऋगादिसारत्वं ज्ञापयितुं प्रस्तौति । य इमे पृथिव्यन्तरिक्षद्युलोकाः तेषां सारम् आदित्सुः प्रजापतिः लोकान् अभ्यतपत् विचाराग्नौ । लोके सारः कः इति विचारितवान् इति यावत् । तेषां लोकानां तप्यमानानां रसान् **प्राबृहत्** - उद्धृतवान्, क्रमादग्निं पृथिव्याः वायुमन्तरिक्षात् आदित्यं द्युलोकात् ।।

**स एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानाँ रसान् प्राबृहत् - अग्नेः ऋचः वायोर्यजूँषि सामान्यादित्यात् ।। २ ।।**

**प्र. - स......आदित्यात् ।** अग्निवाय्वादित्यसारतया त्रयीं निश्चितवान् इत्यर्थः ।।

**आ.भा.** - पुनरपि **सः** - प्रजापतिः **एतास्तिस्रो देवताः** - अग्निवाय्वादित्यलक्षणाः उद्दिश्य **अभ्यतपत्** - आलोचनात्मकं ज्ञानं कृतवान् इत्यर्थः । **तासां** - तिसृणाम् अग्न्यादिदेवतानां **तप्यमानानां** - आलोचनविषयतां प्राप्तानां **रसान्** - सारभूतान् **प्राबृहत्** - उद्धृतवान् जग्राह इत्यर्थः । तत्र तप्यमानाग्निदेवतातः सारभूतं **ऋचः** - ऋग्वेदमुद्धृतवान् । **वायोर्यजूंषि** - वायुदेवतातः वायुसारभूतं यजुर्वेदम् उद्धृतवान् । **सामान्यादित्यात्** - आदित्यदेवतः सारभूतं सामवेदं जग्राह इति ।।

**सु.** - सारतरमादित्सुः **एतास्तिस्रो देवता** अग्न्यादिलक्षणा **अभ्यतपत्, तासां तप्यमानानां रसान् प्राबृहत्, क्रमात् अग्नेः ऋचः, वायोर्यजूंषि, आदित्यात् सामानि** उद्धृतवान् रसान् ।।

**स एतां त्रयीं विद्यामभ्यतपत् । तस्यास्तप्यमानाया रसान् प्राबृहत् - भूरिति ऋग्भ्यः भुवरिति यजुर्भ्यः, [1]सुवरिति[1] सामभ्यः ।। ३ ।।**

**प्र. - स एतां......सामभ्यः ।** त्रयीसारतया व्याहृतित्रयं निरचिनोत् इत्यर्थः । शिष्टं स्पष्टम् ।।

---

1. स्वरिति इति आनन्दभाष्यसम्मतः पाठः ।

**आ.भा.** - पुनरपि **सः** - प्रजापतिः **एतां त्रयीविद्यां** - ऋग्यजुःसामाख्याम् उद्दिश्य **अभ्यतपत्** - आलोचनं कृतवान् । **तस्याः** - त्रयीविद्यायाः ऋगादिलक्षणायाः तप्यमानायाः रसान् सारभूतान् **प्राबृहत्** - उद्धृतवान्, तत्र **ऋग्भ्यः** - ऋग्वेदेभ्यः भूरित्यात्मिकां व्याहृतिम् उद्धृतवान् । यजुर्भ्यः भुवरिति **सामभ्यः** सामवेदात् **स्वरिति** - स्वः इत्याकारिकां व्याहृतिम् उद्धृतवानिति ।।

**सु.** - सारतरसञ्जिघृक्षया पुनः **स एतां त्रयीं विद्यां** ऋग्यजुः **सामलक्षणाम् अभ्यतपत् । तस्याः तप्यमानाया रसान्** प्राबृहत्, क्रमात् **ऋग्भ्यो भूरिति यजुर्भ्यो भुवरिति सामभ्यः सुवः** इत्येता व्याहृतीः ।।

**[प्रायश्चित्तार्थं व्याहृतिहोमविधानम्]**

**तद्यदृक्तो रिष्येत्, भूः स्वाहेति गार्हपत्ये जुहुयात् । ऋचामेव तद्रसेन। ऋचां वीर्येण ऋचां यज्ञस्य विरिष्टँ सन्दधाति ।। ४ ।।**

**प्र. - तत्......जुहयात् । तत्** - तस्माद्धेतोः **ऋक्तः** - ऋचः निमित्तात् यदि, यज्ञः **रिष्येत्** - क्षतं प्राप्नुयात् इत्यर्थः । तर्हि तत्प्रायश्चित्तार्थं भूस्स्वाहेति मन्त्रेण गार्हपत्येऽग्नौ जुहुयात् इत्यर्थः । **ऋचामेव सन्दधाति।** यत् **ऋचां** - ऋक्सम्बन्धि, **तद्विरिष्टं** - तत् यज्ञस्य क्षतं **ऋचां वीर्येण** - औजसा ऋचां **रसेन** - सारभूतेन च भूरिति व्याहृत्या **सन्दधाति** - समाधत्ते इत्यर्थः ।।

**आ.भा. - तत्** इत्यादि । **तत्** - तस्मात् कारणात् **ऋक्तः** - ऋचः - निमित्तात् ऋक्सम्बन्धात् इत्यर्थः । यदि यज्ञः **रिष्येत्** - क्षतिं प्राप्नुयात् तदा भूः स्वाहेति मन्त्रेण **गार्हपत्ये** - तन्नामके अग्नौ **जुहुयात्** - आहुतिं प्राक्षिपेत् । भूरिति व्याहृतेः ऋग्वेदसारभूतत्वात् ऋग्निमित्तकक्षतौ सत्यां तद्व्याहृतिद्वारेणैव तत्र शान्तिं कुर्यात् इति भावः । ऋग्वेदनिमित्तकत्रुटे ऋग्वेदसारभूतव्याहृत्यैव समाधानं कुर्यादिति स्वयमेव श्रुतिः दर्शयति । **ऋचामेव** इत्यादि । यत् **ऋचां** - ऋक्सम्बन्धि तद्विरिष्टं तत् यज्ञस्य क्षतम् ऋचामेव **रसेन** - सारभूतेन भूरित्याकारकव्याहृत्या ऋचामेव **वीर्येण** - ओजसा **सन्दधाति** - समाधानं करोति ब्रह्म इति शेषः ।।

**सु. - तत्** - यस्माद् व्याहृतयः भूरादयः ऋगादीनां सारभूताः तस्मात्, यदि रिष्येत् यज्ञः **ऋक्तः** - ऋचः निमित्तात् भूः स्वाहेति गार्हपत्ये जुहुयात् । किं तेन तद्यज्ञस्य **विरिष्टम्** - क्षतम् ऋचां **वीर्येण** - वीर्यभूतेन ऋचां सारेण व्याहृतिलक्षणेन सन्दधाति ।।

**अथ यदि यजुष्टो रिष्येत्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टँ सन्दधाति ।। ५ ।।**

**प्र. - अथ......सन्दधाति । यजुष्टः** - यजुषो निमित्तात् । शिष्टं पूर्ववत् ।।

**आ.भा. - अथ यदि यजुष्टो रिष्येत् । यजुष्टः** - यजुषो निमित्तात् यदि यज्ञः **रिष्येत्** - क्षतं प्राप्नुयात् तदा यजुषां रसेन सारभूतेन भुवः स्वाहेति मन्त्रेण दक्षिणाग्नौ **जुहुयात्** - हवनं कुर्यादिति । यजुषामेव तद्रसेन इत्यादिपञ्चममन्त्रसमाप्तिपर्यन्तव्याख्यानं कर्तव्यं पूर्ववदेव इति ।।

**सु.** - स्फुटम् ।।

**अथ यदि सामतो रिष्येत्, सुवः स्वाहेत्याहवनीये जुहुयात् । साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टँ सन्दधाति ।। ६ ।।**

**प्र. - अथ सन्दधाति । आहवनीये** - अग्नौ । पूर्ववदर्थः ।।

**आ.भा.** - षष्ठमन्त्रस्य **अथ यदि सामतो रिष्येत्** इत्यस्यापि व्याख्यानं पूर्ववदेव कर्तव्यम् इति ।।

**सु.** - स्फुटम् ।।

**तद्यथा लवणेन सुवर्णं सन्दध्यात् सुवर्णेन रजतँ, रजतेन त्रपु त्रपुणा सीसँ, सीसेन लोहं लोहेन दारु दारुचर्मणा ।। ७ ।।**

**प्र. - तद्यथा......दारुचर्मणा** । सुवर्णस्य सन्धानं नाम [1]खरस्य[1] मृदुतापादनम् । [2]क्षाररसस्य[2] सम्पर्कपूर्वकतापेन हि सुवर्णस्य परस्परसन्धानयोग्यमृदुता भवति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा.** - अस्मिन्नर्थेऽनुरूपं दृष्टान्तं दर्शयति - **तद्यथा** इत्यादि । **तद्यथा** - येन प्रकारेण **लवणेन** - क्षारद्रव्येण **सुवर्णं** - त्रुटितसुवर्णद्रव्यं **सन्दध्यात्** - सन्दधाति संयोजयति यदि सुवर्णनिर्मितं हारादिकं कारणवशात् खण्डितं भवति तदा भागद्वयस्य मुखं वह्नौ प्रतापयति ततश्च क्षारद्रव्यं सुहागेति लोकप्रसिद्धं तत्र प्रक्षिप्य वह्नौ तापयित्वा संयोजयति एकीकरोति क्षारद्रव्यवशात् कठिनमपि सुवर्णं तथा द्रवीभवति यावता उभयोः परस्परं संयोजनं जायते । यद्यपि वह्नितापितसुवर्णं द्रवीभवति स्वयमेव तथापि क्षारद्रव्येण तादृशं मृदुत्वं जायते यावता परस्परं संयुक्तं भवति । रजतादीनां खण्डितानां संयोजनं तु केवलेन सुवर्णेन क्षारमिश्रितसुवर्णादिना वा भवतीति । सुवर्णेन रजतं त्रुटितं रजतादिकं सुवर्णेन सन्दधाति । रजतेन संयोजकेन त्रपुद्रव्यं **सन्दध्यात्** - सन्दधाति । **त्रपुणा** - संयोजकेन सीसं त्रुटितं **सन्दध्यात्** - सन्दधाति, सीसेन लोहं सन्दध्यात् । लोहेन दारुकाष्ठादिकं सन्दध्यात् । **दारु चर्मणा** - काष्ठोपरिमार्गस्थितचर्मणा त्वग्भागेन चर्मणा वा अन्यत्र त्रुटितं वस्तु सन्दधाति ।।

**सु.** - कथमेतत् ? इत्थम् - **यथा लवणेन** अल्पेन टङ्कणादिना कठिनमपि **सुवर्णं सन्दध्यात्**, यथा च **सुवर्णेन रजतम्**, यथा च **रजतेन त्रपु**, यथा च **त्रपुणा सीसम्**, यथा च **सीसेन लोहम्**, यथा च **लोहेन दारु सन्दध्यात्** ।।

**एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टं सन्दधाति । भेषजकृतो ह वा एष यज्ञः, यत्रैवंवित् ब्रह्मा भवति ।। ८ ।।**

**प्र. - एवं......सन्दधाति** । व्याहृतीनां पृथिव्यादिलोकसारभूताग्न्यादिदेवता-सारभूतत्रयीसारत्वात् तद्वीर्यत्वाच्च **एषां** उक्तानां वीर्येण **एवं** - सुवर्णादिसन्धानवदेव यज्ञक्षतं समाहितं भवति इत्यर्थः । **भेषजकृतो....भवति** । यस्मिन् यज्ञे एवंवित्

---

1. कठिनस्य - क,ख । 2. क्षारद्रव्यस्य - क ।

ब्रह्मनामा ऋत्विक् भवति सः यज्ञः **कृतभेषजः** - कृतौषधः, समीचीनेन चिकित्सकेन यथा रोगार्तः पुमान् कृतभेषजो भवति, तथा इत्यर्थः ।।

**आ.भा.** - एवंप्रकारेण दृष्टान्तं दर्शयित्वा दार्ष्टान्तिके योजयति - **एवमेषाम्** इत्यादि । **एवं** - सुवर्णादिवत् **एषां** - पृथिवीप्रभृतिलोकानां **आसाम्** अग्न्यादिदेवतानां **अस्याः त्रय्याः** - ऋगादिलक्षणायाः विद्यायाः **वीर्येण** - सारभूतेन ओजसा यज्ञस्य **विरिष्टं** - क्षतम् **सन्दधाति** - समाहितं भवति । भूरादिव्याहृतीनां पृथिव्यादिलोकसारभूताग्न्यादिदेवता-सारभूतत्रयीविद्यासारत्वात् तद्वीर्यत्वाच्च एषां पृथिव्यादीनाम् उक्तानां सारेण सुवर्णादि सन्धानवदेव यज्ञक्षतमपि समाहितं भवति इति भावः । **भेषजकृतो ह वा** इत्यादि । यथा ज्वरादिरोगार्तः पुरुषः सुशिक्षितवैद्येन देशकालोचितभेषजप्रयोगात् गतरोगः भवति तथा यस्मिन् यज्ञे एवंवित् ब्रह्मा ऋत्विग् भवति स यज्ञः गतक्षतो भवति ।।

**सु. - एवमेषां** - पृथिव्यादिलोकानाम् आसां अग्न्यादिदेवतानाम् **अस्याः** - विद्यायाश्च परम्परया साक्षाच्च **वीर्येण** - व्याहृतिलक्षणेन अनेन **यज्ञस्य तद्विरिष्टं सन्दधाति ।** वीर्यातिशययोगात् महदपि क्षतं सुदृढं सन्धीयते इति भावः ।

ननु ब्रह्मा चेन्मौनं त्यजेत् किं प्रायश्चित्तम् ? इदं तु होत्रादितः क्षत एव ब्रह्मणो हि मौनं विहितम् । क्व तस्य अवकाशो ऋगादिनिमित्ते प्रस्खलने । सत्यम् । विज्ञानमेव अस्य प्रायश्चित्तं प्रामादिके व्रतभङ्गे, यद् **भेषजकृतो ह वा एष यज्ञो यत्रैवंवित् ब्रह्मा भवति ।** क्षतप्रायश्चित्तविभागविद्विज्ञानवान् ब्रह्मा यत्र भवति स यज्ञः कृतभेषजो भवति । ब्रह्मणा विज्ञानसम्पन्नेन कुशलेन भिषजा आर्त इव चिकित्सितो यज्ञोऽयम् आहिततत्तत्क्षतप्रायश्चित्तः सुस्थो भवति, तदेवं विधस्या अस्य प्रामादिके मौनभङ्गे विज्ञानात् अन्यत् न अपेक्ष्यते प्रायश्चित्तमिति भावः ।।

**एष ह वा उदक्प्रवणो यज्ञः यत्रैवंविद् ब्रह्मा भवति । एवंविदँ ह वा एषा ब्रह्माणमनु गाथा - यतो यत आवर्तते तत्तद्गच्छति ।। ९ ।।**

**मानवः । ब्रह्मैवैक ऋत्विक्कुरूनश्वाभिरक्षति ।। एवंविद्ध वै ब्रह्मा यज्ञं यजमानँ सर्वाँश्चर्त्विजोऽभिरक्षति । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ।। १० ।।**

।। इति सप्तदशः खण्डः ।।

।। इति चतुर्थप्रपाठकः समाप्तः ।।

**प्र. - एष ह भवति । उदक्प्रवणः -** [1]उत्तरमार्ग[1] प्रतिपत्तिहेतुः इत्यर्थः । **एवं विदं......गाथा ।** एवंविदं ब्रह्म नामानं ऋत्विजम् अनुगता **एषा -** वक्ष्यमाणा गाथा भवति इत्यर्थः ।

**यतो यत आवर्तते तत्तद्गच्छति । यतो यतः -** यत्रयत्र यज्ञस्य क्षतम् **आवर्तते -** आसमन्ताद्व्याप्य वर्तते । आ ईषद्वा वर्तते । [2]तत्सर्वं[2] **गच्छति -** समाधत्ते इत्यर्थः ।

क इत्यत्राह - **मानवः** इति । **मानवः -** मननशीलः ब्रह्माख्य ऋत्विक् इत्यर्थः । **ब्रह्मैवैकः......अभिरक्षति । अश्वा -** बडवा आरूढान् योधान् यथा रक्षति एवमेक एव ब्रह्मा ऋत्विक् **कुरून् -** कर्तॄन् ऋत्विजो रक्षति ।

**एवं विद्ध......रक्षति ।** अत्र ब्रह्मणः वेदनेन यजमानादीनाम् ऋत्विजाञ्च रक्षणप्रतिपादनेन उद्गातृप्रभृतीनां वेदनानियमः सूच्यते इति, 'अङ्गेषु यथाश्रयभावः' इत्यधिकरणे 'दर्शनाच्च' (ब्र.सू.३-३-६४) इति सूत्रितम् । उक्तब्रह्मवेदनस्तुतिं प्रयोजनेन उपसंहरति **तस्मात्......नानेवंविदम् ।** द्विरुक्तिः अध्यायसमाप्त्यर्था ।।

**।। इति चतुर्थप्रपाठकप्रकाशिका ।।**

**आ.भा. - एष ह वा** इत्यादि । एषो वा यत **उदक्प्रवणः -** उत्तरमार्गप्राप्तिकारणं भवति **यत्र -** यस्मिन् यज्ञे **एवंवित् -** लोकसारभूतव्याहृतिज्ञानयुक्तो भवति ब्रह्म **एवंविदं -** यथोक्तव्याहृतिज्ञं ब्रह्माणम् अनुलक्षीकृत्य **एषा -** वक्ष्यमाणा गाथा भवति **यतो यत** इत्यादि । **यतो यतः -** यत्रयत्र यज्ञस्य क्षतम् **आवर्तते -** आसमन्तात् व्याप्य वर्तते अथवा ईषदर्थक आकारः ईषदपि अल्पमपि क्षतं भवति तत तत्सर्वं **मानवः -** मननशीलः ब्रह्मा **गच्छति -** व्याहृतिबलेन समाधानं करोति ।

यथा **अश्वा -** बडवा स्वोपरि आरूढान् योधान् शत्रुभ्योऽपि **रक्षति -** परिपालयति । एवमेव एकः ब्रह्मैव ऋत्विक् **कुरून् -** यज्ञकर्तॄन् **ऋत्विजः रक्षति -** परिपालयति यज्ञक्षतादिना । **एवंविद्ध ह वै -** व्याहृतिज्ञानयुक्त एव ब्रह्मा यज्ञं तत्फलभोक्तारं यजमानं सर्वानेव यज्ञसम्पादकान् **ऋत्विजोऽभिरक्षति -** परिपालयति यस्मात् कारणात् एवंवित् ब्रह्मा सर्वान् रक्षति तस्मात् कारणात् एवंविदमेव ब्रह्माणं

---

1. अर्चिराद्युत्तरमार्ग - अ,आ । 2. तत्सर्व मानवः मननशीलो ब्रह्मा इत्यधिकः पाठः - क,ख ।

यथोक्तयज्ञे **कुर्वीत** - कुर्यात्, यजमानो नानेवंविदम् । कथमपि व्याहृतिज्ञानरहितं ब्रह्माणं न कुर्यात् नानेवंविदं कुर्यात् । द्विर्वचनम् अध्यायसमाप्तिं सूचयति ।।

**।। इति चतुर्थप्रपाठकआनन्दभाष्यम् ।।**

**सु. -** ब्रह्मणा च प्रायश्चित्तादिविज्ञानवता एव भाव्यमिति नियमयन्नाह **एषः** इत्यादि । **एष ह वा यज्ञः उदक्प्रवणः -** उदीच्यां स्वरसगतिः, अक्लेशेन उत्तरं गमयिता । स्तूयते च इत्थम् । अनुपहतफलसाधनभावः इति यावत् । कोऽसौ एवंभूतः ? यत्रैवंविद्ब्रह्मा भवति । एवंविदं **ब्रह्माणमनु गाथा -** च एषा स्तुतिः । का सा ? **यतो यतः** इत्यादिः । यतो यतः क्षतात् यज्ञ **आवर्तते -** प्रत्यावर्तते - न प्रचलति पुरतः प्रतिहतो भवतीति यावत् । तत्तत्क्षतं प्रति एष ब्रह्मा गच्छति प्रायश्चित्तेन, प्रायश्चित्तेन क्षतं सन्दधातीति यावत् ।

**मानवः -** मौनैकपरो ब्रह्मैक एवं ऋत्विक् **कुरून् -** कर्तॄन् अन्यान् होत्रादीन् रक्षति, अश्व इव आरूढान् युद्धे । एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति प्रामादिकात् क्षतात् । तस्मात् एवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम् । आदरात् द्विरुक्तिः अध्यायसमाप्त्यर्थे वा ।।

**।। इति चतुर्थप्रपाठकसुबोधिनी ।।**

**।। चतुर्थप्रपाठकभाष्यम् समाप्तम् ।।**



# पञ्चमः प्रपाठकः

## प्रथमः खण्डः

### [ज्यैष्ठ्यश्रैष्ठ्यगुणकमुख्यप्राणोपासनम्]

**यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ।। १ ।।**

**प्र.** - प्राणविद्या प्रस्तूयते - **यो ह......भवति ।** ज्येष्ठत्वश्रेष्ठत्वगुणकं प्राणं यो वेद, स तत्क्रतुन्यायेन स्वयमपि ज्येष्ठश्च श्रेष्ठश्च भवति इत्यर्थः । ज्येष्ठत्वं - [1]वृद्धत्वम्[1] । 'वृद्धस्य च' (पा.सू.५-३-६२) इति वृद्धशब्दस्य ज्यादेशविधानात् । श्रेष्ठत्वं प्रशस्ततमत्वं 'प्रशस्यस्य श्रः' (पा.सू.५-३-६०) इति प्रशस्यशब्दस्य श्रादेशविधानात् । एवं फलप्रदर्शनेन पुरुषमभिमुखीकृत्याह **प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च । वाव** शब्दोऽवधारणार्थः गर्भस्थपुरुषे प्राणव्यापारप्रवृत्यनन्तरभावित्वात् इन्द्रियप्रवृत्तेः प्राणस्य इन्द्रियापेक्षया ज्यैष्ठ्यम् । इन्द्रियव्यापाराणां सर्वथा एतदधीनत्वात् श्रैष्ठ्यञ्च ।।

**आ.भा.** - प्राणो वाव संवर्ग इत्यादिना बहुशः प्राणस्य श्रेष्ठत्वमतीताध्याये प्रतिपादितम् इति कथं प्राण इन्द्रियान्तरापेक्षया ज्येष्ठः श्रेष्ठश्च इति प्रतिपादनाय पञ्चमाध्यायः प्रवर्तते ।

**यो ह वै** इत्यादि । **यः** - खलूपासकः प्राणम् इन्द्रियान्तरापेक्षया ज्येष्ठं वयसा, श्रेष्ठं च गुणैः **वेद** - जानाति ज्येष्ठश्रेष्ठगुणगणसमन्वितं प्राणम् उपास्ते । यदैव जीवो गर्भे आगच्छति तस्मिन्नेवावसरे प्राणस्य वृत्तिलाभो भवति । अन्यथा गर्भो न विवर्धेत, प्रत्युत विनष्टः स्यात् इतरेन्द्रियाणां चक्षुरादीनां वृत्तिलाभस्तु तत्तत्स्थाननिष्पत्तौ सत्यामेव भवति । तस्मात् प्राणस्य वागाद्यपेक्षया ज्येष्ठत्वं श्रेष्ठत्वं च भवति ।

यः खलु ज्येष्ठत्वश्रेष्ठत्वगुणसमन्वितं प्राणं विजानाति स स्वयमपि ज्येष्ठः श्रेष्ठश्च भवति । ज्येष्ठत्वं वृद्धत्वं, श्रेष्ठत्वं प्रशस्ततमत्वम् इति ।

यथोक्तप्रकारेण फलप्रदर्शनेन उपासकम् अभिमुखीकृत्याह - **प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चेति ।**

**सु.** - उपदिष्टं प्रसङ्गतो यज्ञस्य क्षते प्रायश्चित्तम् । अथ कर्म यज्ञादिप्रकृतं वा उपासनं प्राणसमृद्धिसापेक्षमिति प्राणविद्या प्रस्तूयते । **यो** नाम ज्येष्ठत्वश्रेष्ठत्वगुणाभ्याम्

---

1. वृद्धतमत्वम् - क ।

उपास्ते स ज्येष्ठः श्रेष्ठश्च इह भवति । फलमुखोऽयम् आरम्भः विद्यायां सपदि आभिमुख्यसम्पादनाय । कोऽयम् उक्तगुणसम्पन्नः, यस्य एवम् उपासनेन स्वयमपि एवं स्यात् ? **प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च** - प्राणं ज्येष्ठत्वश्रेष्ठत्वगुणाभ्याम् उपासीत इत्येतत् । यद्यपि आहंकारिकतया प्राथम्यम् इन्द्रियेषु । अथापि गर्भत एव शरीरे प्राणवृत्तेः प्राथम्यात् प्राणो ज्येष्ठः इतरेभ्यः इन्द्रियेभ्यः ।।

[वाचः वसिष्ठत्वम्]

**यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति । वाग्वाव वसिष्ठः ।। २ ।।**

**प्र. - यो......भवति । स्वानां** - ज्ञातीनां मध्ये वसिष्ठो भवति इत्यर्थः । को वसिष्ठ इत्यत्राह **वाग्वाव वसिष्ठः** । अतिशयेन वसुमान् वसिष्ठः । वाग्मी हि लोके अतिशयेन वसुमान् भवति । अतश्च वसुमत्तासम्पादकसद्व्यवहारजनकत्वं वाचः वसिष्ठत्वमिति भावः ।।

**आ. भा. - यो ह वै वसिष्ठम्** इत्यादि । य खलु वसिष्ठं - अतिशयेन वसुमन्तं धनवन्तं **वेद** - विजानाति स स्वयमपि **स्वानां** - ज्ञातीनां मध्ये **वसिष्ठः** - वसुमान् भवति । दृश्यते च लोके वचनपटुः अतिशयेन वसुमान् भवति ।। कस्तर्हि वसिष्ठः तत्राह **वाग्वाव** इति । **वाग्वाव वसिष्ठः** - धनवत्वसम्पादकसद्व्यवहारजनकत्वमेव वचसो वसिष्ठत्वमिति ।।

**सु.** - अथ श्रैष्ठ्यम् उपपादयितुं वागादीनां विशेषं प्राणे सङ्गमयन्ती श्रुतिः तासां विशेषं श्रावयति प्रथमम् **यो ह वै** इत्यादिना । न तु वसिष्ठत्वादिना वागाद्युपासनाविधाने प्रवर्तते । **स्वानां** - ज्ञातीनां मध्ये **वसिष्ठः** - अतिशयेन वसुमान् भवति, यः वसिष्ठम् उपास्ते । **को वसिष्ठः ? वाग्वै वसिष्ठः** - वाचा हि प्रगल्भया वसुमान् भवति - तद्वसिष्ठत्वं नाम अतिशयो वाचः ।।

[चक्षुषः प्रतिष्ठात्वम्]

**यो ह वै प्रतिष्ठां वेद, प्रति ह तिष्ठत्यस्मिँश्च लोकेऽमुष्मिँश्च, चक्षुर्वाव प्रतिष्ठा ।। ३ ।।**

**प्र. - यो......अमुष्मिंश्च** । ह शब्दः प्रसिद्धौ । अत्र च अमुत्र च **प्रतितिष्ठति** - प्रतिष्ठावान् भवति इत्यर्थः । का तर्हि प्रतिष्ठा इत्यत्राह - **चक्षुर्वाव प्रतिष्ठा** । 'चक्षुषा हि समे दुर्गे च प्रतितिष्ठति' (बृ.उ.८-१-३) इति बृहदारण्यके [1]श्रवणात्[1] प्रतिष्ठासम्पादकसमविषमभूतलप्रदर्शकत्वमेव चक्षुषः प्रतिष्ठात्वम् ।।

**आ.भा. - यो ह वै प्रतिष्ठाम्** इत्यादि । अत्र ह वै शब्दः प्रसिध्यर्थकः **यः** उपासकः प्रतिष्ठां नेत्रं **वेद** - विजानाति, उपासनं करोति इत्यर्थः सः **अस्मिन्** - मर्त्यलोके **अमुष्मिन्** - परलोके च **प्रतितिष्ठति** - भवति इत्यर्थः । का तर्हि प्रतिष्ठा यदुपासनम् उक्तफलकम् । तत्राह **चक्षुर्वाव** प्रतिष्ठा । यस्मात् चक्षुषा मार्गादिकं पश्यन् समे विषमे च प्रतितिष्ठति तस्मात् प्रतिष्ठा चक्षुरेव इति ।।

**सु. - अस्मिंश्चामुष्मिंश्च लोके प्रतितिष्ठति** - स्थिरीभवति, न प्रस्खलति, इहामुत्र च न प्रच्यवति पथः यः प्रतिष्ठाम् उपास्ते। का प्रतिष्ठा ? **चक्षुर्वाव प्रतिष्ठा** - असति चक्षुषि अप्रतिष्ठितः पथः प्रच्यवति । श्रूयते चान्यत्र 'चक्षुषा हि समे दुर्गे च प्रतितिष्ठति' इति (बृ.उ. ८-१-३) ।।

**[श्रोत्रस्य सम्पत्त्वम्]**

**यो ह वै संपदं वेद, सँ हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च । श्रोत्रं वाव सम्पत् ।। ४ ।।**

**प्र. - यो......मानुषाश्च । अस्मै** - उपासकाय कामाः सम्पद्यन्ते इत्यन्वयः । का तर्हि सम्पत् इत्यत्राह **श्रोत्रं वाव सम्पत्** । 'श्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः' (बृ.उ.८-१-४) इति बृहदारण्यके समानप्रकरणे श्रवणात् सम्पद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसम्पादकत्वमेव श्रोत्रस्य सम्पत्त्वम् ।

**आ.भा. - यो ह वै सम्पदम्** इत्यादि । यः खलु **सम्पदं वेद** - सम्पदः उपासनं करोति, **अस्मै** - उपासकाय कामाः **देवाः** - देवसम्बन्धिनः **मानुषाश्च** - मनुष्यसम्बन्धिनः

---

1. समानप्रकरणे श्रवणात् - अ,आ,क,ख ।

सर्वे सम्पद्यन्ते प्राप्ताः भवन्ति इत्यर्थः । तर्हि सम्पदा कस्य ग्रहणम् ? तत्राह - **श्रोत्रं वाव सम्पत्** इत्यादि । श्रोत्रेण हि शब्दराशयः वेदाः गृह्यन्ते, वेदार्थज्ञानं चापि भवति तदनन्तरं कर्मानुष्ठानात् तत ईप्सितप्राप्तिः इति परम्परया कामप्रापकत्वात् श्रोत्रस्य सम्पत्त्वमिति ।।

**सु.** - अस्मै कामाः मानुषाश्च दैवाश्च सम्पद्यन्ते, यः सम्पदं उपास्ते । का सम्पत् ? **श्रोत्रं वाव सम्पत्** - सकलसम्पत्तिसाधनावबोधनवेदादिश्रवणसाधनतया सम्पत्ता श्रोत्रस्य ।।

[मनसः आयतनत्वम्]

**यो ह वा आयतनं वेद, आयतनँ ह स्वानां भवति । मनो ह वा आयतनम् ।। ५ ।।**

**प्र. - यो......आयतनम्** । स्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वमेव मनसः आयतनत्वम् ।।

**आ.भा. - यो ह वा आयतनम्** इत्यादि । यः खलु आयतनं मनो वेद मनस उपासनं करोति, स उपासकः **स्वानां** - ज्ञातीनां **आयतनम्** - आश्रयो भवति । किं तर्हि आयतनम् ? तत्राह - **मनो वा आयतनम्** इन्द्रियोपहृतस्रक्चन्दनादिविषयज्ञान-लक्षणभोगायतनत्वेन मनसः आयतनत्वमिति ।।

**सु.** - आयतनवान् भवति स्वानां मध्ये यः आयतनम् उपास्ते, किम् आयतनम् ? **मनो ह वा आयतनम्** - सर्वभोगायतनत्वात्, सत्यपि इन्द्रियेषु अन्येषु मनसा हि शून्यो न सुखम् अश्नुते, तन्मन एव मुख्यम् आयतनं भोगस्य इति आयतनम् उच्यते । वसिष्ठत्वप्रतिष्ठात्व-सम्पत्त्वायतनत्वानि क्रमात् वागादीनां विशेषाः ।।

[मुख्यप्राणश्रैष्ठ्यप्रतिपादिकाख्यायिका]

**अथ ह प्राणा अहँश्रेयसि व्यूदिरेऽहँ श्रेयानस्म्यहँ श्रेयानस्मीति । ते ह प्राणाः प्रजापतिं पितरमेत्योचुः, भगवन् ! को नः श्रेष्ठः इति ।। ६ ।।**

**प्र.** - मुख्यप्राणस्य श्रैष्ठ्यसम्पादनाय आख्यायिकामाह **अथ ह......अस्मीति । अथ** शब्दः [1]आख्यायिकोपक्रमे[1] । **अहं श्रेयसि** - स्वश्रेयसि निमित्ते विषये वा । **व्यूदिरे** - अहं श्रेयानस्मि, अहं श्रेयानस्मि इति विवादं चक्रुः इत्यर्थः । **ते श्रेष्ठ इति** । स्पष्टोऽर्थः ।।

**आ.भा.** - मुख्यप्राणे श्रेष्ठतां दर्शयितुम् आख्यायिकामाह - **अथ** इत्यादि । **अथ** - अनन्तरं प्राणवागादयः **अहंश्रेयसि** - स्वश्रेयसि निमित्ते **व्यूदिरे अहं श्रेयानस्मि, अहं श्रेयानस्मि** इत्येवंरूपेण विवादं कृतवन्तः इति । तदनन्तरं निर्णयाय **ते प्राणाः** - वागादयः **पितरं** - सत्यलोकप्रतिष्ठितब्रह्माणम् **एत्य** - तत्समीपं गत्वा **ऊचुः** - उक्तवन्तः । **भगवन् ! नः** - अस्माकं मध्ये **कः श्रेष्ठः ?**

**सु.** - सर्वोऽपि अयम् इन्द्रियस्य महिमा प्राणस्य एवेति प्राणश्रैष्ठ्यम् उपपादयन् आख्यायिकां प्रस्तौति **अथ** इति । सुखप्रतिपत्तये च आख्यायिकाकल्पनम् । अथ ह पुरा जातु **प्राणाः** - वागादयः, **अहंश्रेयसि** - स्वस्वश्रेयसि, **व्यूदिरे** - व्यवदन्, विवादम् अकुर्वन् **अहं श्रेयानस्मि अहं श्रेयानस्मीति** । विवादस्यान्तं गन्तुं **ते ह प्राणाः** समेत्य **प्रजापतिं पितरम्** अस्य सर्वस्य **ऊचुः । भगवन् ! को नः श्रेष्ठ इति** ।।

**तान् होवाच, 'यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत, स वः श्रेष्ठः' इति ।। ७ ।।**

**प्र.** - **तान्......श्रेष्ठ इति । वः** - युष्माकं मध्ये यस्मिन् उत्क्रान्ते शरीरम् अतिशयेन पापिष्ठं अतिहेयमिव दृश्येत, स वः श्रेष्ठः इत्युवाच इत्यर्थः ।।

**आ.भा.** - ततो ब्रह्मा व्यतिरेकमुखेन **तान्** प्रोवाच - अस्मिन् प्राणे शरीरात् निर्गते सति इदं शरीरं **पापिष्ठतरमिव भवति** - अतिशयेन अशोभनं भवति **स वः** - युष्माकं मध्ये सर्वश्रेष्ठ इति ।।

**सु.** - **तान् होवाच** प्रजापतिः - किं वचनेन परोक्षेण, अपरोक्षेणैव प्रमाणेन अस्य विवादस्यान्तः सुगमो नाम, **यस्मिन् उत्क्रान्ते** युष्मासु शरीरम् इदं **पापिष्ठतरमिव** - अतिशयेन दुष्टम् अस्पृश्यमिव लक्ष्यते, **स वः श्रेष्ठ इति** ।।

---

1. आख्योयिकोपक्रमार्था - अ,आ ।

[वाचः पराजयः]

**सा ह वागुच्चक्राम[१] । सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकत ऋते मज्जीवितुमिति यथा कला अवदन्तः, प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ।। ८ ।।**

**प्र. - सा ह वागुच्चक्राम । सा -** प्रसिद्धा वाक् स्वश्रैष्ठ्यपरीक्षणाय शरीरात् उत्क्रान्तवती इत्यर्थः । **सा संवत्सरं......जीवीतुमिति । सा -** वाक् एकं संवत्सरं **प्रोष्य -** प्रवासं कृत्वा पुनरागत्य **मदृते -** मां विना जीवितुं यूयं **कथमशकत -** कथं शक्ता इति इतरान् प्राणान् उक्तवती । इतरे प्राणाः प्रत्यूचुः **यथा कलाः......एवमिति । यथा कलाः -** मूकाः वागिन्द्रियव्यापाररहिता अपि इतरैः प्राणैः तत्कार्यं कुर्वन्तः जीवन्ति, एवं वयमपि अजीविष्म इति प्रत्यूचुः इत्यर्थः । **प्रविवेश ह वाक् ।** एवमुक्ता वाक् स्वस्य श्रैष्ठ्यं नास्ति इति निश्चित्य देहं प्रविष्टवती इत्यर्थः ।।

**आ.भा. - सा ह वागुच्चक्राम** इत्यादि । तदनन्तरं स्वस्मिन् श्रेष्ठतासम्पादनाय प्रसिद्धा वाक् शरीरात् निर्गता शरीरं परित्यज्य अन्यत्र गता । तदनन्तरं **संवत्सरं** वर्षं यावत्, **प्रोष्य -** अन्यत्र स्थित्वा **पर्येत्य -** पुनः आगत्य **उवाच -** उक्तवती । किमिति उवाच तत्राह - **कथम्** इत्यादि । **कथं -** केन प्रकारेण **मदृते -** मदीयव्यापारमन्तरेण यूयं **जीवितुं -** स्वकीयात्मानं धारयितुम् **अशकत -** शक्तवन्तः इति । तदनन्तरं वाग्व्यतिरिक्ताः प्राणाः प्रोचुः **यथा -** येन प्रकारेण बालाः मूकाः **अवदन्तः** वाग्व्यवहारम् अकुर्वाणा अपि **प्राणेन प्राणन्तः -** प्राणनक्रियां कुर्वन्तः, चक्षुषा रूपादिकं **पश्यन्तः श्रोत्रेण -** शब्दग्राहकेण इन्द्रियेण **शृण्वन्तः** शब्दविज्ञानं सम्पादयन्तः **मनसा -** अन्तःकरणेन **ध्यायन्तः -** सर्वकरणचेष्टां सम्पादयन्तः जीवन्ति एवमेव वयमपि भवदृते जीवाम, इति श्रुत्वा स्वस्याः कनिष्ठत्वं ज्ञात्वा वाक् तस्मिन् शरीरे प्रविवेश विहाय विवादम् ।।

**सु. - सा ह वागुच्चक्राम -** आत्मनः श्रैष्ठ्यम् अवधारयितुम् अस्मात् शरीरात् । **सा संवत्सरं प्रोष्य पर्येत्य उवाच** अन्यान् प्राणान् । कथं **मदृते जीवितुमशकत -** जीवितुं शक्ताः यूयमिति । अथ अपरे प्रत्यूचुः **यथा** लोके **कलाः** मूकाः **अवदन्तो** वाचा वाग्व्यापारहीनाः, **प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा** जीवन्ति तथैव वयमिति । श्रुत्वा एतत् अपगतमदा **प्रविवेश वाक् ।** अविशिष्टम् इतरत् ।।

---

१. उच्चक्राम इति -वागभिमानिनी देवता परीक्षार्थमेकस्मिन् शरीरात् वागिन्द्रियम् अनधिष्ठाय अपगता इत्यर्थः ।

**चक्षुर्होच्चक्राम । तत् संवत्सरं प्रोष्य पर्येत्योवाच 'कथमशकत ऋते मज्जीवितु'मिति । यथा अन्धा अपश्यन्तः, प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा - एवमिति । प्रविवेश ह चक्षुः ।। ९ ।।**

**श्रोत्रं होच्चक्राम । तत् संवत्सरं प्रोष्य पर्येत्योवाच, 'कथमशकत ऋते मज्जीवितु'मिति । यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, ध्यायन्तो मनसैवमिति । प्रविवेश ह श्रोत्रम् ।। १० ।।**

**प्र. - चक्षुर्होच्चक्राम** । चक्षुरुत्क्रान्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ।।

**आ.भा. -** एवं क्रमेण **चक्षुर्होच्चक्राम** इत्यारभ्य **प्रविवेश ह मनः** एततपर्यन्तं मन्त्राः व्याख्येयाः ।। ९,१०,११ ।।

**मनो होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच 'कथमशकत ऋते मज्जीवितु'मिति । यथा बाला अमनसः, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेणैवमिति । प्रविवेश ह मनः ।। ११ ।।**

**प्र. - मनो होच्चक्राम** इत्यादि । **अमनसः -** अप्रौढमनसः ।।

[प्राणस्य ज्येष्ठत्वश्रेष्ठत्वकथनम्]

**अथ ह प्राण उच्चिक्रमिष्यन्, स यथा सुहयः पड्वीशशङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदत् । तँ हाभिसमेत्योचुः, 'भगवन् ! एधि । त्वं नः श्रेष्ठोऽसि, मोत्क्रमी'रिति ।। १२ ।।**

**प्र. - अथ ह......समखिदत् । सः -** मुख्यः प्राणः **उच्चिक्रमिष्यन् -** उत्क्रमितुम् इच्छन्, यथा शोभनः अश्वः परीक्षार्थम् अश्वारूढेन ताडितः **पड्वीशशङ्कून् -** पादबन्धनकीलकान् **संखिदेत् -** उत्पाटयेत् एवमितरान् प्राणान् स्वस्वस्थानेभ्यः उत्पाटितवान् इत्यर्थः । **तं ह......मोत्क्रमीः इति** । हे **भगवन् ! -** पूजार्ह ! **त्वमेधि** स्वामीति शेषः । अस्तेः लोटि मध्यमपुरुषैकवचनम् । भव इत्यर्थः । **नः -** अस्माकं मध्ये त्वमेव **श्रेष्ठोऽसि** । त्वमुत्क्रमणं माकार्षीः इति इतरे प्राणाः तम् आगत्य ऊचुः इत्यर्थः ।।

**आ.भा. - अथ ह** इत्यादि । **अथ** - वागादीनां परीक्षणानन्तरं **सः** - मुख्यः प्राणः **उच्चिक्रमिषन्** - कार्यकारणसंघातात् उत्क्रमितुम् इच्छन्, **यथा** - येन प्रकारेण **सुहयः** - शोभनः अश्वः परीक्षार्थम् अश्वारूढेन कशया आहतः **पड्वीशशङ्कून्** - पादबन्धनकीलकान् **संखिदेत्** - समुत्पाटयेत् **एवम्** उक्तप्रकारेण मुख्यप्राणोऽपि **इतरान् प्राणान्** - वागादीन् **समखिदत्** - स्वस्वस्थानेभ्यः चालितवान्। तदनन्तरं स्वस्वस्थानात् प्रचलिताः सन्तः मुख्यं प्राणम् **अभिसमेत्य** - तत्समीपम् आगत्य **ऊचुः** - उक्तवन्तः । हे **भगवन् !** पूजनीय ! **त्वमेधि** - स्वामी भव । त्वमेव अस्माकं श्रेष्ठोऽसि । **मोत्क्रमीः** - शरीरात् उत्क्रमणं माकार्षीः इति ।।

**सु.** - अथ प्राणः **उच्चिक्रमिष्यन्** - उत्क्रान्तुम् इच्छन्नेव, उत्क्रमणाय प्रवृत्तमात्रः एव, **इतरान्** - वागादिप्राणान् **समखिदत्** - तत्तत्स्थानात् व्यचालयत् । **यथा सुहयः** उच्चिक्रमिष्यन् सपदि **पड्वीशशङ्कून्** - पादबन्धनकीलकान् **संखिदेत्** - उत्पाटयेत् । तदा तमितरे प्राणाः वागादयः समेत्य **ऊचुः** भगवन् **एधि** नः स्वामी, **त्वं नः श्रेष्ठोऽसि मा उत्क्रमीः** इतः इति ।।

**अथ हैनं वागुवाच 'यदहं वसिष्ठाऽस्मि, त्वं तद्वसिष्ठोऽसी'ति । अथ हैनं चक्षुरुवाच, यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति ।। १३ ।।**

**अथ हैनँ श्रोत्रमुवाच, यदहँ सम्पदस्मि, त्वं तत्सम्पदसीति । अथ हैनं मन उवाच । यदहमायतनमस्मि, त्वं तदायतनमसीति ।। १४ ।।**

**प्र.** - अथेतरे[१] प्राणाः विशः करानिव राज्ञे, मुख्यप्राणाय स्वस्वगुणान् अर्पितवन्त इत्याह - **अथ हैनं वसिष्ठोऽसीति । यत्** - येन वाग्मिनो वसुमत्तासम्पादकत्वलक्षणेन गुणेन **अहं वसिष्ठाऽस्मि, त्वं तत्** - तेन गुणेन **वसिष्ठोऽसि** इत्यर्थः । मदीयगुणस्य त्वदधीनत्वात् त्वदीयः एव स गुणः इति भावः । उक्तञ्च व्यासार्यैः 'अहं यत्स्वकार्यकरणसमर्थाऽस्मि, तस्य त्वदधीनत्वात् तवैव तत्कार्यसामर्थ्यमित्यर्थः' इति । एवमुत्तरत्रापि द्रष्टव्यम् ।।

---

१. तथा च श्रुतिः कौषीतकीनाम् - 'जीवति वागपेतो मूकान् हि पश्यामो जीवति चक्षुरपेतोऽन्यान् हि पश्यामो जीवति श्रोत्रापेतो बधिरान् हि पश्यामो जीवति मनोऽपेतो बालान् हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्नः '।। (कौ.उ.३-३) इत्याद्याः ।।

**आ.भा. - अथ** इत्यादि । **अथ -** तदनन्तरं वाक् एनं समुवाच - हे मुख्यप्राण ! **यदहं वसिष्ठोऽस्मि -** येन वसुमत्वसम्पादकत्वलक्षणेन गुणेन वसिष्ठोऽस्मि **त्वं** तद्गुणेन **प्रतिष्ठासि** । अर्थात् मयि ये गुणाः सन्ति ते त्वदधीनाः एव । अतः सर्वगुणानाम् आश्रयः त्वमेव असि इति । एवंक्रमेण चक्षुरादिष्वपि योज्यम् ।।

**सु. -** अथ अपगताभिमानाः प्राणस्वामिकताम् आत्मनि अवधृत्य इदम् अवोचन् । तत्र वागुवाच, **यत् -** यस्मात् निमित्तात् अहं वसिष्ठा अस्मि, **तत् -** तस्मात् निमित्तात् **त्वमसि वसिष्ठः** । येन गुणयोगेन वसिष्ठता मयि स गुणयोगः तवैव । तत् वसिष्ठताऽपि तवैव इति भावः । इतरदविशिष्टम् ।।

**न वै वाचो, न चक्षूँषि, न श्रोत्राणि, न मनाँसीत्याचक्षते । प्राणा इत्येवाचक्षते । प्राणो ह्येवैतानि सर्वाणि भवन्ति ।। १५ ।।**

**।। इति प्रथमः खण्डः ।।**

**प्र. - न वै......सर्वाणि भवन्ति ।** लौकिकाः वा आगमज्ञाः वा वागादीनि इन्द्रियाणि सर्वाणि वागादिशब्दैः न व्यवहरन्ति; अपि तु प्राणशब्देनैव व्यवहरन्ति । तत् कस्य हेतोः ? प्राणाधीनसत्ताकत्वात् इतरेषाम् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इत्युक्तेः । प्राणाधीनसत्ताकत्वात् इतरेषाम् इन्द्रियाणां सर्वाणि इन्द्रियाणि प्राणा एव भवन्ति इत्यर्थः ।

एतत्खण्डान्तर्गत[1]वाक्यविषय[1]कम् अधिकरणम् उपन्यस्यते । गुणोपसंहारपादे - छान्दोग्यवाजसनेयकयोः कौषीतकिनामुपनिषदि च दशमेऽध्याये 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति' इत्यारभ्य प्राणविद्या पठ्यते । तत्र सर्वत्र प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यगुणकत्वं वाक्चक्षुश्श्रोत्रमनसां वसुमत्तासम्पादकत्व-समविषमभूतलादिप्रदर्शकत्व-सम्पद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसम्पादकत्व-स्रक्चन्दनादि - विषयज्ञानरूपभोगायतनत्वलक्षणवसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वरूपगुणवत्त्वम्, वागादीनाञ्च श्रैष्ठ्यविषयपरस्परविवादेन ब्रह्मसभोपसर्पणम्, 'यस्मिन् व उत्क्रान्ते शरीरानवस्थितिः सः वः श्रेष्ठः' इति ब्रह्मवचनम्, तत्परिचिक्षिषया वागादीनाम् एकैकस्य शरीरात् उत्क्रम्य पर्यटनम्, तस्मिन् शरीरस्य इन्द्रियाणाञ्च यथापूर्वम् अवस्थानम्, प्राणस्य उत्क्रमणप्रवृत्तौ तेषां विशरणम्, ततो भीतानां वागादीनां 'मा उत्क्रमीः, त्वं नः श्रेष्ठः' इति मुख्यप्राणं प्रति प्रार्थनम् इत्येतत् सर्वं क्रमेण वर्णितम् ।

---

1. वाग्विषयक - क ।

कौषीतकीशाखायां तु छान्दोग्यवाजसनेयकवत्, 'यदहं वसिष्ठाऽस्मि त्वं तद् वसिष्ठोऽसि' इत्यनेन प्रकारेण प्राणे वागादिगतवसिष्ठत्वादिसमर्पणं नोक्तम् । अतो वागादिगतवसिष्ठत्वादेः प्राणाधीनत्वाप्रतीत्या वागादीनां स्वातन्त्र्यप्रतीतेः छान्दोग्यवाजसनेयकाम्नातप्राणविद्यातः कौषीतक्याम्नातप्राणविद्यायाः भेदप्रतिभोद्गमः तथा तस्यामेव उपनिषदि चतुर्थेऽध्याये, 'अथातो निश्रेयसादानं, सर्वा वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुः । तद्दारुभूतं शिश्ये । अथैनं वाक् प्रविवेश। तद्वाचाऽवदत् शिश्य एव । अथैनच्चक्षुः प्रविवेश । तद्वावाचाऽवदत् चक्षुषा पश्यत् । शिश्य एव । अथैनत् श्रोत्रं प्रविवेश । तद्वाचाऽवदत् चक्षुषा पश्यत् श्रोत्रेण शृण्वन् शिश्य एव । अथैनं मनः प्रविवेश । तद्वाचाऽवदच्चक्षुषा पश्यच्छ्रोत्रेणशृण्वन् मनसा ध्यायत् शिश्य एव । अथैनत्प्राणः प्रविवेश तत्तत एव समुत्तस्थौ । तद्देवाः प्राणे निःश्रेयसं विजित्य प्राणमेव प्रज्ञात्मानमभिसम्भूय' (कौ.उ.२-१४) इति प्राणराहित्यदशायामपि वागादीनां स्वकार्यकरत्वप्रदर्शनेन छान्दोग्यैक्याप्रतीतेः इति पूर्वपक्षं कृत्वा - बहुसारूप्यप्रतीतौ किञ्चिद्वैरूप्यस्य प्रत्यभिज्ञाविरोधित्वाभावात् विद्यैक्यमिति 'सर्वाभेदादन्यत्रेमे' (ब्र.सू.३-३-१०) इति सूत्रेण सिद्धान्तितम् । सर्वाभेदात् । प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य तिसृषु अपि शाखासु अभेदात् शाखान्तरविद्यायां शाखान्तरविद्यागतगुणोपसंहारः कर्तव्यः इति सूत्रार्थः । प्रकृतमनुसरामः ।।

**आ.भा. - न वै वाचो, न** इत्यादि । लौकिकाः पुरुषाः आगमज्ञातारः वागादीनि इन्द्रियाणि वागादिशब्दैः न व्यवहारं कुर्वन्ति, किन्तु प्राणशब्देनैव तेषामपि व्यवहारं कुर्वन्ति । कुतः ? यस्मात् प्राणाधीनत्वात् इतरेषाम् । अतः प्राणपदेनैव तेषां व्यवहारो भवति इति ।।

**सु. -** यतः प्राणो ह्येव एतानि वागादीनि भवन्ति प्राणाहितशक्तितया प्राणो ह्येव एतानि वागादीनि भवन्ति ; तत एव अभिज्ञाः प्राणाः इति एवशब्देन आचक्षते वागादीन्, न पृथक् वाचो वाच इति न चक्षूंषि चक्षूंषि इति न श्रोत्राणि श्रोत्राणि इति न मनांसि मनांसि इति ।।

## द्वितीयः खण्डः

[मुख्यप्राणस्य अन्नत्वचिन्तनम्]

**स होवाच 'किं मेऽन्नं भविष्यती'ति । 'यत् किञ्चिदिदमाश्वभ्यः आशकुनिभ्य' इति होचुः । तद् वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षम् । न ह वा एवंविदि किञ्चनानन्नं भवतीति ।। १ ।।**

**प्र. - स......भविष्यति** इति । [1]वागादीन्[1] किं मेऽन्नं भविष्यति ? इति मुख्यप्राणः पप्रच्छ इत्यर्थः । **यत् - होचुः ।** श्वशकुनिपर्यन्तसर्वप्राणिनां यदन्नजातम्, तत् तव अन्नजातमिति वागादयः प्रत्यूचुः ।

श्रुतिः स्वेन रूपेणाह - **तद्वा एतदनस्यान्नम् ।** यत्किञ्चित् लोके प्राणिभिः अद्यते तदेतत् **अनस्य -** प्राणस्य अन्नम् । प्राणेनैव तदद्यते इत्यर्थः । **अनो ह वै नाम प्रत्यक्षम् ।** [2]अदनादिविविध[2]चेष्टायुक्तत्वात् प्राणस्य अनः इति प्रत्यक्षं नाम[१] । देवानां परोक्षप्रियत्वात् प्रत्यक्षं अनः इति नाम परित्यज्य प्राणः इति परोक्षेण नाम्ना व्यवहारः । ततश्च अदनचेष्टायाः अपि तदीयत्वात् सर्वप्राणिजातेन अद्यमानम् अन्नं सर्वं तेनैव अद्यते इति प्राणस्य सर्वम् अन्नम् इत्यर्थः । यद्वा - अनः इत्यस्य नकारान्तरयुक्तस्य अन्नत्वेन अन्नस्य अनसम्बन्धित्वात् अनः इत्यस्य प्राणनामत्वस्य प्रत्यक्षत्वात् अन्नं तत्सम्बन्धि इत्यर्थः । अत्र प्राणविद्यानिष्ठेन सर्वप्राण्यन्नादनस्य कर्तुम् अशक्यत्वात् नास्य वाक्यस्य सर्वप्राण्यन्नादनकर्तव्यत्वम् अर्थः । अपि तु सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं कर्तव्यम् इत्यर्थः ।

सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं स्तौति - **न भवतीति ।** प्राणविद्यानिष्ठस्य अभक्ष्यभक्षणदोषः नास्ति इत्यर्थः ।।

**आ.भा. - स होवाच** इत्यादि । **सः -** मुख्यः प्राणः वागादिदेवतां प्रत्युवाच - हे वागादयः ! **मे -** मम प्राणस्य **अन्नं -** अदनीयं किं भविष्यति ? इति पप्रच्छ। यद्यपि अचेतनाः इमे । तथापि चेतनावत्त्वं कल्पयित्वा श्रुतिः वदति इति । ततो वागादयः एवं प्रोचुः - **यत्किञ्चित् आश्वभ्यः आशकुनिभ्यः** तत्सर्वम् अदनीयं तव । अर्थात् श्वशकुनिपर्यन्तं यदन्नजातं तत्सर्वम् अन्नजातं भवतः एव इति । आख्यायिकातः विरम्य श्रुतिः स्वेन रूपेणाह - **तद्वा** इत्यादि - इह लोके यत्किञ्चित् प्राणिभिः भुज्यते तदेतत्सर्वम् **अनस्य -** प्राणस्य **अन्नम् -** भक्ष्यम् । प्राणेनैव सर्वं तत् भुज्यते इति । **अनो ह वै नाम प्रत्यक्षम्,** अनेकप्रकारकचेष्टागुणयुक्तत्वात् प्राणस्य अनः इति प्रत्यक्षं नाम । यस्मात् सर्वप्रकारकचेष्टायुक्तः प्राणः ततोऽदनादिचेष्टायाः अपि प्राणसम्बन्धित्वात् सर्वप्राणिजातेन भुज्यमानम् अन्नं सर्वं प्राणेनैव भुज्यते । प्राणस्य सर्वम् अन्नम् इति भावः । सर्वैः उपभूज्यमानान्ने प्राणान्नत्वोपासनं स्तौति - **न ह वा भवतीति ।** सर्वम् अन्नजातं प्राणस्यैव अदनीयमिति चिन्तकस्य किञ्चिदपि अनन्नं न भवति, अर्थात् प्राणविद्यासम्पन्नस्य भक्ष्याभक्ष्यदोषः न भवति इति ।।

---

१. तथा च श्रूयते - 'परोक्षप्रिया इव हि देवाः' इति ऐतरेयोपनिषदि ।

1. वागादीन् प्रति -अ,आ । 2. सर्वविषय - अ,आ ।

**सु. - स च -** मुख्यः प्राणः लब्धपरिजनः प्राह **किं मेऽन्नं भविष्यतीति ।** इतरे वागादयः ऊचुः, **यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्यः** इति । यदिदम् अद्यते पशुपक्षिपर्यन्तैः सर्वैः प्राणिभिः सर्वमेव तदन्नं तवैव इति । अथ श्रुतिः स्वयमाह - **तद्वा** इत्यादि । तदेतदन्नम् अखिलम् अनस्य । कोऽसौ अनः ? **अनो ह वै नाम प्रत्यक्षम् -** अनः एव उपसर्गयोगेन प्राणः इति व्यपदिश्यते, यस्मादयं सर्वान्नादनादिलक्षणचेष्टासामान्ययुक्तः तस्मात् अस्य अनः इत्येव **प्रत्यक्षं नाम -** साक्षान्नाम । प्राणे सर्वान्नात्तृत्वदृष्टिं स्तौति - **न ह वा एवंविदि** उपासके **किञ्चनानन्नं भवति ।** सर्वम् असौ उपास्यद्वारा अत्ति इव । अभक्ष्यभक्षणदोषः नास्तीति वा स्तूयते ।।

[प्राणस्य वासस्त्वचिन्तनम्]

**स होवाच, किं मे वासो भविष्यतीति । 'आप' इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवति, अनग्नो ह भवति ।। २ ।।**

**प्र. - स.....होचुः ।** 'किं मे वस्त्रं भविष्यति' इति मुख्यप्राणेन इतरे पृष्टाः प्राणाः; 'आपस्ते वस्त्रं भविष्यन्ति' इत्यूचुः । 'आपो वासत्वेन चिन्तनीयाः' इति होचुः इत्यर्थः । **तस्मात्......भवति । तस्मात् -** अपां वासस्त्वादेव **एतत् -** एतस्मिन्नपि काले **अशिष्यन्तः -** भोक्ष्यमाणाः **पुरस्ताच्च उपरिष्टाच्च** भोजनात् प्राक् पश्चाच्च आचमनीयाभिः अद्भिः वासोभिः परिहितं प्राणम् अनग्नं कुर्वन्ति । आचमनीयासु अप्सु वासस्त्वचिन्तनेन, वासोभूताभिः अद्भिः प्राणस्य परिहितत्वात् अनग्नत्वचिन्तनं कुर्वन्ति इत्यर्थः । एवं चिन्तकः तेन चिन्तनेन च स्वयमपि **वासो लम्भुको भवति -** वासोलब्धा भवति, **अनग्नश्च भवति,** तत्क्रतुन्यायेन इति भावः ।।

**आ. भा. - स होवाच** इति । सर्वं तवैव अन्नम् इति श्रुत्वा पुनरपि प्राणः प्रोवाच-हे देवाः ! **किं मे वासः -** वस्त्रं भविष्यति इति ते ऊचुः **आपः -** जलानि **इति** जलमेव ते वासः इत्यर्थः । **तस्मात्** इत्यादि । **तस्मात् -** जलानां वासस्त्वादेव **एतत् -** एतस्मिन् काले भोक्ष्यमाणाः भोजनात् प्राक् भोजनानन्तरं ये आचमनीयजलात्मकेन वाससा आच्छादितं प्राणम् अनग्नं कुर्वन्ति । तथा उपासनकर्ता स्वयमपि **लम्भुकः -** वस्त्रस्य लब्धा भवति **अनग्नश्च भवति** इति ।।

**सु. - स होवाच ।** मुख्यः प्राणः **किं मे वासो भविष्यतीति** । वागादय ऊचुः **आपः** इति । अथ श्रुतिः स्वयमाह - **तस्मात्** इति । यस्मात् आपः एव वासः प्राणस्य तस्मादेव ब्राह्मणाः अशिष्यन्तः **पुरस्तात्** - प्राक् भोजनतः **उपरिष्टाच्च** - पश्चाच्च, **अद्भिः परिदधति** प्राणम् । यदाचामन्ति पूर्वं पश्चाच्च तदापोभिः वासोभिः प्राणस्य परिधानसम्पत्तये इति कल्प्यते । तदाभिः अद्भिः **प्राणो लम्भुको ह वासो भवति** - वाससो लब्धा भवति ; अत एव अनग्नश्च । प्राणविद्यानिष्ठेन प्राणवासस्त्वदृष्टिः अप्सु विधेया इत्युक्तं भवति ।।

[प्राणस्तुत्यर्थफलम्]

**तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच, यद्यप्येनच्छुष्काय स्थाणवे ब्रूयात्, जायेरन्नेवास्मिन् शाखाः, प्ररोहेयुः पलाशानि इति ।। ३ ।।**

**प्र. - तद्ध......उवाच ।** व्याघ्रपत्पुत्राय नाम्ना गोश्रुतये जबालापुत्रः सत्यकामनामा इदं प्राणदर्शनम् उक्त्वा अन्यदपि उवाच इत्यर्थः । किं तत् इत्यत्राह - **यदि......पलाशानि** इति । **एनत्** - प्राणदर्शनं शुष्काय वृक्षायापि यदि ब्रूयात्[1] अस्य वृक्षस्य शाखाः अपि उत्पद्येरन् पत्राणि च प्ररोहेयुः इत्यर्थः ।।

**आ.भा. - तद्धैतत्** इत्यादि । **तदेतत्** - प्राणदर्शनं **वैयाघ्रपद्याय** - व्याघ्रपत्पुत्राय नामतः गोश्रुतये ब्राह्मणाय, जबालायाः पुत्रः नाम्ना सत्यकामः उक्त्वा पुनरप्युवाच - यद्येतत् प्राणदर्शनं **स्थाणवे** - शुष्कवृक्षायापि **ब्रूयात्** - श्रावयेत् तदा तत्र स्थणौ अपि शाखाः जायेरन् । **पलाशानि** - पत्राण्यपि प्ररोहेयुः । यदा शुष्के जडेऽपि प्राणविद्यायाः एतादृशं फलं तदा का कथा सचेतनानाम् उपदेशः इति प्राणविद्यायाः अतिशयितमहत्त्वप्रदर्शनं कृतं भवति इति ।।

**सु. - तदेतत्** - प्राणचिन्तनं - **सत्यकामः** - जबालायाः पुत्रः व्याघ्रपदः पुत्राय गोश्रुतये उक्त्वा उवाच इदम् । **यद्येनत्** - प्राणविज्ञानं कश्चित् प्राणदर्शी शुष्काय **स्थाणवे** ब्रूयात् सपदि **जायेरन् एव अस्मिन् शाखाः प्ररोहेयुश्च पलाशानि इति** । स्तुतिमात्रमेतत् ।।

---

१. यद्यपि शुष्काय स्थाणवे एतद् दर्शनं ब्रूयात् प्राणवित् जायेरन् उत्पद्येरन्नेव अस्मिन् स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि पत्राणि किमु जीवते पुरुषाय ब्रूयात् इति ।। इति शाङ्करभाष्यम् ।।

[महत्वफलकमन्थाख्यकर्म]

**अथ यदि महज्जिगमिषेत् अमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य, ज्येष्ठाय श्रेष्ठाय स्वाहा इत्यग्रावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ।। ४ ।।**

**प्र.** - मन्थाख्यं कर्मारभ्यते - **अथ......जिगमिषेत् । महत्** महत्वं ज्यैष्ठ्यश्रैष्ठ्यादिलक्षणं यदि प्राप्तुम् इच्छेत् इत्यर्थः । **अमावास्यायां......अवनयेत् ।** उक्तकाले **सर्वौषधस्य** - ग्राम्यारण्यौषधानां **मन्थं** - पिष्टम् औदुम्बरे कंसाकारे चमसाकारे वा पात्रे **दधिमधुनोः** प्रक्षिप्य **उपमथ्य** अग्रतः स्थापयित्वा, **ज्येष्ठाय श्रेष्ठाय स्वाहा इति अग्नौ** आज्येन **हुत्वा मन्थे सम्पातं** - हुतशेषं निनयेत् इत्यर्थः ।।

**आ.भा.** - प्राणदर्शनविदः मन्थाख्यं कर्म दर्शयति । **अथ यदि** इत्यादि । सः उपासकः **महत्** - महत्वं ज्यैष्ठ्यश्रैष्ठ्यादिलक्षणं **जिगमिषेत्** - इच्छेत्, तदा अमावास्याकाले **दीक्षित्वा** - कर्मदीक्षाम्[१] अवाप्य **पौर्णमास्यां रात्रौ** - तत्कालविशेषे **सर्वौषधस्य** - ग्राम्यारण्यौषधानां **मन्थं** - पिष्टं स्रुवादि पात्रे दधिमधुनोः **उपमथ्य** - प्रक्षिप्य अग्रतः स्थापयित्वा **ज्येष्ठाय श्रेष्ठाय स्वाहा इति** मन्त्रेण **अग्नौ** - आहवनीये **आज्यस्य** - घृतेन **हुत्वा** हवनं कृत्वा **मन्थे** संपातं हुतावशेषम् **अवनयेत्** - प्रक्षिपेत् ।

एवंक्रमेण पञ्चमोऽपि मन्त्रो व्याख्येयः ।।

**सु.** - अथ यदि प्राणोपासकः महत्त्वविशेषं **जिगमिषेत् अमावास्यायां दीक्षित्वा** भूशयनादिनियमविशेषं धृत्वा आरभेत कर्म **पौर्णमास्याम् सर्वौषधस्य** ग्राम्यस्य अरण्यस्य च, **मन्थं** - पिंष्टं प्रक्षिप्य औदुम्बरपात्रे **दधिमधुनोरुपमथ्य** - मथितं तं मन्थम् अग्रतः स्थापयित्वा, **ज्येष्ठाय श्रेष्ठाय स्वाहा इत्यग्रावाज्यस्य हुत्वा** - आज्यं **हुत्वा** मन्थे पुरः स्थापिते, **सम्पातम्** - हुतावशिष्टं स्रुवसंलग्नम् **अवनयेत्** - प्रक्षिपेत् ।।

---

१. अमावास्यायां दीक्षित्वा दीक्षित इव भूमिशयनादिनियमं कृत्वा तपोरूपं सत्यवचनं ब्रह्मचर्यम् इत्यादिधर्मवान् भूत्वा इत्यर्थः । न पुनर्दीक्षामेव कर्मजातं सर्वमुपादत्ते अतद्विकारत्वात् मन्थाख्यस्य कर्मणः । उपसद्व्रती (बृ.उ.८-३-१) इति श्रुत्यन्तरात् पयोमात्रभक्षणं शुद्धिकारणं तप उपादत्ते ।। इति शाङ्करभाष्यम् ।।

**वसिष्ठाय स्वाहेत्यग्रावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् । प्रतिष्ठायै स्वाहेत्यग्रावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् । संपदे स्वाहेत्याग्रावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् । आयतनाय स्वाहेत्यग्रावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।। ५ ।।**

**प्र. - वसिष्ठाय स्वाहा** इत्यादि । सर्वं स्पष्टम् ।।

**सु.-** एवं **वसिष्ठाय स्वाहा** इति, **प्रतिष्ठायै स्वाहा** इति **सम्पदे स्वाहा** इति **आयतनाय स्वाहा** इति प्रत्येकं आज्यं हुत्वा तदा तदा प्रत्येकं सम्पातं मन्थे **अवनयेत् ।।**

[मन्थजपमन्त्रः]

**अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति, 'अमो नामास्यमा हि ते सर्वमिदँ स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः । स मा ज्यैष्ठ्यँ श्रैष्ठ्यँ राज्यमाधिपत्यं गमयत्वहमेवेदं सर्वमसानीति ।। ६ ।।**

**प्र. - अथ प्रतिसृप्य......जपति । प्रतिसृप्य -** अभिगम्य, प्रदक्षिणं कृत्वा इति वाऽर्थः । अञ्जलौ मन्थं निधाय वक्ष्यमाणं मन्त्रं जपेत् इत्यर्थः । मन्त्रमेवाह - **अमो नामासि** । अमा इति नाम यस्य सः अमोनामा । सोऽसीत्यर्थः । ननु अमा इति हि प्राणनाम । कथम् अप्राणस्य मन्थस्य अमोनामत्वम् इत्यत्राह - **अमा हि** इति । त्वमिति शेषः । त्वं प्राणोऽसि हि इत्यर्थः । मन्थस्य प्राणत्वम् उपपादयति । **ते सर्वमिदम् । इदं** जगत् **सर्वं ते -** त्वदधीनम् । मन्थलक्षणान्नाधीनत्वात् जगतः इति भावः । **स सर्वमसानि** इति । स हि मन्थभूतः प्राणः इत्यर्थः । **राजा -** दीप्तिमान् । **अधिपतिः -** शेषी इत्यर्थः । **मा -** मां **गमयतु -** प्रापयतु । **इदं सर्वमहमेव असानि -** भवानि । सर्वनियन्तृतया भवानि इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ. भा. - अथ** इत्यादि । **अथ -** हवनानन्तरं प्रतिसृप्य अग्रेः प्रदक्षिणं कृत्वा, **अञ्जलौ -** पाणिपुटके **मन्थमाधाय -** निधाय मन्त्रं **जपति -** जपेत् । जपनीयमन्त्रमेव दर्शयति । **अमोनामासि** इत्यादि । **अमोनामासि -** अमा इति नाम यस्य तादृशो असि इत्यर्थः ।

ननु प्राणभिन्नस्य मन्थस्य कथं अमोनामत्वं तत्राह - **अमा हि** इति । त्वं प्राणोऽसि हि इत्यर्थः ।। मन्थस्य प्राणत्वं दर्शयति - **ते सर्वमिदम्** इति । **इदं** - परिदृश्यमानं जगत् **ते** - तव त्वदधीनं । मन्थात्मकान्नाधीनत्वात् सर्वस्य जगतः इत्यर्थः । **स हि** इत्यादि । **सः** मन्थलक्षणः प्राणः **ज्येष्ठः श्रेष्ठः राजा** - दीप्तिमान् **अधिपतिः** - सर्वस्य शेषी, **स** मन्थलक्षणः प्राणो **मा** - मां **ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयतु** - प्रापयतु । **इदं सर्वमहमेव असानि** - भवानि । सर्वेषां **नियन्तृत्वेन** भवानीति ।।

**सु. - अथ** आहुतीः हुत्वा **प्रतिसृप्य** - अपसृत्य अग्नेः ईषत् अभिगम्य वा अग्निम्, अञ्जलौ मन्थमाधाय जपेत् **अमो नामासि** इत्यादिना मन्त्रेण । **अमो नामासि** - अमा इति प्राणनाम्ना मन्थोऽत्र स्तूयते । कस्मात् ? **अमा हि ते** - यः प्राणः सोऽपि ते - त्वदधीनः । प्राणस्थितिर्हि अन्नायत्ता । तत् त्वामेव अमोनामासि । **सर्वमिदं च ते** - तिर्यक्स्थावरमानुष्यात्मकम् इदमखिलं जगत् ते । अन्नेन विना न किञ्चित् । तन्मन्थः प्राणः इति नान्तरं महत् । **स हि** प्राणनामा मन्थः, **ज्येष्ठः श्रेष्ठः, राजा** - रञ्जनगुणयोगात् । अधिपतिश्च । **स मां ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयतु । अहमेवेदं सर्वमसानि** - सर्वमिदं मदधीनं स्यात् इत्यर्थे इत्थमुपचर्यते ।।

**[मन्थभक्षणप्रकारः]**

**अथ खल्वेतयर्चा पच्छ आचामति - तत् सवितुर्वृणीमहे इत्याचामति, वयं देवस्य भोजनम इत्याचामति, श्रेष्ठँ सर्वधातमम् इत्याचामति । तुरं भगस्य धीमहि इति सर्वं पिबति ।। ७ ।।**

**प्र. - अथ खल्येतयर्चा पच्छ आचामति । एतया** - वक्ष्यमाणया ऋचा पच्छः पादशः मन्थं भक्षयतीत्यर्थः । मन्त्रस्य एकैकपादेन एकैकग्रासं भक्षयेत् इत्यर्थः । 'तत् सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि' (ऋ.सं.५-६-८२१) अस्याश्च ऋचोऽयमर्थः । वयं श्रेष्ठं **सर्वधातमं** - सर्वधारकं तत् - [1]श्रेष्ठं[1] भोजनं **सवितुः देवस्य**- सवितुर्देवात् **वृणीमहे** - प्रार्थयामहे । अत्र प्राणस्य

---

1. विशिष्टं - क, तथा प्रसिद्धं - ख ।

सवितुश्च अभेदेन सवितुः इत्युक्तिः । अथ तद्दत्तेन भोजनेन सन्तुष्टास्सन्तः **तुरं** - तूर्णं, शीघ्रं **भगस्य** - सूर्यस्य देवस्य **धीमहि** - ध्यायेम इत्यर्थः । स्वरूपम् इत्यध्याहारः । अथवा सम्बन्धसामान्ये षष्ठी । सवितारं ध्यायेम इत्यर्थः ।। **तत्सवितुः - पिबति ।** स्पष्टोऽर्थः ।।

**आ.भा. - अथ खलु** इत्यादि । **अथ** - अनन्तरम् **एतया** - वक्ष्यमाणया ऋचा **पच्छः** - पादशो मन्थम् **आचामति** - भक्षयति । मन्त्रस्य एकैकपादेन एकैकग्रासं भक्षयेदिति । **तत्सवितुर्वृणीमहे** । तत् श्रेष्ठं भोजनं सवितुः देवस्य । सवितृदेवात् **वृणीमहे** - प्रार्थयामः, अत्र सवितुः प्राणस्य च अभेदेन सवितुः इति कथनम् । इति पठित्वा आचामति । पुनः वयं **श्रेष्ठं सर्वधातमं भोजनं** वृणीमहे इति पूर्वेणान्वयः । प्राणप्रदत्तभोजनेन सन्तुष्टाः वयं **तुरं** - तूर्णं झटिति **भगस्य** - सवितुः देवस्य स्वरूपं **धीमहि** - ध्यायेम इति ।।

**सु.** - अथ एतया वक्ष्यमाणया ऋचा **पच्छः** - पादशः **आचामति** मन्थम् । ऋचः एकैकेन पादेन एकैकं ग्रासम् अश्नीयात् इति यावत् । तत् सवितुर्वृणीमह इत्येकः पादः, अनेन एकमाचामति । **वयं देवस्य भोजन**मिति द्वितीयेन पुनः आचामति । **श्रेष्ठं सर्वधातम**मिति तृतीयेन पुनः आचामति । **तुरं भगस्य धीमहि** इत्यनेन निरवशेषं सर्वं पिबति । श्रेष्ठं सर्वधातमं देवस्य सवितुः भोजनं तदिदं वयं वृणीमहे, तुरं भगस्य धीमहि इत्यन्वयः । सर्वस्यास्य अन्नरूपतया धारयितृ श्रेष्ठम् इतरेभ्यः देवस्य सवितुः प्राणात्मनो भोजनभूतम्, प्राणादित्ययोः अभेदोपचारः। तदिदं मन्थलक्ष्णमन्नं वयं वृणीमहे । अनेनान्नेन मन्थलक्षणेन वृतेन वयम् **तुरम्** - तूर्णम्, **भगस्य** - ऐश्वर्यस्य हेतोः **धीमहि** प्राणात्मानम् आदित्यम्, प्राणं वा ।।

**निर्णिज्य कँसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः । स यदि स्त्रियं पश्येत्, समृद्धं कर्मेति विद्यात् ।। ८ ।।**

**प्र. - निर्णिज्य......स्थण्डिले वा ।** कंसाकारं चमसाकारं वा औदुम्बरं पात्रं प्रक्षाल्य **अग्नेः पश्चात्** अजिने वा केवलभूम्यां वा प्राक्छिराः शयीत इत्यर्थः । शयाने नियममाह - **वाचंयमोऽप्रसाहः । वाचंयमः** - वाग्यतस्सन्, **अप्रसाहः** - न प्रसह्यते इत्यप्रसाहः । अनिष्टस्वप्नदर्शनेन यथा नाभिप्लुतो भवति तथा संयतचित्तस्सन् इत्यर्थः । **स यदि......विद्यात्** । स्पष्टोऽर्थः ।।

**आ.भा. - निर्णिज्य** इत्यादि । ततः **कंसं चमसं वा** कंसाकारं चमसाकारं वा औदुम्बरपात्रं **निर्णिज्य** - प्रक्षाल्य, अग्नेः पश्चात् **स्थण्डिले** - केवलभूमौ वा **संविशति** - शयीत इत्यर्थः । शयाने नियमं दर्शयति - **वाचंयमोऽप्रसाहः । वाचंयमः** - वाग्यतो **अप्रसाहः** - न प्रसह्यते नाभिभूयते अनिष्टस्वप्रदर्शनेन यथा तथा संयतचित्तः सन्नित्यर्थः । **स यदि** इत्यादि स्पष्टोऽर्थः ।।

**सु. -** अथ **निर्णिज्य** - प्रक्षाल्य, **कंसं चमसं वा** पात्रमौदुम्बरं यन्मन्थाधारतया उपयुक्तम्, किञ्चिदपसृत्य **अग्नेः पश्चात्** प्राक्शिराः **चर्मणि वा** मृगस्य, **स्थण्डिले वा संविशति** - शयीत । कथंभूतः ? **वाचंयमः, अप्रसाहश्च** - अनभिभाव्यः स्वाप्रभयेन । स्थिरचित्तः इति यावत् । **स यदि स्त्रियं** सुवेषां स्वप्ने **पश्येत्; समृद्धं कर्मेति** जानीयात् ।।

**[स्वप्ने स्त्रीदर्शनेन काम्यकर्मसमृद्धिः]**

**तदेष श्लोकः -**
**"यदा कर्मसु काम्येषु स्त्रियँ स्वप्नेषु पश्यति ।**
**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने, तस्मिन् स्वप्ननिदर्शने" ।। ९ ।।**

**।। इति द्वितीयः खण्डः ।।**

**प्र. - तदेष श्लोकः । तत्** - तस्मिन् स्वाप्नविषये **एष श्लोको** भवति इत्यर्थः । श्लोकमेवाह - **यदा......पश्यति** इत्यादि । **तस्मिन् स्वप्ननिदर्शने ।** अत्र सतीति शेषः । **समृद्धिं** - कर्मनिष्पत्तिम् इत्यर्थः । **तस्मिन् स्वप्ननिदर्शने** इति द्विरुक्तिः विद्यासमाप्त्यर्था ।

एतत्खण्डान्तर्गतवाक्यविषयकम् अधिकरणम् उपन्यस्यते । 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' (ब्र.सू.३-४-२८) इत्यत्र 'न ह वा एवं विदि किञ्चनानन्नं भवतीति' छान्दोग्ये, 'नास्यानन्नं जग्धं भवतीति' (बृ.उ.८-१-१४) वाजसनेयके च श्रवणात्, वामदेव्योपासनानिष्ठस्य प्रार्थयमानसर्वयोषिदपरिहारानुमतिवत् सर्वान्नानुमतिः प्राणविद्यानिष्ठस्य सर्वदा क्रियते इति पूर्वपक्षे प्राप्ते - उच्यते । 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' (ब्र.सू.३-४-२८) प्राणात्यये एव प्राणविदः सर्वान्नानुज्ञानम्, न सर्वदा । ब्रह्मविदोऽपि उषस्तेः प्राणात्यये एव इभ्योच्छिष्टाशनस्य दर्शनेन प्राणविदः सर्वान्नानुमतेः आपद्विषयत्वस्य किंपुनर्न्यायसिद्धत्वात् ।

'अबाधाच्च' । (ब्र.सू.३-४-२९) 'आहारशुद्धौ सत्वशुद्धिः' (छा.उ.७-२६-२) इति शास्त्राबाधार्थमपि एवमेव न्याय्यम् । इतरथा तस्य बाधः स्यात् । 'अपि स्मर्यते' (ब्र.सू.३-४-३०) ।

"[१]प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" ।। (म.स्मृ.१०-१०४)

इति स्मरणाच्च सर्वान्नीनत्वम् आपद्विषयम् ।

'शब्दश्चातोऽकामकारे' । (ब्र.सू.३-४-३१) 'तस्मात् ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा' (कठ.सं.१२-३४) इति [1]संहितायां[1] कामकारप्रतिषेधकशब्ददर्शनात् पाप्मना संसृष्टो न भवानि इति मत्वा ब्राह्मणः सुरां न पिबतीति हि तस्याः श्रुतेरर्थः ।

ननु ब्रह्मविद उषस्तेः प्राणात्यये सर्वान्नीनत्वदर्शनात् प्राणविदः सर्वान्नीनत्वस्य आपद्विषयत्वं कैमुत्यन्यायेन सिद्ध्यति इति अनुपपन्नम् । वामदेव्योपासननिष्ठस्य सर्वयोषिदपरिहारवत् प्राणविद्यानिष्ठस्य वचनबलात् सर्वान्नीनत्वम् इति वदन्तं प्रति एतस्य अनुत्तरत्वादिति चेत्, न - [2]वामदेव्योपासनस्य[2] 'न काञ्चन परिहरेत् तद्व्रतम्' (छां.उ.२-१३-२) इति सर्वयोषिदपरिहारेऽपि स्पष्टविधिश्रवणात् । 'प्रकृते च, न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यत्र सर्वान्नभक्षणविधेः कल्प्यत्वात्, प्रत्यक्षनिषेधविरोधे च विधिकल्पनानुदयेनार्थवादत्वस्यैव युक्तत्वात् सर्वप्राण्यन्ने, यत् किञ्चिदिदम् 'आश्वभ्यः आशकुनिभ्यः' इति विहितस्य प्राणान्नत्वचिन्तनस्य स्तुतिमात्रं क्रियते। न ह वा एवंविदि किञ्चनानन्नं भवतीति ।

न चैवं सति निषेधशास्त्रविरोधात्, 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादेरपि स्तुतिमात्रत्वप्रसङ्गः इति वाच्यम् । पाप्मनाम् अश्लेषाभावे अनिर्मोक्षप्रसङ्गेन सकलपापाश्लेषस्य मोक्षविधिशास्त्रापेक्षितत्वेन फलविधित्वस्य वक्तव्यत्वात् । प्राणविद्यायाश्च ज्येष्ठत्वश्रेष्ठत्वादि फलकत्वेन फलाकाङ्क्षाया अभावादिति स्थितम् ।

तथा गुणोपसंहारपादे 'लम्भुको ह वासो भवति' इत्यर्थवादोपबृंहितात् किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधतीति छान्दोग्ये श्रवणात् वासस्त्वचिन्तनमिति प्रतीयते । बृहदारण्यके,

---

१. जीवितात्ययमापन्नो योन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते ।। इति पाठान्तरम् ।।

1. कठसंहितायां - क । 2. वामदेव्योपासकस्य - अ,आ ।

काण्वशाखायाम् 'तद्विद्वांसश्श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ.उ.८-१-४) इति वाक्ये, 'अनग्नं कुर्वन्त' इति श्रवणात् वासस्त्वचिन्तनमपि प्रतीयते । आचामन्ति इत्याचमनविधिरपि प्रतीयते । माध्यन्दिनशाखायां 'तस्मादेवंविदशिष्यन् आचामेत्, अशित्वाचाचामेत् एतमेव तदनमनग्नं कुरुते' (बृ.उ.मा.पा.८-१-१४) इति अनग्नत्वचिन्तनात् वासस्त्वचिन्तनविधिरपि प्रतीयते । आचामति इति आचमने स्पष्टविधिप्रत्ययश्रवणात् आचमनविधिः स्पष्टं प्रतीयते । तत्र द्वयोरपि विधेयत्वे गौरवात् एकस्यैव विधेयत्वे वक्तव्ये, आचामेत् इति आचमने विधिप्रत्ययश्रवणात् स्मृत्याचारप्राप्ताचमनातिरिक्तम् आचमनान्तरं प्रतीयते । वासस्त्वादिश्रवणं तु कथंचित् स्तुतिरूपतया नेतव्यमिति पूर्वपक्षे प्राप्ते - अभिधीयते - 'कार्याख्यानादपूर्वम्' (ब्र.सू.३-३-१८) । कार्याख्यानात् विधेः अप्राप्तविधानस्वाभाव्यात्, आचमनस्य च स्मृत्याचाराभ्यामेव प्राप्तत्वात् अचमनान्तरविधाने विनिगमकानुपलम्भात् अप्राप्तम् आचमनीयासु अप्सु वासस्त्वानुचिन्तनं विधीयते । छान्दोग्ये आचमनस्यैव अप्रतीतेः शाखान्तरेऽपि वासस्त्वानुसन्धानस्य अनुगतत्वात् तदेव विधीयते इति स्थितम् ।

ननु कथं वागादीनाम् अचेतनानाम् उक्तिप्रत्युक्तिपरम्परा इति चेत् न - वागादिशब्दानाम्, 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (ब्र.सू.२-१-५) इति सूत्रोक्तन्यायेन तदभिमानिदेवतापरत्वात् । तत्र हि 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' (ब्र.सू.२-१-४) । ब्रह्मणो जगद्विलक्षणत्वेन उपादानत्वं न सम्भवति । घटरुचकादिषु हि सलक्षणानामेव मृत्सुवर्णादीनामुपादानत्वं दृष्टम् । प्रकृते च ब्रह्मजगतोः विलक्षणत्वं, 'विज्ञानं चाविज्ञानञ्च' (तै.आन.६-१) इति ब्रह्मजगतोः विज्ञानत्वाविज्ञानत्वप्रतिपादकशब्दादेव अवगम्यते ।

ननु जगतोऽचेतनत्वे 'मृदब्रवीत्' (शत.ब्रा.६-१-३-२) इत्यचेतनायाः मृदो वक्तृत्वं नोपपद्यते । तत्राह - 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (ब्र.सू.२-१-५) । मृदादिशब्दः तत्तदभिमानिदेवताः व्यपदिश्यन्ते । 'हन्ताहमिमास्तिस्रो देवताः' (छां.उ.६-३-२) इति तेजोऽबन्नानां देवताशब्देन विशेषणात् अचेतनानाञ्च देवतात्वासम्भवात् तदभिमानिनी देवता तेजोऽबन्नादिशब्दैः व्यपदिश्यते इति अध्यवस्यामः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ.उ.१-२-४) इति अग्नेवाचि अनुप्रवेशरूपानुगतिश्रवणात् वागादिशब्दैः तदनुप्रविष्टतदभि - मान्यग्न्याद्यभिधानात् न अनुपपत्तिः । अंतः चेतनस्य ब्रह्मणोऽचेतनजगदुपादानत्वं न सम्भवति - इति पूर्वपक्षे प्राप्ते उच्यते ।

'दृश्यते तु' (ब्र.सू.२-१-६) । तुशब्दः चोद्यव्यावृत्त्यर्थम् । विलक्षणेभ्योऽपि गोमयादिभ्यो वृश्चिकादेः उत्पत्तिदर्शनात् , विलक्षणात् ब्रह्मणो विलक्षणजगदुत्पत्तिः उपपद्यते । 'असदिति

चेन्न प्रतिषेधमात्रत्वात्' (ब्र.सू.२-१-७) । विलक्षणात् पादानात् विलक्षणोत्पत्त्यङ्गीकारे उपादेयस्य उत्पत्तेः प्राक् विलक्षणोपोदानात्मनि अवस्थानस्य वक्तुम् अशक्यत्वेन असत्कार्यवादप्रसङ्गः इति चेन्न - उपादानोपादेययोः सालक्षण्यनियमप्रतिषेधमात्रे एव अस्माकं संरम्भः । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्वस्मात् [1]विलक्षणजगदाकारेण[1] परिणमते इत्येतत्तु न त्यक्तम् ।

अत्र चोदयति - 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' (ब्र.सू.२-१-८) । ब्रह्मणः एव जगद्रूपेण परिणामे तयोः ऐक्यात् अप्ययादिषु सर्वदशासु अचेतनगता दोषाः [2]ब्रह्मणः[2] स्युः । ततश्च ब्रह्मणो निरनिष्टत्वनिरवद्यत्वप्रतिपादकश्रुत्यसामञ्जस्यं भवति ।

अत्र सिद्धान्तमाह - 'न तु दृष्टान्तभावात्' (ब्र.सू.२-१-९) । न त्वेवं सम्भवति । यथा बालस्य युवानं प्रति उपादानत्वेऽपि बाल्युवादिशब्दैः आत्मनोऽभिधानेऽपि बाल्त्वयुवत्वादिभिनात्मा दूष्यते । एवमेव चेतनाचेतनगतः दोषः आत्मा दूष्यते । 'स्वपक्षदोषाच्च' (ब्र.सू.२-१-१०) । निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसंनिधानेन प्रकृतिधर्माध्यासनिबन्धना जगत्प्रवृत्तिः इति सांख्यपक्षोऽपि दुष्टः एव । 'तर्काप्रतिष्ठानादपि' (ब्र.सू.२-१-११) । तर्काणाम् अन्योन्यव्याघातेन अप्रतिष्ठितत्वादपि तन्मूलप्रधानकारणवादः त्याज्यः एव । 'अन्यथाऽनुमेयमिति-चेदेवमप्यनिर्मोक्षप्रसङ्गः' (ब्र.सू.२-१-१२) । यथा प्रतिकूलतर्कपराहतिः न भवति तथा सत्तर्कैः प्रधानकारणत्वम् अनुमीयते इति चेत्, एवमपि कालान्तरे त्वत्तोऽतिशयितानां तर्ककुशलानां सम्भवेन प्रतिकूल्तर्कपराहतिदोषानिस्तारात् । तस्मात् ब्रह्मणो जगदुपादानत्वं न दुष्यति इत्युक्तम् । अतो वागादीनां वक्तृत्वे न अनुपपत्तिः इति स्थितम् । प्रकृतमनुसरामः ।।

**आ. भा. - तदेषश्लोक** इति । **तत्** - तस्मिन् स्वप्रदर्शनविषये । एषः श्लोको भवति - **यदा** इत्यादि - काम्यं कर्म कुर्वाणः स्वप्नमध्ये **स्त्रियं पश्यति** पश्येत् तदा - **तस्मिन् स्वप्ननिदर्शने समृद्धिं** - कर्मनिष्पत्तिं जानीयादिति । अत्र द्विर्वचनं विद्यासमाप्तिसूचकम् ।।

**सु.** - तदिदम् अभिलक्ष्य **एषः श्लोकः** प्रवर्तते । **समृद्धिः** - कर्मणामविलम्बेन फलनिष्पत्तिः । द्विरुक्तिः समाप्तौ प्रासङ्गिकस्य खण्डस्य वा ।।

**।। इति द्वितीयखण्डभाष्यम् ।।**

---

1. विलक्षणाकारेण - अ,आ । 2. ब्रह्मणि - क,ख ।

## तृतीयः खण्डः

### [पञ्चाग्निविद्या]

### [श्वेतकेतुजैवल्योः संवादः]

**श्वेतकेतुर्हारुणेयः पञ्चालानाँ समितिमेयाय । तँ ह प्रवाहणो जैवलिरुवाच, कुमारानु त्वाऽशिषत् पितेति । अनु हि भगव इति ।। १ ।।**

**प्र.** – प्रकृतिविविक्तजीवयाथात्म्यविषयां पञ्चाग्निविद्यां संसृतिवैराग्याय प्रस्तौति - **श्वेतकेतुः - एयाय** । अरुणस्यापत्यमारुणिः । तस्यापत्यम् **आरुणेयः श्वेतकेतुनामा पञ्चालानां** जनपदानां सभाम् आजगाम । **तँ......उवाच** । जीवलस्यापत्यं **जैवलिः**, नामतः **प्रवाहणः तं** श्वेतकेतुमुक्तवान् । **कुमारानु त्वाशिषत् पितेति** । हे **कुमार ! त्वा** - त्वां तव पिता **अन्वशिषत् किम्** - अनुशिष्टवान् किम् ? इत्यपृच्छत् इत्यर्थः । इतर आह - **अनु हि भगव इति** । हे **भगवः** पूजार्ह ! अनुशिष्टोऽस्मि हीति ।।

**आ.भा.** – जीवयाथात्म्यविषयकपञ्चाग्निविद्यां संसारात् वैराग्यभावनाय आह - **श्वेतकेतुर्हा** इत्यादि । **श्वेतकेतुः** नामतः **आरुणेयः** – अरुणस्यापत्यं पुमान् आरुणिः तदपत्यम् **आरुणेयः** । पञ्चालानां तदाख्यजनपदानां **समितिं** - सभाम् **एयाय** - आजगाम । **तं** - श्वेतकेतुं ब्राह्मणं **प्रवाहणो** नामतः **जैबलिः** - जीवलस्यापत्यं राजा **उवाच** - उक्तवान् । हे **कुमार ! त्वा** - त्वां त्वदीयः पिता गौतमः, **अन्वशिषत्** - अनुशिष्टवान् किमिति अपृच्छत् राजा श्वेतकेतुमिति । **अनु हीति भगवः** - हे भगवन् ! अनुशिष्टोऽस्मीति ।।

**सु.** – अथ अपुनरावृत्तिलक्षणे फले प्रवर्तयितुं वैराग्याय कर्मिणां गतिं गतागतादिदुःखमयीं प्रपञ्चयन्ती विवेचयन्ती च आत्मानम् अत्यन्तविविक्तम् अस्मात् - गुणमयात् आख्यायिकामुखेन प्रवर्तते श्रुतिः । अनया च आख्यायिकया ब्रह्मविद्या ब्राह्मणात् अन्यतोऽपि ग्राह्या इति व्यज्यते । नाम्ना श्वेतकेतुः अरुणेः पुत्रः पञ्चालानां **समितिं** - सभाम् **एयाय** - आजगाम । राजा पञ्चालानां नाम्ना प्रवाहणः जीवलस्य पुत्रः तमिदमुवाच । **कुमार ! त्वां पिता** ते किम् **अन्वशिषत् ?** अपि पित्रा त्वमुपदिष्टार्थोऽसीति यावत् । कुमारः प्राह - **अनुशिष्टोऽस्मि भगव** इति ।।

[प्रवाहणस्य प्रश्नाः]

**वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । न भगव इति । वेत्थ यथा पुनरावर्तन्ता३ इति । न भगव इति । वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति । न भगव इति ।। २ ।।**

**प्र.** - एवम् उक्तो जैबलिः पप्रच्छ - **वेत्थ......प्रयन्तीति । प्रजाः इतोऽधि** इतः ऊर्ध्वं यत्प्रयन्ति, तत् **वेत्थ** - जानीषे किम् ? कर्मिणां गन्तव्यो देशः कः ? इत्यर्थः । इतर आह **न भगव इति** । जाने इति शेषः । राजा पुनः पृच्छति **वेत्थ आवर्तन्ता ३ इति** । कर्मिणां पुनरावृत्तिप्रकारः कः इत्यर्थः । इतरः आह **न भगव इति ।** पुनः पृच्छति **वेत्थ व्यावर्तना ३ इति ।** देवयानपितृयाणयोः व्यावर्तने भेदके रूपे किं वेत्थ इत्यर्थः । केन प्रकारेण तयोः भेदः इत्यर्थः । इतरः आह **न भगव इति ।।**

**आ.भा. - वेत्थ** इत्यादि । पुनः राजा तं प्रोवाच - यदि त्वं पित्रा अनुशिष्टोऽसि तदा त्वाम् अहं पृच्छामि । हे श्वेतकेतो ! यत्प्रजाः इमे लोकाः **इतोऽधि -** इतः ऊर्ध्वं **यत्प्रयन्ति -** गच्छन्ति तत् त्वं **वेत्थ -** जानीषे किम् इति ? इतरः प्राह - **न भगव इति ।** हे राजन् ? यत्त्वया पृष्टं तदहं न जानामि इति । पुनरपि राजा पृच्छति - हे कुमार ! किं जानासि यथा - इमाः प्रजाः पुनरावर्तन्ते कर्मिणां पुनरावृत्तिप्रकारः कः इति ? इतरः प्राह - पूर्ववदेव **न भगव इति ।** राजा पुनः पृच्छति **वेत्थ पथोः** इत्यादि । पथोः देवयानपितृयाणमार्गयोः **व्यावर्तने -** व्यावर्तके भेदके रूपे किं **वेत्थ -** जानीषे ? इतरः प्राह - पूर्ववदेव **न भगव इति ।।**

**सु.** - अपि वेत्थ ? इतो लोकादूर्ध्वं यत्स्थानं गच्छन्ति प्रजा इति अपृच्छत् प्रवाहणः । कुमारः आह **न** इति । पुनः अपृच्छत्, वेत्थ यथा पुनः इमं लोकम् आवर्तन्ते इति ? इतरः आह - **न भगव इति ।** पुनः अपृच्छत् - वेत्थ देवयानस्य पितृयाणस्य च पथोः **व्यावर्तने -** विशेषौ ? यतो व्यावृत्तिः तद्व्यावर्तनम् । इतरः आह **न भगव इति ।।**

**वेत्थ यथाऽसौ लोको न सम्पूर्यता ३ इति । न भगव इति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । नैव भगव इति ।। ३ ।।**

**प्र.** - पुनः पृच्छति - **वेत्थ......संपूर्यता ३ इति ।** अस्माल्लोकात् अनवरतं गच्छद्भिः पुरुषैः कस्मात् हेतोः द्युलोको न सम्पूर्यते इति । वाजसनेयके समानप्रकरणे, 'वेत्थ यथाऽसौ लोक एवं बहुभिः पुनःपुनः प्रयद्भिः न सम्पूर्यत३ इति' (बृ.उ.८-२-२) श्रवणात् अमुष्य लोकस्य अप्राप्ताः के इति प्रश्नस्य फलितार्थः । इतरः आह **न भगव इति ।** पुनः पृच्छति **वेत्थ......भवन्तीति । आपः** इति भूतान्तराणामपि उपलक्षणम् । भूतसूक्ष्माणि पञ्चम्याम् आहुतौ **यथा** - येन प्रकारेण **पुरुषवचसः** - पुरुषः इति वचो यासां ताः **पुरुषवचसः** । पुरुषशब्दाभिलप्याः इत्यर्थः । कस्य पञ्चम्याम् आहुतौ इत्यपेक्षायां पुरुषवचस्त्वभवनकर्तृतया निर्दिष्टा आप एव हूयमानतया सम्बध्यन्ते । असंनिहितार्थान्तरकल्पने गौरवात् । ततश्च अपां पञ्चम्यामाहुतौ आपः पुरुषवचसः भवन्ति इत्यर्थः । ततश्च अपामेव पञ्चस्वपि आहुतिषु हूयमानत्वमिति सिद्ध्यति इति द्रष्टव्यम् । इतरः आह **नैव भगव इति ।** अत्र रंहत्यधिकरणे (ब्र.सू.अधि.३-१-१) भगवता भाष्यकृता 'कर्मिणां गन्तव्यदेशम् पुनरावृत्तिप्रकारं, देवयानपितृयाणपथव्यावर्तने, अमुष्यलोकस्य अप्राप्तारं च वेत्थ इति पृष्ट्वा वेत्थ यथा पञ्चम्याम् आहुतावापः पुरुषवचसः भवन्ति इति पप्रच्छ' इति भाषितम् ।।

**आ.भा.** - पुनः पृच्छति - **वेत्थ** इत्यादि । प्रतिदिनं गच्छद्भिः अनेकैः पुरुषैः **असौ लोकः** - द्युलोको न सम्पूर्यते । कस्मात् कारणात् आपूरितो न भवति इति किं जानासि ? इतरः प्राह पूर्ववदेव **न भगव इति ।**

पुनः पृच्छति - **वेत्थ** इत्यादि । **वेत्थ** - जानासि **यथा** - येन प्रकारेण पञ्चम्याम् आहुतौ आप उपलक्षणत्वात् भूतसूक्ष्माणि, पुरुषवचसः पुरुषपदवाच्याः भवन्ति ? इति । इतरः प्राह **नैव भगव इति ।।**

**सु.** - अपीदं वेत्थ ? **यथासौ लोको** - द्युलोको न **सम्पूर्यते** - केन निमित्तेन लोकाः द्युलोकं न प्रविशन्ति इति यावत् । इतर आह **नैव भगव इति ।** इदं वा वेत्थ **यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ?** का पञ्चम्याहुतिः का आपः इतीदं प्रतिवचने व्यक्तीभविष्यति । कुमार आह **नैव भगव इति ।।**

**अथनु किमनुशिष्टोऽवोचथाः । यो हीमानि न विद्यात्, कथँ सोऽनुशिष्टो ब्रुवीतेति । स हाऽऽयस्तः पितुरर्धमेयाय, तँ होवाच, अननुशिष्य वाव किल मा भगवानब्रवीत् अनु त्वाऽशिषमिति ।। ४ ।।**

**प्र.** - एवम् उक्तवन्तं श्वेतकेतुं राजा प्रत्याह - **अथानु......ब्रुवीतेति किं** - कस्मात् अनुशिष्टोऽस्मि इत्युक्तवानसि । यो हि इमानि अर्थजातानि न जानीयात्, स कथं अनुशिष्टोऽस्मि इति वदेत् इत्यर्थः यद्वा - **किमनुशिष्टः** - किमर्थम् अनुशिष्टः इत्यर्थः ।

**स हाऽऽयस्तः पितुरर्धमेयाय । सः** - श्वेतकेतुः राज्ञा जैबलिना **आयस्तः** - आयासितस्सन् **पितुरर्धं** - स्थानम् **एयाय** - आजगाम । **तं......त्वाशिषमिति** । गत्वा च **तं** - पितरम् इत्थम् उवाच - मां **अननुशिष्य** - समावर्तनकाले अनुशासनीयानि सर्वाणि अननुशिष्यैव त्वाम् अन्वशिषम् इति भगवान् मां प्रति अब्रवीत् इत्यर्थः ।।

**आ.भा.** - एवम् उक्तवन्तं कुमारं राजा पुनराह - **अथ** इति । **अथ** - कुमारस्य निषेधानन्तरं नु किम् अनुशिष्टोऽवोचथाः । हे कुमार ! यदि त्वं न जानासि तदा कथम् उक्तवानसि यदहं पित्रा अनुशिष्टोऽस्मि इति । **यो इमानि** - अर्थजातानि **न विद्यात्** - न जानीयात् सः कथं कामाद्धेतोः अनुशिष्टोऽस्मि इति **ब्रुवीत** - वदेत् इत्यर्थः ।। **स ह** इत्यादि । **सः** - श्वेतकेतुः राज्ञा प्रवाहणेन **आयस्तः** - आयासितो भर्त्सित इति यावत् । **पितुः** - गौतमस्य **अर्धं** - स्थानं निवासस्थानं **एयाय** - आजगाम । गत्वा च पितुः समीपं **तं** - पितरम् इत्थं प्रोवाच - **मा** - मां **अननुशिष्य** - समावर्तनकाले यानि यानि उपदेष्टव्यानि तानि **अननुशिष्यैव** अनुपदिश्यैव भगवान् मां प्रति अब्रवीत् यदहं त्वाम् अशिषमिति ।।

**सु.** - आह प्रवाहणः अथैकमपि एषु न जानासि, किमनुशिष्टः त्वं पित्रा ? यदवोचथाः अनुशिष्टोऽस्मि इति, यो हि इमानि न विद्यात् कथं स ब्रवीत अनुशिष्टोऽस्मि इति । स ह कुमारो राज्ञो वचनेन **आयस्तः** - खिन्नः, पितुः **अर्धं** - स्थानं **एयाय** - प्रत्यागतवान् । उवाच पितरम्, **अननुशिष्य वाव किल** - उपदेष्टव्यम् अनुपदिश्यैव किल मां भगवान् अब्रवीत्, त्वाम् अन्वशिषमिति ।।

**पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् । तेषां नैकञ्चनाशकं विवक्तुमिति । स होवाच 'यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्चन वेद, यद्यहमिमानवेदिष्यं, कथं ते नावक्ष्यम्' इति ।। ५ ।।**

**प्र.** - तत् कथम् इत्यत्राह - **पञ्च......विवक्तुमिति । राजन्यबन्धुः** - राजापशदः मां पञ्च प्रश्नान् अप्राक्षीत् । तेषां मध्ये **एकञ्चन** - एकमपि प्रश्नं **विवक्तुं** - विशिष्य वक्तुं

**नाशकम्** - न [1]शक्तोऽस्मीति[1] पितरम् उवाच इत्यर्थः । त्वया सम्यगनुशिष्टस्य कथम् इयम् अशक्तिः स्यादिति भावः । राजन्याः बन्धवः यस्य सः राजन्यबन्धुः । राजन्यानां बन्धुरिति वा । स्वयमराजन्यः इत्यर्थः । राजन्याभासः इति यावत् । **सः......नावक्ष्यमिति । सः** - पिता पुत्रं वक्ष्यमाणम् उवाच । त्वं मां प्रति **तदा** - आगमनकाले **एतान्** प्रश्नान् **यथावदः** - तेषां नैकञ्चन अशकं विवक्तुम् इति यथा उक्तवानसि, तथा अहमपि तेषां प्रश्नानां मध्ये **एकञ्चन** - एकमपि **यथा** - यथावत् सत्यम् इत्यर्थः **न वेद** - नाज्ञासिषम् । यदि आज्ञासिषम् तर्हि ते प्रियाय पुत्राय समावर्तनकाले कुतः नावक्ष्यम् इत्युवाच इत्यर्थः ।।

**आ.भा. - पञ्च मा** इत्यादि । सः **राजन्यबन्धुः** - राजापशदः प्रवाहणः **मा** - मां **पञ्च** - पञ्च संख्यकान् प्रश्नान् **अप्राक्षीत्** - अपृच्छत् । तेषां प्रश्नानां मध्यात् **नैकञ्चन** - नैकस्यापि प्रश्नस्य **विवक्तुं** - उत्तरं दातुमहम् **अशकं** - नाहं तदीयप्रश्नस्य उत्तरे समर्थो अभवम् इति ।।

**सु.** - सः राजन्यबन्धुः क्रोधात् इदं वचनम्, पञ्चप्रश्नान् माम् अप्राक्षीत्, तेषां नैकमपि **विवक्तुं** - विवेचयितुम्, सम्यक् उत्तरयितुम्, नाशकम् इत्युक्तः पिता उवाच, कुतस्ते खेदः ? त्वमसि कुमारः त्वं तदा पृष्टो राज्ञा यथा **एतानवदः** - अविदिता इमे इति, **मामेवावदः** - अविज्ञातवन्तं मामेव अवदः । ममैव अज्ञानं तत्र निवेदितम् । तदपरिज्ञानं न तव दोषः अपि तु ममैव । तत्कुतस्ते क्षोभः इति भावः । यद्वा - तदा आगतमात्र एव यथा अवोचः, नैकञ्चन अशकं वक्तुमिति; मां प्रत्यपि तथैव जानीहि । त्वया पृष्टस्य ममापि इयमेव गतिः । नैकञ्चन वक्तुं शक्नोमि इति यथाहं नैकञ्चन **एषां** वेद । यद्यहम् इमान् अवेदिष्यं कथं ते नावक्ष्यमिति ।।

### [गौतमेन राज्ञः समीपगमनम्]

**स ह गौतमो राज्ञोऽर्धमेयाय । तस्मै ह प्राप्तायार्हां चकार । स ह प्रातः सभाग उदेयाय । तँ होवाच मानुषस्य भगवन् गौतम ! वित्तस्य वरं वृणीथाः इति । स होवाच, तवैव राजन् ! मानुषं वित्तम् यामेव कुमारस्यान्ते वाचमभाषथाः, तामेव मे ब्रूहीति ।। ६ ।।**

---

1. शक्तोऽभूवं इति - क,ख ।

**प्र. - स राज्ञोऽर्धमेयाय !** एवम् उक्त्वा स गोत्रतो **गौतमः** - आरुणिः राज्ञः स्थानम् आजगाम । **तस्मै......चकार** । प्राप्ताय **तस्मै** - गौतमाय राजा **अर्हां** - पूजां चकार इत्यर्थः । **स उदेयाय** । तदा सः प्रातःकाले राज्ञि **सभागे** - सभागते सति **उदेयाय** । गौतमः आजगाम इत्यर्थः । **यद्वा सभागः** - [1]भागः[1], पूजा । तेन युक्तः अर्घ्यादिभिः पूज्यमानः **सः** - गौतमः समागतः इत्यर्थः । **तं होवाच** । राजा गौतमं वक्ष्यमाणम् उक्तवान् इत्यर्थः । **मानुषस्य......वृणीथाः इति** । हे **भगवन् गौतम** । मनुष्यसम्बन्धिवित्तसम्बन्धि वरं वृणीष्व इत्युवाच इत्यर्थः । **स होवाच** । **सः** - गौतमः प्रत्युवाच इत्यर्थः । तदेवाह - **तवैव......ब्रूहीति** । हे राजन् ! मानुषं वित्तं तवैव तिष्ठतु । तेन मम न किञ्चित् प्रयोजनम् । किन्तु मत्पुत्रस्य समीपे पञ्चप्रश्नलक्षणां यां वाचं उक्तवानसि तामेव मे ब्रूहि इति ।।

**आ.भा.** - पुत्राय एवं कथयित्वा तेषां प्रश्नानाम् उत्तरं ज्ञातुं सः गौतमः पाञ्चालानां जनपदं गतवान् । तदेव दर्शयति - **स ह गौतमः** इत्यादि । स गोत्रजः गौतम आरुणिः राज्ञः **अर्धं** - स्थानम् **एयाय** - आजगाम ।

**तस्मै ह** इत्यादि । **प्राप्ताय** गौतमाय स राजा **अर्हां** - पूजां **चकार** - कृतवान् । ब्राह्मणाः पूज्याः इति कृत्वा पूजां चकार इत्यर्थः । ततः स गौतमः प्रातःकाले **सभागे** - राजनि सभायाम् आगते **उदेयाय** - सभायाम् आगतवान् अथवा अर्घ्यादिपूजितः गौतमः समागतः इति । **तं होवाच** इत्यादि । तत राजा तमुवाच - हे **गौतम ! भगवन् !** मनुष्यसम्बन्धिवित्तविषयकं वरं वृणीष्व धनाश्वगवादिकं वित्तं मत्तः सकाशात् प्रार्थय । ततो गौतम उवाच - हे **राजन् !** मनुष्यसम्बन्धि धनस्य मे प्रयोजनं नास्ति यतो ब्राह्मणाः अकिञ्चनाः निस्पृहाश्च भवन्ति । तादृशं धनं तवैव तिष्ठतु । किन्तु **कुमारस्य** - मत्पुत्रस्य **अन्ते** - समीपे **यां वाचमभाषथाः** । ये ये प्रश्नाः पृष्टाः तामेव वाचं **ब्रूहि** - तेषां प्रश्नानां प्रातिस्विकरूपेण उत्तरमेव देहि । विद्यावत्त्वेन भुवि विख्याताः अपि ब्राह्मणाः वयम् तां विद्यां न जानीमः । अतः तामेव ब्रूहि, येनाहं विद्वान् स्यामिति ।।

**सु.- स ह गौतमो राज्ञोऽर्धमेयाय** - श्वेतकेतोः पिता आरुणिः नाम्ना गौतमः राज्ञः स्थानम् आजगाम । **तस्मै** - प्राप्ताय राजा - **अर्हाम्** - सपर्यां चकार । परेद्युः प्रातः

---

1. भाजनं भागः - क, भजनं भागः - ख ।

स राजा **सभागः** - सभायां स्थितः आगतं गौतमम् **उदेयाय** - प्रत्युद्गतवान् । **सभागे** राज्ञि - **सः** गौतमः **उदेयाय** - समागतः इति वा । **तं** - गौतमम् **उवाच, हे भगवन्!** यत् **मानुषस्य वित्तम्** - मानुषोपभोग्यं यच्च मनुष्येण दातुमर्हं तस्य सम्बन्धि किमपि **वरं वृणीथाः** इति । एवम् उक्तो गौतमः प्रत्युवाच । **तवैव राजन्! मानुषं वित्तमस्तु** - उपभोगाय यदर्हं तत् तवैव अस्तु । यामेव कुमारस्यान्तिके वाचम् अभाषथाः, तामेव मे ब्रूहि इति ।।

**स ह कृच्छ्री बभूव । तँ ह चिरं वसेत्याज्ञापयाञ्चकार । तँ होवाच, 'यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति, तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूत्' इति ।। तस्मै होवाच ।। ७ ।।**

**।। इति तृतीयखण्डः ।।**

**प्र. - स ह......चकार** । एवम् उक्तो राजा गौतमस्य अप्रत्याख्येयतां ज्ञात्वा **कृच्छ्री** - दुःखितो **बभूव** । तञ्च गौतमं विद्यार्थं, चिरं वस इत्याज्ञप्तवान् । **तं होवाच** । एवम् आज्ञाप्य राजा **तं** - गौतमं पुनः **उवाच** । किमिति । **यथा......अभूत्** इति । हे गौतम ! त्वं मां **यथा अवदः**, तथा करिष्यामि इति शेषः । **इयं** - वक्ष्यमाणा विद्या **पुरा** विद्यमानापि **यथा** - येन प्रकारेण यस्माद्धेतोरिति यावत् । **त्वत्तः प्राक् ब्राह्मणान् न गच्छति** - न प्राप्तवती । **तस्मात् सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूत्** - क्षत्रियजातेरेव एतद्विद्योपदेष्टृत्वम् । अतो ब्राह्मणेषु एतद्विद्यायाः अभावात् ब्राह्मणानामेव समीपं गमिष्यामि इति बुद्धिः ना कार्या । चिरवासाज्ञापनमपि सोढव्यम् इति भावः । **तस्मै होवाच** । अथ चिरकालम् उषितवते **तस्मै** - गौतमाय राजा विद्याम् उपदिदेश इत्यर्थः ।।

**आ.भा. - स ह** इत्यादि । **सः** राजा गौतमेन एवमुक्तः **कृच्छ्री बभूव** - अतिशयेन दुःखितो जातः -

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति ।।

इति नीत्या, यदि न कथयामि तदा कुपितो ब्राह्मणः मह्यं शापं दास्यति । यदि कथयामि तदा क्षत्रकुलात् अन्यत्र विद्या गता स्यादिति परम्परा व्यवच्छिन्ना स्यात् इत्येवं चिन्ताकुलः राजा ब्राह्मणस्य अप्रत्याख्येयतां जानन् अतिशयेन दुःखी बभूव इति भावः ।

विमृश्य राजा **तं** ब्राह्मणं **चिरं वस** इत्येवम् **आज्ञापयाञ्चकार** । ततः राजा **तं** गौतमम् **उवाच** - हे गौतम ! **यथा** - येन प्रकारेण **त्वं मा** अवदः, तथैवाहं करिष्यामि । विद्योपदेशं करिष्यामि इत्यर्थः । **यथा इयम्** इत्यादि । **यथा** - येन प्रकारेण इयं वक्ष्यमाणा पञ्चाग्निविद्या **पुरा** विद्यमानापि यस्मात्कारणात् **त्वत्तः प्राक्** - पूर्वं ब्राह्मणान् **न गच्छति** - न गतवती तस्मात्कारणात् सर्वेषु लोकेषु **क्षत्रस्य** - क्षत्रियजातीयस्यैव **प्रशासनमभूत्** - क्षत्रियजातेरेव एतद् विद्योपदेष्टृत्वम् आसीत् । ब्राह्मणजातीयेषु एतद्विद्या नासीत् नास्ति वा । अतः ब्राह्मणानामेव समीपं गत्वा विद्यां प्रक्ष्यामि इति मतिः न कर्तव्या तथा चिरवासाज्ञापनेन सञ्जातापमानमपि सोढव्यमेव इति । उपदेष्टरि सर्वदेव श्रेष्ठबुद्धिः करणीया इति भावः । **तस्मै होवाच** । **तस्मै** - गौतमाय चिरकालं ब्रह्मचर्यादिक्रमेण उषितवते ब्राह्मणाय राजा विद्योपदेशं कृतवान् इत्यर्थः ।

**सु. - स** तु राजा श्रुत्वेदं **कृच्छ्री बभूव** - खिन्नो बभूव, कुतः ? विद्या हि विनीताय अन्तेवासिने प्रदेया । विप्रश्च नार्हति अन्तेवासितया क्षत्रियेण विनेतुम् । ब्राह्मणश्चायम् अप्रत्याख्येयः इति । अथ विचार्य यद्येवं **चिरं वस इत्याज्ञापयाञ्चकार** । अप्रत्याख्यानात् आज्ञाम् आत्मनः मानिताम् आकलय्य अग्र्यवर्णाय विविदिषवे अवरवर्णेन उपदेष्ट्रा अनुपनीयैव विनयाधानमात्रेण कृतपरीक्षाय विद्या देया इति वर्णमर्यादां रक्षन् उपदिशन् विद्याम् आदौ अस्याः विद्यायाः क्षत्रियात् अन्यत्र अलभ्यतां ज्ञापयति तस्य अदरातिशयाय । **गौतम!** यथा त्वं मामवदः 'तवैव मानुषमस्तु वित्तं तामेव मे ब्रूहीति' तथैव इयमस्ति विद्या, यतः इयं विद्या **त्वत्तः प्राक् ब्राह्मणान् न गच्छति** । मयोपदिष्टात् त्वत्तः एव इतः ब्राह्मणान् गमिष्यति । तस्मादेव सर्वेषु लोकेषु क्षत्रियस्यैव अस्यां विद्यायां **प्रशासनम्** - उपदेशः अभूत् । तद्युक्ता नाम चिरनिवासेनापि एतदधिगमे प्रवृत्तिः । यद्वा - कृच्छ्रीबभूव, क्षत्रियात् अन्यत्र अलब्धप्रसरा इयं विद्या गुप्ता नाम पूर्वैः एतावत् । ब्राह्मणश्च अयम् अप्रत्याख्येयः इति । अर्थितो हि क्षत्रियः समर्थो नेति न ब्रूयात्, ब्राह्मणश्चार्थयिता, अथापि सपदि देयोऽयं नार्थः, यत् विद्याविशेषो अयम्, परीक्षा तु अपेक्ष्यते, तदाज्ञापयाञ्चकार चिरं वस इति । न ब्रह्मचर्यादिनियमम् ; उत्तमो हि वर्णो नावरेण शिष्यभावेन विनेयः । चिरनिवासमात्रेण तु श्रद्धा परीक्षिता स्यात् । आह च इदम् यथा **त्वं** - सर्वस्य वेत्ता त्वमपि **मां** क्षत्रियम् अवदः 'तामेव मे ब्रूहीति' तत एव विजानीहि न ब्राह्मणेषु विद्येयं क्षत्रियस्यैव अत्र प्रशासनम्, तत्सोढव्यः चिरनिवासः इति । वस्तुतस्तु विद्यां विशिष्टां लिप्सोः गरीयसोऽपि वर्णतो अवरेऽपि उपदेष्टरि गुरुप्रतिपत्तिः उचितैव,

अवरोऽपि वर्णतो विद्यया गरीयान् उपदेष्टा विनेतुमर्हति नाम विद्यार्थिनम् । अत एव इह राजा प्रथमम् आगतमात्रम् एवम् अनवगत्यास्य विविदिषां भगवन् ! **गौतम !** इति सम्बोधयन्नाह मानुषस्य भगवन् । वित्तस्य वरं वृणीथा इति, यदा च अयमाह तामेव ब्रूहीति निवृत्तो भगवच्छब्दः, प्रत्युत आज्ञापयाञ्चकार । कथं विप्रे गरीयसि आज्ञापनम् ? तदवगम्यते विद्यार्थिताम् अवगत्य विनीयते नाम चिरं वस इत्याज्ञावचनेन इति । आज्ञाप्रकारे भेदा एव चिरं वस इति ब्रह्मचर्येण श्रद्धया संवत्सरं वत्स्यथ इत्यादयः । यदुत अश्वपतिः कैकेयो राजा प्राचीनशालादीन् अनुपनीय एव उवाच इति इहैव एकादशखण्डे श्रूयते तान् हि अनुपनीय एतदुवाच इति, तत्तु राज्ञः प्रसादं तेषु ज्ञापयति । न तल्लिङ्गं नान्तेवासी भवितुमर्हति विप्रः क्षत्रियस्य इत्यत्र । यत्तत्रैव अव्यवधानेन श्रूयते 'ते ह समित्पाणयः पूर्वाह्ने प्रतिचक्रमिरे' (छां.उ.५-११-७) इति । एतेन इदं व्यज्यते विप्रेणापि विद्याम् इच्छता वर्णाभिमतिः त्याज्या । क्षत्रियेण आत्मनः विद्यां गृह्णन्नपि विप्रः मान्यः मर्यादां रक्षता इति । एवं चिरनिवासाज्ञया परीक्ष्य **तस्मै होवाच** यत्पृष्टम् ।।

**।। इति तृतीयखण्डभाष्यम् ।।**

## चतुर्थः खण्डः

**[राज्ञा गौतमाय पञ्चाग्निविद्योपदेशः - द्युलोकाग्निः]**

**असौ वाव लोको गौतमाग्निः । तस्यादित्य एव समित् । रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ।। १ ।।**

**प्र.** - तत्र, 'वेत्थ यथा पञ्चम्यामाहुतावापः' इति पञ्चमप्रश्नप्रतिवचनस्य इतरप्रतिवचनानुकूलत्वात् प्रथमतः तदेवाह - **असौ वाव लोको गौतमाग्निः** । हे **गौतम** । **असौ लोकः** - स्वर्गलोकः एवाग्निः । **तस्यादित्य एव समित्** । आदित्येन हि द्युलोको दीप्यते । **रश्मयो धूमः** । धूमस्य समित्प्रभवत्वात् आदित्यरश्मीनां धूमत्वम् । **अहरर्चिः** । प्रकाशकत्वात् **चन्द्रमा अङ्गाराः** । अर्चिः प्रशमकालप्रभवत्वाच्च चन्द्रमसोऽङ्गारत्वम् । **नक्षत्राणि विस्फुलिङ्गाः** । चन्द्रावयववदुपलभ्यमानत्वात् विस्फुलिङ्गत्वम् ।।

**आ.भा.** - 'वेत्थ यथा पञ्चम्यामाहुतावापः' इत्यादि अन्तिमप्रश्नोत्तरस्य तदितरोत्तरानुकूलत्वात् प्रथमतः तदेव दर्शयति **असौ वाव** इत्यादि । हे **गौतम !** **असौ** -

स्वर्गलोकः एवाग्निः, अग्निरिव होमाधारत्वात् । **तस्य** - स्वर्गलोकाग्नेः **आदित्यः** - सवितैव **समित्** - इन्धनम् । इन्धनेन अग्निः दीप्यते तथैव सूर्येण स्वर्गो लोको दीप्तो भवति । **रश्मयो धूमः** - सवितुः किरणाः एव धूमस्थानीयाः । धूमस्य इन्धनजन्यत्वात् आदित्यरश्मीनां धूमत्वम् । **अहरर्चिः** प्रकाशकत्वसामान्यात् । **चन्द्रमा अङ्गाराः** - यथा अर्चिषोऽभावे अङ्गारो भवति । तथा दिवसावसाने एव चन्द्रमा उदेति, तेन चन्द्रमसः अङ्गारत्वम् । **नक्षत्राणि विस्फुलिङ्गाः** - चन्द्रावयववत् उपलभ्यमानत्वेन नक्षत्राणां विस्फुलिङ्गत्वम् ।।

**सु.** - प्रथमं चरमप्रश्नस्य प्रतिवचनमाह ; अनेन सुगमं प्रतिवचनम् अन्यस्य इति । **असौ वाव लोको गौतमाग्निः । हे गौतम !** द्युलोकः एवाग्निः ; **तस्यादित्य एव समित्** - येनाग्निः समिध्यते सा समित् ; आदित्येन हि द्युलोकः दीप्यते । ये तस्य रश्मयः ते तस्य धूमाः । अहः अर्चिः प्रकाशसाम्यात् । **चन्द्रमा अङ्गाराः** - अहः अर्चिषि प्रशान्ते यः शिष्यते स चन्द्रमाः स्थूलोऽङ्गारः । आदित्यस्यैव च तेजोरूपान्तरं चान्द्रम् । नक्षत्राणि विशीर्णाः विस्फुलिङ्गाः । रूपणम् एतद्दृष्टये ।।

**[सोमराजोत्पत्तिः]**

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा सम्भवति ।। २ ।।**

**।। इति चतुर्थः खण्डः ।।**

**प्र. - तस्मिन्.........जुह्वति ।** आदित्यादिलक्षणसमिदाद्युपेते द्युलोकलक्षणाग्नौ **देवाः** - इन्द्रियाणि **श्रद्धां** - 'श्रद्धा वा आपः' (तै.ब्रा.३-२-४) इति श्रुतेः श्रद्धाशब्दिते अपः जुह्वति । आत्मधर्मभूतबुद्धिविशेषलक्षणश्रद्धायाः [1]होतव्यत्वासम्भवात्[1] श्रद्धाशब्देन आप एव उच्यन्ते इति द्रष्टव्यम् । न च इन्द्रियाणां द्युलोकाग्नौ भूतसूक्ष्मरूपाहुतिप्रक्षेपकर्तृत्वं कथमिति वाच्यम् - इन्द्रियाणाम् अभावे भूतसूक्ष्माणां जीवं परिष्वज्य द्युलोकगमनासम्भवात् इन्द्रियाणाम् होतृत्वम् उपपद्यते इति द्रष्टव्यम् । द्युलोकादिप्रापककर्मणाम् इन्द्रियाधीनत्वात् वा तथोक्तिः इति द्रष्टव्यम् । **तस्या आहुतेः सोमो राजा सम्भवति ।** एवं स्वकर्मभिः द्युलोकं गतो जीवः स्वर्गभोगयोग्यदिव्यदेहयुक्तो भवति इत्यर्थः । न च अप्छब्दितानां भूतसूक्ष्माणां सोमराजभावे कथिते कथं जीवस्य सोमराजभावः [2]उच्यते[2] इति वाच्यम् । उत्तरत्र

---

1. होतव्यत्वाभावात् - अ,आ । 2. उपपद्यते - क ।

पितृयाणे, एष सोमो राजा इति चन्द्रमसं प्राप्तस्य जीवस्य सोमराजभावश्रवणात् अत्र निर्दिश्यमानसोमराजभावस्यापि भूतसूक्ष्मपरिष्वक्तजीवविषयत्वात् ।।

**आ.भा. - तस्मिन्नेतस्मिन्नग्नौ** - सूर्यादिलक्षणेन्धनादि युक्ते द्युलोकात्मकाग्नौ **देवाः** - इन्द्रियाणि **श्रद्धां** - श्रद्धाशब्दबोध्याः अपः **जुह्वति** - हवनं कुर्वन्ति 'श्रद्धा वा आपः' (तै.ब्रा.३-२-४) इति श्रुतेः । यद्यपि बुद्धिविशेषात्मकश्रद्धाया होतव्यत्वं न सम्भवति तथापि अत्र श्रद्धाशब्देन आपः एवोक्ताः भवन्तीति । स्वर्गलोकात्मकाग्नौ भूतसूक्ष्मलक्षणाहुतिप्रक्षेपकत्वम् इन्द्रियाणां कथं स्यात् ? इति न शंकनीयम् । इन्द्रियाभावे भूतसूक्ष्माणां जीवं संपरिष्वज्य गमनासम्भवात् तेषाम् इन्द्रियाणाम् आहुतिकर्तृत्वसम्भवात् इति तस्याः आहुतेः सोमो राजा भवति । एवं यथोक्तप्रकारेण स्वकर्मबलात् स्वर्गलोकं गतो जीवः स्वर्गभोगोपयोगिदिव्यदेहवान् भवति इत्यर्थः ।।

**सु. - तस्मिन्नेतस्मिन्** - द्युलोकाग्नौ **देवाः** प्राणलक्षणाः श्रद्धां जुह्वति आयुषोऽवसाने यजमानस्य । कथमेतत् ? श्रद्धा हि न मूर्तं वस्तु ! श्रद्धा इह आपः 'श्रद्धा वा आपः' (तै.ब्रा.३-२-४) इति हि श्रूयते । आपश्च न केवलाः, किन्तु भूतान्तरसंश्लिष्टाः । न हि केवलानाम् अपां स्थूलदेहारम्भकता । तत्र तत्र अग्नौ हुतानाम् अपां क्रमशः सोमादिभावम् उपगतानां पञ्चम्याम् आहुतौ आपः पुरुषवचसो भवन्तीति । श्रद्धया द्युलोकाय अग्निहोत्रादि-कुर्वतां यजमानानां प्राणाः आयुषः अवसाने यजमानस्य श्रद्धामयं भूतसूक्ष्मलक्षणम् आहुतिद्रव्यं द्युलोकाग्नौ क्षिपन्ति इति यावत् । तस्याः आहुतेः परिणामः **सोमो राजा भवति** - स्वर्ग्यभोगार्हामृतमयदेहो भवति ।।

**।। इति चतुर्थखण्डभाष्यम् ।।**

## पञ्चमः खण्डः

[पर्जन्याग्निः]

**पर्जन्यो वाव गौतमाग्निः, तस्य वायुरेव समित् अभ्रं धूमो विद्युदर्चिः अशनिरङ्गाराः ह्रादुनयो विस्फुलिङ्गाः ।। १ ।।**

**प्र. - पर्जन्यो......विस्फुलिङ्गाः । पर्जन्यः** - वृष्टिप्रवर्तकः देवः । **ह्रादुनयः** - मेघगर्जितानि । शिष्टं स्पष्टम् । अत्र वाय्वादीनां समिदादिकल्पनानिमित्तं यथायोग्यम् अन्वेषणीयम् ।

**आ.भा. - पर्जन्यः** इत्यादि । हे **गौतम ! पर्जन्यः** - वृष्टेः उपकरणाभिमानी देवविशेषः । स एवात्र अग्निरूपेण कल्पनीयः । **तस्य** - पर्जन्याख्याग्नेः वायुरेव **समित्** - इन्धनम् । वायुना पर्जन्यः समिध्यते । **अभ्रं धूमः**, धूमवल्लक्ष्यमाणत्वात्, **विद्युदर्चिः** - प्रकाशसामान्यात् **अशनिरङ्गाराः** काठिन्यात् । **ह्रादुनयः** - मेघगर्जितानि **विस्फुलिङ्गाः ।।**

**सु. - पर्जन्यो वाव गौतमाग्निः** - पर्जन्यः प्रसिद्धो वृष्ट्युपकरणाभिमानी देवविशेषः । स एवाग्निः अपरः । तस्य **वायुरेव समित्** - स हि वायुना हि दीप्यते, पुरोवातादिना हि पर्जन्यः समिन्धे । **अभ्रं धूमः** उद्गच्छति हि पुरोवातं समिधमनु **विद्युदर्चिः ।** प्रकाशसाम्यात् । **अशनिरङ्गाराः** - अग्निमयमूर्तखण्डरूपत्वात् । **ह्रादुनयः** - मेघगर्जितानि **विस्फुलिङ्गाः** विशीर्यमाणावयवशब्दसाम्यात् । अङ्गारावयवाः हि विशीर्यमाणाः विस्फुलिङ्गात्मना यदा पतन्ति, भवति तदा शब्दः । एवम् अभ्राणि मिथः सङ्घट्टनया यदा विशीर्यमाणावयवानि भवन्ति तदा भवति शब्दः ।।

**[होमेन वृष्ट्युत्पत्तिः]**

**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वति । तस्या आहुतेर्वर्षं सम्भवति ।। २ ।।**

**।। इति पञ्चमः खण्डः ।।**

**प्र. - तस्मिन्......सम्भवति ।** द्युलोकभोगनिमित्तकर्मावसाने सोमराजशब्दितः सः देहः द्रवीभूय सह जीवेन मेघमण्डले पतति इत्यर्थः ।।

**आ.भा. - तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति ।** हवनप्रयोजनमाह - **तस्याः** इति । तस्याः **आहुतेर्वर्षं** - वर्षणमेव फलं भवति । स्वर्गलोकभोगकारण-कर्मणोऽवसाने सोमराजशब्दशब्दितो देहः अब्बहुलतया द्रवीभूय जीवेन सह मेघमण्डले पतति इति भावः ।।

**सु. - तस्मिन्नेतस्मिन्** - पर्जन्याग्नौ देवाः **सोमं राजानम्** - सोमराजभावमापन्न-भूतसूक्ष्मम् अवसाने प्रारब्धस्य सुकृतस्य **जुह्वति । तस्या आहुतेः** निमित्तात् **वर्षं सम्भवति** अपगतसोमभावं द्रव्यान्तरारब्धे वर्षे विलीनम् अविभागतो वर्षात् भवति वर्षम् ।।

**।। इति पञ्चमखण्डभाष्यम् ।।**

## षष्ठः खण्डः

[पृथिव्यग्निः]

**पृथिवी वाव गौतमाग्निः, तस्याः संवत्सर एव समित् आकाशो धूमो रात्रिरर्चिः दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ।। १ ।।**

**प्र. - पृथिवी......विस्फुलिङ्गाः । तस्या संवत्सर एव समित् ।** संवत्सरेण कालेन समिद्धा हि पृथिवी सस्यादिनिष्पत्तये भवति । **रात्रिरर्चिः ।** नीलरूपाश्रय-पृथिव्यग्नेः अनुरूपत्वात् रात्रेः अर्चिष्ट्वम् ।।

**आ.भा. - पृथिवी** इत्यादि । हे **गौतम ! पृथिवी -** चतुर्दशभुवनाधारभूता भगवतः पूर्णपुरुषस्य रामस्य लीलास्थानम् । सा एवाग्निः **तस्याः -** पृथिव्याः संवत्सरः एव **समित् -** इन्धनम् । संवत्सरात्मकं समयेन एधमाना पृथिवी धान्यादीनां सम्पत्तये समर्था भवति । **आकाशो धूमः -** पृथिवीतः उत्थित इव आकाशो दृश्यते, अग्नेः धूम इव । **रात्रिरर्चिः -** अप्रकाशस्वरूपायाः पृथिव्याः समाना हि रात्रिः उभयोः तमोरूपत्वात् । दिशोऽङ्गाराः, उपशान्तत्वसामान्यात् । अवान्तरदिशः विस्फुलिङ्गाः क्षुद्रत्वसामान्यात् ।।

**सु. - पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समित् -** संवत्सरेण हि पृथिवी समिध्यते, प्रकाशते परिपक्वसर्वफला । **आकाशो धूमः -** उद्गतः इव ऊर्ध्वमग्नेः पृथिव्याः हि दृश्यते, रूपतश्च धूमेन सरूपः । **रात्रिरर्चिः -** कथम् अप्रकाशा रात्रेरर्चिः ? अग्नेरनुरूपम् अर्चिः ! पृथिवी इयम् अप्रकाशाग्नित्वेन रूपिता । स्वभावतः कृष्णा च पृथिव्यग्निः, अर्चिश्च तस्याग्नेः । स्वभावतः कृष्णा रात्रिः । **दिशोऽङ्गाराः -** प्रशान्तेः अकम्पनाच्च । **अवान्तरदिशो विस्फुलिङ्गाः -** दिशाम् अङ्गाराणाम् अवान्तरावयवत्वात् ।।

[अन्नोत्पत्तिः]

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नँ सम्भवति ।। २ ।।**

**।। इति षष्ठः खण्डः ।।**

**प्र. - तस्मिन्......सम्भवति ।** श्रद्धाशब्दवाच्यानि भूतसूक्ष्माणि इन्द्रियसंयुक्तानि स्वर्गभोगयोग्यदेहाकारेण परिणतानि सुकृतक्षये द्रवीभूतानि सन्ति पर्जन्यम् अवाप्य वर्षरूपाणि भूत्वा पृथिवीं प्राप्य व्रीहियवाद्यन्नानि भवन्ति इत्यर्थः ।।

**आ.भा. - तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नं सम्भवति ।** वर्षणेन व्रीहियवादीनां निष्पत्तिदर्शनात् । श्रद्धाशब्दज्ञाप्यानि सूक्ष्मभूतानि । चक्षुरादीन्द्रियसहितानि स्वर्गभोगोपयोगिशरीराकारेण परिणतानि स्वर्गजनककर्मणो भोगेन क्षये जाते द्रवीभूतानि पर्जन्यात्मकाग्निं समवाप्य वर्षरूपाणि भूत्वा पृथिवीं प्राप्य व्रीहियवाद्यन्नानि भवन्ति इति भावः ।।

**सु.** - तस्याः आहुतेः निमित्तात् विभज्य वर्षादन्ने विलीनमधिभागेन भवत्यन्नं तत् ।।

**।। इति षष्ठखण्डभाष्यम् ।।**

## सप्तमः खण्डः

[पुरुषाग्निः]

**पुरुषो वाव गौतमाग्निः, तस्य वागेव समित् प्राणो धूमो, जिह्वार्चिः चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ।। १ ।।**

**प्र. - पुरुषो......विस्फुलिङ्गाः । तस्य वागेव समित् ।** वाचा हि समिध्यते पुरुषः । न अवाग्मी । अतो वाक् समित् । एवम् अन्यत् द्रष्टव्यम् ।।

**आ.भा. - पुरुषः** इत्यादि । हे **गौतम !** पुरुषः एव अग्निः **तस्य वागेव समित्** वाचा मुखेन पुरुषः समिध्यते, न तु मूकः समिध्यते । तस्मात् **वागेव समित् -** इन्धनं । **प्राणो धूमः -** धूमवद् मुखात् निर्गमनात् । जिह्वा अर्चिः रक्तवर्णत्वात् । **चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः** विप्रकीर्णत्वसाधर्म्यात् ।।

**सु. - तस्य वागेव समित् -** वाचा हि पुरुषः समिध्यते । **प्राणो घूमः,** उद्गमनसाम्यात् । जिह्वा अर्चिः लोहितत्त्वसाम्यात् । **चक्षुरङ्गाराः -** प्रकाशसाम्यात् । **श्रोत्रं विस्फुलिङ्गाः -** चक्षुषो न्यूनप्रकाशसाम्यात् अपरोक्षार्थप्रकाशकात् चक्षुषः श्रोत्रं हि परोक्षार्थप्रकाशकं न्यूनम्, चक्षुषोऽङ्गारस्य पार्श्वे निपतितम् अल्पप्रकाशं श्रोत्रं विस्फुलिङ्गो नाम ।।

[रेतसः उत्पत्तिः]

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुते रेतः सम्भवति ।। २ ।।**

**।। इति सप्तमः खण्डः ।।**

**प्र. - तस्मिन्.....सम्भवति ।** एवं व्रीह्याद्यन्नरूपाणि भूतसूक्ष्माणि जीवसंश्लिष्टानि पुरुषेण अद्यमानानि पुरुषे रेतोरूपेण परिणमन्ते इत्यर्थः ।।

**आ.भा. - तस्मिन्** इत्यादि । अन्नं व्रीहियवादिलक्षणं रेतः सम्भवति । हूयमानं व्रीह्यादिकं रेतोरूपेण पुरुषे परिणमते । व्रीह्याद्यन्नलक्षणानि सूक्ष्मभूतानि जीवसम्बद्धानि पुरुषेण भुज्यमानानि पुरुषे रेतोरूपेण परिणामं प्राप्नुवन्ति इत्यर्थः ।।

**सु. - तस्याः आहुतेः** अन्नं **रेतः सम्भवति -** देवैः हूयमानं तदन्नम् अपगतान्नभावं रेतोरूपं भवति । यदविभक्तमन्ने भूतसूक्ष्मं तदन्नपरिणामे रेतस्य विभागं प्राप्य रेतः भवति ।।

**।। इति सप्तमखण्डभाष्यम् ।।**

## अष्टमः खण्डः

[योषाग्निः]

**योषा वाव गौतमाग्निः, तस्या उपस्थ एव समित् उपमन्त्रयते स धूमो योनिरर्चिः, यदन्तः करोति तेऽङ्गाराः अभिनन्दा विस्फुलिङ्गाः ।। १ ।।**

**प्र. - योषा.....विस्फुलिङ्गाः ।** उपमन्त्रणं - सङ्केतकरणम् । लोहितत्वात् योनेः अर्चिष्ट्वम् । **अन्तःकरणम् -** मिथुनीकरणम् । **अभिनन्दाः -** तज्जन्यसुखलवाः ।।

**आ.भा. - योषा** इत्यादि । हे **गौतम! योषा -** स्त्री सैव अग्निः **तस्या उपस्थ एव समित्** इन्धनम् । उपस्थेन योषा पुत्राद्युत्पादनाय समिद्धा भवति । **यदुपमन्त्रयते स धूमः -** तत्र उपमन्त्रणम् सङ्केतकरणम् । योनिः अर्चिः लोहितत्वसामान्यात् । **यदन्तःकरोति तेऽङ्गाराः -** तत्रान्तःकरणं मिथुनीकरणं । **अभिनन्दाः विस्फुलिङ्गाः** तज्जनितसुखलेशाः ।

रेतोरूपाणि भूतसूक्ष्माणि योनिद्वारा स्त्रीशरीरं प्रविष्टो भूत्वा गर्भत्वेन परिणमन्ते इति भावः ।।

**सु.** - स्पष्टोऽर्थः ।।

[गर्भोत्पत्तिः]

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेः गर्भः सम्भवति ।। २ ।।**

**।। इति अष्टमः खण्डः ।।**

**प्र. - तस्मिन्......सम्भवति ।** रेतोरूपाणि तानि योनिद्वारा स्त्रियं प्रविश्य गर्भत्वेन परिणमन्ते इत्यर्थः ।।

**सु. - गर्भः सम्भवति -** देवैः योषाग्नौ हुतं रेतः व्यपेतरेतोभावं गर्भात्मना भवति । यद्भूतसूक्ष्मम् अविभागात् रेतोभावं गतं तद्रेतसा सम्भूय स्थूलदेहारम्भकं भवति इति गर्भात्मता तस्य ।।

**।। इति अष्टमखण्डभाष्यम् ।।**

## नवमः खण्डः

[अपां पञ्चमाहुतौ पुरुषवचस्त्वनिगमनम्]

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । स उल्बावृतो गर्भो दश वा मासान् अन्तः शयित्वा यावद्वाऽथ जायते ।। १ ।।**

**प्र. - इति तु......भवन्तीति ।** उक्तप्रकारेण श्रद्धासोमवृष्ट्यन्नरेतोरूपाहुतीनां मध्ये रेतोरूपायाम् पञ्चम्याम् आहुतौ अप्छब्दितानि भूतसूक्ष्माणि पुरुषशब्दाभिलपनीयानि भवन्ति इत्यर्थः । इतिशब्दः पञ्चमप्रश्नप्रतिवचनसमाप्तिद्योतनार्थः[१] ।

---

१. यत्तु द्युलोकात् इमां प्रत्यावृत्तयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेण आविश्य लोकं प्रत्युत्थायी भवति (शत.ब्रा.११-६-२-१) इति वाजसनेय उक्तम् । तत् प्रासङ्गिकम् इह उच्यते ।। इति शङ्करभाष्यम् ।।

**स उल्बावृते......जायते । सः** - गर्भः उल्बेन - जरायुणा वेष्टनेन वेष्टितस्सन् **दश वा मासान् अन्तः** - मातृकुक्षौ शयित्वा **यावद्वा** - नव वा एकादश वा द्वादश वा मातुः कुक्षौ शयित्वा **अथ** - अनन्तरं **जायते** इत्यर्थः ।।

**आ.भा. - इति तु** इत्यादि । **इति तु** - एवम् उक्तप्रकारेण **पञ्चम्यामाहुतौ** - योषात्मकाग्नौ रेतस आहुतौ **आपः** सूक्ष्मभूतानि पुरुषवचसः **भवन्तीति** - तानि भूतानि पुरुषपदवाच्यानि भवन्तीति ।

**स उल्बावृत** इत्यादि । **सः** - गर्भः **उल्बावृतः** - जरायुणा चर्मपुटकेन वेष्टितस्सन् **दश वा** नव वा यावद्वा एकादश द्वादश मासान् यावत् **अन्तः** - मातुः उदरे **शयित्वा** - निवासं कृत्वा **अथ** - अनन्तरं **जायते** - समुत्पद्यते । मातुः उदरात् बहिर्गतो भवति ।।

**सु. - इति तु** - क्रमेण **पञ्चम्यां** - योषाग्नौ **आहुतावापः** (यद्भूतसूक्ष्मं) **पुरुषवचसो भवन्ति** - पुरुष इति वचसः विषयाः भवन्ति । इति शब्दः प्रतिवचनसमाप्तौ । एवं पञ्चमस्य प्रश्नस्य प्रतिवचनम् अभिधाय, जिहासामिह उत्पादयितुम् अस्य दुःखभूयिष्ठतां ज्ञापयन्नाह - **स** इत्यादिना । स पुरुषवचसो योग्यः गर्भः **उल्बावृतः** - जरायुणा आवेष्टितः, भुग्नपृष्ठग्रीवो नियन्त्रितकरचरणः, दश नव वा मासान् यावत् अन्तः मातुः उदरे मलमूत्रपरिप्लुते शयित्वा अथावसरे प्राप्ते प्रोद्गतेन प्रसूतिमारुतेन वेगेन प्रणुन्नः सपदि अधोमुखीभूय निपतति संकटे योनिद्वारे । निरुद्धनिश्वासो निपीडितसर्वावयवः क्लेशेन महता निःसृत्य जायते नाम । अनुभूय दुःखसहस्रं जातस्यापि अस्य नान्ततः सुखम् ।।

**[अन्त्यगमनम् (अन्त्येष्टिः)]**

**स जातो यावदायुषं जीवति । तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ।। २ ।।**

**।। इति नवमः खण्डः ।।**

**प्र. - स जातो......भवति । सः** - गर्भो जातश्च यावदायुः **जीवति ।** आयुःक्षयसमय एव तं **प्रेतं पुरुषं दिष्टं** - परलोकाय निर्दिष्टम् । अथ वा **दिष्टं** -

कर्मानुसृत्य यतः - द्युलोकपर्जन्याद्यग्नेः **इतः** - इहागतः - **यतश्च** - योषिद्रूपाग्नेः **सम्भूतः** - उत्पन्नः - तस्मात् अग्नय एव देवा हरन्ति । ततश्च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पुनरपि सम्भ्रमति इत्यर्थः ।

अयञ्च उपन्यासः वैराग्यहेतोः । कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्य उल्बाशुचि[1]पूया[1]वृतस्य शुक्लशोणितबीजस्य मातुः अशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धवीर्यबलशक्तितेजःप्रज्ञाचेष्टस्य बहुकालं शयनम्, ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिः, कर्मणोपात्तं यावत् आयुः तावदेव जीवनम् । पुनरपि घटीयन्त्रकुण्डिकान्यायेन आरोहणावरोहणलक्षणं भ्रमणं हि श्रूयमाणं वैराग्यम् आपादयति। अत एतदुपन्यस्तम् इति द्रष्टव्यम् ।।

**आ.भा. - स जातः** इत्यादि । **सः** - गर्भः **जातः** - समुत्पन्नः **यावदायुषं** - यावत्पर्यन्तम् आयुः तच्छरीरजननं कर्म तावत्पर्यन्तं **जीवति** - प्राणधारणं करोति । आयुषः क्षयसमये एव **तं प्रेतं** - मृतं पुरुषं **दिष्टं** - परलोकाय निर्दिष्टं यद्वा, **दिष्टं** - कर्मानुसृत्य **यतः** - द्युलोकपर्जन्याद्यग्नेः **इतः** - इह आगतः यतश्च स्त्रीरूपाग्नेः सकाशात् **सम्भूतः** - समुत्पन्नः तस्मै देवाः अग्नये हरन्ति । ततश्च द्युपर्जन्यपृथिवीपुरुषयोषात्मकाग्निषु पुनः पुनरपि सम्भ्रमति इति ।

अयमत्र उपन्यासः संसारात् वैराग्यं दर्शयितुम्ः - तथा हि - अतिशयितकष्टं हि मातुः उदरे मूत्रपुरीषवातकफपित्तादिपूरिते । तदनुलिप्तस्य गर्भस्य उल्बाशुचिपटवेष्टितस्य शुक्रशोणितबीजस्य, मातुः अशितपीतरसानुप्रवेशेन परिवर्धमानस्य निरुद्धबलवीर्यशक्तितेजः प्रज्ञाचेष्टस्य दशमासादिद्वादशमासात्मकबहुकालं शयनम्, तदनन्तरं योनिमार्गेण अतिशयं पीड्यमानस्य कष्टतमा निःसृतिः । ततः प्रारब्धकर्मणा प्राप्तं यावदायुः तावदेव जीवनम् । पुनरपि घटीयन्त्रन्यायेन चन्द्रलोके आरोहणम् अवरोहणमिति संसारात् वैराग्यमेव दर्शयतीति भावः ।।

**सु. -** यत् **स जातो यावदायुषं** कथञ्चन **जीवति तं प्रेतं** - मृतं अन्त्येष्टौ पुत्रेण **दिष्टम्** - अतिसृष्टम् आत्मनि अग्नय इतः लोकान् **हरन्ति,** यदयं यतोऽग्नेः द्युलोकादित आगतः, यतः द्युलोकाद्यग्नेः आहुतिक्रमेण सोमादिना **सम्भूतो भवति** । तदन्ते यथाऽऽगतं यथासम्भवम्

---

1. पटा - क, ख ।

अग्नौ गमनमस्य युक्तमिति **हरन्ति** नाम अन्ततोऽग्नयः एव । **यद्वा** - तं प्रेतम् **इतः** - इतः लोकात् स्थूलाद्वा देहात् अस्मात् **प्रेतं** - विनिर्गतम्, **तं पुरुषं** - पुरुषशब्दास्पदीभूतं भूतसूक्ष्मम् **दिष्टं** - अतिसृष्टं कर्मणा फलोपभोगाय, अग्नयः एव कर्मभिः उपासनेन वा तर्पिता **हरन्ति** - नयन्ति, क्व ? यत एव इतः द्युलोकादितः यतश्चासौ पुनः पुरुषात्मना सम्भूतो भवति तमेव पन्थानम् । एतेन घटीयन्त्रवत् आरोहणावरोहणतोऽस्य भ्रमणक्लेशमात्रपर्यवसाना गतिः इति अनादरणीयता सूच्यते ।।

**।। इति नवमखण्डभाष्यम् ।।**

## दशमः खण्डः

**[देवयानमार्गेण गमनागमननिरूपणम्]**

**तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः, अह्नः आपूर्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासाँस्तान् ।। १ ।।**

**प्र.** - अथ 'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तने' इति तृतीयं प्रश्नं प्रतिवक्ति - **तद्य......अभिसम्भवन्ति** । प्राक् प्रस्तुतस्य संसरतः जीवस्य स्वरूपं तदित्यनेन परामृश्यते । **तत्** - प्रत्यगात्मस्वरूपं **ये इत्थं** - उक्तप्रकारेण द्युपर्जन्यपृथिवीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतश्शरीरकतया देहादिलक्षणप्रकृतिविविक्ततया च ये विदुः इत्यर्थः । अत्र ब्रह्मात्मकतया च इत्यपि योजनीयम् । भाष्यकृता 'अप्रतीकालम्बनान्'(ब्र.सू.४-३-१४) इति सूत्रे 'पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात् अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव [1]तत्क्रतुन्यायेन[1] प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम्' इति हि भाषितम् ।

अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य तपश्शब्दितं ब्रह्म उपासते इत्यर्थः । वाजसनेयके समानप्रकरणे 'श्रद्धां सत्यमुपासते' (बृ.उ.६-२-१५) इति श्रवणात्, सत्यशब्दस्य ब्रह्मपरत्वात् तपश्शब्दोऽपि ब्रह्मपरः । 'अनियमः सर्वेषाम्' (ब्र.सू.३-३-३१) इत्यधिकरणे भगवता भाष्यकृता 'तद्य इत्थं विदुः, य एवमेतद्विदुः' (बृ.उ.८-२-१५) इति पञ्चाग्निविद्यानिष्ठान् 'ये चेमे' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्च उद्दिश्य अर्चिरादिका गतिः उपदिश्यते । 'सत्यं

---

1. तत्क्रतुन्यायात् - अ,आ ।

ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.१-१) 'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ.७-१६-१) इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः, तपश्शब्दस्यापि तेन एकार्थ्यात्, सत्यतपश्शब्दाभ्यां ब्रह्मैव अभिधीयते । श्रद्धापूर्वकं ब्रह्मोपासनं च अन्यत्र श्रुतम् 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपक्रम्य 'श्रद्धा त्वेव विजिज्ञासितव्या' (छां.उ.७-१९-१) इति श्रुतेः इति हि भाषितम् । उक्तं च व्यासार्यैः 'परमं यो महत्तपः' इत्यादिषु तपश्शब्दस्य ब्रह्मपरत्वम् इति । अत्र वाजसनेयके 'श्रद्धां सत्यम्' इति श्रद्धाशब्दस्य द्वितीयान्तत्वश्रवणात् इहापि श्रद्धाशब्दो द्वितीयान्तः । छान्दसत्वात् 'सुपां सुलुक्' (पा.सू.७-१-३९) इति सुपः लुक् । ततश्च पुरस्कृत्य इत्यध्याहारः । श्रद्धां पुरस्कृत्य ब्रह्मोपासते इत्यर्थः । [1]इतिस्तु[1] अविवक्षितः । अथवा एवकारोऽत्र अध्याहर्तव्यः । ब्रह्म इत्येव ये उपासते इत्यर्थः । ततश्च अब्रह्मोपासनव्यावृत्तिफलकोऽयम् इति शब्दो द्रष्टव्यः । यद्वा - श्रद्धातपश्शब्दयोः प्रसिद्धः एवार्थः । श्रद्धातपःपरायणानाञ्च ब्रह्मविद्यानिष्ठत्वम् अर्थसिद्धम् । ततश्च ब्रह्मविद्यानिष्ठः इत्यर्थः फलति । अयमप्यर्थः, 'तदप्यविरुद्धम्, आर्थत्वादपि शाब्दत्वं सम्भवति युक्तम्' इति वदतां व्यासार्याणामनुमतः एव ।

**तेऽर्चिषमभिसम्भवन्ति** । अर्चिर्देवताम् आतिवाहिकतया प्राप्नोति इत्यर्थः । **अर्चिषोऽहः अह्नः** इत्यादि । सर्वं स्पष्टम् ।।

**आ.भा.** - अथ 'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तने' इत्यादि तृतीयप्रश्नस्य उत्तरं दातुम् अयम् उपक्रमो भवति - **तद्य इत्थं विदुः** इत्यादि । **तत्** - प्रत्यगात्मस्वरूपं **ये** - गृहस्थाः **इत्थं** - पूर्वोक्तप्रकारेण द्यु-पर्जन्य-पृथिवी-पुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतोदेहकतया देहादिलक्षणप्रकृतिभिन्नतया च **विदुः** - जानन्ति । द्युलोकाद्यग्निभ्यः क्रमेण वयं समुत्पन्नाः अग्निस्वरूपाः पञ्चाग्न्यात्मान इत्येवं **ये** - गृहस्थाः जानन्ति इत्यर्थः । एवं ब्रह्मरूपेण आत्मानं जानन्ति तथा ये च अरण्योपलक्षिता वैखानसाः परिव्राजकाश्च **अरण्ये** - अरण्यवासिनः श्रद्धां पुरस्कृत्य **तपः** - तपः शब्दज्ञाप्यं ब्रह्म रामाख्यपरमात्मानम् **उपासते** - तदुपासनं कुर्वन्ति **तेऽर्चिषमभिसम्भवन्ति** । मरणानन्तरम् अर्चिर्देवताम् आतिवाहिकतया प्रसिद्धाम् **अभिसम्भवन्ति** - प्राप्नुवन्ति । अत्र प्रकरणे अर्चिरादिपदं सर्वत्र अभिमानिकदेवपरकम् । अर्चिषोऽहः ततोऽग्रे गत्वा दिवसाभिमानिदेवं प्राप्नुवन्ति, अह्नः आपूर्यमाणपक्षं, ततः आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासान् तान् प्राप्नुवन्ति ।।

---

1. इति शब्दस्तु - अ,आ ।

**सु.** - अथ द्वितीयप्रश्नं प्रतिवक्ति सान्निध्यात् । **तत्** - अपां पुरुषभावम् **ये इत्थम्** - उक्तेन प्रकारेण **विदुः** - द्युलोकाद्यग्नौ देवैः हुतानाम् अपामेव पुरुषभावः नात्मनः इति विदुः, प्रकृतिविलक्षणम् आत्मानम् उपासते इति यावत् । अविवेकिनो हि आत्मनि शिरःपाण्यादिलक्षणपुरुषभावम् आरोपयन्ति । ये तु अपामेव तं विदुः, ते हि आत्मनिष्ठाः । नापि आत्मनिष्ठां विना वेदनमात्रेण तेऽर्चिषम् अभिसम्भवन्ति इत्यादिना श्रूयमाणम् अर्चिरादिगमनं घटेत, निष्ठापर्यवसाय्येव च वेदनम् । ये चेमेऽरण्ये इति उत्तरत्र अरण्यशब्दश्रवणात् इमे च ग्रामे इति व्यज्यते । एतेन गृहिणोऽपि ज्ञानाकारं कर्म आकलयन्तः कर्मभिः अलिप्यमानाः उक्तेन वेदनेन अर्चिरादिना गच्छन्ति ब्रह्मेति गम्यते । **ये चेमेऽरण्ये श्रद्धातप इत्युपासते** - ये तु विहाय गृहान् प्रविश्य अरण्यं वानप्रस्थं पारिव्राज्यं वा स्वीकृत्य इमे श्रद्धातप इत्याद्युपासते, उपास्तिः इह तदेकानुष्ठानपरः, श्रद्धां तप एव अनुतिष्ठन्ति न गृहिणः इव अग्न्यादिकर्म, श्रद्धा तपश्च इह न केवलं कायशोषणपराणामिव, अनात्मविदां हि न घटेत अर्चिरादिकः पन्थाः ब्रह्मगमनं च, किं तु आत्मनिष्ठाभूयिष्ठमेव तपः, श्रद्धा च । आत्मनिष्ठतामेव बुद्धौ आधाय निर्दिशति **इमे इति** । एषां च आत्मविद्भ्यो गृहिभ्यो विशेषो निरूप्यते **अरण्ये श्रद्धा तप इत्युपासते** इति । इदमत्र बोध्यम् । व्युत्थिता वित्तैषणायाः पुत्रैषणायाश्च आत्मचिन्तने प्रवृत्ता वानप्रस्थं पारिव्राज्यं वाऽऽश्रित्य वासना उपशमनाय **तपः** - शारीरं मानसीं च श्रद्धाम् अभ्यस्यन्तः आत्मनि निष्ठां क्रमशः प्राप्य अन्ततोऽर्चिरादिना ब्रह्म गच्छन्ति । न्याय्यं प्रसिद्धं चैतत्, पन्थाश्च अयम् आत्मविदाम् अन्यत्रापि श्रुतः गृहिणां तु नास्य पथः सम्भावना । कर्मव्यापृतो हि असौ इति असम्भावना अनेन उपदेशेन निरस्यते । ये चेमे इत्यादि तु उदाहरणार्थम्, यथा इमे अरण्ये श्रद्धा तप इत्युपास्यमाना वानप्रस्थाः परिव्राजश्च आत्मनिष्ठया अर्चिरादिपथा यान्ति ब्रह्म, तथा तद्ये इत्थं विदुः गृहिणोऽपि अलिप्ताः कर्मभिः आत्मनिष्ठया यान्ति तेनैव पथा ब्रह्म तत् । इमे इति विशेषनिर्देशात् च एतत् व्यज्यते । एतेन पञ्चाग्निविद्याप्रकरणे अन्यान् प्रति अर्चिरादिगत्युपदेशः अनुचित इति शङ्का प्रत्युक्ता ।

ननु कथम् आत्मयाथात्म्यविदां ब्रह्मप्राप्तिः ? तत्क्रतुन्यायविरोधात् । नैष दोषः । प्रकृतितः अत्यन्तविलक्षणता इव ब्रह्मात्मकतापि हि आत्मनो याथात्म्यम् । तदात्मयाथात्म्यनिष्ठानाम् आत्मोपासने ब्रह्मस्वरूपस्यापि अनुप्रवेशात् उपपन्न एव ब्रह्मप्राप्तिः, ब्रह्म अत्र अक्षरस्वरूपं वा । श्रीभाष्ये तु तद्य इत्थं विदुरिति प्रकृतिवियुक्तब्रह्मात्मकप्रत्यगात्मोपासकाः, ये चेमेऽरण्ये इत्यादिना तु साक्षात् ब्रह्मोपासका इति विभागः आदृतः । तत्र शब्दार्थे विशेषश्च इत्थम् ; वाजसनेयके समानप्रकरणे 'श्रद्धां सत्यमुपासत' इति तपःशब्दस्थाने

सत्यशब्दश्रुतेः तपःशब्दः सत्यशब्देन एकार्थः, सत्यशब्दश्च ब्रह्मणि प्रसिद्धः, 'सत्यं ज्ञानमनन्तं ब्रह्म', (तै.उ.आन.२-१) 'सत्यं त्वेव विजिज्ञासितव्यम्' इति (छां.उ.७-१६-१) च श्रुतेः श्रद्धाशब्दो द्वितीयान्तः, लोपश्छान्दसः, पुरस्कृत्येति शेषः, श्रद्धां पुरस्कृत्य ब्रह्मेति उपासते, ब्रह्मोपासते इति यावत् । यद्वा - इति इति निपातेन कर्मणोऽभिधानात् श्रद्धा तप इति च प्रथमान्तम्, ब्रह्मोपास्ते तदनुकूलां श्रद्धामपि उपास्ते अनुपालयति, श्रद्धापूर्वकं ब्रह्मोपास्ते इति भावः । तेऽर्चिषम् अभिसम्भवन्ति इत्यादिव्याख्यातपूर्वम् । भाष्यकाराभिमतो नयनप्रकारः एव तु पूर्वाचार्याभिमतः ।। १-२ ।।

**मासेभ्यः संवत्सरँ, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति । एष देवयानः पन्था इति ।। २ ।।**

**प्र.** - अत्र अर्चिरादिशब्दाः तत्तदभिमानिदेवतापराः । **तत्पुरुषो......गमयति । तत्पुरुषः** - वैद्युतः पुरुषः **अमानवः** - असंसारी ; ब्रह्मलोकादागत्य **एनान्** - पूर्वोक्तद्विविधोपासकान् ब्रह्मलोकं प्रापयति इत्यर्थः । अमानवः सः 'एत्य ब्रह्मलोकान् गमयति' (बृ.उ.८-२-१५) इति श्रुत्यन्तरे श्रवणात् । **एष देवयान पन्था इति** । स्पष्टोऽर्थः ।।

**आ.भा.** - ततः **मासेभ्यः संवत्सरं संवत्सरादात् आत्यम् आदित्यात् चन्द्रमसं ततः चन्द्रमसो विद्युतम् । तत्पुरुष** इत्यादि तत्पुरुषो वैद्युतो हि देवविशेषः, स एव **अमानवः** - मानवभिन्नोऽसंसारी ब्रह्मलोकादागत्य **एनान्** - द्विविधोपासकान् गृहस्थान् वैखानसान् वा ब्रह्म **गमयति** - प्रापयति । अमानवः सः 'एत्य ब्रह्मलोकान् गमयति' (बृ.उ.८-२-१५) इति श्रुत्यन्तरात् ।।

**[इष्टापूर्तकर्मिणां धूमादिमार्गः]**

**अथ य इमे ग्रामे इष्टापूर्ते[१] दत्तमित्युपासते, ते धूममभिसम्भवन्ति, धूमाद्रात्रिं, रात्रेरपरपक्षम्, अपरपक्षाद्यान् षड्दक्षिणैति मासाँ स्तान् नैते संवत्सरमभिप्राप्नुवन्ति ।। ३ ।।**

---

१. इष्टापूर्ते - अग्निहोत्रं तपस्सत्यं वेदानाञ्चानुपालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ।।
वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ।। (अत्रि,स्मृ.४३,४४) इति ।

**प्र. - अथ......प्राप्नुवन्ति । ये -** पुरुषाः ग्रामे एव स्थित्वा **इष्टं** - यागादि, **पूर्तं** - [1]खातादि[1] । **दत्तं** - दानम् । इति शब्दः तज्जातीयोपवासादिकर्मान्तरपरः । यागदानहोमादीनि कर्माणि येऽनुतिष्ठन्ति इत्यर्थः । उक्तप्रकारेण अनुतिष्ठन्ति इत्यर्थः इति व्यासार्यवचनस्यापि अयमेवार्थः । श्रुतौ [2]पूर्वम् अनुष्ठानप्रकाराननुवृत्तेः[2] । **ते धूममभिसम्भवन्ति ।** धूमदेवतां प्रतिपद्यन्ते आतिवाहिकत्वेन इत्यर्थः । अत्रापि धूमादिशब्दाः तत्तदभिमानिदेवतापराः । **दक्षिणैति** दक्षिणां दिशम् आदित्यः एति इत्यर्थः । 'दक्षिणादाच्' (पा.सू.५-३-३६) इति आजन्तोऽयं शब्दः । दक्षिणायनमासाभिमानीः देवताः प्रतिपद्यन्ते इत्यर्थः । **नैते संवत्सरमभिप्राप्नुवन्ति । एते -** इष्टादिकेवलकर्मकारिणः दक्षिणायनमासान् प्राप्यापि विद्वांसः इव न संवत्सरदेवतां प्राप्नुवन्ति इत्यर्थः ।।

**आ.भा. - अथ य इमे** इत्यादि । **अथ ये -** पुरुषाः ग्रामे एव वर्तमाना **इष्टं** - दर्शपूर्णमासयागादिकम् **पूर्तं** - आरामतडागादिकम् **दत्तं** - दानं हिरण्यादीनाम् तथा उपवासादिकम् **उपासते** - कुर्वन्ति । यागदानहोमोपवासादिकर्माणि कुर्वन्ति इत्यर्थः । **ते** - यथोक्तकारिणः पुरुषाः एतच्छरीरपातादनन्तरं **धूमम्** - आतिवाहिकतया धूमादिदेवतां प्राप्नुवन्ति । अत्रापि धूमरात्रिपक्षादिशब्दाः तत्तदभिमानिदेवताबोधकाः, अचेतनानां प्रापकत्वासम्भवात् । धूमात् रात्रिम् इत्यादिसन्दर्भः पूर्ववदेव व्याख्यातव्यः । **दक्षिणैति** - दक्षिणां दिशम् आदित्यः प्राप्नोति । दक्षिणायनमासाभिमानिनीः देवताः प्राप्नुवन्ति इति भावः ।। नैते संवत्सरम् अभिप्राप्नुवन्ति इति ।

**सु. -** अथ ये **पुनः इमे ग्रामे** एव रताः **इष्टापूर्ते दत्तमित्युपासते -** यागः खातो दानम् इत्यादीनि कर्माण्येव निरन्तरं सेवन्ते ते सुकृतस्य कर्मणः भोगाय प्रयान्ति अनेन धूमादिना पथा, धूमादिशब्दाः तदभिमानिलोकपराः, नैते संवत्सरम् अभिप्राप्नुवन्ति - नैषां विदुषामिव संवत्सराभिमानिलोकगमनं, किन्तु मासेभ्यः षड्भ्यः - दक्षिणायनात् पितृलोकं, ततः आकाशं, ततः चन्द्रमसम् आह्लादकं मण्डलं प्राप्नोति । व्यावर्तनप्रश्नप्रतिवचनेन अनेन वेत्थ यदितोऽधिप्रजाः प्रयन्ति इति प्रथमः प्रश्नोऽपि प्रत्युक्तोऽर्थात् । प्राप्य चन्द्रमसम् एषः सोमो राजा भवति - रमणीयाकृतिः भवति । तदवस्थं तद्देवानाम् अन्नम् - कथमेतत् ? **तं देवाः**

---

1. वापी कूपतटाकारामादिकरणम् - अ.आ ।
2. यद्वा श्रद्धापूर्वकत्वरूपोक्तप्रकारवाचीति शब्दः । इत्यधिकः - क.ख ।

**भक्षयन्ति** - तमिमं सुकृतफलभोगार्थं समागतं तत्रत्या आजानदेवाः अनुभवन्ति नाम पश्वादिकमिव स्वामी । सुकृतफलस्यापि अन्ततः परभोगपर्यवसायितया जिहासा व्यज्यते ।। ३-४ ।।

**मासेभ्यः पितृलोकम्, पितृलोकादाकाशम्, आकाशाच्चन्द्रमसम् । एष सोमो राजा, तद्देवानामन्नम्; तं देवा भक्षयन्ति ।। ४ ।।**

**प्र.** - पुनः किं प्राप्नुवन्ति इत्यत्राह - **मासेभ्यः.....चन्द्रमसम्** । स्पष्टोऽर्थः । एतेन 'वेत्थ यदितोधिऽप्रजाः प्रयन्ति' इति प्रथमश्च प्रश्नः प्रत्युक्तो भवति । **एष सोमो राजा** । अत्र एषः - इत्यनेन न अभिसम्भाव्यः चन्द्रमाः परामृश्यते । **चन्द्रमसः** - सोमराजभावोपदेशस्य व्यर्थत्वात् । अपितु इष्टादिकारी अभिसम्भविता परामृश्यते । 'तस्या आहुतेः सोमोराजा सम्भवति' इति न्यायेन [1]स्वर्ग[1] भोगयोग्यदिव्यदेहयुक्तो भवति इत्यर्थः । **तद्देवानामन्नम्** । अन्नवत् स देवानाम् उपकरणभूतो भवति इत्यर्थः । **तं देवा भक्षयन्ति** । **तं** - इष्टादिकारिणं देवभागम् उपगतं आजानसिद्धाः देवाः **भक्षयन्ति** - स्वकैङ्कर्येषु पशूनिव विनियुञ्जते इत्यर्थः । सूत्रितं च 'भाक्तं वाऽनात्मवित्त्वात्' (ब्र.सू.३-२-७) इति ।।

**आ.भा.** - एते केवलकर्मकारिणः इष्टादिकं सम्पादयन्तः दक्षिणायनमाससम्बन्धिनीं देवताम् अवाप्यापि विद्वांस इव **संवत्सरं** - संवत्सराभिमानिदेवं न प्राप्नुवन्ति । किन्तु मासेभ्यः पितृलोकम् तस्मात् आकाशम् आकाशात् चन्द्रमसं प्राप्नुवन्ति । **एष सोमो राजा** । अत्र एतत्पदेन इष्टादिकारिणः एव ग्रहणम् न तु चन्द्रमसः । तस्य सोमराजभावोपदेशस्य निरर्थकत्वात् । किन्तु तस्याः आहुतेः सोमो राजा भवतीति न्यायात् स्वर्गभोगोपयोगि दिव्यदेहयुक्तः भवति इति । **तद्देवानामन्नम्** - तत् ते इष्टादिकारिणः चन्द्रमण्डलम् आसाद्य देवतानाम् अन्नभावम् उपयन्ति । अयं भावः न ते आजानदेवतान् भक्षयन्ति मोदिकादिवत् । किन्तु कर्मदेवेन सह विहरणादिकं कुर्वन्ति । ते कर्मणा देवत्वम् आपन्नाः स्वर्गफलभोगयोग्यदेहम् आसाद्य आजानसिद्धदेवानां विहरणादिकार्योपकारका भवन्ति । राजन्यः इव विशः, वैश्यानामिव पशवः यथा वैश्यस्य उपभोगे करणभूताः भवन्ति । पशवः न तु पशून् ते चर्वन्ति एवं देवाः न तान् चर्वन्ति । किन्तु तेन सह विहरणादिकं कुर्वन्ति । **न ह वै देवा अश्नन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति** । इत्यादिना तेषां

---

1. स्व - अ,आ ।

चर्वणादिव्यापारप्रतिषेधात् इति । एतदेव दर्शयति **तं देवा** इत्यादि । **तं** - इष्टादिकारिणां कर्म देवभावम् उपगतम् **देवाः** - आजानसिद्धदेवाः **भक्षयन्ति** - स्वकीयकैङ्कर्यादिकार्येषु उपयोगं कुर्वन्ति पशूनिव विशः । एतत् तत्वं विशेषतः 'भाक्तं वाऽनात्मवित्त्वात्' (ब्र.सू.३-१-७) इति सूत्रे द्रष्टव्यम् ।।

**[इष्टादिकारिणां पुनरागमनमार्गः]**

**तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाशम्, आकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति, धूमो भूत्वाऽभ्रं भवति ।। ५ ।।**

**प्र. - तस्मिन् यावत्सम्पातमुषित्वा ।** सम्पतति अनेन इति **सम्पातः** कर्मशेषः । यावत् कर्मशेषम् उषित्वा इत्यर्थः । यावच्छब्दः साकल्यार्थः । साकल्यञ्च फलप्रदानप्रवृत्त कर्मविशेषविषयम् ; न तु सर्वकर्मविषयं द्रष्टव्यम् । 'वेत्थ यथा पुनरावर्तन्त' इति द्वितीयप्रश्नं प्रतिवक्ति **अथैत......यथेतम् । अथ** - अनन्तरं **एतमेवाध्वानं** - धूमादिमार्गं **यथेतं** - यथागतं पुनर्निवर्तन्ते इत्यर्थः । धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशक्रमेण आरोहणात् तेनैव विपरीतक्रमेण अवरोहणे प्राप्ते अत्र विशेषमाह - **आकाशम् आकाशाद्वायुम् ।** यथा आरोहणे आकाशात् चन्द्रमस अभिसम्भवन्ति एवम् अवरोहणे चन्द्रमसः आकाशम् अभिसम्भवन्ति । आरोहणावरोहणयोः आकाशाभिसम्भवस्तु अविशिष्ट इति भावः । **आकाशाद्वायुम् ।** अभिसम्भवन्ति इति शेषः । अत्र 'वायुर्भूत्वा धूमो भवति' इति उत्तरत्र श्रवणात् अत्रापि अवरोहन्तः आकाशो भवन्ति । वायुर्भवन्ति इत्येवार्थः । अवरोहतां च आकाशादिभवनं न तच्छरीरकत्वम् । सर्गाद्यकालम् आरभ्य आप्रलयम् आकाशाद्यभिमानि-देवतानाम् अन्यासां क्लृप्तानां सत्त्वेन प्रतिक्षणम् अवरोहतां आकाशाद्यभिमानिदेवतात्वानुपपत्तेः । अतः तत्सादृश्यमेवार्थः । या आपः चन्द्रमण्डले दिव्यशरीरम् आरब्धवत्यः, तासां कर्मक्षये द्रवीभूतानाम् आकाशगतानां भेदकाकारप्रहाणेन आकाशसादृश्ये तदुपश्लिष्टाः जीवाः अपि आकाशसमाः उच्यन्ते । ताश्च आपः इतश्च अमुतश्च वायुना नीयमाना वायुसमाना भवन्ति । ततश्च तत्संश्लिष्टो जीवोऽपि वायुःभवति इत्युच्यते । एवमुत्तरत्रापि द्रष्टव्यम् । **वायु......भवति ।** अपः बिभर्ति इत्यभ्रम् । मूलविभुजादित्वात् कः । ततश्च अभ्रशब्देन जलधारणावस्था उच्यते ।।

**आ.भा. - तस्मिन् यावत्** इत्यादि । **तस्मिन्** - स्वर्गलोके **यावत् संपातम्** - अत्र यावत् शब्दः साकल्यार्थकः । सम्पातशब्दः कर्मशेषपरकः । सम्पतति अनेन इति सम्पातः

इति व्युत्पत्तेः । **उषित्वा** स्वर्गे निवासं कृत्वा । द्वितीयप्रश्नस्य उत्तरं दर्शयति - **अथैतम्** इत्यादि । **अथ** - अनन्तरम् **एतमेवाध्वानं** - धूमादिमार्गं येन **यथा** - चन्द्रमण्डलम् अधिकर्मफलोपभोगाय अधिरूढः तमेव मार्गम् संप्राप्य **पुनर्निवर्तन्ते** । अवरोहविपरीतक्रमेण गच्छन्ति । धूमरात्र्यपरपक्षदक्षिणायन षण्मासपितृलोकाकाशक्रमेण अवरोहणं चन्द्रमण्डले गमनात् तेनैव विपरीतक्रमेण अवरोहणप्राप्तं, तत्र श्रुतिर्विशेषमाह - **आकाशम्** इत्यादि - गमनसमये आकाशात् चन्द्रमण्डलं गतवान् । एवम् आगमनसमये चन्द्रात् आकाशे आगच्छन्ति । आरोहणावरोहणयोः उभयत्रापि आकाशसम्बन्धः समानः एव । ततः **आकाशाद्वायुम्** अभिसंम्भवन्ति । तत्र आकाशादिभवनं न तच्छरीरकत्वम् । किन्तु आकाशसदृशाः सूक्ष्माः भवन्ति । यतः सर्गकालादारभ्य प्रलयपर्यन्तम् आकाशाभिमानिदेवानां सत्वेन प्रतिक्षणम् अवरोहताम् आकाशाद्यभिमानिदेवतास्वरूपत्वानुपपत्तेः । अतः आकाशसादृश्यम् एवार्थः । यज्जलं चन्द्रमण्डले भोगार्थम् आरब्धं तस्य कर्मक्षये द्रवीभवनात् व्यावर्तकाकारविनाशेन आकाशसादृश्ये तादृशजलोपसृष्टाः जीवाः अपि आकाशतुल्याः कथ्यन्ते इति । **वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति** । तत्र अपो जलानि बिभर्ति धारयतीति अभ्रम् ।।

**सु.** - अथ द्वितीयं प्रश्नं प्रतिवक्ति - **तस्मिन्** - इत्यादिना । **तस्मिन्** - चान्द्रमसे स्थाने **यावत्सम्पातम्** - सम्पतति अनेन इति सम्पातः सुकृतविशेषः । यावत्सुकृतम् उषित्वा, अथ अपरेण कर्मणा **एतमेवाध्वानं पुनर्निवर्तन्ते** - येन पथा उपगताः चन्द्रमसम् एतमेव पन्थानं प्रत्यावर्तन्ते । तत्र न सर्वथा यथागतं प्रत्यागच्छति - आकाशं **यथेतम्** - यथागतम्। आकाशात्तु विशेषः । यथा - आकाशाद्वायुम् आगच्छति । **वायुर्भूत्वा धूमो भवति** - वाय्वादिभावश्च इह वाय्वाद्यविभागापत्तिमात्रम्, न तु ताद्रूप्यं तच्छरीरता वा । अवस्थावैलक्षण्यात् अभ्रं मेघ इति विभागः ।।

**अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरं, यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति ।। ६ ।।**

**प्र.** - **अभ्रं भूत्वा मेघो भवति** । 'मिह - सेचने' (धा.पा.९९२) इति धातोः पचाद्यच्प्रत्यये न्यङ्क्वादित्वात् कुत्वे मेघ इति रूपम् । ततश्च मेघशब्देन वर्षोन्मुखावस्था

उच्यते । एवमेव अभ्रमेघयोः भेदः व्यासार्यैः उक्तः । **मेघो भूत्वा प्रवर्षति** । मेघसंश्लिष्टो भूत्वा वर्षधारारूपेण भूमौ पतति इति फलितार्थः । **त इह......जायन्ते** । **ते** - वर्षसंश्लिष्टभूतसूक्ष्मपरिष्वक्ता जीवाः **इह** - भूमौ पतित्वा व्रीहियवादिरूपेण जायन्ते इत्यर्थः । अत्र तेन रूपेण जननं नाम - न स्थावरभावप्रतिपत्तिः । स्थावरत्वप्राप्तिहेतुभूतकर्मणाम् इह अकीर्तनात् । किन्तु जीवान्तराधिष्ठितेषु व्रीह्यादिषु संश्लेषमात्रम् । सूत्रितं च 'अन्याधिष्ठिते पूर्ववदभिलापात्' (ब्र.सू.३-२-४) इति ।

**अतो वै खलु दुर्निष्प्रपतरम्** । **अतः** - स्थावरादिभावात् अतिचिरेण निर्गमनं भवति इत्यर्थः । अत्र खलन्तात् दुर्निष्प्रपतशब्दात् आतिशायनिके तरप् प्रत्यये, छान्दसे तशब्दलोपे, दुर्निष्प्रपतरमिति रूपम् । ततश्च अतिशयस्य प्रतियोग्याकाङ्क्षायां प्रागनुक्रान्ताकाशादीनां बुद्धौ सन्निधानात् तेषामेव प्रतियोगित्वेन अन्वयः स्यात् । ततश्च व्रीह्यादिषु आकाशाद्यपेक्षया चिरावस्थानोक्त्या आकाशादिषु अवस्थानस्य तदपेक्षय अल्पकालत्वं पर्यवस्यति । उक्तं च भगवता भाष्यकृता - 'छान्दसस्तशब्दलोपः । दुर्निष्प्रपतरमिति । दुःखनिष्क्रमणतरम् इत्यर्थः' इति। न च 'तयोरेव कृत्यक्तखलर्थाः' (पा.सू.३-४-७०) इति खलो भावकर्ममात्रविषयत्वात्, पतेश्च अकर्मकत्वेन भावार्थस्यैव परिशिष्टत्वात् तत्र च भावार्थस्य प्रकर्षाभावात् तरपो दौर्लभ्यमिति शंक्यम् - शिश्येतराम् इत्यादिप्रयोगात् भावार्थेऽपि प्रकर्षसम्भवात् । कर्त्रर्थपचाद्यजन्तात् तरपः सम्भवाच्च भाष्यस्य न अनुपपत्तिः । यद्वा - 'आतो युच्' (पा.सू.३-३-१२८) 'छन्दसि गत्यर्थेभ्यः' (पा.सू.३-३-१२९) इति छन्दसि विशेषविहितखलर्थयुजन्तः एवायं शब्दः । रेफरूपवर्णविकारश्छान्दसः । ननु अस्य तरप्प्रत्ययत्वाभावे पूर्वनिर्दिष्टाकाशादिभ्योऽतिशयः, तेषु अचिरावस्थानं वा कथं सिद्ध्येत् इति वाच्यम् - वैशब्दस्य अवधारणार्थतया अतश्शब्दितात् व्रीह्यादिभावादेव चिरं निष्क्रमणे कथिते ततः पूर्वनिर्दिष्टेभ्यः आकाशादिभ्यः अचिरात् निष्क्रमणं सिद्ध्यति । तशब्दलोपश्छान्दसः इति भाष्यस्यापि वर्णलोपेन वा वर्णविकारेण वा यथाकथञ्चित् साधुत्वं समर्थनीयम् इत्यत्र तात्पर्यम् ।

व्रीह्यादयो हि गिरितटात् उदकस्रोतसा उह्यमानाः नदीं प्राप्नुवन्ति । ततः समुद्रम् । ततो मकरादिभिः भक्ष्यन्ते । तेऽपि अन्यैः । तत्रैव च मकरेण सह समुद्रे विलीनाः समुद्राम्भोभिः सह जलधरैः आकृष्टाः पुनः वर्षधाराभिः मरुदेशे शिलातले वा हर्म्ये वा पतिताः [1]तिष्ठन्ति[1] । कदाचित् व्यालमृगादिपीताः, ते भक्षिताश्च अन्यैः तेऽपि अन्यैः इत्येवंप्रकाराः

---

1. सन्तिष्ठन्ति - अ,आ ।

परिवर्तेरन् । कदाचित् अभक्ष्येषु स्थावरेषु जाता: तत्रैव शुष्येरन् । भक्ष्येष्वपि स्थावरेषु जातानां रेतस्सिग्देहसम्बन्धो दुर्लभ एव, बहुत्वात् स्थावराणाम् इत्यतो दुर्निष्क्रमणत्वम् ।

**योयो.....भवति ।** अत्र स इत्यध्याहार: । यो व्रीह्यादि संश्लिष्टोऽवरोहति जीव: । स: **यो योऽन्नमत्ति यो रेत: सिञ्चति, भूय:** पश्चात् **तद्......भवति** - रेतस्सिग्भावं प्राप्नोति । आकाशादिभाववत् रेतस्सिग्भावोऽपि औपचारिक: । रेतस्सिग्योगी भवति इत्यर्थ: । एवमेव व्यासार्यै: उक्तम् ।।

**आ.भा.** - तत: मेघ: भवति जलं सिञ्चति इति मेघ: 'मिह सेचने' (धा.पा.९९२) इति धातो: मेघपदव्युत्पत्ते: । एवं च मेघशब्देन वर्षोन्मुखावस्था उच्यते । तत्र जलधारणावस्था अभ्रपदवाच्या, वर्षोन्मुखावस्था च मेघपदवाच्या, अयमेव अभ्रमेघयो: भेद: । **मेघो भूत्वा प्रवर्षति । स** इष्टादिकारी मेघसंश्लिष्टो भूत्वा जलधारारूपेण पृथिव्यां निपतति इत्यर्थ: । **त इह** इत्यादि । **ते** - वर्षसंश्लिलष्टभूतसूक्ष्मसम्परिष्वक्ता: जीवा: **इह** - पृथिव्यां पतित्वा व्रीहियवादिरूपेण **जायन्ते** - समुत्पन्ना: भवन्ति । **अतो वे खलु** इत्यादि । **अत:** - अस्मात् स्थावरादिभावात् **दु:** - दु:खेन निर्गमनं भवति । यथा - आकाशादितोऽल्पकालेन निर्गमनं भवति न तथा व्रीह्यादितोऽल्पकालेन निर्गमनं भवति । किन्तु अतिचिरेण निर्गमनं भवति इत्यर्थ: । **यो य** इत्यादि । **य:** - व्रीह्यादिसंश्लिष्टोऽवरोहति जीव:, स: यो **योऽन्नमत्ति** भक्षयति यो रेत: सिञ्चति **भूय:** - पश्चात् तदेव भवति रेत: सिग्भवति । यथा आकाशादिभाव: औपचारिक: तथैव रेत:सिग्भावोऽपि गौण एवेति ।।

**सु. - मेघो भूत्वा वर्षति ;** अविभज्य मेघत: वृष्टिद्वारा **त इह** पृथिव्यां निपत्य **व्रीहियवा ओषधय: तिलमाषाद्या वनस्पतयश्च जायन्ते ।** इहापि अभ्रादिषु इव अविभागापत्तिमात्रम्, न तु व्रीह्यादिशरीरकता, तद्धि निहीनतरं जन्म । द्युलोकात् अवतरतोऽस्य पञ्चमाग्नौ प्रवेशत: प्राक् नेह शरीरारम्भकं किमपि अस्ति, येन व्रीह्यादिस्थावरजन्म अस्य स्यात् । अत एव उत्तरत्रैव श्रूयते 'रमणीयचरणा रमणीयां योनिम्' इत्यादि । सूत्रकारोऽपि आह - 'अन्याधिष्ठिते पूर्ववदभिलापात्' (ब्र.सू.३-१-२४) इति । आशंक्य निराकरोति च 'अशुद्धमिति चेन्न शब्दात्' (ब्र.सू.३-१-२५) इति । **अतो वै खलु दुर्निष्प्रपतरम् । अत:** - व्रीह्यादित:, **दुर्निष्प्रपतरम्** - दुर्निर्गमतरम् । तत्र - तत्र काशादौ अनुप्रविशत: अस्य भूतसूक्ष्मसंवेष्टितस्य जीवस्य ततस्ततो निर्गमोऽचिरेण भवति । व्रीह्यादौ अनुप्रविष्टस्य तु ततो निर्गमनं तु

अनियतकालम् असुलभम् । न हि व्रीहयः सर्वे पुरुषस्य उदरम् अनुप्रविशन्ति, विशीर्यन्ते हि बहवः । न च नियतः रेतःसिग्योगः । बहवः हि ऊर्ध्वरेतसः । तत् कालगत्या ततस्ततो नीयमानस्य कदा रेतःसिग्योगः भवति इति अनियतम् इति दुर्निष्प्रपतरम् इत्युच्यते । छान्दसस्तकारलोपः । **यो योह्यन्नमत्ति यो रेतः सिञ्चति - यो** हि तदेव अन्नमत्ति यश्च रा एव रेतः सिञ्चति योनौ, काकतालीयं चैतत् । **तत् -** तदा, **भूय एव भवति -** यथापूर्वम् इहलोके कर्मणाम् आरम्भाय ।।

**[इष्टापूर्तकारिणां स्वस्वकर्मानुगुणं जन्म]**

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ।। ७ ।।**

**प्र. - तद्ये......योनिं वा । तत्** तेषु - **ये अभ्याशः -** अभ्यागन्तारः अभ्याङ्पूर्वात् अशेर्धातोः क्विबन्तात् बहुवचनान्तोऽयं शब्दः । परलोकात् इह लोकं प्रति अवतरन्तः इत्यर्थः । **ह** इति प्रसिद्धौ । **यत् -** यदा **रमणीयचरणाः -** चर्यते इति चरणं कर्म । रमणीयकर्माणः - भुक्तशिष्टपरिपक्वसुकृतकर्मयुक्ताः भवन्ति इत्यर्थः । अत्र यदा शब्दानु[1]रोधात्[1] तदा इत्यपि अध्याहर्तव्यम् । तदा ते रमणीयां ब्राह्मणादियोनिम् आप्नुवन्ति इत्यर्थः । **कपूयचरणाः** - कुत्सितकर्माणः इत्यर्थः । भुक्तशिष्टकर्मानुसारिजन्म प्राप्नुवन्ति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - तद्ये इह** इत्यादि । **तत् -** तेषु अवतरत्सु मध्ये **ये अभ्याशः -** अभ्यागन्तारः - परलोकात् इहलोकम् आगच्छन्तः **रमणीयचरणाः -** रमणीयकर्माणः चर्यते इति चरणं कर्म इति व्युत्पत्या चरणशब्देन कर्मणः ग्रहणम् । अयं भावः - चन्द्रलोकात् अत्रा आगच्छन्तः यदि शुभकर्माणः भवन्ति तदा **ते रमणीयां योनिमापद्येरन् -** शुभकर्मकर्तारः शुभामेव योनिं प्राप्नुवन्ति इत्यर्थः । तामेव योनिं दर्शयति - **ब्राह्मणयोनिं** इत्यादि । ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा ब्राह्मणादिरूपेण समुत्पन्नाः भवन्ति इत्यर्थः ।

---

1. रोधेन - क ।

**अथ ये अभ्याशः** - आगन्तारः चन्द्रमण्डलात् अवतरन्तः **कपूयचरणाः** - जुगुप्सित कर्माणः ते कपूयां कुत्सितां योनिम् **आपद्येरन्** - भुक्तशिष्टकुत्सितकर्मानुसारेण कुत्सितयोनौ एव जन्म गृह्णन्ति इत्यर्थः । तदेव दर्शयति - **श्वयोनिं वा** इत्यादि । **श्वयोनिं वा** कुक्कुरयोनिं वा । कुत्सितश्वादियोनौ जन्म प्राप्नुवन्ति इत्यर्थः । **सूकरयोनिं वा** - विड्वराहे वा समुत्पत्तिं लभन्ते । यदि कदाचित् मनुष्यो भवति तदा चाण्डालादिपापयोनिम् आपद्येरन् इति ।।

**सु.** - तत्र विशेषमाह - **तद्य इहेति** । इह एवम् अवतरतां मध्ये, **ये रमणीयचरणाः** - साधु आचरणाः पुरा, **अभ्याशः** - आगन्तारः, **ते रमणीयां योनिमापद्येरन्** - यत्तत्पदाभ्यां रमणीयाचरणरमणीययोनिप्राप्त्योः हेतुहेतुमद्भावः व्यज्यते । का रमणीया योनिः ? ब्राह्मणयोनिः क्षत्रिययोनिः वैश्ययोनिर्वा । तां यथासुकृततारतम्यं विशन्ति । **अथ य इह कपूयचरणाः** - कुत्सिताचरणाः, ते कुत्सितां **योनिम् आपद्येरन्, श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ।** उत्तरोत्तरं सुकृताल्पतया इव उत्तरोत्तरं दुष्कृताल्पतया इयं योनिगणना ।।

[मार्गद्वयभ्रष्टानां तृतीयागतिः]

**अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति - एतत् तृतीयँ स्थानम् । तेनासौ लोको न सम्पूर्यते । तस्माज्जुगुप्सेत । तदेष श्लोकः ।। ८ ।।**

**प्र.** - 'वेत्थ यथाऽसौ लोको न सम्पूर्यता (३)' इति चतुर्थप्रश्नं प्रतिवक्ति - **अथैतयोः न......सम्पूर्यते । अथ** शब्दः प्रतिवचनान्तरोपक्रमे । यानि भूतानि उक्तयोः **एतयोः** - देवयानपितृयाणयोः **पथोः** मध्ये **कतरेण च न** - केनापि मार्गेण न गच्छन्ति - मार्गद्वयप्राप्तिहेतुभूतविद्याकर्मरहिताः इत्यर्थः । **तानीमानि भूतानि क्षुद्राणि** - दंशमशककीटादीनि **असकृदावर्तीनि सन्ति, जायस्व, म्रियस्वेति भवन्ति ।** पुनः पुनः जायन्ते म्रियन्ते इत्यर्थः । 'सक्तून् पिब धानाः खादे इत्ययमभ्यवहरतीत्यस्य' पुनः पुनः पिबति पुनः पुनः खादति इति हि अयमर्थः तद्वत् । 'क्रियासमभिहारे लोट् लोटो हि स्वौ वा च तध्वमोः' (पा.सू.३-४-२) इति [1]पौनःपुन्ये[1] क्रियासमभिहारे

---

1. पौनःपुन्यलक्षण - अ,आ,क,ख ।

लोटस्तध्वमोर्हिस्वादेशविधानात् जायस्व म्रियस्व इति रूपम् । 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' (पा.सू.३-४-४) 'समुच्चये सामान्यवचनस्य' (पा.सू.३-४-५) इति भवन्ति इति सामान्यशब्दस्य अनुप्रयोगः । उक्तं च व्यासार्यैः 'पुरीमवस्कन्द लुनीहि नन्दनम्' (शि.व.१-५१) इतिवत् इति । एतत्तृतीयं स्थानम् । अत्र एतच्छब्देन जायस्व म्रियस्वेति भूतानि भवन्तिति प्रथमान्तशब्देन प्रधानतया निर्दिष्टाः पापकर्माणः परामृश्यन्ते, सर्वनाम्नां पूर्वनिर्दिष्टप्रधानपरामर्शित्वात् । स्थानशब्दाभिप्रायेण एकवचनम् । पूर्वनिर्दिष्टद्युलोक-ब्रह्मलोकापेक्षया क्षुद्रजन्तुभवनादिलक्षणस्थानस्य तृतीयत्वात् तत्स्थानसम्बन्धात् पापकर्माणः तृतीयं स्थानम् इत्युच्यन्ते । **तेनासौ लोको न सम्पूर्यते । तेन** - तृतीयस्थानशब्दितैः पापकर्मभिः **असौ** - द्युलोकः **न सम्पूर्यते** - न प्राप्यते इत्यर्थः । अत्र एतत् तृतीयं स्थानम् इति एतच्छब्देन पूर्वनिर्दिष्टः पौनःपुन्येन जननमरणादिभवनलक्षणः धात्वर्थ एव परामृश्यते । तस्यैव तृतीयस्थानत्वम् । ततश्च एतस्य तृतीयस्थानस्य सद्भावात् अत्रैव स्थाने जीवानां प्रायेण प्रचारात् द्युलोकगन्तॄणाम् अल्पत्वात् द्युलोको न सम्पूर्यते इत्युक्तावपि भाष्यस्य न विरोधः । अत एव 'द्युलोकारोहावरोहाभावेन द्युलोकासम्पूर्तिवचनात्' इति भाषितमिति द्रष्टव्यम् ।

**तस्माज्जुगुप्सेत ।** यस्मात् संसारिणां गतिः उक्तरीत्या कष्टतरा, तस्मात् संसारात् जुगुप्सेत । मा भूत् मे एवंविधसंसारमहोदधौ घोरे पातः इति निन्देत् इत्यर्थः । मुक्तिफलकपञ्चाग्निविद्या[1]स्वरूप[1]ज्ञानस्य फलान्तरं वक्तुमाह - **तदेषश्लोकः । तच्छब्दः** प्रसिद्धिपरः । **एषः** - वक्ष्यमाणः श्लोकः प्रसिद्धः इत्यर्थः ।।

**आ.भा.** - 'वेत्थ यथासौ लोको न सम्पूर्यते' इति चतुर्थप्रश्नस्य उत्तरं दातुमाह - **अथैतयोः** इत्यादि । अत्रा अथशब्दः प्रतिवचनोपन्यासे भवति । **एतयोः** - देवयानपितृयाणयोः **पथोः** - मार्गयोः मध्यात् **कतरेण चन** - केनापि मार्गेण गच्छन्ति । अर्थात् यानि भूतानि मार्गद्वयप्राप्तिकारणविद्याकर्मरहितानि तानि इमानि भूतानि **क्षुद्राणि** दंशमशककीटपतङ्गादीनि असकृदावर्तीनि जायस्व म्रियस्वेति भवन्ति । ये जीवाः विद्याकर्मरहिताः ते न स्वर्गं गच्छन्ति, न वा ब्रह्मलोकं गच्छन्ति । किन्तु वारं वारं पापयोनौ पुनः पुनः जायन्ते म्रियन्ते च इत्यर्थः । **एतत्तृतीयं स्थानम्** - अत्र एतच्छब्देन पापकर्माणः परामृष्टा भवन्ति । सर्वनामपदानां पूर्वनिर्दिष्टप्रधानबोधकत्वात् ।

---

1. स्वरूपविषयक - अ,आ ।

स्थानशब्दाभिप्रायेण च एकवचनम् । पूर्वकथितद्युलोकब्रह्मलोकापेक्षया दंशमशकादि-क्षुद्रजन्तुभवनादिलक्षणस्थानस्य तृतीयत्वात् तादृशपापस्थानसम्बन्धेन पापकर्मकर्तरि एव तृतीयं स्थानम् इति कथ्यते । तेनाऽसो लोको **न सम्पूर्यते** - तेन कारणेन हे गौतम ! तृतीयस्थानशब्दितैः पापकर्मभिः **असौ** द्युलोकः न **सम्पूर्यते** - कदाचिदपि पूरितो न भवति, तृतीयस्थानस्य विद्यमानत्वात् । एतस्य पापाख्यतृतीयस्थानस्य सद्भावात् । एतादृशःस्थाने एव पापजीवानां प्रायेण गमनात् द्युलोकगन्तॄणामत्यल्पत्वात् द्युलोको गमनागमनेन पूरितो न भवति इत्यर्थः । **तस्माज्जुगुप्सेत** इति । यस्मात् कारणात् संसारिणां गतिः उक्तरीत्या अतिकष्टतरा भवति तस्मात् कारणात् संसारात् जुगुप्सेत । एतादृशसंसारसागरे मम पातः मा भवतु । एवंरूपेण संसारं निन्देत् । संसारस्वरूपं सम्यगालोच्य **संसारजनककर्मणः** व्यावृत्य भगवद्भजनादिकं मुक्तिफलक्कर्मणि एव अभिरतिं कुर्यात् न तु संसारजनककर्मणि । पापात्मकः संसारस्तु कष्टजनकत्वात् त्याज्यः एव । योऽपि स्वर्गादिसुखजनकः सोऽपि फलतः कष्टजनकत्वात् त्याज्यः एव । तदुक्तम् 'शृङ्खला स्वर्णजातापि बन्धनाय न संशयः' इति । मुक्तिजनकविद्यास्वरूपज्ञानस्य फलान्तरमपि ऐहिकं दर्शयति - **तदेष श्लोकः** इति। अत्र तच्छब्दः प्रसिद्धार्थकः 'कला च सा कान्तिमती कलावतः (कु.सं.५-७१) इतिवत् । एष वक्ष्यमाणश्लोकः प्रसिद्धः एतद्विषये इत्यर्थः ।।

**सु.** - अथ चतुर्थं प्रश्नं प्रतिवक्ति । अथ इत्यर्थान्तरे । **एतयोः** देवयानपितृयाणयोः **पथोः कतरेण चन** - एकेनापि न यान्ति, कानि तानि ? **क्षुद्राणि** - दंशमशककीटादीनि केवलम् **असकृदावर्तीनि** - जननमरणचक्रक आवृत्तिमात्रपर्यवसायीनि, न भोगाय न कर्मणे वा इति यावत् । अत्यन्तपापभूयिष्टानि जायस्व म्रियस्व इत्येव ईश्वरेण संकल्प्यमानानि । **एतत्** - उक्तलक्षणं भूतजातम्, **तृतीयं स्थानम्** - तृतीयस्थानगम्, तृतीयो वर्ग इति लक्ष्यते । तेन असौ द्युलोको न सम्पूर्यते । यद्वा - असकृदावृत्तिमात्रकाणि भवन्तीति यदेतत् तदिदं तृतीयं **स्थानं** - स्थितिः । **तस्मात्** - यस्मादेवं संसरतां गतिः दुःखबहुला, तस्मात् जुगुप्सेत संसारात् । महता प्रयासेन प्राप्यापि द्युलोकं देवानाम् अन्नं भवति । तं देवाः भक्षयन्ति । अवसिते च साधनबले सपदि मुद्गराभिहतो मूर्च्छां गत इव विनष्टचेतनो निपतन्, दुर्निर्गमे निपत्य व्रीह्यादौ, कालगत्या कदाचिद्रेतोयोगं प्राप्य प्रविश्य मलमये योनिगर्ते पुनः पिण्डीभावादिक्रमेण स्थूलदेहं समधिगच्छन्, भवति श्वा वा चण्डालो वा सूकरो वा । तृतीयस्थानगतौ च गाढान्धकारे इव समुद्रान्तरे इव निपतितः विलुप्तदृष्टिः

निर्गमनोपायं कथमपि अप्राप्य जन्ममरणान्तराले एव उद्भ्रान्तः परिवर्तते केवलम् । तदिदं सर्वं विमृशतो भवेदेव जुगुप्सा संसारे इति भावः । **तदेषः श्लोकः** - तदिदं विज्ञानमधिकृत्य एष वक्ष्यमाणः श्लोकः ।।

**"स्तेनो हिरण्यस्य सुरां पिबँश्च गुरोस्तल्पमावसन्ब्रह्महा च । एते पतन्ति चत्वारः पञ्चमश्चाचरँस्तै" इति ।। ९ ।।**

**प्र.** - मन्त्रमेवाह - **स्तेनो......तैरिति । तैराचरन् - स्ते**नादिभिः चतुर्भिः विद्यायोनिसम्बन्धम् आचरन् इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - हिरण्यस्य** - सुवर्णस्य **स्तेनः** - चौर्यकर्ता **सुरां** - मद्यं **पिबन्** - मद्यपायी **गुरोस्तल्पं** - शय्यामावसन्, गुरुतल्पगामी इत्यर्थः **ब्रह्महा** - ब्रह्मघाती **एते चत्वारः** - तथा एतैः सह आचरन् स्तेनादिचतुर्भिः सह विद्यायोनिसम्बन्धम् **आचरन्** - कुर्वन् पञ्चमोऽपि पतन्ति अतिघोरे संसारसागरे पतिताः भवन्ति इति ।।

**सु.** - ये नाम एते पञ्च महापातकिनः - हर्ता ब्राह्मणसुवर्णस्य, विप्रः मद्यपायी, गुरोर्भार्यां सङ्गच्छन्, ब्रह्मघ्नः, चतुर्भिः एतैः सम्बन्धम् आचरन् अपरः, इति तैः सह सम्बन्धमाचरन्नपि अयं न पाप्मना लिप्यते । कोऽसौ ? **अथ य एतानेवं पञ्चाग्नीन्वेद** । स्तूयते पञ्चाग्निविद्या । य एवं प्रतिवचनोक्तप्रकारेण **वेद स शुद्धः - न लिप्यते** ; यस्मात् प्रसक्तेऽपि पापे, **पूतश्च** प्राक्तनपाप्मापगमात्, पुण्यः लोकः यस्य तथाभूतश्च भवति ।। ९-१० ।।

[पञ्चाग्निविद्यास्तुतिः]

**अथ ह य एतानेवं पञ्चाग्नीन् वेद, न सह तैरप्याचरन् पाप्मना लिप्यते । शुद्धः पूतः पुण्यलोको भवति, य एवं वेद य एवं वेद ।। १० ।।**

**।। इति दशमः खण्डः ।।**

**प्र. - अथ......वेद** । स्तेनादिभिः उक्तमहापातकिभिः अपि सह [1]संसर्गम्[1] आचरन् पाप्मना न लिप्यते । पूर्वोत्तराघशून्यः भवति इत्यर्थः । **य एवं वेद** । समस्तप्रश्नप्रतिवचन-समाप्तिद्योतिका द्विरुक्तिः । सिष्टं स्पष्टम् ।।

---

1. सम्बन्धम् - क ।

एतत्खण्डान्तर्गतवाक्यविषयकाणि अधिकरणानि उपन्यस्यन्ते - अर्चिरादिपादे 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र.सू.४-३-६) । कार्यं - हिरण्यगर्भमुपासीनानेव अर्चिरादिर्गणः नयति इति बादरिराचार्यो मन्यते । परिच्छिन्नप्राप्त्यर्थं हि गतिः उपपद्यते, न अपरिच्छिन्नपरब्रह्मप्राप्तये । न ह्याकाशं प्रेप्सता देशविशेषो गन्तव्यो भवति । 'विशेषितत्वाच्च' (ब्र.सू.४-३-७) । 'पुरुषो मानस एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परोवतो वसन्ति' (बृ.उ.६-२-१५)। इति गन्तव्यस्य बहुवचनान्तलोकशब्देन विशेषितत्वात् परब्रह्मण एकत्वेन बहुत्वासम्भवात्, लोकशब्दस्य देशविशेष एव मुख्यत्वाच्च न परब्रह्मणः अर्चिरादिप्राप्यत्वम् ।

ननु स 'एनान् ब्रह्म गमयति' इति नपुंसकलिङ्गब्रह्मशब्देन चतुर्मुखस्य कथं निर्देश इत्यत्राह - 'सामीप्यात्तु तद्व्यपदेशः' (ब्र.सू.४-३-८) । 'यो ब्रह्माणं विदधाति पूर्वम्' (श्वे.उ.६-१८) इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात् ब्रह्मशब्देन अमुख्यया वृत्त्या चतुर्मुखस्य निर्देश उपपद्यते इति भावः ।

ननु हिरण्यगर्भस्य द्विपरार्धावसाने नाशात् तं प्राप्तस्य पुनरावृत्तेः अवर्जनीयत्वात् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छां.उ.४-१५-५) इति अनावृत्तिप्रतिपादकश्रुतिविरोधः । तत्राह - 'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' (ब्र.सू.४-३-९) । 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' (मुं.उ.३-२-६) इत्यभिधानात् कार्यस्य ब्रह्मलोकस्यात्यये तदध्यक्षेण ब्रह्मणा सह अतः ब्रह्मलोकात् परं ब्रह्म प्राप्नोति । अतश्च अनावृत्तिश्रुतिरुपपद्यते इति भावः । 'स्मृतेश्च' (ब्र.सू.४-३-१०) ।

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ।। (कू.पु.१२-२७६)

इति स्मृतेश्च अयमर्थः अवसीयते ।

'परं जैमिनिर्मुख्यत्वात्' (ब्र.सू.४-३-११) । नपुंसकलिङ्गब्रह्मशब्दस्य परस्मिन् ब्रह्मण्येव मुख्यत्वात् परमेव ब्रह्म अर्चिरादिः प्रापयति इति जैमिनिराचार्यो मन्यते । तस्य परिपूर्णत्वेऽपि 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.८-३-४) इति श्रुत्यनुसारेण निःशेषाविद्यानिवृत्तेः देशविशेषविशिष्टब्रह्मप्राप्तिसापेक्षत्वात् देशविशेषविशिष्टब्रह्मप्राप्तये गतिः उपपद्यते । लोक्यते इति व्युत्पत्त्या लोकशब्दोऽपि ब्रह्मणि उपपन्नः । बहुवचनमपि एकस्मिन् उपचारात् प्रयुज्यते ।

'दर्शनाच्च' (ब्र.सू.४-३-१२) । दर्शयति च श्रुतिः ब्रह्मप्राप्तेर्गतिसापेक्षत्वम् 'एष सम्प्रसादो अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.८-३-४)

इति। ननु; 'प्रजापतेः सभां वेश्म प्रपद्ये' (छां.उ.८-१४-१) इति अर्चिरादिना गतस्य कार्यप्रजापतिविषयाभिसन्धिः दृश्यते । तत्राह - 'न च कार्ये प्रत्यभिसन्धिः' (ब्र.सू.४-३-२३) । नायं प्रत्यभिसन्धिः कार्यहिरण्यगर्भविषयः, अपितु परब्रह्मविषयः । तस्यैव प्रजापतिशब्दमुख्यवाच्यत्वात् । उत्तरत्र, 'यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम्' (छां.उ.८-१४-१) इति सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात्, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य' । 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' (छां.उ.८-१६-१) इति ब्रह्मलोकस्य अकृतत्वेन विशेषितत्वाच्च परमेव ब्रह्म अर्चिरादिः नयतीति जैमिनिः आचार्यो मन्यते ।

'अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च' (ब्र.सू.४-३-१४)। अब्रह्मभूतं नामादिकं ये ब्रह्मत्वेन उपासते - ते प्रतीकालम्बनाः । तद्भिन्नान् - प्रकृतिवियुक्तं प्रत्यगात्मानं ब्रह्मात्मकत्वेन ये पञ्चाग्निविदः उपासते, ये च केवलं परं ब्रह्मोपासते उभयविधानपि तान् नयतीति च बादरायणः आचार्यः मन्यते । केवलं परमेव उपासीनान् नयतीति पक्षे, कार्यम् उपासीनान् नयतीति पक्षे च, 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' इति श्रुतिविरोधप्रसङ्गात् । ननु पञ्चाग्निविद्यायाः ब्रह्मात्मक प्रत्यगात्मविद्यात्वे किं प्रमाणम् ? तत्राह - तत्क्रतुश्चेति । पञ्चाग्निविद्यायाः ब्रह्मविद्यात्वाभावे अर्चिरादिगतिर्वा तया गत्या ब्रह्मप्राप्तिर्वा न स्यात् । तत्क्रतुन्यायविरोधप्रसङ्गात् । ब्रह्मविद्यात्वे तु तत्क्रतुन्यायोऽपि अनुगृहीतो भवति । इयांस्तु विशेषः - पञ्चाग्निविद्या ब्रह्मात्मकस्वात्मविद्या । [1]परविद्यास्तु[1] प्रत्यगात्मशरीरकपरमात्मविद्याः विशेष्यविशेषणभावे परं व्यत्यासः । अयं तु भगवतः बादरायणस्य सिद्धान्तः इति स्थितम् ।

तथा लोके ग्रामादिगन्तॄणाम् इमं वृक्षं गत्वा इमां नदीं गत्वा सः ग्रामः गन्तव्यः इति तत्तद्देशिकोपदेशस्वरूपत्वादस्यापि वाक्यस्य अर्चिरादयः मार्गचिह्नभूताः । अथवा, 'अग्निलोकमागच्छति स वायुलोकम्' (कौ.उ.१-३) इति लोकशब्दश्रवणात् अर्चिराद्याः भोगभूमयः इत्येवं पूर्वपक्षे प्राप्ते - उच्यते 'आतिवाहिकास्तल्लिङ्गात्' (ब्र.सू.४-३-४) । विदुषाम् अतिवाहे परमपुरुषेण नियुक्ताः देवताविशेषाः आतिवाहिकाः । गन्तॄणां गमयितारः इति यावत् । तल्लिङ्गात् । 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति वैद्युतपुरुषस्य गमयितृत्वसिद्धवत्कारेण ब्रह्मगमयितृत्वमात्रविशेषप्रतिपादनपरेण वाक्येन इतरेऽपि गमयितारः इति प्रतीतेः । अर्चिरादिशब्दानां च, 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (ब्र.सू.२-१-५) इति सूत्रेण तदभिमानिदेवतापरत्वसम्भवात् ।

---

1. दहरादिविद्यास्तु - अ,आ,क,ख ।

ननु, वैद्युतपुरुषस्यैव ब्रह्मगमयितृत्वे [1]ऊर्ध्वं[1] कौषीतकीवाक्यानुसारेण निवेशितानां वरुणेन्द्रप्रजापतीनां कथं सम्बन्धः ? तत्राह - 'वैद्युतेनैव ततस्तच्छ्रुतेः' (ब्र.सू.४-३-५) । ततः विद्युतः उपरि वैद्युतेनैव ब्रह्मप्राप्त्यतिवाहनम् । 'स एनान् ब्रह्म गमयति' इति श्रुतेः । वरुणादयोऽपि तदनुग्राहकाः भवन्ति इति द्रष्टव्यमिति स्थितम् ।

तथा वैराग्यपादे लोकान्तरं गच्छतो जीवस्य देहारम्भकभूतसूक्ष्माणां तत्रैव सुलभतया न भूतसूक्ष्मपरिष्वक्ततया गमनमिति पूर्वपक्षे प्राप्ते, - उच्यते - 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्' (ब्र.सू.३-१-१) । पूर्वत्र 'संज्ञामूर्तिक्लृप्तिः' (ब्र.सू.२-४-१७) इति सूत्रे मूर्तिशब्देन निर्दिष्टो देहः तच्छब्देन परामृश्यते । तदन्तरप्रतिपत्तौ - देहान्तरप्रतिपत्त्यर्थं जीवो भूतसूक्ष्मैः परिष्वक्तः एव **रंहति** - गच्छति इत्यर्थः । पञ्चाग्निविद्यायां - 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति पञ्चस्वपि आहुतिषु अप्छब्दितानां भूतसूक्ष्माणां हूयमानतया सम्बन्धं सिद्धवत्कृत्यैव, अपां पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्तीति कथं वेत्थेति प्रश्नात्, द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु अग्निषु आपः श्रद्धासोमवृष्ट्यन्नरेतोरूपेण हूयमानाः सत्यः पञ्चम्यां रेतः आहुतौ पुरुषाकारेण परिणमन्ति इति प्रतिवचनदर्शनाच्च अप्छब्दितभूतसूक्ष्मपरिष्वक्तः एव आरोहावरोहयोः [2]सञ्चरन्ति इति[2] भावः । ननु 'आपः पुरुषवचसो भवन्ति' इति अपामेव पुरुषवचस्त्वं प्रतिपाद्यते । न भूतान्तराणाम् इति भावः । तत्राह - 'त्र्यात्मकत्वात्तु भूयस्त्वात्' (ब्र.सू.३-१-२) । तुशब्दः चोद्यव्यावृत्त्यर्थः । केवलानाम् अपां देहारम्भकत्वासम्भवेन त्र्यात्मकत्वात् अप्छब्दो भूतान्तरस्यापि उपलक्षकः । तर्हि कुतो अप्छब्देन निर्देशः इत्यत्राह - भूयस्त्वात् । तेजोऽबन्नलक्षणभूतत्रयमध्ये देहस्य लोहितप्रचुरतया अपां भूयस्त्वात् अप्छब्देन निर्देशः इति भावः ।

'प्राणगतेश्च' (ब्र.सू.३-१-४) । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति इन्द्रियाणामपि सहगतिश्रवणात्, भूतसूक्ष्मपरिष्वक्ततया जीवगमनाभावे निराश्रयाणाम् इन्द्रियाणां गमनासम्भवात्, भूतसूक्ष्मपरिष्वक्तस्यैव गमनम् अभ्युपगन्तव्यम् ।

'स्मर्यते च' (ब्र.सू.४-२-१३) । 'गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' (भ.गी.१५-८) इति इन्द्रियाणाञ्च नयनस्य स्मरणात् तेषाञ्च आश्रयतया भूतसूक्ष्माणां गतिः अभ्युपगन्तव्या । 'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्' (ब्र.सू.३-१-४) । 'यत्रास्य पुरुषस्य मृतस्याग्निं

---

1. विद्युत उर्ध्वं - क,ख । 2. सम्भवन्तीति - क ।

वागप्येति वातं प्राणश्चक्षुरादित्यम्' (बृ.उ.३-२-१३) इत्यादिना प्राणानाम्, मरणकाले अग्न्यादिषु अप्ययश्रवणात् न प्राणानां जीवेन सह गतिस्सम्भवतीति चेत् न अग्न्यादिषु अप्ययश्रवणस्य भाक्तत्वात् । 'ओषधीर्लोमानि वनस्पतीन् केशाः' (बृ.उ.३-१-१३) इति लोमकेशानामपि ओषधिवनस्पतिषु अप्ययश्रवणात् तस्य च प्रत्यक्षबाधितत्वेन ओषधिवनस्पतिषु लोमकेशाप्ययस्य भाक्तत्वस्य अभ्युपगन्तव्यत्वात् [1]तत्सहपठितानामग्न्यादिषु[1] वागाद्यप्ययानामपि भाक्तत्वमेव । ततश्च, अग्निं वागप्येति इत्यस्यायमर्थः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ.उ.२-४) इति अग्नेः वागधिष्ठातृतया मुखप्रवेशप्रतिपादनात् मरणकाले अग्निर्म्रियमाण-पुरुषवागधिष्ठातृतां परित्यज्य अनधिष्ठातृरूपेण वर्तते इति ।

'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः' (ब्र.सू.३-१-५) । यदुक्तम् - प्रश्नप्रतिवचनाभ्यां द्युपर्जन्यादिषु भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गमनमिति, तत् न उपपद्यते । प्रणवे एव विस्वरः इति न्यायेन प्रथमाहुतावेव, 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति प्रथमपर्याये श्रद्धायाः एव होम्यत्वश्रवणेन अप्छब्दितभूतसूक्ष्माणां होम्यत्वाश्रवणात् इति चेत् न - यदि प्रथमे पर्याये अप्छब्दितव्यतिरिक्तायाः श्रद्धायाः होम्यत्वम्, तर्हि प्रश्नप्रतिवचनयोः अपां पञ्चम्यामाहुताविति निर्देशो न उपपद्यते । अपां पञ्चमाहुतिसम्बन्धो हि तदितराहुतिचतुष्टयसम्बन्ध एव उपपद्यते । बुद्धिविशेषलक्षणश्रद्धाया आत्मतो निष्कृष्य [2]होम्यत्वा[2]नुपपत्तेश्च श्रद्धाशब्देन आप एव उच्यन्ते । 'श्रद्धा वा आपः' (तै.ब्रा.३-२-४) इति श्रुतेः ।

'अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः' (ब्र.सू.३-१-६) । द्युपर्जन्यादिषु प्रश्नप्रतिवचनवशात् भूतसूक्ष्माणां गमनसम्भवेऽपि न तत्परिष्वक्तस्य जीवस्य गमनम्, अश्रुतत्वादिति चेत् न - उत्तरत्र पितृयाणवाक्ये, 'मासेभ्यः पितृलोकं पितृलोकादाकाशं आकाशाच्चन्द्रमसमेष सोमो राजा' इति द्युलोकं प्राप्तस्य इष्टादिकारिणो जीवस्य सोमराजभावश्रवणात्, अत्रापि तस्याः आहुतेः सोमो राजा सम्भवति इति द्युलोकं प्रविष्टानां भूतसूक्ष्माणां सोमराजभावश्रवणात् अत्रापि आपः पुरुषवचसो भवन्ति इत्यप्छब्देन न केवलभूतसूक्ष्ममात्रम् उच्यते ; अपितु तत्परिष्वक्तः जीवः । पुरुषशब्दाभिलपनीयत्वमपि तत्परिष्वक्तः जीवस्यैव । ततश्च, 'आपः पुरुषवचसो भवन्ति' इत्यत्र अबादिशब्दानां तत्परिष्वक्तजीवपरत्वात् भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गमनं सिद्धम् ।

ननु 'तं देवा भक्षयन्ति' इति सोमराजभावं प्राप्तस्य भक्ष्यमाणत्वश्रवणात्, जीवस्य अनदनीयत्वात्, पितृयाणमार्गे सोमराजशब्दनिर्दिष्टो न जीव इत्यत्राह - 'भाक्तं

---

1. तत्सहचरितानाम् - क । 2. होम्यत्व - क,ख ।

'वाऽनात्मवित्त्वात् तथा हि दर्शयति' (ब्र.सू.३-१-७) । देवभक्ष्यमाणत्ववचनं भाक्तम्, केवलेष्टादिकारिणाम् अनात्मवित्त्वात् । अनात्मविदाञ्च, 'यथा पशुरेवं स देवानाम्' (बृ.उ.१-४-१०) इति श्रुतिदर्शनेन पशुवत् भोगोपकरणत्वात् 'तं देवाः भक्षयन्ति' इत्युक्तिरुपपद्यते । अतः भूतसूक्ष्मपरिष्वक्तः एव जीवः गच्छति इति स्थितम् ।

समनन्तराधिकरणे[१] - 'यावत्सम्पातमुषित्वा' इति संपातशब्दितसर्वकर्मफलस्य तत्रैव उपभोक्तव्यत्वश्रवणात् ।

"प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" ।। (बृ.उ.६-४-६)

इति बृहदारण्यके श्रवणात् सर्वं कर्मफलं भुक्त्वा निरनुशय एव अवरोहति जीवः । अनुशयः - भुक्तशिष्टं कर्म । एवं [1]प्राप्ते[1] उच्यते - 'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च' (ब्र.सू.३-१-८) । कृतस्य - कर्मणः अत्यये - अवसाने अनुशयवानेव प्रत्यवरोहति जीवः; दृष्टस्मृतिभ्यां - श्रुतिस्मृतिभ्याम् इत्यर्थः । 'तद्य इह रमणीयचरणा अभ्याशो ह यत्' इति श्रुतेः । 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीता विनश्यन्ति' (गौ.ध.सू.२-२-२९,३०) इति स्मरणाच्च । अतः सानुशयः [2]एवावरोहति[2] । 'यावत्सम्पातमुषित्वा' इत्यादिकं तु फलदान[3]प्रवृत्त[3]कर्मविशेषविषयम् । तत्र च 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम्' इति श्रवणात् यथागमनं प्रत्यागमनम् । 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इति श्रवणात् अनेवं च । येन प्रकारेण गतं - तदन्येन प्रकारेण अवरोहन्ति इत्यर्थः । 'चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः' (ब्र.सू.३-१-९) । ननु 'रमणीयचरणाः अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्' इत्यादिना सदसच्चरणयोरेव सदसद्योनिप्राप्तिहेतुत्वं श्रूयते । चरणं - आचारः, शीलं, वृत्तमिति पर्यायाः । ततश्च रमणीयचरणाः इति श्रुतिवशादवरोहतां सदसद्योनिजन्महेतुभूतचरणशब्दिताचारानुवृत्तावपि न कर्मशेषानुवृत्तौ प्रमाणत् अस्तीति चेत् न - चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिः आचार्यो मन्यते । केवलाच्चरणशब्दितात् आचारात्सुखदुःखहेतुभूतयोनिप्राप्त्यसम्भवात् । 'आनर्थक्यमिति चेन्न तदपेक्षत्वात्' (ब्र.सू.३-१-१०) । ननु सन्ध्यावन्दनाद्याचारस्य सुखदुःखहेतुत्वाभावे आनर्थक्यं स्यादिति चेन्न - तदपेक्षत्वात् अग्निहोत्रादिपुण्यकर्मणः ।

---

१. समनन्तराधिकरणे - कृतात्ययाधिकरणे ।

1. पूर्वपक्षे प्राप्ते - क । 2. सानुशया एवावरोहन्ति - क,ख । 3. प्रकृत - क ।

'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' (द.स्मृ.२-२७) इति श्रवणात् सन्ध्यावन्दनाद्याचारवत एव वैदिककर्मणि अधिकारात् । 'सुकृतदुष्कृते एवेति तु बादरिः' (ब्र.सू.३-१-११) । 'पुण्यं कर्माचरति, पापं कर्माचरति' इति सुकृतदुष्कृतकर्मसु चरतिशब्दप्रयोगात् चर्यते इति चरणमिति व्युत्पत्त्या सुकृतदुष्कृते एव चरणशब्दाभिधेये । 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । यान्यस्माकं सुचरितानि; तानि त्वयोपास्यानि' (तै.उ.शिक्षा.११-२) इति कर्माचारयोः पृथङ्निर्देशस्तु गोबलीवर्दन्यायात् उपपद्यते । वैतानिकानि तु कर्माणि कर्माणि इत्युच्यन्ते । इतराणि तु आचारशब्देन अभिलप्यन्ते । अतः चरणशब्देन सुकृतदुष्कृतयोः एव अभिलापः इति बादरिराचार्यो मन्यते इति स्थितम् ।

तथा, 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इत्यादौ आकाशादिभावोऽपि देवमनुष्यादिभाववत् तत्तच्छरीरकत्वलक्षण एव अस्तु इति पूर्वपक्षे प्राप्ते - उच्यते - 'तत्स्वाभाव्यापत्तिः उपपत्तेः' (ब्र.सू.३-१-२२) । तत्स्वाभाव्यापत्तिः आकाशादिसादृश्यापत्तिः इत्यर्थः । स्वभाव एव स्वाभाव्यम् । 'वर्तमानसामीप्ये' इत्यादिवत् स्वार्थिकः ष्यञ् । अतः तत्स्वाभाव्यापत्तिः - तत्सादृश्यापत्तिः इत्यर्थः । चन्द्रमण्डले शरीरारम्भकाणां भूतसूक्ष्माणां कर्मक्षये द्रवीभूतानाम् आकाशगतानां भेदकाकारप्रहाणेन आकाशादिसादृश्ये तदुपश्लिष्टानुशयिनोऽपि आकाशसमाः भवन्ति इत्यर्थः । कुतः ? उपपत्तेः सुखदुःखोपभोगाय हि तच्छरीरसंसर्गः । न हि अनुशयिनं प्रति आकाशादेः जीवान्तरशरीरभूतस्य तद्भोगाश्रयत्वम् अस्ति । युगपद् भोक्तृद्वयसमावेशे तयोः परस्परविरुद्धभोगार्थतया शरीरोन्मथनप्रसङ्गात् । [1]न च[1] अवरोहन्तो जीवाः एव तत्तदभिमानिदेवताः भवन्तु इति चेत् न - सर्गाद्यकालमारभ्य आप्रलयम् आकाशाद्यभिमानिदेवतानां अनुशयिभ्योऽन्यासां क्लृप्तानां सत्त्वेन अनुक्षणम् अवरोहताम् अनुशयिनाम् आकाशाद्यभिमानिदेवतात्वानुपपत्तेः इति स्थितम् ।

तदुत्तराधिकरणे[१] - आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्तिः किं तत्र तत्र नातिचिरं तिष्ठति, उत अनियमः इति विशये, नियमहेत्वभावादनियमः इति प्राप्ते - उच्यते, 'नातिचिरेण विशेषात्' (ब्र.सू.३-१-२३) । आकाशदितो नातिचिरेण निष्क्रमणम् कुतः ? विशेषात् । उत्तरत्र व्रीह्यादिप्राप्तौ, 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशिष्य कृच्छ्रनिष्क्रमणाभिधानात् इति स्थितम् ।

---

१. नातिचिराधिकरणे ।

1. न तु - क, ननु - ख ।

तदुत्तराधिकरणे - 'व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते' इत्यनेन अनुशयिनां व्रीह्यादिभावः उच्यते । तत्र, देवो जायते, मनुष्यो जायते इतिवत् इह; 'तिलमाषा इति जायन्ते' इति श्रवणात् व्रीह्यादिशरीरकाः एवानुशयिनो भवन्ति इति प्राप्ते - उच्यते - 'अन्याधिष्ठिते पूर्ववदभिलापात्' (ब्र.सू.३-१-२४) । अवरोहतां [1]जीवान्तराधिष्ठिते[1] व्रीह्यादौ संश्लेषमात्रम् । कुतः ? पूर्ववदभिलापात् । 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इत्यादौ आकाशादिभावे हेतुभूतकर्मकीर्तनाभावात् यथा आकाशादिषु संश्लेषमात्रम्, एवं व्रीह्यादिस्थावरभावहेतुभूतकर्मकीर्तनाभावात्, उत्तरत्रैव 'रमणीयचरणा अभ्याशो ह यत्' इति ब्राह्मणादिभाव एव हेतुभूतस्य कर्मणः कीर्तनात् व्रीह्यादौ जीवान्तराधिष्ठिते संश्लेषमात्रमेव । 'अशुद्धमितिचेन्न शब्दात्' (ब्र.सू.३-१-२५) । इष्टादिकर्मणां पशुहिंसामिश्रत्वात् हिंसायाश्च । 'न हिंस्यात्' इति निषिद्धत्वेन अनिष्टसाधनत्वेन पापतया, तन्मिश्रतया सुकृतकर्मणाम् अशुद्धत्वात् सुकृतांशस्य फलं स्वर्गेऽनुभूयहिंसांशस्य स्थावरादिभावलक्षणं फलम् अवरोहन् अनुभवतु । ननु न हिंस्यात् इति निषेधः विहितक्रत्वर्थहिंसाव्यतिरिक्तविषयोऽस्त्विति चेत् न- पुष्ट्यादिरूप इष्टसाधनघृतपानादौ मोहादिरूपानिष्टसाधनत्वस्य च दर्शनेन उसर्गापवादन्यायस्य अत्र अनवतारात् । अतः यागाद्यनुप्रविष्टहिंसाफलत्वेन स्थावरभावोऽनुभोक्तव्य इति चेन्न । प्रवर्तनानिवर्तनारूपविधिनिषेधयोः अविरोधस्य वक्तुम् अशक्यतया सति च विरोधे सामान्यविशेषन्यायेन निषेधस्य विहितहिंसाव्यतिरिक्तविषयत्वात् । वस्तुतस्तु यागीयपशुहिंसायाः हिंसात्वस्यैव अभावात् । 'न वा उ एतन्म्रियसे न रिष्यसि' इति मन्त्रवर्णात् हिंसात्वाभावस्यैव प्रतिपादनात् । न रिष्यसि - न हिंस्यसे इति हि तस्यार्थः ।

ननु 'न रिष्यसीति मन्त्रवर्णात् हिंसात्वाभावाभ्युपगमे न म्रियसे इति मन्त्रवर्णात् तन्मरणस्य मरणत्वमपि न स्यात् । ततश्च न म्रियसे इतिवत्, 'न रिष्यसि' इत्युक्तिः अपि औपचारिकी इत्येव आश्रयणीयम् । मरणोद्देश्यकमरणानुकूलव्यापारत्वस्यैव हिंसात्वरूपत्वात् इति चेत् - न मरणोद्देश्यकमरणानुकूलव्यापारत्वं हिंसात्वम् । कशाताडन-तप्तसन्दंशिनीपाटन - क्रकचदारणादीनां मरणोद्देश्यकमरणानुकूलव्यापारत्वाभावेन हिंसात्वाभावप्रसङ्गात् । अतः तीव्रदुःखजननौपयिकव्यापारत्वस्यैव हिंसापदप्रवृत्तिनिमित्तत्वे वक्तव्ये, व्रणादिचिकित्सके तादात्विकतीव्रवेदनोत्पादके हिंसकत्वव्यपदेशाभावेन बलवत्तद्धिताजनकत्वे सति तद्वेदनाजनकव्यापारत्वम् - तद्धिंसात्वम् इत्याश्रयणीम् । ततश्च व्रणचिकित्सया जायमानस्य आरोग्यरूपहितस्य तादात्विकवेदनापेक्षया बलवत्त्वात् न हिंसात्वम् इति स्थिते

---

1. जीवानां इत्यधिकः पाठः - क ।

पशुमरणानुकूलव्यापारस्य पशुवेदनाजनकत्वेऽपि स्वर्गप्राप्त्यादिलक्षणस्य पशुहितस्य बलवत्त्वात् न हिंसात्वम् ।

'अतः 'न हिंस्यादि'ति निषेधाविषयत्वात् क्रत्वर्थपशुहिंसाया न पापजनकत्वमिति तद्वशेनावरोहतोऽनुशयिनो न व्रीह्यादिभावापत्तिरिति ।

'रेतःसिग्योऽथ' (ब्र.सू.३-१-२६)। इतश्च औपचारिकं व्रीह्यादि जन्मवचनम् व्रीह्यादिभाववचनानन्तरं 'यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवति' (छां.उ.५-२०-६) इति रेतःसिग्भावोऽनुशयिना श्रूयमाणो यथा न मुख्यः, एवं व्रीह्यादिभावोऽपि इत्यर्थः । योनेश्शरीरम् (ब्र.सू.३-१-२७) । योनिप्राप्तेः पश्चादेव अनुशयिनां ब्राह्मणादिशरीरप्राप्तिश्रवणात् ततः प्राक् न शरीरपरिग्रहः किन्तु संश्लेषमात्रम् । यत्र पुण्यापुण्यकर्मणी तत्रैव सुखदुःखे । यत्र सुखदुःखे तत्रैव तद्धेतुभूतं शरीरम् । ततश्च आकाशादिषु कर्मकीर्तनाभावेन तत्फलभूतसुखाद्यनुभवाभावात् न तद्धेतुभूतं शरीरम् इति न योनिप्राप्तेः प्राक्छरीरपरिग्रहः इति स्थितम् ।। प्रकृतमनुसरामः ।।

**आ.भा. - अथ ह यः** इत्यादि । **यः** - उपासकः **एतान्** - द्युपर्जन्यादियोषान्तमग्नीन् **एवं** - यथोक्तप्रकारेण **वेद** - उपास्ते सः उपासकः **तैः** - स्तेनादिभिः **आचरन्** - विद्यां योनिसम्बन्धादिकम् आचरन् कुर्वाणोपि **पाप्मना** - नीचलोकप्रवर्तकपापकर्मणा **न लिप्यते** - लिप्तो न भवति । इत्थं महाभागा इयं विद्या अपहतपाप्मत्वेन पापकर्मरहितत्वेन पापकर्मरहितः **शुद्धः** - अपापः **पूतः** - पवित्रः **पूण्यलोको भवति** - स्वर्गादिकम् अवाप्नोति । **यः एवं वेद य एवं वेद;** द्विरुक्तिः सर्वप्रश्नप्रतिवचनसमाप्तिबोधिका इति ।।

## एकादशः खण्डः

### [वैश्वानरविद्या]

### [प्राचीनशालादिऋषीणां मध्ये ब्रह्मविचारकचर्चा]

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनश्शार्कराक्ष्यो बुडिल आश्वतराश्विः ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाँसाञ्चक्रुः - को न आत्मा किं ब्रह्मेति ।। १ ।।**

**प्र.** - वैश्वानरविद्या प्रस्तूयते - **प्राचीनशाल......किं ब्रह्मेति** । उपमन्युसुतः **प्राचीनशाल**नामा, पुलुषसुतः **सत्ययज्ञ**नामा, भाल्लविसुतः **इन्द्रद्युम्न**नामा, शर्कराक्ष्यसुतः

**जन**नामा, अश्वतराश्वसुतः **बुडिल**नामा, ते एते पञ्चापि **महाशालाः** - महागृहस्थतया विस्तीर्णशालासम्पन्नाः - प्रसिद्धा इति यावत् **महाश्रोत्रियाः** अतीवश्रुताध्ययनसम्पन्नाश्च एकत्र सम्भूय अस्माकम् अन्तर्यामितया आत्मभूतं ब्रह्म किमिति **मीमांसाञ्चक्रुः** - विचारं कृतवन्तः इत्यर्थः ।।

**आ.भा.** - दक्षिणमार्गेण ये गच्छन्ति ते देवानामन्नं भवन्ति, तथा क्षुद्रजन्तुलक्षणाकृष्टा संसारगतिः कथिता तदुभयपरिहारेच्छया वैश्वानरात् भावप्राप्त्यर्थम् अयम् उपक्रमः क्रियते । आख्यायिका तु विद्यास्तुत्यर्था सुखावबोधार्था च तत्राह - **प्राचीनशालः** इत्यादि । प्राचीनशालो नाम्ना उपमन्योः अपत्यम् उपमन्युसुतः इत्यर्थः, तथा सत्ययज्ञो नाम्ना पुलुषस्यापत्यं पौलुषिः, पुलुषसुत इत्यर्थः, तथा इन्द्रद्युम्नो नाम्ना भल्लवेः अपत्यं भाल्लविः तदपत्यं भाल्लवेयः । तथा जन इति नाम्ना शर्कराक्ष्यस्य अपत्यं शार्कराक्ष्यः, बुडिलो नामतः अश्वतराश्वस्यापत्यम् आश्वतराश्विः । **ते हैते** - पञ्चापि **महाशालाः** - महागृहस्थाः विस्तीर्णाभिः शालाभिर्युक्ताः सम्पन्नाः इत्यर्थः । **महाश्रोत्रियाः** - श्रुताध्ययनादिभिः सम्पन्नाः **समेत्य** - एकत्र मिलित्वा **मीमांसाञ्चक्रुः** - विचारणां कृतवन्तः इत्यर्थः । **को न आत्मा किं ब्रह्मेति । नः** - अस्माकम् अन्तर्यामितया आत्मभूतं ब्रह्म किम् इति ते विचारयामासुः ।।

**सु.** - अथ **प्राचीनशाल औपमन्यवः** - उपमन्योः अपत्यम्, **सत्ययज्ञः पौलुषिः** - पुलुषेः अपत्यम्, **इन्द्रद्युम्नो भाल्लवेयः** - भाल्लवेः अपत्यम्, **जनः शार्कराक्ष्यः** शर्कराक्ष्यस्य अपत्यम् ते हैते पञ्च **महाशालाः** - महत्यः शालाः येषां तथाभूताः, महागृहस्थाः इत्येतत्, **महाश्रोत्रियाश्च** - श्रुताध्ययनशालिनश्च । जातु एकत्र **समेत्य** - सङ्गत्य **मीमांसाञ्चक्रुः** - विचारितवन्तः । किमिति, **को न आत्मा किं ब्रह्मेति** । न इह अर्थद्वयजिज्ञासा, आत्मैव विशेष्यते ब्रह्मेति ब्रह्मैव च आत्मेति । यदक्षरं ब्रह्म तत् न आत्मभूतम्, यद्यपि नः प्रत्येकम् अन्यान्यत् आत्मभूतम्, अथापि न तद्ब्रह्म परिच्छिन्नत्वात् । तद्विलक्षणमेव किञ्चित्, नः सर्वेषाम् आत्मभूतमेकं ब्रह्मेति ब्रह्मविदां गोष्ठीषु श्रूयते, तत् किम् इति विचारितवन्तः ।।

[पञ्चर्षिभिः उद्दालकसमीपगमनम्]

**ते ह सम्पादयाञ्चक्रुः, उद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति, तँ हन्ताभ्यागच्छामेति । तँ हाभ्याजग्मुः ।। २ ।।**

**प्र. - ते ह सम्पादयाञ्चक्रुः । ते** - एवं मीमांसित्वा निश्चयम् अलभमानाः आत्मभूतब्रह्मोपदेष्टारं कञ्चित् सम्पादितवन्तः । निश्चितवन्तः इत्यर्थः । किमिति । तत्राह **उद्दालको......अभ्यागच्छामेति । हे भगवन्तः !** अरुणसुतः उद्दालकनामा इदानीं वैश्वानरम् आत्मानं अध्येति - 'इक् स्मरणे' । (धा.पा.१०४७) उपास्ते इत्यर्थः । यद्वा - 'इण् गतौ' (धा.पा.१०४५) इति गत्यर्थानां ज्ञानार्थत्वात् अवगच्छति इत्यर्थः । **तं** - उद्दालकम् अभ्यागच्छाम इति निश्चित्य **तं हाभ्याजग्मुः** - तमभ्यागतवन्तः इत्यर्थः ।।

**आ.भा. - ते ह सम्पादयाञ्चक्रुः । ते** - पञ्चापि ब्राह्मणाः विचारं कृत्वापि आत्मस्वरूपब्रह्मविषये निश्चयम् अलभमानाः आत्मभूतब्रह्मण उपदेशकं कमपि निश्चितवन्तः । किमिति निश्चितवन्तः तत्राह - **उद्दालको वै** इत्यादि । हे **भगवन्तः** - पूज्याः ! **अयमारुणिः** - अरुणस्यापत्यम् उद्दालको नामतः, **सम्प्रति** - इदानीं वैश्वानरम् आत्मानं मदभिमतम् **अध्येति** - उपास्ते । अथवा तादृशम् आत्मानम् अवगच्छति विजानाति । **तम्** - उद्दालकम् हन्त वयं सर्वे अभ्यागच्छामः इत्येवं क्रमेण निश्चेत्य **तम्** - उद्धालकम् **अभ्याजग्मुः** - तत्समीपं गतवन्तः इत्यर्थः ।।

**सु. - ते** ह विचारस्य अन्तम् अप्राप्य मनसा **सम्पादयाञ्चक्रुः** - विनिश्चितवन्तः, किमिति ; अयमरुणस्य पुत्र उद्दालकः **इममात्मानं वैश्वानरं** - विश्वेषामपि अन्तर्यामितया नेतारम्, **अध्येति** - वेत्ति, तं सम्प्रति अभ्यागच्छाम इति । **भगवन्तः !** इति च मिथः सम्बोधनम् । **हन्त** इति हर्षे । तं ह उद्दालकम् अभ्याजग्मुः ।।

**स ह सम्पादयाञ्चकार, प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः । तेभ्यो न सर्वमिव प्रतिपत्स्ये । हन्ताहमन्यमभ्यनुशासानीति ।। ३ ।।**

**प्र. - स ह...... । अभ्यनुशासानीति । स ह** - उद्दालकः तान् आगतान् दृष्ट्वा एते महाशालाः महाश्रोत्रियाः मां वैश्वानरम् आत्मानं प्रक्ष्यन्ति । नाहं तत् सर्वं प्रतिपद्ये तेभ्यो वक्तुं[1] शक्नोमि । अतः अन्यं तदभिज्ञं कञ्चित् **अनुशासानि** - उपदिशानि इत्येवं सम्पादितवान् - निश्चितवान् इत्यर्थः ।।

---

1. प्रतिवक्तुं - अ,आ ।

**आ.भा. - सः** - उद्दालकः तान् श्रोत्रियान् ब्राह्मणान् समागतान् दृष्ट्वा तदागमनप्रयोजनं च ज्ञात्वा **सम्पादयाञ्चकार** - विचारितवान् । किं विचारितवान् तत्राह - **प्रक्ष्यन्ति** इत्यादि । **इमे महाशालाः महाश्रोत्रियाः** पञ्चापि ब्राह्मणाः मां वैश्वानरम् आत्मानं **प्रक्ष्यन्ति** । तद्विषये प्रश्नं करिष्यन्ति । परन्तु नाहं तत्सर्वं **प्रतिपत्स्ये** तेभ्यः - तदुत्तरं दातुं शक्नोमि वैश्वानरविषयकविज्ञानाभावात् । **हन्त !** अस्मात्कारणात् अन्यं वैश्वानराभिज्ञं कमपि **अनुशासानि** - उपदिशानि । अयमाशयः - तान् दृष्ट्वा तदभिप्रायं च ज्ञात्वा उद्दालकः वैश्वानरानभिज्ञः वैश्वानराभिज्ञं कमपि एते पृच्छन्तु तस्य च नाम कथयामि इत्येवं रूपेण मनसि निश्चयं कृतवान् इति ।।

**सु.- स ह** - उद्दालकः तान् आगतान् दृष्ट्वा आलक्ष्य आशयं मनसि **सम्पादयाञ्चकार** - विनिश्चयम् अकरोत् । प्रक्ष्यन्ति मामिमे महाशालाः महाश्रोत्रियाः; तेभ्यः प्रतिवक्तुं न सर्वं **प्रतिपत्स्ये** - तदहम् अन्यम् **अनुशासानि** उपदेष्टारम् इति ।।

**[पञ्चर्षीणां उद्दालकेन सहाश्वपतिराजगमनम्]**

**तान् होवाच, अश्वपतिर्वै भगवन्तोऽयं कैकयः सम्प्रतीममात्मानं वैश्वानरमध्येति, तँ हन्ताभ्यागच्छाम इति तँ हाभ्याजग्मुः ।। ४ ।।**

**प्र. - तान् होवाच** - स उद्दालकः औपमन्यवादीन् प्रति आह । किमिति । **अश्वपतिः......गच्छामेति** । केकयस्यापत्यं **कैकयः** । शिष्टं स्पष्टम् ।। **तं हाभ्याजग्मुः** । **तं** - अश्वपतिम् उद्दालकषष्ठाः ते अभ्यागतवन्तः इत्यर्थः ।।

**आ.भा.** - एवम् उक्तप्रकारेण उद्दालकः मनसि विचार्य **तान्** ब्राह्मणान् प्रोवाच । किमुवाच । तत्राह - **अश्वपतिर्वै** इत्यादि । हे **भगवन्तः !** पूजार्हाः ब्राह्मणाः ! नाम्ना अश्वपतिः केकयस्य अपत्यं कैकयो राजा **सम्प्रति** - इदानीं **वैश्वानरमात्मानम् अध्येति** - तदुपासनं करोति, यद्वा वैश्वानरं जानाति । अतः तमेव वयं सर्वे **अभ्यागच्छामः** - तत्समीपं वयं गच्छामः । **तं** - अश्वपतिं सर्वे **अभ्याजग्मुः** - तत्समीपं सर्वे गतवन्तः इति ।।

**सु.** - इति मनसि निश्चित्य **तान् होवाच,** हे **भगवन्तः !** केकयस्य अपत्यम् अयम् अश्वपतिर्नाम राजा **सम्प्रति इमम् आत्मानम् अध्येति** - वेत्ति । **तं हन्ताभ्यागच्छामेति** । **तं** ह अश्वपतिम् **अभ्याजग्मुः** उद्दालकसहितास्ते ।।

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार । स ह प्रातः संजिहान उवाच,**

**"न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।**
**नानाहिताग्निर्नाविद्वान् न स्वैरी, स्वैरिणी कुतः" ।।**

**यक्ष्यमाणो वै भगवन्तोऽहमस्मि । यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद्भगवद्भ्यो दास्यामि । वसन्तु भगवन्तः इति ।। ५ ।।**

**प्र. - तेभ्यो ह......चकार** । प्राप्तेभ्यः तेभ्यः महर्षिभ्यः कैकयः पृथक् पृथक् **अर्हाणि** - अर्हणानि पूजाः भृत्यैः पुरोहितादिभिश्च कारितवान् इत्यर्थः । **स ह......उवाच । सः ह** - राजा अन्येद्युः प्रातःकाले स्वभवनं **संजिहानः** - त्यजन् स्वभवनात् निर्गत्य तत्समीपमेत्य इति यावत् - तान् महर्षीन् उवाच इत्यर्थः । किमिति ? तत्राह **न मे......भगवन्तः** इति । हे **भगवन्तः !** पूजार्हाः ! मदधिष्ठिते जनपदे **स्तेनः** - चोरः वा **कदर्यः** - दानशून्यो वा, मद्यपायी वा, सत्यां योग्यतायाम् अनाहिताग्निर्वा, **अविद्वान्** - वेदाध्ययनादिशून्यः त्रैवर्णिको वा, **स्वैरी** - परदारगन्ता वा न सन्ति । स्वैरिणी पुंश्चली तु कुतः स्यात् इत्यर्थः । एवमाद्याः दुष्टाः मज्जनपदे न सन्ति - नहि तैः दत्तं धनम् उपजीवामि । अतो मम प्रतिग्रहयोग्यताम् अस्तीति भावः । अहम् अचिरेणैव कालेन यागं करिष्यामि । तत्र यागे एकैकस्मै ऋत्विजे यावत् धनं दास्यामि, तावत् भगवद्भ्यः प्रत्येकं दास्यामि । तावत्कालमत्रैव वसन्तु; यागञ्च पश्यन्तु इति प्रार्थितवान् इत्यर्थः । भगवता च भाष्यकृता, "न मे स्तेनः' इत्यादिना, 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्यन्तेन आत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धस्य परिहरणीयतां विहितस्य कर्तव्यतां च प्रतिज्ञाप्य, यावदेकैकस्मै ऋत्विजे धनं दास्यामि, तावत् भगवद्भ्यः दास्यामि । वसन्तु भगवन्तः इत्यवोचत् इति भाषितम् ।।

**आ.भा. - तेभ्यो ह** इत्यादि । **तेभ्यः** - प्राप्तेभ्यः समागतेभ्यः ब्राह्मणेभ्यः राजा अश्वपतिः पृथक् पृथक् **अर्हाणि** - अर्हणानि पूजाः भृत्यैः पुरोहितैश्च **कारयाञ्चकार** - कारितवान् । तदनन्तरं सः राजा अन्यस्मिन् दिने प्रातःकाले **संजिहानः** - स्वभवनं त्यजन् स्वकीयभवनात् निर्गत्य ब्राह्मणसमीपं गत्वा तान् ब्राह्मणान् प्रति **उवाच** - विनयेन उपगम्य किमुवाच तत्राह - **न मे स्तेनः** इत्यादि । हे **भगवन्तः !** - पूजार्हाः ! ब्राह्मणाः ! मदीये **जनपदे** - मदधिष्ठिते राज्ये **स्तेनः** - चोरः स्वर्णादीनाम् अपहर्ता न विद्यते तथा मदधिष्ठितजनपदे **कदर्यः** - सति विभवे अदाता दानरहितो न वा विद्यते ।

**न मद्यपः** - द्विजोत्तमः सन् मद्यपायी न कोऽपि विद्यते। **नानाहिताग्निः** - शतगवादियोग्यतायां सत्याम् अनाहिताग्निः न विद्यते । **नाविद्वान्** - अधिकारानुरूपः त्रैवर्णिकः विद्याध्ययनादिशून्यः न वर्तते। **न स्वैरी** - परदारगन्ता वा न विद्यते । **स्वैरिणी** - कुतः यतः स्वैरी पुरुषो नास्ति तदा स्वैरिणी पुंश्चली वा न विद्यते । नहि एभिः दुष्टैः करमादाय मदीयराज्यकोशे धनं विद्यते । किन्तु विशुद्धं दानयोग्यं धनं मत्पार्श्वे विद्यते । मम प्रतिग्रहयोग्यता अस्ति इति भावः । **यक्ष्यमाणो वै** इत्यादि । **हे भगवन्तः !** । **यक्ष्यमाणोऽहमस्मि** - अचिरेणैव कालेन अहं यागं करिष्यामि । तस्मिन् यागे एकैकस्मै ऋत्विजे यावत् यावत् संख्याकं यावत्परिमाणकं धनं दक्षिणारूपेण दास्यामि । तावत्परिमाणकं धनं भगवद्भ्यो भवद्भ्यः पृथक् पृथक्रूपेण दास्यामि । तस्मात् मत्तो धनलाभाय तावत्कालम् अत्रैव भगवन्तो ब्राह्मणाः **वसन्तु** - मत्समीपे निवासं कुर्वन्तु । इमे विद्याप्राप्त्यर्थं मत्पार्श्वे समागताः । किमिमे विद्यायोग्याः सन्ति न वा इति संशय्य धनलोभप्रदानेन परीक्षिताः इति ।।

**सु.** - तेभ्यः प्राप्तेभ्यः पृथक् पृथक् **अर्हाणि** - अर्हणानि **कारयाञ्चकार** । अथ परेद्युः **प्रातः सञ्जिहानः** शयनतलम्, स्वभवनं वा, स्वभवनात् निर्गत्य इति यावत् । उपगम्य विनयावनतः वचनमिदम् अवोचत् । **न मे जनपदे स्तेनो, न कदर्यः**, सत्यपि ऐश्वर्ये वितरणरहितो लुब्धतमः, **न मद्यपो, नानाहिताग्निः, नाविद्वान्, न स्वैरी, कुतः स्वैरिणी ?** तन्मदीयं द्रव्यं प्रतिग्रहार्हमेव ; **यक्ष्यमाणो वै भगवन्तोऽहमस्मि ।** यावदेकैकस्मै ऋत्विजे धनं दास्यामि । तावत् प्रत्येकं भगवद्भ्योऽपि दास्यामि वसन्तु भगवन्तः तावत् मे भवने इति ।।

**ते होचुः, 'येन हैवार्थेन पुरुषश्चरेत् तँ हैव वदेत् । आत्मानमेवेमं वैश्वानरँ सम्प्रत्यध्येषि, तमेव नो ब्रूही'ति ।। ६ ।।**

**प्र.** - **ते होचुः । ते** - ऋषयः राजानं प्रति ऊचुः । किमिति ? तदाह - **येन......ब्रूहीति येन अर्थेन** - प्रयोजनेन, यत् प्रयोजनमुद्दिश्य पुरुषः **चरेत्** - आगच्छति, **तं हैव** - तमेव पुरुषार्थं तस्य **वदेत्** - कुर्यामिति वदेत् । कुर्यादिति यावत् । समीहितं हि कर्तव्यं भवति । अस्माकं च वैश्वानरः [1]आत्मा जिज्ञासितः[1] । त्वञ्च तम् आत्मानम् अधुना

---

1. जिज्ञासितव्यः - क ।

**अध्येषि** - उपास्से । न च ते तद्ज्ञानम् अपलापार्हम् । अतः तमेव नः उपदिश । न प्रयोजनान्तरम् इत्यर्थः । विश्वान् नरान् नयतीति, विश्वे एनं नराः नयन्तीति वा विश्वानरः । विश्वानर एव वैश्वानरः; [1]वय एव वायसः[1] इतिवत् ।।

**आ.भा.** - यथोक्तप्रकारेण राज्ञा परीक्षिताः प्रार्थिता वा ते ब्राह्मणाः किमूचुः तत्राह - **ते होचुः** इत्यादि । **ते** - ऋषयः राज्ञा प्रार्थिता एवमूचुः । किमिति तदाह - **येन** इत्यादि । **येन अर्थेन** - प्रयोजनेन यादृशप्रयोजनम् उद्दिश्य **पुरुषश्चरेत्** - आगच्छति **तं हैवं वदेत्**, तमेवार्थं प्रयोजनं तस्मै वदेत् । अहं भवदीयं प्रयोजनं करिष्यामि इत्येवं वदेत्। नान्यत् प्रलोभनादिकं दातव्यम् इति । अस्माकं समीहितं कर्तव्यम् । अस्माकं समीहितो वैश्वानरः आत्मा । तं चात्मानं हे राजन् ! त्वं **सम्प्रति** इदानीम् **अध्येषि** - जानासि । तस्मात् तमेव आत्मानं **वैश्वानरं ब्रूहि** - वैश्वानरस्यैव उपदेशं कुरु । नान्यत् मे प्रयोजनं विद्यते । न, वयं ब्राह्मणाः अरण्ये वासिनो धनार्थिनः, त्वत्सकाशम् आगतवन्तः इति । विश्वान् समस्तान् नरान् नयतीति विश्वानरः अथवा विश्वे एनं नराः नयन्तीति विश्वानरः । विश्वानरः एव वैश्वानरः वायसादिवत् ।।

**सु.** - ते होचुः इदम्, येनैवार्थेन लिप्सितेन निमित्तेन पुरुषः अर्थी चरेत्, तं ह्येवार्थम् अर्थिने वदेत्। शुश्रूषया अर्थिनोऽभिप्रेत्य वदेत् इत्युक्तिः । शुश्रूषया वयम् आगताः, न धनलिप्सया इति भावः । **वैश्वानरमिमम् आत्मानं सम्प्रति अध्येषि** जानासि। **तमेव** आत्मानं **नः ब्रूहीति** ।।

**तान् होवाच, 'प्रातर्वः प्रतिवक्तास्मी'ति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान् हानुपनीयैवैतदुवाच ।। ७ ।।**

**।। इति एकादशः खण्डः ।।**

**प्र.** - **तान्......प्रतिवक्तास्मीति** । तेषाम् अभिमानं परिशोध्य, श्वः प्रतिवचनं दास्यामि इति मत्वा प्रातः प्रश्नस्य प्रतिवचनकर्तास्मि इत्युवाच इत्यर्थः । **ते......प्रतिचक्रमिरे** । ते च राज्ञः अभिप्रायज्ञाः समिद्भारहस्ताः[१] अपरेद्युः पूर्वाह्णे राजानं, शिष्याः भवेम इत्युपगतवन्तः ।

---

१. तथा च श्रुत्यन्तरम् 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ।। (मुं.उ.१-२-१२) इति । स्मर्यते च 'रिक्तपाणिस्तु नोपेयात् राजानं दैवतं गुरुम्'।। इति ।

1. रक्ष एव राक्षसः - इत्यधिकः पाठः - अ,आ,क ।

**तान्......उवाच** । राजा तु **तान्** समित्पाणीन् उपयाम इति वदतः त्यक्तस्वजात्यभिमानान् उद्वीक्ष्य तेषाम् उपदेशयोग्यतां ज्ञात्वा 'अब्राह्मणेन न ब्राह्मण उपनेतव्यः' इति शास्त्रार्थं ज्ञात्वा तैः समर्पितं समिदाद्युपायनम् अस्वीकृत्य एव मैत्र्यां एव एतत् वक्ष्यमाणम् उवाच इत्यर्थः ।

यत एवं महाशालाः महाश्रोत्रिया ब्राह्मणास्सन्तः महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ताः जातितो हीनं राजानं विद्यार्थितया उपजग्मुः । तस्मात् तथा अन्यैः विद्योपादित्सुभिः भवितव्यम् इति आख्यायिकया सूच्यते ।।

**आ.भा. - तान् होवाच** इत्यादि । एवं क्रमेण ब्राह्मणानाम् अभिमानं विशोध्य प्रातःकाले उत्तरं दास्यामि इति मत्वा प्रोवाच - हे ब्राह्मणाः ! त्वदीयप्रार्थितप्रश्नस्य प्रातःकाले **प्रतिवक्तास्मि** - प्रतिवचनं दास्यामि इति । **ते ह** इत्यादि । **ते** - महर्षयः राज्ञोऽभिप्रायं ज्ञात्वा **समित्पाणयः** - समिद्भारहस्ताः अपरेद्युः **पूर्वाह्णे प्रतिचक्रमिरे** । वयं त्वदीयशिष्याः भवेम इत्युपगतवन्तः । **तान्** - त्यक्तस्वाभिमानान् समित्पाणीन् दृष्ट्वा विद्योपदेशयोग्यतां च ज्ञात्वा अनुपनीयैव । 'ब्राह्मणभिन्नेन ब्राह्मणो नोपनेतव्यः' इत्येवं शास्त्रवचनम् अनुस्मृत्य ब्राह्मणैः समर्पितं समिदाद्युपायनम् अस्वीकृत्य मैत्रीबुद्ध्या एव **एतत्** - वक्ष्यमाणम् उवाच । यस्मात्कारणात् महाशालाः महाश्रोत्रियाः अपि इमे ब्राह्मणाः स्वकीयं महाशालात्वाभिमानं परित्यज्य उपायनहस्ताः अब्राह्मणं जात्या हीनं राजानं विद्यार्थितया समागताः तस्मात् कारणात् अन्यैरपि तथैव कर्तव्यम् इत्यनया आख्यायिकया सूचितं भवति इति ।।

**सु. -** तानुवाच राजा **प्रातः वः प्रतिवक्तास्मि** इति । सपदि अनभिधाने निमित्तमिदं लेशतो वा स्वभावः परीक्ष्यः इति । अपरीक्ष्य विद्या हि न देया । अथ अस्य आशयम् आलक्ष्य ते ह परेद्युः प्रातः समित्पाणयः, दूरीकृताभिमानाः विनीतवेषाः शिष्यसमुचितया वृत्त्या **पूर्वाह्णे प्रतिचक्रमिरे** राजानम् । राजा तेषाम् अभिमानशून्यताम् आलक्ष्य प्रसन्नो भूत्वा **अनुपनीयैव तान्** वर्णतो गरीयांसः इति मर्यादां रक्षन् **एतदुवाच** ।।

**।। इति एकादशखण्डभाष्यम् ।।**

## द्वादशः खण्डः

**[द्युलोकः वैश्वानरस्य मूर्धा]**

**'औपमन्यव ! कं त्वमात्मानमुपास्से' इति । 'दिवमेव भगवो राजन्नि'ति होवाच । एष वै सुतेजा आत्मा वैश्वानरः यं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ।। १ ।।**

**प्र.** - अथ कैकयः तेभ्यः वैश्वानरात्मानम् उपदिदिक्षुः विशेषप्रश्नान्यथाऽनुपपत्त्या वैश्वानरात्मनि एतैः किञ्चित् ज्ञातम्, किञ्चित् अज्ञातमिति विज्ञाय ज्ञातांशबुभुत्सया तान् एकैकशः प्रष्टुम् उपक्रमते । तत्र औपमन्यवं पृच्छति - **औपमन्यव कं त्वमात्मानमुपास्से इति** । स्पष्टोऽर्थः । **दिवमेव भगवो राजन्निति होवाच । हे भगवः !** द्युलोकशरीरकं वैश्वानरम् अहमुपास्से इति औपमन्यवः प्रत्युवाच इत्यर्थः । कैकयः आह - **एष......नागमिष्यः इति । यं** - द्युलोकावच्छिन्नं वैश्वानरम् आत्मानं त्वमुपास्से एषः वैश्वानरः आत्मा **सुतेजाः** - शोभनं तेजो यस्य सः सुतेजाः । द्युलोको हि सूर्यचन्द्रतेजोयुक्ततया सुतेजा भवति । यतश्च द्युलोकावच्छिन्नो वैश्वानर आत्मा त्वया उपास्यमानः सुतेजस्त्वगुणयोगेन सुतेजोनामा वैश्वानरः । **तस्मात्तव......दृश्यते ।** अत्र **सुतप्रसुतासुत**शब्दाः एकाहाहीनसत्र[१]-कर्मगताभिषवणपराः । सुतशब्दवत्त्वसाम्यात् सुतेजस्त्वोपासनायाः सुतादिफलकत्वोपपत्तिः इति भावः ।।

**आ.भा.** - स राजा किमुवाच तदेव दर्शयति - **औपमन्यव** इत्यादि । हे **औपमन्यव! त्वं कमात्मानं उपास्से ।** कस्य उपासनं त्वं करोषि इति पप्रच्छ । न च अत्र आचार्यो भूत्वा शिष्यं पृच्छति इति न युक्तमिति वाच्यम् । अन्यत्रापि तथा दर्शनात् यद्वेत्थ तेन मोपसीद ततस्ते उर्ध्वं वक्ष्यामीति न्यायदर्शनात् । एभिः वैश्वानरात्मनि किञ्चित् ज्ञातं किञ्चित् अज्ञातमिति विज्ञाय ज्ञानांशबुभुत्सया तान् एकैकशः पृष्टवान् । अतः न आचार्यप्रश्नकरणे दोषः । एवम् आचार्यप्रश्नानन्तरम् औपमन्यवः प्राह - हे **भगवन् ! राजन् ! दिवं** - द्युलोकं शरीरकं वैश्वानरम् अहम् उपास्से । राजा प्राह - हे **औपमन्यव ! यं त्वमात्मानं** - द्युलोकावयवं **वैश्वानरमुपास्से** - उपासनं कुरुषे, एषः वैश्वानरः आत्मा आत्मनोऽवयवभूतः **सुतेजाः** - शोभनं तेजः प्रकाशो यस्य स सुतेजाः । द्युलोको हि सूर्यचन्द्रनक्षत्रादियुक्ततया सुतेजाः भवति इत्यर्थः । यस्मात् कारणात् द्युलोकविशिष्टो वैश्वानरः त्वया उपास्यमानः सुतेजस्त्वगुणसम्बन्धेन सुतेजाः वैश्वानरः तस्मात् कारणात् तत्प्रभावेन तव कुले सुतं प्रसुतमासुतं दृश्यते । तत्र सुतम् अभिषुतं सोमात्मकं, प्रकर्षेण सुतं प्रसुतम् । आसुतमहर्गणादिषु । सुतादयः शब्दाः एकाहाहीनसत्रकर्मगताभिषवणबोधकः, सुतशब्दवत्वसामान्यात् । ततश्च सुतेजस्त्वोपासनायाः सुतादिफलकत्वम् उपपन्नं भवति इति ।।

---

१. **एकाहाहीनसत्रेति** - सोमयागेषु ज्योतिष्टोम एकाहः, पञ्च दिनसाध्यस्य तस्य पञ्चममहरेकमेव सत्याहः । द्विरात्रप्रभृतिरहीनो द्वादशाहं यावत् । द्वादशाहादूर्ध्वं सर्वं सत्रम् । **(भाष्यपरिष्कारे)**

**सु. - औपमन्यव कं त्वमात्मानमुपास्से ।** ननु जिज्ञासया समुपागतम् एनम् उपदेष्टव्यमर्थम् उपदेष्टा किमित्येवं पृच्छति ? यावदत्रैव तैः अधिगतं तावदेभ्यो विज्ञाय अधिकमुपदेष्टव्यम् उपदिशामः इति । औपमन्यव आह - **दिवमेव भगवो राजन्निति -** अवरोऽपि वर्णतो विद्यायाश्चेत् उपदेष्टा स हि पूज्यः, तत् विनयोपेतं वचनम् अस्य भगवो राजन्निति । अन्येऽपि एवं पृष्टाः राज्ञा **भगवो राजन्** इत्येव प्रतिवदन्ति । यदा समित्पाणयः समागताः ततः आरभ्य प्रतिवदन्ति राजानं भगवो राजन् इति । राजा च 'कं त्वम् आत्मानम् उपास्से' ? इति । ततः पूर्वं तु राजा प्राह एतान् 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी'ति । एते च राजानं सम्प्रति अध्येषि तमेव नो ब्रूहि इति । दिवमेव वैश्वानरम् आत्मानम् उपास्से इति औपमन्यवः उवाच । नायं द्युलोकस्वरूपमेव साक्षात् आत्मस्वरूपं पश्यति, 'को नः आत्मा, किं ब्रह्म' ? इति मीमांसमानानां न हि जडे आत्मभावना भवेत् । किन्तु द्युलोकं वैश्वानरम् आत्मनोऽवच्छेदकतया भावयति नाम, अवच्छेदकता च शरीरविधया । द्युलोकेन अवच्छिन्नं वैश्वानरम् आत्मानम् उपास्से इत्येतत् । अथ आचार्यः आह - **एष वै सुतेजाः -** शोभनं तेजो यस्य सः, स हि लोकः । तेजसां राशिना आदित्येन दीप्यते । वैश्वानर आत्मा, यं त्वमात्मानम् उपास्से । सुतेजसः अस्य उपासनात् तव कुले **सुतं प्रसुतमासुतं दृश्यते -** सुतादयः सोमस्यैव एकाहादिभेदात् भिन्नाः व्यवह्रियन्ते । तव कुले सर्वे कर्मनिष्ठाः भवन्ति इति यावत् ।।

**अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । मूर्धा त्वेष आत्मन इति होवाच, 'मूर्धा ते व्यपतिष्यत्, यन्मां नागमिष्यः' इति ।। २ ।।**

**।। इति द्वादशः खण्डः ।।**

**प्र. - अत्स्यन्नं पश्यसि प्रियम् ।** तदुपासनावैभवेन अन्नं लौकिकं भोग्यम् अनुभवसि । **प्रियं -** पुत्रादिकं च पश्यसि इत्यर्थः । एवमन्योऽपि यः त्वमिव, त्वदुपास्यं वैश्वानरमुपास्ते, सोऽपि त्वमिव अन्नादनप्रियदर्शनब्रह्मवर्चसशाली सन्तानवांश्च भवति इत्याह - **अत्त्यन्नं......उपास्ते ।** उक्तोऽर्थः । एवं तदुक्तम् अर्थमङ्गीकुर्वन्निव फलप्रदर्शनेन तमभिमुखीकृत्य तत्र वक्तव्यमंशम् उपदिशति । **मूर्धात्वेष......नागमिष्य इति ।** त्वया वैश्वानरबुद्ध्या उपास्यमानः **एषः** - द्युलोकः परिच्छिन्नः **आत्मनः** वैश्वानरस्य आत्मनः मूर्धावयवभूतः । न तु स एव वैश्वानरात्मा । एतदर्थनिर्णयार्थं तव मत्समीपानागमने तत्र वैश्वानरात्ममूर्धरूपावयवभूते द्युलोके कृत्स्नवैश्वानरबुद्धिं कुर्वतः तव **मूर्धा व्यपतिष्यत् -** विपरीतविद्यावशात् अनर्थः स्यात् । अतः साधु अकार्षीः - यत्त्वं माम् आगतोऽसि इत्यभिप्रायः ।।

**आ.भा.** - अपि च सुतेजस्त्वादिगुणकवैश्वानरोपासनाप्रभावादेव अन्नम् अन्नोपलक्षितं लौकिकं भोग्यजातं दीप्ताग्निस्सन् **अत्सि** । तथा **प्रियं** पुत्रादिकं **पश्यसि** इति । यथा त्वं सुतेजस्त्वादिगुणकम् आत्मानम् उपास्से तथा यदि अन्योऽपि कोऽपि करिष्यति तदा सोऽपि त्वमिव अन्नं प्रदीप्ताग्निः अत्ति । प्रियं पुत्रादिकं पश्यति । **अस्य कुले ब्रह्मवर्चसं भवति । य एतमात्मानं वैश्वानरमुपास्ते** । अन्योऽपि उपासकः अन्नभक्षणप्रियदर्शनब्रह्मवर्चसशाली सन्तानवान् भवति इत्यर्थः । **मूर्धा त्वेष** इत्यादि । हे औपमन्यव ! त्वया वैश्वानरबुद्ध्या उपास्यमानः **एषः** द्युलोकः **आत्मनः** वैश्वानरस्य अवयविनः **मूर्धा** - अवयवलक्षणः । न तु द्युलोकः एव वैश्वानरात्मा । **इति** एवंरूपेण राजा **तमुवाच । मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः इति** । यदि त्वं वैश्वानरस्य निर्णयार्थं मत्समीपम् अनागमने वैश्वानरस्य मूर्धरूपावयवभूते द्युलोके समस्तवैश्वानरबुद्धिं सम्पादयतः **ते** तव **मूर्धा** - शिरोभागो **व्यपतिष्यत्** - विशीर्णोऽभविष्यत् । विपरीतविद्याबलात् अनर्थः स्यात् । **यन्मां नागमिष्यः** - नागतोऽभविष्यः । अतः सम्यक् त्वया कृतं यत् मत्सकाशम् आगतवानसि इति ।।

**सु. - अत्स्यन्नं पश्यसि प्रियं** । योऽप्यन्यः एतमेवम् आत्मानं वैश्वानरम् उपास्ते सोऽपि अन्नमत्ति । **पश्यति प्रियं - भवति अस्य कुले ब्रह्मवर्चसम्** अध्ययनजं तेजः । न त्वया वैश्वानरः आत्मा कात्स्र्न्येन यथावत् अवधृतः । एकोंऽशः तस्य अवधृतः । **मूर्धा त्वेष आत्मनः** वैश्वानरस्य । द्युलोकादिपृथिव्यन्तशरीरस्य वैश्वानरात्मनः द्युलोकस्तु मूर्धा । ऊर्ध्वस्थितेः उत्तमत्वाच्च इतरेभ्यः इति भावः । हन्त ! ते जिज्ञासा समुत्पन्ना यथावत् अवगन्तुं माम् उपागतश्च । **यन्मां नागमिष्यः**, अयमेव वैश्वानरो नाधिक इति व्यावृत्तो अवधृतः स्यात्; तथा सति **मूर्धा ते व्यपतिष्यत्** - मूर्धपतनतुल्योऽनर्थः कोऽपि अभविष्यत् । एवमन्धोऽभविष्यः इत्यादीनामपि अनर्थमात्रे तात्पर्यम् । अनर्थश्च संसारः एव ।।

।। इति द्वादशखण्डभाष्यम् ।।

## त्रयोदशः खण्डः

[आदित्यः वैश्वानरात्मनः चक्षुः इति पौलुषेरुक्तिः]

**अथ होवाच सत्ययज्ञं पौलुषिं, 'प्राचीनयोग्य ! कं त्वमात्मानमुपास्से' इति 'आदित्यमेव भगवो राजन्' इति होवाच, 'एष वै विश्वरूप आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से' । तस्मात्तव बहु विश्वरूपं कुले दृश्यते' ।। १ ।।**

**प्र. - अथ होवाच......उपास्स इति** इत्यादि । प्राचीनयोग्यः इति सत्ययज्ञस्य नामान्तरम् । **आदित्य......विश्वरूप आत्मा वैश्वानरः -** रूप्यते इति रूपम् । विश्वं रूपं प्रकाश्यं यस्य सः विश्वरूपः । आदित्यस्य विश्वप्रकाशकत्वात् विश्वरूपत्वम् । **तस्मात्......दृश्यते** । एतदुपासनात् तव कुले बहु विश्वरूपं - विश्वप्रकाशकं पुत्ररत्नादिकं दृश्यते इत्यर्थः ।।

**आ.भा. - अथ** इत्यादि । **पौलुषिं सत्ययज्ञं होवाच** राजा - हे **प्राचीनयोग्य !** सत्ययज्ञस्यैव नामान्तरमेतत् । **कं त्वम् आत्मानम् उपास्से इति** पूर्ववत् । इतरः प्राह हे **भगवन् ! राजन् ! आदित्यमेव** वैश्वानरम् आत्मानम् उपास्से इति । **एष वै** त्वया उपास्यमानः **आत्मा विश्वरूपो वैश्वानरः** । तत्र रूप्यते इति रूपम् । विश्वं समस्तं जगत् प्रकाश्यम् अस्य स विश्वरूपः आदित्यः । यद्वा शुक्लनीलाद्यनेकरूपवत्त्वात् विश्वरूपत्वम् आदित्यस्य । यद्वा सर्वरूपत्वात् विश्वरूपत्वम् आदित्यस्य । यस्मात् वैश्वानरस्य चक्षुरवयवभूतम् आदित्यं त्वमुपास्से **तस्मात् तव कुले बहुविश्वरूपम्** इहामुत्र अर्थमुपकरणजातं **दृश्यते** । यद्वा विश्वप्रकाशकं पुत्ररत्नादिकं दृश्यते इति ।।

**सु. - विश्वरूपः -** विश्वमिदं प्रपञ्चं रूपयति प्रकाशयति, विश्वं समस्तं शुक्लादिरूपम् अस्येति वा, चित्रभानुर्हि । ते **कुले विश्वरूपं** विश्वप्रकाशकं विद्यावृत्तादिकं भवति । बहुरूपं वस्तु धनधान्यादि भवति ।। १-२ ।।

**प्रवृत्तोऽश्वतरीरथो दासीनिष्कः, अत्स्यन्नम्; पश्यसि प्रियम् । अत्त्यन्नम् पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । चक्षुष्ट्वेतदात्मनः' इति होवाच 'अन्धोऽभविष्यत्, यन्मां नागमिष्यः' इति ।। २ ।।**

**।। इति त्रयोदशः खण्डः ।।**

**प्र. - प्रवृत्तो......नागमिष्य इति** । अश्वतरीभिः युक्तो रथः अश्वतरीरथः त्वाम् अनुप्रवृत्तः दासीभिः युक्तो **निष्कः** - हारः **दासीनिष्कः** - त्वाम् अनुप्रवृत्तः इत्यर्थः । शिष्टं सर्वं पूर्ववत् ।।

**आ.भा. - प्रवृत्तः** इत्यादि । **अश्वतरीरथः -** अश्वतरीभ्यां युक्तः रथः अश्वतरीरथः । त्वाम् अनुप्रवृत्तः । तथा **दासीनिष्कः -** दासीभिः युक्तः **निष्कः -** हारः त्वाम् अनुप्रवृत्तः । अयमादित्यः वैश्वानरस्य चक्षुरवयवभूतः, न तु स अवयवीरूपः । अतो यदि मत्समीपं **नागमिष्यः** तदा **अन्धोऽभविष्यत्** इत्यादिकं पूर्ववदेव ज्ञातव्यम् ।।

**।। इति त्रयोदशखण्डभाष्यम् ।।**

## चतुर्दशः खण्डः

**[वायुः वैश्वानरस्य प्राणः इति भाल्लवेयः]**

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं, 'वैयाघ्रपद्य! कं त्वमात्मानमुपास्से' इति । 'वायुमेव भगवो राजन्' इति होवाच । एष वै पृथग्वर्त्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् त्वां पृथग्बलय आययन्ति पृथग्रथश्रेणयोऽनुयन्ति ।। १ ।।**

**प्र. - अथ होवाच......उपास्स इति** । व्याघ्रपद्यस्यापत्यं वैयाघ्रपद्यः । भाल्लवेरेव व्याघ्रपद्य इति नामान्तरम् । **एष वै पृथग्वर्त्मा वैश्वानर इति** । वायोः विविधगतिस्वभावत्वात् **पृथग्वर्त्मत्वम्** । **तस्मात्त्वां अनुयन्ति** । **पृथक् -** नानादिक्स्थाः वस्त्रान्नादिलक्षणाः **बलयः आययन्ति -** आगच्छन्ति । रथपङ्क्तयोऽपि त्वामनुयान्ति इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - अथ -** अनन्तरं राजा इन्द्रद्युम्नं भाल्लवेयं प्रोवाच - हे **वैयाघ्रपद्य!** व्याघ्रपद्यस्य अपत्यं वैयाघ्रपद्यः । **कं त्वमात्मानमुपास्से** इति । इतरः हे राजन्! वायुमेव उपास्से । इतरः प्राह - **एष वै पृथग्वर्त्मा वैश्वानरः -** पृथक् नानावर्त्मानि यस्य स पृथग्वर्त्मा । अनेकप्रकारकगतिमत्वात् वायोः पृथग्वर्त्मा इति नाम भवति । यस्मात् त्वमेवं विधं वाय्ववयवकं वैश्वानरम् उपास्से तस्मात् कारणात् पृथक् नानादिक्स्थाः वस्त्रान्नादिलक्षणाः बलयः त्वाम् **आयान्ति -** आगच्छन्ति । **पृथग्रथश्रेणयः अनुयन्ति -** आगच्छन्ति इत्यर्थः । अन्यत् सर्वं पूर्ववदेव व्याख्येयम् ।।

**सु. -** भाल्लविरेव व्याघ्रपद्यः, तत्सम्बोध्यते ; भाल्लवेयः एव **वैयाघ्रपद्येति** । सदागतेः वायोर्हि **वर्त्म पृथक् -** इतरस्मात् विलक्षणम्, तद्वायुः **पृथग्वर्त्मा उच्यते** ।

पृथक् पृथक् वर्त्मानि आवहादिभेदेन[1] प्रसरतोऽस्य वायोरिति वा पृथग्वर्त्मा । अस्य एवं रूपस्य उपासनादेव ते **पृथक्** पृथक् - विविधदेशतश्च सदा **बलयः** - कराः आगच्छन्ति ; तथा पृथक् रथश्रेणयश्च ।। १-२ ।।

**'अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । प्राणस्त्वेष आत्मन' इति, होवाच - 'प्राणस्त उदक्रमिष्यत्, यन्मां नागमिष्यः' इति ।। २ ।।**

**।। इति चतुर्दशः खण्डः ।।**

**प्र. - अत्स्यन्नं पश्यसि प्रियम्** इत्यादि । सर्वं पूर्ववत् ।।

**आ.भा. - प्राणस्त्वेष** इत्यादि । अयं वायुः वैश्वानरस्य अवयवभूतः । अतोऽवयवमात्रस्य अवयवित्वेन उपासनात् प्राणः एव तव व्यपगतोऽभविष्यत्, यदि त्वं निर्णयाय मत्समीपं नागमिष्यः इति ।।

**।। इति चतुर्दशखण्डभाष्यम् ।।**

## पञ्चदशः खण्डः

**[आकाशः वैश्वानरस्य मध्यकायः]**

**अथ होवाच जनँ शार्कराक्ष्यम्, 'शार्कराक्ष्य, कं त्वमात्मानमुपास्से' इति । 'आकाशमेव भगवो राजन्' इति होवाच । 'एष वै बहुल आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से' । तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च' ।। १ ।।**

---

१. आवहःप्रवहश्चैव विवहश्च समीरणः ।
परावहः संवहश्च उद्वहश्च महाबलः ।।
तथा परवहश्श्रीमान् उत्पातभयशंसिनः ।
इत्येते क्षुभिताः सप्त मारुता गगने चराः ।। इति हरिवंशे ।
भूवायुरावह इह प्रवहस्तदूर्ध्वः स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः परिपूर्वकोऽस्मात् वाहः परावह इमे पवनाः प्रसिद्धाः ।। इति सिद्धान्तशिरोमणौ ।।

**'अत्स्यन्नम्, पश्यसि प्रियम्, अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । सन्देहस्त्वेष आत्मनः' इति होवाच - 'सन्देहस्ते व्यशीर्यत्; यन्मां नागमिष्यः' इति ।। २ ।।**

**।। इति पञ्चदशः खण्डः ।।**

**प्र. - अथ......त्वमात्मनम्** इत्यादि । **एष वै बहुल आत्मा ।** भूतान्तरेभ्यः आकाशस्य महत्त्वात् बहुलत्वम् । शिष्टं स्पष्टम् ।

**अत्स्यन्नम्** इत्यादि । **सन्देहस्त्वेष आत्मन इति होवाच । सन्देहः**[1] मध्यकायः, मध्यकायो हि उत्तरापरकाययोः क्व अनुप्रविष्टः इति सन्दिह्यमानत्वात् सन्देहः इत्युच्यते । **व्यशीर्यत्** - विशीर्णोऽभविष्यत् । शिष्टं स्पष्टम् ।।

**आ.भा. - अथ होवाच** इत्यादि । पूर्ववदेव व्याख्येयम् । **एष वै बहुल** इत्यादि । आकाशस्य बहुलत्वं सर्वगतत्वात् भूतान्तरापेक्षया महत्वाच्च । **तस्मात्त्वम्** इत्यादि । यस्मात् त्वं बहुलमाकाशात्मकं वैश्वानरावयवभूतम् उपास्से तस्मादेव कारणात् प्रजया पुत्रपौत्रादिलक्षणया सुवर्णादिना दानेन च त्वमपि बहुलः सम्पन्नोऽसि ।

**सन्देह** इत्यादि । **एषः** - आकाशः **आत्मनः** वैश्वानरस्य **सन्देहः** - शरीरस्य मध्यमो भागो मध्यकायः इत्यर्थः । अत्र दिहधातुः उपचयार्थकः । अतः सन्देहो मध्यकायः । स च पूर्वापरशरीरयोः कुत्र अनुप्रविष्टः इति सन्दिह्यमानत्वात् सन्देहः इत्युच्यते । **ते** - तव **सन्देहः** - मध्यभागः **व्यशीर्यत्** - छिन्नोऽभविष्यत् यदि त्वं निश्चयार्थं **नागमिष्यः** । अतः सम्यक् भवता कृतं यदागतः इति ।।

**सु.** - बहुलत्वमाकाशस्य इतरेभ्यो वैपुल्यात् । संन्देहो मध्यकायः ।। १-२ ।।

**।। इति पञ्चदशखण्डभाष्यम् ।।**

## षोडशः खण्डः

**[आपः वैश्वानरस्य बस्तिः]**

**अथ होवाच बुडिलमाश्वतराश्विं 'वैयाघ्रपद्य ! कं त्वमात्मानमुपास्से इति 'अप एव भगवो राजन् इति हौवाच 'एष वै रयिरात्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात्त्वँ रयिमान् पुष्टिमानसि ।। १ ।।**

---

१. **सन्देहः** - दिहेरुपचयार्थत्वात् मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्सन्देहः इति शाङ्करभाष्यम् ।

**'अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । वस्तिस्त्वेष आत्मन' इति होवाच 'वस्तिस्ते व्यभेत्स्यत्, यन्मां नागमिष्यः' इति ।। २ ।।**

**।। इति षोडशः खण्डः ।।**

**प्र. - अथ.....पुष्टिमानसि । वैयाघ्रपद्य** - व्याघ्रपद्गोत्रापत्य इत्यर्थः । **एष वै रयिरात्मा** । अपां वेगवत्त्वात् रयित्वम् । विसर्गः छान्दसः । धनप्राप्तिहेतुत्वाद्वा रयित्वम् । रयिमान् धनवान् इत्यर्थः ।

**अत्स्यन्नम्** इत्यादि । **वस्तिः** - मूत्रस्थानम् । शिष्टं स्पष्टम् ।।

**आ.भा. - अथ होवाच** इत्यादि । प्रकरणं पूर्ववदेव व्याख्येयम् । **अप** इति । जलानि जलस्यैव वैश्वानरबुद्ध्या उपासनां करोमि इत्यर्थः । जलस्य वेगाधिक्यात् रयि इति नाम भवति । **एष वै रयिरात्मा वैश्वानरः** धनात्मकः । जलेन धान्यादिकं जायते । ततः तत्सञ्चयादेव धनं भवतीति । यस्मात् त्वं रयिलक्षणं वैश्वानरावयवभूतम् उपास्से **तस्मात् त्वं रयिमान्** धनवानसि । **पुष्टिमानसि** - शरीरेण पुष्टोऽसि अन्नधननिमित्तत्त्वात् ।

एतज्जलं वैश्वानरस्य आत्मनः **बस्तिः** मूत्रस्थानलक्षणम् । यदि त्वं मत्सकाशं नागमिष्यः तदा ते मूत्रस्थानं विशीर्णम् अभविष्यत् इति ।।

**सु.** - वृष्टिमूला हि सर्वा सम्पत्तिः, तदुच्यते - **एष वै रयिः** इति । **बस्तिः** मूत्राशयः ।।

**।। इति षोडशखण्डभाष्यम् ।।**

## सप्तदशः खण्डः

**[पृथिवी वैश्वानरस्य पादौ]**

**अथ होवाच उद्दालकमारुणिं, 'गौतम कं त्वमात्मानमुपास्से' इति । 'पृथिवीमेव भगवो राजन्' इति होवाच । 'एष वै प्रतिष्ठात्मा वैश्वानरः, यं त्वमात्मानमुपास्से, तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च' ।। १ ।।**

**'अत्स्यन्नम, पश्यसि प्रियम् । अत्त्यन्नम्, पश्यति प्रियम् । भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । पादौ त्वेतावात्मनः' इति हौवाच, 'पादौ ते व्यम्लास्येतां, यन्मां नागमिष्यः' इति ।। २ ।।**

**प्र. - अथ......पशुभिश्च** । प्राण्याधारत्वात् पृथिव्याः प्रतिष्ठात्वम् ।

**अत्स्यन्नम्** इत्यादि । **व्यम्लास्येतां** - ग्लानौ श्लथौ अभविष्यताम् इत्यर्थः । शिष्टं स्पष्टम् ।।

**आ.भा. - अथ** इत्यादि पूर्ववदेव व्याख्येयम् । प्रश्नानन्तरं गौतमः प्राह - पृथिव्याः उपासनं करोमि । राजा प्राह - **एष वै प्रतिष्ठा** । पृथिवी वैश्वानरस्य पादौ । सकलप्राणिनाम् आधारत्वात् पृथिवी सर्वस्य प्रतिष्ठा । यतः प्रतिलक्षणायाः पृथिव्याः उपासनाकरणात् **त्वं** सर्वत्र **प्रतिष्ठितोऽसि ।**

यदि त्वं कदाचित् वैश्वानरनिर्णयार्थं मत्समीपं नागतोऽभविष्यत् तदा तव पादौ शिथिलौ भवेताम् । अतः साधु कृतवानसि इति ।।

**सु. - एष वै प्रतिष्ठा** - पृथिवी हि सर्वप्राणिनां प्रतिष्ठा ।।

**।। इति सप्तदशखण्डभाष्यम् ।।**

## अष्टादशः खण्डः

**[समस्तवैश्वानरात्मोपदेशः]**

**तान् होवाच, 'एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति ।। १ ।।**

**प्र. - तान् होवाच** । अथ राजा **तान्** ऋषीन् पुनरुवाच इत्यर्थः । **एते वै......अत्थ** । एतादृशा हि यूयम् इमं वैश्वानरम् आत्मानं पृथगिव **विद्वांसः**[१] - भिन्नभिन्नतया उपासीनाः

---

१. **विद्वांसः** - यूयमित्यन्वयार्थं प्रागुक्तमपि पाठक्रमेण पुनरनूद्य पृथगिव विद्वांस इति सम्बन्धः । यथा जात्यन्धा हस्तिदर्शने भिन्नदृष्टयो भवन्ति तथा यूयं वैश्वानरमात्मानम् एकमपि सर्वात्मकं सन्तं भिन्नमिव विद्वांसः परिच्छिन्नानुरूपेण आत्मानं बुद्धवन्तः ।। इति आनन्दगिरिः ।।

तदानुरूप्येण **अन्नमत्थ** - लौकिकं भोगम् अनुभवथ इत्यर्थः । पूर्वत्र **अत्स्यन्नम्** इति प्रतिपुरुषमुक्तस्य अत्र अत्थ इति बहुवचनेन निर्देशः । अत्र **अन्नमत्थ** इत्येतत् प्रियं पश्यथ इत्यस्यापि उपलक्षणम् । **यस्तु......अत्ति । अभिविमानं**[१] - सर्वाभिव्याप्ततया विगतमानं **वैश्वानरं** - विश्वेषां नराणां नेतारं एतमात्मानं **प्रादेश मात्रं** - द्युलोकादिप्रदेशसम्बन्धिनी प्रादेशी । प्रादेशी मात्रा यस्य तं प्रादेशमात्रं - द्युप्रभृतिप्रदेशपरिच्छिन्नं यः उपास्ते, स सर्वलोकसर्वभूतसर्वात्मवर्तिब्रह्मरूपम् अन्नं **अत्ति** - अनुभवति इत्यर्थः ।

अनेन वैश्वानरोपासनस्य ब्रह्मप्राप्तिफलकत्वम् उक्तं भवति । भगवता हि भाष्यकृता, 'सर्वेषु भूतेषु सर्वेष्वात्मसु च वर्तमानं यत् अन्नं भोग्यम्, तदत्ति । सर्वत्र वर्तमानं [1]स्वतः एव[1] अनवधिकातिशयानन्दं ब्रह्म अनुभवति । यत्तु सर्वैः कर्मवश्यैः आत्मभिः प्रत्येकम् अनन्यसाधारणम् अन्नं भुज्यते, तत् मुमुक्षुभिः त्याज्यत्वात् इह [2]न गृह्यते[2] इति भाषितम् ।

**[प्रादेशमात्रशब्दार्थविचारः]**

अत्र 'प्रादेशमात्रमिव ह वै देवाः सुविदिताः अभिसम्पन्नाः । तथा तु वा एनान् वक्ष्यामि यथा प्रादेशमात्रम् अभिसम्पादयिष्यामि इति । स होवाच मूर्धानम् उपदिशन्, 'एष वा प्रतिष्ठा वैश्वानरः' इति; चक्षुषी उपदिशन्नुवाच, 'एष वै सुतेजा वैश्वानरः' इति नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मा वैश्वानरः इति । मुख्यमाकाशम् उपदिशन्नुवाच, 'एष वै बहुलो वैश्वानरः' इति । मुख्याः अपः उपदिशन्नुवाच, 'एष वै रयिर्वैश्वानरः' इति ; चुबुकम् उपदिशन् उवाच ; 'एष वै प्रतिष्ठा वैश्वानरः' इति ।। (शत.ब्रा.१०-६-१-१०,११) इति वाजसनेयकोक्तमूर्धचुबुकान्तरालप्रतिष्ठितत्वलभ्यं प्रादेशमात्रत्वं नोपजीव्यम् । द्युप्रभृतिप्रदेशसंबन्धित्वमात्रस्य यौगिकार्थस्य प्रकरणतः प्रतीतेः । उक्तञ्च [3]व्यासार्यैः[3] सर्ववेदान्तप्रत्ययाधिकरणे, 'यस्त्वेतमिति न वाजसनेयकोक्तानुवादः । स्वशाखावाक्ये एव पूर्वप्रतिपादितस्य अनुवादेन फलसमर्पकत्वोपपत्तेः' इति ।

न च अपरिच्छिन्नस्य परस्य ब्रह्मणः द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया कथं परिच्छिन्नत्वम् इति चोदनीयम् । परिच्छिन्नत्वे बुद्धिसौकर्यलक्षणाभिव्यक्तेः सम्भवात् । सूत्रितं च 'अभिव्यक्तेरित्याश्मरथ्यः' इति (ब्र.सू.१-२-३०) बुद्धिसौकर्यलक्षणाभिव्यक्तेः

---

१. अभिविमानः - प्रत्यगात्मतया अभिविमीयते अहमिति ज्ञायते इत्यभिविमानः । इति शाङ्करभाष्यम् ।

1. स्वयमेव, क । 2. नानुभूयते, अ, आ । 3. व्यासार्यैः - श्रुतप्रकाशिकाचार्यैः ।

हेतोः अभिविमानस्यापि ब्रह्मणः प्रादेशमात्रत्वम् उपदिश्यते इति आश्मरथ्यः आचार्यो मन्यते इति सूत्रार्थः ।। अभिव्यक्त्यर्थं परिच्छिन्नत्वोपदेशेऽपि मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति न चोदनीयम् - तथा उपासनार्थत्वात् । सूत्रितं च 'अनुस्मृतेर्बादरिः' (ब्र.सू.१-२-३१) इति । अनुस्मृतिः - उपासनम् । अनुस्मृतेः हेतोः पुरुषविधत्वनिरूपणम् इति बादरिः आचार्यो मन्यते इति सूत्रार्थः ।।

**आ.भा. -** अथ स राजा तान् महर्षीन् मिलितान् प्रति उवाच - **एते खलु यूयं** भगवन्तः अपृथग्भूतमपि आत्मानं **पृथगिव विद्वांसः** भिन्नभिन्नरूपेण उपासनां कुर्वन्तः तादृशोपासनाबलात् अन्नं विलक्षणं लौकिकं भोगमनुभवथः । प्रियपुत्रादिकं च पश्यथ । यस्तु एतमेव द्युमूर्धादिविशिष्टम् **अभिविमानं -** सर्वत्र अभिव्याप्ततया विगतमानं सर्वाभिमानरहितं वैश्वानरं सर्वप्राणिनां नेतारं प्रादेशमात्रं द्युलोकादिप्रदेशैः परिच्छिन्नं य उपास्ते **सः -** तादृशः उपासकः सर्वलोकसर्वभूतसर्वात्मनि विद्यमानं परमात्मलक्षणम् **अन्नमत्ति -** अनुभवति इति ।।

**सु. -** अथ तान् उवाच अश्वपतिः, **एते यूयमिममात्मानं वैश्वानरं पृथगिव -** द्युप्रभृतिपृथिव्यन्तसमस्तरूपम् एनं द्यौरेव वैश्वानरः आदित्यः एव वैश्वानरः इत्येवंरीत्या पृथक् प्रतिपद्यध्वे, एवं विद्वांसः यूयमेकदेशदृष्टेः परिमितम् **अन्नम् -** भोग्यम् **अत्थ !** यस्तु वैश्वानरम् **एतं प्रादेशमात्रम् -** प्रदेशादनन्यः प्रादेशो द्युप्रभृतिपृथिव्यन्तः, स एवास्य मात्राशरीरतया अवच्छेदकीभूय ज्ञापको भवति तदयं प्रादेशमात्रः, द्युप्रभृतिपृथिव्यन्तशरीरकम् इत्येतत्। वस्तुतस्तु **अभिविमानम् -** अभिविगतं मानं यस्य, अपरिच्छिन्नम् इत्येतत् **उपास्ते -** द्युप्रभृतिपृथिव्यन्तशरीरकत्वेन स्वरूपतोऽपरिच्छिन्नत्वेन च उपास्ते इति यावत् । स न पृथग्दृष्टिरिव परिमितम् अन्नम् अत्ति, किन्तु सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु आत्मसु यदेकम् अनुगतमन्नम् आनन्दमयतया निरतिशयभोग्यम् अद्वितीयं तदत्ति । सर्वगं निरतिशयानन्दं ब्रह्म प्राप्नोति इति यावत् ।।

**[मूर्धादयः वैश्वानरात्मनः अवयवाः]**

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य - मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मा, सन्देहो वहुलो, वस्तिरेव रयिः, पृथिव्येव पादौ । उर एव वेदिर्लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ।। २ ।।**

**प्र.** - अथ प्राणाहुत्याधारत्व-त्रिविधाग्नित्व-परिकल्पितजाठराग्निशरीरकद्युमूर्धत्वादि विशिष्टात्मभाविते स्वशरीरे क्रियमाणप्राणाद्याहुतिभिः वैश्वानरविद्यानिष्ठेन परमात्मा समाराधनीयः इति प्रतिपादयति - **तस्य ह** इत्यादि । **एतस्यात्मनः** - 'उपास्ते' इति अव्यवहितप्रकृतस्य उपासकस्य आत्मनः मूर्धा एव **तस्य वैश्वानरस्य** - 'मूर्धा त्वेष आत्मनः' इति वैश्वानरात्ममूर्धत्वेन निर्दिष्टः सुतेजाः इत्यर्थः । न चात्र **तस्य ह वा एतस्य** इति पदयोः परमात्मपरतया सामानाधिकरण्यमेवास्तु, न त्वेतस्येति शब्दस्य उपासकपरामर्शित्वमिति शङ्क्यम् - **उर एव वेदिः**[१] इत्यादौ उपासकोरःपरामर्शस्य अवश्यम्भावात्, **मूर्धैव** इत्यत्रापि उपासकस्य मूर्धैव परामृश्यते । तस्मात् **एतस्य** इति शब्दस्य उपासकपरत्वमेव सिद्धम् ।

इह हि भगवता भाष्यकृता 'आमनन्ति च' (ब्र.सू.१-२-३३) इति सूत्रव्याख्याने - 'एनं पुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम् अस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिना । अयमर्थः - 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति [1]त्रैलोक्यशरीरस्य[1] परमात्मनः वैश्वानरस्य उपासनं विधाय, 'सर्वेषु लोकेषु' इत्यादिना ब्रह्मप्राप्तिफलम् उपदिश्य, अस्यैव उपासनस्य अङ्गभूतं प्राणाग्निहोत्रं, 'तस्य ह वा एतस्य' इत्यादिना उपदिशति । यः पूर्वम् उपास्यतया उपदिष्टो वैश्वानरः तस्य अवयवभूतान् द्व्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादान्तेषु सम्पादयति । **मूर्धैव सुतेजाः** उपासकस्य मूर्धा एव परमात्ममूर्धभूता द्यौः इत्यर्थः । **चक्षुर्विश्वरूपः** - आदित्यः इत्यर्थः । **प्राणः पृथग्वर्त्मा** वायुः इत्यर्थः । **सन्देहो बहुलः** - उपासकस्य मध्यकायः एव परमात्ममध्यकायभूताकाशः इत्यर्थः । **वस्तिरेव रयिः** - अस्य वस्तिरेव तदवयवभूताः आपः इत्यर्थः । **पृथिव्येव पादौ** - अस्य पादावेव तत्पादभूता पृथिवी इत्यर्थः । एवमुपासकस्य शरीरे परमात्मानं [2]त्रैलोक्यशरीरं[2] वैश्वानरं संनिहितम् अनुसन्धाय स्वकीयानि उरोलोमहृदयमन आस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्च अग्निहोत्रत्वं परिकल्प्य एवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरम् आराधयेत् इति

---

१. वेदिः परिष्कृता भूमिः ! वेदिः परिष्कृताभूमिः इत्यमरः ।

1. शरीरकस्य, अ, आ । 2. शरीरकं, अ, आ, क ।

'उर एव वादलोमाान बर्हिर्हृदयं गार्हपत्यः' इत्यादिना उपदिश्यते इति भाषितम् । उरःप्रभृतीनां वेद्यादित्वोपदेशश्च प्राणाहुतेः अग्निहोत्रत्वसंपत्त्यर्थः इति, 'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति' (ब्र.सू.१-२-३२) इति सूत्रितम् । 'स य इदमविद्वानग्निहोत्रं जुहोति' (छां.उ.३-५-२४-१) इति दर्शिताग्निहोत्रत्वसम्पत्तेः हेतोः वेद्यादित्वोपदेशः इति जैमिनिः मन्यते इति सूत्रार्थः । **हृदयं गार्हपत्यः** हृदयकमलावच्छिन्नजाठराग्निः गार्हपत्यः । **मनोऽन्वाहार्यपचनः** । मनइन्द्रियावच्छिन्नजाठराग्निः दक्षिणाग्निः । **आस्यमाहवनीयः** आस्यावच्छिन्नजाठरः आहवनीयः इत्यर्थः । गार्हपत्यान्वाहार्यपचनादिपरिकल्पनस्य सजातीयजाठर एव उचितत्वात् 'वैश्वानरस्य [1]हृदयादिस्थस्य[1] अग्नित्रयकल्पनं क्रियते' इति भाषितत्वाच्च उक्तः एवार्थः । अत्र च हृदयादिशब्दाः तत्तदवच्छिन्नजाठराग्नि-शरीरकपरमात्मपर्यन्ताः इति द्रष्टव्यम् ।।

**आ.भा.** - प्राणाद्याहुत्यधिकरणतया त्रिप्रकारकाग्नित्वेन च परिकल्पितजाठराग्नि-शरीरको द्युमूर्धत्वादिविशिष्टः आत्मा तद्भाविते स्वकीयशरीरे प्रदीपमानप्राणापानाद्याहुतिभिः वैश्वानरविद्योपासकेन परं ब्रह्म आराधनीयम् इति प्रतिपादयितुमाह - **तस्य** इत्यादि **तस्य ह वा एतस्य** - प्रकृतस्य **आत्मनो मूर्धैव सुतेजाः** । उपासकस्य मूर्धा एव परमात्ममूर्धभूता द्यौः इत्यर्थः । **चक्षुर्विश्वरूपः** आदित्यः । **प्राणः पृथग्वर्त्मा** - वायुः **सन्देहो बहुलः** - उपासकस्य मध्यकायः एव परमात्ममध्यकायभूताकाशः **वस्तिरेव रयिः** - उपासकस्य वस्तिरेव परमात्मावयवभूताः आपः जलानि इत्यर्थः । **पृथिव्येव पादौ** - उपासकस्य पादावेव परमात्मपादलक्षणा पृथिवी । **उर एव वेदिः** - अस्य खलु वैश्वानरस्यात्तुः उरः एव वेदिः आकारसाधर्म्यात् । **लोमानि बर्हिः** यथा वेद्यां कुशा आस्तीर्णा भवन्ति तथा उरसि लोमानि आस्तीर्णानीव दृश्यन्ते । **हृदयं गार्हपत्यः** अत एव अन्वाहार्यपचनोऽग्निः मनः । **आस्यमाहवनीयः** - आस्यं मुखम् आहवनीय इव आहवनीयः । हूयते अस्मिन् इति व्युत्पत्तेः । एवंप्रकारेण उपासकः स्वशरीरे लोकत्रयशरीरं परमात्मानं वैश्वानरं संनिहितमिव ज्ञात्वा स्वसम्बद्धानि उरोलोमहृदयमनआस्यानि प्राणहवनाधारस्य परमात्मनः वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयान् अग्निहोत्रहवनोपकरणलक्षणान् कल्पयित्वा प्राणाद्याहुतेश्च अग्निहोत्रत्वं च कल्पयित्वा एवं प्रकारकेण प्राणाग्निहोत्रेण वैश्वानरं परमात्मानं सम्यक् आराधयेत् इति भावः ।।

---

1. हृदयावस्थितस्य, अ, हृदयस्थस्य, आ ।

**सु.** - उपदिश्य वैश्वानरविद्याम् अथ तन्निष्ठस्य अग्निहोत्रविशेषम् आदिशन् आत्मनि वैश्वानरदृष्टिम् आदौ आपादयति - येन अग्निहोत्रेण स्वात्मा वैश्वानरः परो वैश्वानरविद्यानिष्ठेन आराधितः स्यात् । **तस्य ह वा** वैश्वानरविद्यानिष्ठस्य **मूर्धैव,** एतस्य वैश्वानरस्य आत्मनः **सुतेजाः** सुतेजःसंज्ञः योऽयं मम मूर्धा स एव वैश्वानरस्य मूर्धा सुतेजाः इति भावयेत् उपासकः इति यावत् । यच्चक्षुः उपासकस्य स एव **विश्वरूपः** आदित्यः यः चक्षुः वैश्वानरस्य उक्तः । एवमुत्तरत्रापि । **पृथिव्येव पादौ** - उपासकस्य पादावेव वैश्वानरस्य पादतया रूपिता पृथिवी । वैश्वानरम् आत्मानं अन्तर्यामितया स्वशरीरे सन्निहितं स्वमूर्धप्रभृतिपादान्तैरेव द्युलोकप्रभृतिपृथिव्यन्तशरीरकत्वेन भावयेत् । एवं विभाव्य वक्ष्यमाणम् अग्निहोत्रम् अनुतिष्ठेत् इति भावः । तस्य ह वा एतस्य वैश्वानरस्य इत्येतत् एकार्थकं वा । वैश्वानरो हि विश्वरूपः, तद्रूपोऽपि, **मूर्धैव** - उपासकस्य इत्येतत् अर्थतः प्राप्तम् । भावस्तु स एव । अथ अग्निहोत्रोपकरणानि सम्पादयति - उरः एव अस्य उपासकस्य **वेदिः** - स्थण्डिलम्[1], **लोमानि बर्हिः** - यानि आस्तीर्यन्ते वेद्यां बर्हींषि दर्भाः **हृदयं गार्हपत्यः** - यतः मनोऽग्निः प्रणीयते इव । सर्वेन्द्रियप्रवृत्तिमूलप्रदेशो हि हृदयम् । **मनोऽन्वाहार्यपचनः** - दक्षिणाग्निः **आस्यमाहवनीयः** हूयते हि आस्ये आहुतिः अन्नलक्षणा ।।

**।। इति अष्टादशखण्डभाष्यम् ।।**

## एकोनविंशः खण्डः

**[प्राणाग्निहोत्रस्य प्रथमाहुतिः]**

**तद्यद्भक्तं प्रथममागच्छेत्, तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति । प्राणस्तृप्यति ।। १ ।।**

**प्र.** - **तद्......होमीयम् । तत्** - तस्य पुंसः **यद्भक्तं** यत् अन्नं भोजनकाले प्रथमतः **आगच्छेत्** उपनयेत्, **तत् होमीयं** होमसाधनम् । तेन होतव्यम् इत्यर्थः ।

**स यां.....प्राणस्तृप्यति** । 'प्राणाय स्वाहा इति प्रथमायाम् आहुतौ हुतायां प्राणः तृप्यति इत्यर्थः ।।

**आ.भा.** - **तद्यद्भक्तम्** इत्यादि । **तत्** तस्य उपासकस्य पुरुषस्य **यद्भक्तं** - ओदनादिकं भोजनासवरे **प्रथमम्** प्रथमतः **आगच्छेत्** समुपस्थितं भवेत् **तत्** अन्नं

---

१. वेदिः - वेदिः अत्र स्थण्डिलमात्रं गृह्यते ।। इत्यानन्दगिरिः ।।

**होमीयं** होमसाधनं द्रव्यरूपेण । तेन ओदनादिना प्राणाग्नौ हवनं कुर्यात् । सः होता यां प्रथमाहुतिं जुहुयात् तां 'प्राणाय स्वाहा' इति मन्त्रेण आहुतिं प्रक्षिपेत् । **प्राणस्तृप्यति** - तया प्रथमया आहुत्या प्राणस्तृप्तो भवति इति ।।

**सु.** - अथ एवं विभाव्य विभावयेत् होमीयम्, **तद्यत् भक्तम् अन्नं प्रथमम् आगच्छेत्** भोजनपात्रे, विभाव्य एवं **सः** - भोक्ता, यां **प्रथमाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति** । अनेन **प्राणस्तृप्यति** ।।

**[प्राणाहुतिजनिततृप्तिः]**

**प्राणे तृप्यति चक्षुस्तृप्यति । चक्षुषि तृप्यत्यादित्यस्तृप्यति । आदित्ये तृप्यति द्यौस्तृप्यति । दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति । तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।**

**प्र. - प्राणे......तत् तृप्यति** । एवं प्राणे तृप्ते सति क्रमात् चक्षुः, आदित्यः, द्यौश्च तृप्यन्ति । ततश्चद्युवादित्याभ्याम् अधिष्ठितं वस्तुजातञ्च तृप्यति इत्यर्थः । **तस्यानुतृप्तिम्** इत्यादि । तस्मिन् सर्वस्मिन् तृप्ते तस्य **तृप्तिमनु** - तृप्तेः पश्चात् प्रजापश्वादिभिः होताऽपि तृप्यति इत्यर्थः । अत्र प्राणचक्षुरादिशब्दाः तत्तदभिमानिदेवतापराः; अचेतनानां तृप्तेः असम्भवादिति ।।

**आ.भा. - प्राणे तृप्यति** इत्यादि । एवं क्रमेण प्राणतृप्तेः अनन्तरं तद्द्वारा चक्षुरादयः तृप्ताः भवन्ति । ततः आदित्यः तृप्तो भवति । ततः द्यौः तृप्यति । ततः द्युवादित्वाभ्याम् अधिष्ठितं यत्किञ्चित् वस्तुजातं तृप्तं भवति । तस्मिन् सर्वस्मिन् वस्तुनि तृप्ते सति **तस्य तृप्तेरनु** तृप्तेः अनन्तरं प्रजापश्वादिद्वारा तादृशहवनकर्ताऽपि तृप्तः भवति । ननु इमे चक्षुरादयः अचेतनाः । तत्कथं तेषां तृप्तिः सम्भवति ? अचेतनानां तृप्तेः अभावात् इति चेत्, न प्राणचक्षुरादिपदानां तत्तदभिमानिदेवतावाचकत्वेन उक्तदोषासम्भवात् इति ।।

**सु. - प्राणे तृप्यति** सति चक्षुः तृप्यति । **चक्षुषि तृप्यति** तदधिष्ठाता । **आदित्यः तृप्यति आदित्ये तृप्यति** तेनाधिष्ठाता **द्यौश्च तृप्यति** । **दिवि तृप्यन्त्यां द्यौश्चादित्यश्च** यत्किञ्चित् **अधितिष्ठति** तत्सर्वं **तृप्यति** । तस्य सर्वस्य **तृप्तिमनु** स्वयं च (यजमानः) भोक्ता **तृप्यति** । **प्रजया पशुभिरन्नाद्येन तेजसा** शारीरेण **ब्रह्मवर्चसेन** ब्रह्मणः वेदस्य अध्ययनतः जातेन वर्चसा च उपलक्षितः **तृप्यति** ।।

**।। इति एकोनविंशखण्डभाष्यम् ।।**

## विंश-एकविंश-द्वाविंश-त्रयोविंशखण्डाः

[द्वितीयाहुतिः तज्जनिततृप्तिश्च]

अथ यां द्वितीयां जुहुयात्, तां जुहुयात् व्यानाय स्वाहेति । व्यानस्तृप्यति ।। १ ।।

व्याने तृप्यति श्रोत्रं तृप्यति । श्रोत्रे तृप्यति चन्द्रमास्तृप्यति । चन्द्रमसि तृप्यति दिशस्तृप्यन्ति । दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति । तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

[तृतीयाहुतिः तज्जनिततृप्तिश्च]

अथ यां तृतीयां जुहुयात्, तां जुहुयात् अपानाय स्वाहेति । अपानः तृप्यति ।। १ ।।

अपाने तृप्यति वाक् तृप्यति । वाचि तृप्यन्त्यामग्निस्तृप्यति । अग्नौ तृप्यति पृथिवी तृप्यति। पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतः तत् तृप्यति । तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

[चतुर्थाहुतिः तज्जनिततृप्तिश्च]

अथ यां चतुर्थीं जुहुयात्, तां जुहुयात् समानाय स्वाहेति । समानः तृप्यति ।। १ ।।

**प्र. - ब्रह्मवर्चसेन तेजसा -** वृत्ताध्ययननिमित्ततेजसा इत्यर्थः । शिष्टं स्पष्टम् ।। एवमुत्तरत्रापि द्रष्टव्यम् ।।

समाने तृप्यति मनस्तृप्यति । मनसि तृप्यति पर्जन्यस्तृप्यति । पर्जन्ये तृप्यति विद्युत् तृप्यति । विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतः तत् तृप्यति । तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

[पञ्चम्याहुतिः तज्जनिततृप्तिश्चः]

अथ यां पञ्चमीं जुहुयात्, तां जुहुयात् उदानाय स्वाहेति । उदानस्तृप्यति ।। १ ।।

उदाने तृप्यति[1] वायुस्तृप्यति । वायौ तृप्यति आकाशस्तृप्यति । आकाशे तृप्यति यत्किञ्च वायुश्चाकाशाश्चाधितिष्ठतः तत् तृप्यति । तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।। २ ।।

---

1. त्वक् तृप्यति । त्वचि तृप्यन्त्यां इति सुबोधिनी तथा आनन्दभाष्यसम्मतः पाठः।

**आ.भा. - अथ तां द्वितीयां जुहुयात्** इत्यारभ्य **पञ्चमीं जुहुयात्** इत्यन्तो ग्रन्थसन्दर्भः प्रथमाहुतिव्याख्यानवदेव व्याख्येयः विशेषाभावादिति ।।

**सु. - अथ यां द्वितीयाम्** इत्यादि स्फुटम् ।।

**।। इति विंश-एकविंश-द्वाविंश-त्रयोविंशखण्डभाष्यम् ।।**

## चतुर्विंशः खण्डः

**[वैश्वानराग्निहोत्रस्य महिमा]**

**स य इदमविद्वानग्निहोत्रं जुहोति, यथाङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ।। १ ।।**

**प्र. - स य......जुहोति ।** उरःप्रभृतीनाम् अग्निहोत्रोपकरणवेद्यादिताम् अजानन् यः प्राणाग्निहोत्रम् अनुतिष्ठति इत्यर्थः । **यथा......स्यात् ।** तदनुष्ठानं भस्माहुतिसमानं स्यात् इत्यर्थः । निष्फलमिति यावत् ।।

**आ.भा. - स य** इत्यादि । **स य** - उपासकः **इदमविद्वान् -** इदमुरः प्रभृतीनाम् अग्निहोत्रहवनं साधनताम् अजानन् अज्ञात्वा **अग्निहोत्रं -** प्राणाग्निहोत्रहवनम् **जुहोति -** प्रतिदिनं करोति, अनुतिष्ठति इत्यर्थः । **यथा** इत्यादि । **यथा अङ्गारानपोह्य** समिद्धं ज्वलितमग्निं परित्यज्य **भस्मनि जुहुयात् तादृक् तत्स्यात् -** समिद्धतमे अग्नौ जुहुयात् इति विधानं । तत्र यदि कोऽपि ज्वलिताग्नौ आहुतिम् अदत्वा भस्मनि आहुतिं जुहुयात् तादृशाहुतिदानम् अनर्थकम् । तथैव अत्रापि उरःप्रभृतीन् साधनं अज्ञात्वा प्राणाहुतिं सम्पादयेत् तदा तदग्निहोत्रं व्यर्थमेव इति भावः ।।

**सु. -** वैश्वानरविदः अग्निहोत्रमिदं स्तूयते द्वाभ्याम् । **य इदं** वैश्वानरदर्शनम् आत्मनि **अविद्वान्** अविद्वांश्च अग्निहोत्रोपकरणविशेषम् उक्तलक्षणम्, **अग्निहोत्रं** प्रसिद्धं **जुहोति, यथा अङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत्स्यात् ।** इयं च निन्दा प्राणाग्निहोत्रस्तुतये ।।

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ।। २ ।।**

**प्र. - अथ य......भवति ।** सर्वेषु लोकेषु इत्यादिना सर्वात्मकभगवदाराधनेन सर्वम् आराधितं भवति इति हुतप्रकर्षोक्तिः ।।

**आ.भा. - अथ य एतदेवम्** इत्यादि । **यः** उपासकः **एतत् एवम्** - उरःप्रभृतीनाम् अग्निहोत्रोपकरणवेद्यादिरूपतां विद्वान् जानन् **अग्निहोत्रं** - प्राणाग्निहोत्रं **जुहोति** - अनुतिष्ठति **तस्य** - प्राणाग्निहोत्रकर्तुः सर्वेषु लोकादिषु **हुतं भवति** - सर्वस्वरूपभगवतः आराधनेन सर्वं लोकाद्यात्मान्तं आराधितं भवति इति प्राणाग्निहोत्रस्य उत्कृष्टत्वं ज्ञापितं भवति इति ।।

**सु. - अथ य एतत्** इत्यादि स्तूयते अङ्गिफलेन अङ्गम् ।।

**[सर्वपाप्मप्रदाहरूपं फलम्]**

**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवँ हास्य सर्वे पाप्मानः प्रदूयन्ते, य एतदेवं विद्वानग्निहोत्रं जुहोति ।। ३ ।।**

**प्र. तद्यथा......प्रदूयन्ते ।** यथा इषीकायाः मुञ्जान्तर्वर्तितृणविशेषस्य तूलम् अग्नौ प्रक्षिप्तं सद्यो दह्यते, एवं सर्वाणि पापानि एतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवन्ति इत्यर्थः । ब्रह्मोपासनफलस्य सर्वपापप्रदाहस्य प्राणाग्निहोत्रे कीर्तनम् अङ्गिफलेन अङ्गस्य स्तुत्यर्थम् । ततश्च अनेनापि प्राणाग्निहोत्रस्य वैश्वानरविद्याङ्गत्वं ज्ञापितं भवति ।।

**आ.भा. - तद्यथा इषीकातूलं** - तृणविशेषमुञ्जवर्तितूलम् **अग्नौ प्रोतं** - प्रक्षिप्तं सत् **प्रदूयेत** - झटिति विनष्टं भवति । एवमेव **हास्य** - अग्निहोत्रकर्तुः सर्वे पाप्मानः **प्रदूयन्ते** - विनश्यन्ति । पूर्वोक्तविद्यापूर्वकप्राणाग्निहोत्रकरणेन सर्वं पापकर्म सत्वरं विनष्टं भवति इत्यर्थः । यद्यपि सर्वपापप्रदाहः ब्रह्मोपासनस्य फलं, तथापि प्राणाग्निहोत्रे तादृशफलकथनम् अङ्गिफलेन अङ्गस्य स्तुतिमेव दर्शयति । एतेन फलकथनेन प्राणाग्निहोत्रस्य वैश्वानरविद्याङ्गत्वं ज्ञापितमिति ।।

**सु.** - य एतदेवं विद्वान् अग्निहोत्रं जुहोति तस्यास्य सर्वे पाप्मानः **प्रदूयन्ते** - नश्यन्ति सपदि। यथा इषीकायाः तृणविशेषस्य तूलम् अग्नौ **प्रोतं** - प्रक्षिप्तं सत् सपदि प्रदूयेत तथा ।।

**तस्मादु हैवंवित् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेत्, आत्मनि हैवास्य तद्वैश्वानरे हुतँ स्यादिति । तदेष श्लोकः ।। ४ ।।**

**प्र.** - वैश्वानरविद्यां स्तौति - **तस्मादु......स्यादिति** । उच्छिष्टप्रदानायोग्याय चण्डालाय उच्छिष्टप्रदानमपि वैश्वानरे सर्वभूतात्मनि अन्नं जुहोमि इति बुद्ध्या अनुष्ठितत्वात् नाधर्माय भवति इत्यर्थः ।

**तदेष श्लोकः । तत्** - उक्तप्राणाग्निहोत्रविषये एषः श्लोकः श्रूयते इत्यर्थः ।।

**आ.भा. - तस्मादुह** इत्यादि । **यद्यपि चण्डालाय** जात्या नीचाय उच्छिष्टदानं न धर्माय, तथापि सर्वभूतात्मकवैश्वानरे अन्नं प्रक्षिपामि इति बुद्ध्या अनुष्ठितत्वात् तादृशं प्रदानं नाधर्माय भवतीति मुकुलितार्थः । **तदेष श्लोकः** - यथोक्तप्राणाग्निहोत्रविषये एषः श्लोकः श्रुतो भवति इति यावत् ।।

**सु.** - स्तौति वैश्वानरविद्याम् । **तस्मादेव** - विद्याप्रभावात्, **एवंविद्यद्यपि** कदाचित् **चण्डालायोच्छिष्टं प्रयच्छेत्** न तेन एषः दुष्यति इतरवत् । अयं हि सर्वात्मानं वैश्वानरम् **आत्मनि** इव अन्यस्मिन्नपि पश्यन् प्रयच्छति । तदात्मनि एव वैश्वानरे अस्य हुतं भवति - अनेन हुतं भवति । **तदेष श्लोकः** तत्र एषः वक्ष्यमाणश्लोकः स्तुतिरूपः ।।

**यथेह क्षुधिता बाला मातरं पर्युपासते । एवँ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ।। ५ ।।**

**।। इति चतुर्विंशः खण्डः ।।**

**।। इति पञ्चमः प्रपाठकः समाप्तः ।।**

**प्र. - यथेह......उपासते । यथा** बुभुक्षिताः **बालाः**, कदा माता अन्नं प्रयच्छति इति **मातरं** परितः **उपासते, एवं सर्वाणि भूतानि** एवंविदः **प्राणाग्निहोत्रमुपासते** इति विदुषः प्राणाग्निहोत्रस्तुत्यर्थः अयं श्लोकः इत्यर्थः । द्विरुक्तिः अध्यायपरिसमाप्त्यर्था ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणम् उपन्यस्यते समन्वयाध्याये - 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यत्र श्रुतस्य वैश्वानरशब्दस्य नार्थो निर्णेतुं शक्यः । 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते' (बृ.उ.७-९-१) इति वैश्वानरशब्दस्य जाठरे अग्नावपि प्रयोगदर्शनात् ; 'विश्वस्मा अग्निं भुवनाय देवाः, वैश्वानरं केतुमह्नामकृण्वन्' (ऋ.सं.१०-८८-१२) इति भूततृतीयेऽपि प्रयोगदर्शनात् 'वैश्वानरस्य सुमतौ स्याम राजा हि किं भुवनानामभिश्रीः' (ऋ.सं.१-९८-१) इति देवतायामपि प्रयोगदर्शनात् 'तदात्मन्येव [1]अग्नौ[1] वैश्वानरे प्रास्यति, स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' (प्र.उ.१-७) इति परमात्मन्यपि प्रयोगदर्शनात् । अतः नार्थो निर्णेतुं शक्य इति पूर्वपक्षे प्राप्ते - उच्यते - 'वैश्वानरः साधारणशब्दविशेषात्' (ब्र.सू.१-२-२५) वैश्वानरः परमात्मा । साधारणस्य वैश्वानरशब्दस्य परब्रह्मासाधारणैः 'को न आत्मा किं ब्रह्म' (छां.उ.५-११-१) 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु आत्मसु अन्नमत्ति' (छां.उ.५-१८-१) 'तद्यथा इषीकतूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यश्रुतात्मत्वब्रह्मत्वब्रह्मप्राप्तिफलकोपासन-विषयत्वसर्वपापप्रदाहकत्वादिधर्मैः विशेष्यमाणत्वात् ।

'स्मर्यमाणमनुमानं स्यादिति' (ब्र.सू.१-२-२६) । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' (मुं.उ.२-१-४) इति आथर्वणादिषु परमात्मसम्बन्धितया निर्दिष्टं रूपम् अस्यां विद्यायां तदिदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं ज्ञापकं स्यादित्यर्थः । अग्निरिह द्युलोकः । 'असौ वाव लोको गौतमाग्निः' (छां.उ.५-४-१) इत्यादिश्रुतेः ।

'शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते' (ब्र.सू.१-२-२७) । अग्निरहस्ये वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' (शत.ब्रा.१०-६-१-११) इति वैश्वानरशब्दसमानाधिकरणाग्निशब्दश्रवणात् अग्नित्रयपरिकल्पनप्राणाहुत्याधारत्वरूपजाठराग्निलिङ्गाच्च । वाजसनेयके 'स यो हवैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' (शत.ब्रा.१०-६-१-११) इति पुरुषान्तः प्रतिष्ठितत्वश्रवणाच्च जाठरः एव भवितुमर्हतीति चेत् - न । परमात्मलिङ्गानामिह सत्वेन अग्निशब्दलिङ्गानां तच्छरीरकपरमात्मोपासनपरतयाऽपि उपपत्तेः । तथा दृष्ट्युपदेशात् । तथोपासनस्य उपदिष्टत्वात् इत्यर्थः । त्रैलोक्यशरीरकत्वादीनां च परमात्मधर्माणां

---

1. हृदये अग्नौ, अ,आ ।

जाठरेऽसम्भवात् । वाजसनेयके 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः (शत.ब्रा.१०-६-१-११) इति पुरुषशब्दश्रवणात् ।

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ।।" (पाद्मोत्तर.६-२५४-६६)

इति निरुपाधिकपुरुषत्वस्य अन्यत्र असम्भवात् अचेतने जाठराग्नौ सर्वात्मना [1]असम्भवात्[1] न जाठराग्निः ।

'अत एव न देवता भूतं च' (ब्र.सू.१-२-२८) । उक्तैरेव हेतुभिः भूततृतीयदेवता-विशेषयोरपि न प्रसक्तिः इत्यर्थः ।

एवं सूत्रकारः अग्नित्रयपरिकल्पनादिजाठराग्न्याद्यनन्यथासिद्धलिङ्गैः 'प्राणस्तथानुगमात्' (ब्र.सू.१-१-२९) इत्यधिकरणोक्तन्यायेन जाठराग्निविशिष्टः प्ररमात्मैव इह उपास्य इति 'तथा दृष्ट्युपदेशात्' इति सूत्रखण्डेन सिद्धान्तम् आविष्कृत्य लिङ्गान्यथासिद्धिं सम्भावयतः जैमिनेः अग्निशब्दनिर्वाहप्रकारं - दर्शयति 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.१-२-२९) । 'मामुपास्व', प्राणोऽस्मि प्रज्ञात्मा' इत्यादिशब्दवत् अग्निशब्दस्य अपर्यवसानवृत्त्या न तच्छरीरकपरमात्मपरत्वम् आश्रयणीयम्, अग्रं नयतीति अग्निः इति योगव्युत्पत्या अग्निशब्दस्य अग्निव्यवधानमन्तरेण साक्षादेव परमात्मपरत्वसम्भवं जैमिनिराचार्यो मन्यते । अत्र व्यासार्यैः अग्निलिङ्गे विद्यमाने अग्निशब्दस्य अपर्यवसानवृत्त्या[१] अग्निशरीरकपरमात्म परत्वमेव उचितम् । तादृशानन्यथासिद्धलिङ्गराहित्यस्थले अयमपि न्यायः अस्तीति व्युत्पादनार्थमिह एतत् उपन्यस्तम् । न तु प्रकृतोपयुक्ततया इत्युक्तम् ।

'अभिव्यक्तेरित्याश्मरथ्यः' (ब्र.सू.१-२-३०), 'अनुस्मृतेर्बादरिः' (ब्र.सू.१-२-३१), 'सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति' (ब्र.सू.१-२-३२), 'आमनन्ति चैनमस्मिन्' (ब्र.सू.१-२-३३) इति चत्वार्यपि सूत्राणि पूर्वत्र व्याख्यातानि । अतः वैश्वानरः परमात्मा इति स्थितम् ।

तथा गुणोपसंहारपादे - द्युमूर्धादिव्यस्तोपासनेषु औपमन्यवादिभिः उक्तेषु, 'अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते' इति व्यस्तोपासनेषु फलश्रवणात् व्यस्तोपासनमेव प्रामाणिकम् । 'यस्त्वेतमेवं

---

१. अपर्यवसानवृत्तिः - शब्दानां पर्यवसानवृत्तिः अपर्यवसानवृत्तिरिति शक्तिद्वयम् । पर्यवसानवृत्तिः - विशेषणमात्रबोधिका, अपर्यवसानवृत्तिः - विशेषणशक्तेः विशेष्यपर्यन्तता ।।
पर्यवसानरहिता शक्तिः । शरीरवाचकस्य, शरीरिपर्यन्तं पर्यवस्यन्ती वृत्तिः ।

1. सर्वान्तःप्रतिष्ठितत्वासम्भवात्, अ,आ ।

प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु आत्मसु अन्नमत्ति' इति व्यस्तोपासनसमुदायानुवाद्रः एव । न तु समस्तोपासनविधिः। अथवा अनेन वाक्येन समस्तोपासनमपि विधीयते । अतः द्वयमपि प्रामाणिकम् । अल्पफलार्थिभिः व्यस्तोपासनं [1]कर्तव्यम्[1] इति पूर्वपक्षे प्राप्ते - उच्यते - 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति' (ब्र.सू.३-३-५५)। भूम्नः सामस्त्यस्य ज्यायस्त्वं प्रामाणिकत्वम् । तथा हि दर्शयति श्रुतिः व्यस्तोपासने अनर्थे ब्रुवती, 'मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिना । न चेदं न हि निन्दान्यायेन[१] समस्तोपासनप्रशंसार्थमेव किं न स्यादिति वाच्यम् । अग्निहोत्रं प्रकृत्या श्रुतेन, 'जर्तिलयवाग्वा वा जुहुयात्, गवधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इति वाक्येन जर्तिलगवेधुकशब्द-वाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोः विकल्पेन अग्निहोत्राहुतौ द्रव्यत्वविधाने विस्पष्टलिङ्गप्रत्ययेन ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवने च प्रतीयमानेऽपि 'अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च, पयसाऽग्निहोत्रं जुहुयात्' इति तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात् तदेकवाक्यतया 'जर्तिलयवाग्वा जुहुयात्' इत्यादेः ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हाः अपि जर्तिलागवेधुकाश्च यदपेक्षया दुष्टाः, तत् पयः एव प्रशस्तम् इति पयःस्तुत्यर्थत्वं एकवाक्यतानुरोधादिति, 'नचेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात्' (पू.मी.सू.१०-८-४-७) इति पूर्वतन्त्राधिकरणे किञ्चिद्विधिपूर्वकं तन्निन्दायां विध्यन्तरश्रवणे सति तदेकवाक्यतानुरोधात् [2]पूर्वप्रवृत्तयोः[2] विधिनिन्दयोः तदर्थवादत्वम् इति समर्थितम् । तद्वदेव इहापि युक्तम् ।

ननु जर्तिलगवेधुकयोः पयसा सह सम्बन्धाभावात् जर्तिलगवेधुकयवागूविधानयोः अर्थवादतयैव विध्येकवाक्यता समर्थनीया इति तत्र तथास्तु नाम । इह तु - भूमविद्यायां नामादीनां सत्येन ब्रह्मणा सह भूयस्त्वावधित्वेन सम्बद्धानां प्रासङ्गिकतदुपासनाविधिवत् समस्तोपासनविषयेण वैश्वानरात्मना द्यादित्यादीनां तदवयवत्वेन सम्बद्धानां प्रासङ्गिकोपासनविधिः किं न स्यादिति चेत् - मैवम् । व्यस्तोपासननिन्दनेन, 'मूर्धात्वेष आत्मन इति होवाच' इत्यादिवाक्येषु तुशब्दकृतेन द्यादित्यादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन, 'तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' इति व्यस्तोपासनानां

---

१. न हि निन्दान्यायः न हि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति न्यायः । अयमभिप्रायः - निन्दार्थवादस्य तदितरत्र प्राशस्त्यविधानार्थमेव प्रवृत्तिः न तु तस्य निन्दार्थं, निन्दायां प्रयोजनाभाव इति ।

1. फलभूतार्थिभिस्तु समस्तोपासनं कर्तव्यम् इत्यधिकः पाठः, अ, आ । 2. पूर्ववृत्तयोः, अ, आ ।

भ्रममूलत्वोद्धाटनेन भूमविद्यावैषम्यस्य बहुविधस्य सत्त्वेन जर्तिलयवागून्यायस्यैव अत्र पृवृत्त्यौचित्यात् क्रतुवत् । यथा 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति विहितस्य क्रतोः 'यदष्टाकपालो भवति' इत्यादिः अर्थवादः, न तु अष्टाकपालादिद्रव्यविधायकः, एवम् 'अत्त्यन्नं पश्यति प्रियम्' इत्यादिश्रवणमपि अर्थवादः एवेति स्थितम् । प्रकृतमनुसरामः ।।

**।। इति पञ्चमप्रपाठकप्रकाशिका ।।**

**आ.भा. - यथेह** इत्यादि । **यथा -** येन प्रकारेण **क्षुधिताः** क्षुधया पीडिताः बालाः **मातरं -** स्वजननीम् **पर्युपासते -** परिसर्वतः उपासते । कदा मे माता अन्नं दास्यति इति कृत्वा **एवं -** तथैव **सर्वाणि भूतानि प्राणाग्निहोत्रमुपासते ।** विदुषः प्राणाग्निहोत्रस्तुतये । अयं **श्लोक** इति । द्विरुक्तिः अध्यायपरिसमाप्तिं द्योतयति इति ।।

**।। इति पञ्चमप्रपाठकआनन्दभाष्यम् ।।**

**सु. - यथा इह** लोके **क्षुधिताः बालाः मातरं** परितः **उपासते** एवं सर्वाणि भूतानि अग्निहोत्रं वैश्वानरविद्यानिष्ठस्य, प्राणाग्निहोत्रम् उपासते तस्य प्राणादितृप्त्या सर्वतृप्तेः । आवृत्तिः आदरात्, विद्यासमाप्त्यर्थे वा ।।

**।। इति पञ्चमप्रपाठकसुबोधिनी ।।**

**।। इति पञ्चमप्रपाठकभाष्यम् समाप्तम् ।।**

* * *

## अनुबन्धाः

# १. मन्त्राणामकारादि सूचनी

* * *

## २. प्रमाणानामकारादि सूचनी

## ३. छान्दोग्योपनिषदर्थसङ्ग्रहकारिकाः

**(उत्तमूर् श्री वीरराघवाचार्यस्वामिभिः अनुगृहीतः)**

छान्दोग्यं ताण्डिशाखान्तो भवत्यष्टप्रपाठकः ।
तत्रादौ सामभक्त्यंशे उद्गीथप्रणवे श्रुताः ।। १ ।।
दृष्ट्योऽथ द्वितीये तु सामभक्तिषु दृष्टयः ।
तृतीयादिषु नानोक्ताः विद्याः प्रायो विमुक्तिदाः ।। २ ।।

**प्रथमः प्रपाठकः**

आदौ रसतमत्वादिदृष्टिं शिष्टाऽभिधीयते ।
कर्माङ्गाश्रितविद्यायाः वीर्यवत्तरता फलम् ।। ३ ।।
ततो मुख्यप्राणदृष्टेर्द्वेषिविध्वंसनं फलम् ।
तथाऽऽदित्यप्राणदृष्टिर्व्यानदृष्टिश्च ; दृष्टयः ।। ४ ।।
उद्गीथनामाक्षरेषु ; तथोपसरणान्यथ ।
अमृताभयतोद्गीथे उद्गीथप्रणवैकता ।। ५ ।।
आदित्यप्राणदृष्टिभ्यां भाव्या बहुसुतार्थिनाम् ।
आदित्ये चाक्ष्णि च ख्यातपुरुषत्वेन तद्दृशी ।। ६ ।।
शिलकादिकथासिद्धा तत्राकाशात्मभावना ।
उषस्त्युपाख्यानसिद्धं प्रस्तावे प्राणचिन्तनम् ।। ७ ।।
आदित्यचिन्तनोद्गीथे प्रतिहारेऽन्न चिन्तना ।
अथ शौवन उद्गीथस्ततः स्तोभेषु दृष्टयः ।। ८ ।।

**द्वितीयः प्रपाठकः**

साम्नि साधुत्वदृष्टिस्तद्भक्तिषूक्तास्तु पञ्चसु ।
षड्विधा दृष्टयः पश्चात् सप्तसु त्रिविधा अपि ।। ९ ।।
गायत्रादिविशेषेषु दृष्टयो भक्तिपञ्चके ।
व्रतश्लिष्टाः दशस्विष्टाः सर्वदृष्टिश्च सामनि ।। १० ।।
सामस्वराश्च वर्णोक्तिविधाश्च ब्रह्मसंस्थता ।
तारप्रभावः सवनदेवतासाध्यलोकता ।। ११ ।।

**तृतीयः प्रपाठकः**

एवं प्रापाठकद्वन्द्वमतीतमथ कथ्यते ।
मधुविद्याऽथ गायत्रीविद्या द्वारपधीयुता ।। १२ ।।
कौक्षेयज्योतिषि ब्रह्मतनौ काम्यमुपासनम् ।
शाण्डिल्यविद्या मुक्त्यर्था ; कोशदिग्वत्सदर्शनम् ।। १३ ।।

पुत्रायुषेऽथ पुरुषविद्या स्वायुःफलाऽत्र च ।
मुक्त्यै मन्त्रोऽन्ततो ब्रह्मदृष्टी मनसि खेऽपि च ।। १४ ।।

**चतुर्थः प्रपाठकः**

अथादित्ये ब्रह्मदृष्टिः अथ जानश्रुतिं प्रति ।
संवर्गविद्या रैक्वोक्ता कापेयोक्त्यादितः स्फुटा ।। १५ ।।
सा षोडशकलब्रह्मविद्या जाबालगामिनी ।
उपकोसलविद्या चाप्यग्निविद्याङ्गिका ततः ।। १६ ।।
अथ यज्ञो वायुरस्य यजमानस्य चर्त्विजाम् ।
प्रायश्चित्तव्याहृतिज्ञब्रह्मर्त्विग्रक्ष्यतोदिता ।। १७ ।।

**पञ्चमः प्रपाठकः**

ज्येष्ठश्रेष्ठप्राणविद्या मन्थाख्यं कर्म चोदितम् ।
पञ्चाग्निविद्या यां श्वेतकेतोः पित्रे प्रवाहणः ।। १८ ।।
प्राह यत्रोच्चनीचानां गतीनां भविनां गतिः ।
वैश्वानरात्मविद्या यां कैकयोऽश्वपतिर्जगौ ।। १९ ।।

**षष्ठः प्रपाठकः**

प्राचीनशालमुख्येभ्यो येषु षष्ठश्च गौतमः ।
सद्विद्या गौतमेनोक्ता पुत्राय श्वेतकेतवे ।। २० ।।

**सप्तमः प्रपाठकः**

सनत्कुमाराद् भूम्नश्च विद्या नारदभाविता ।
मुक्त्यर्थायां यत्र चान्याः काम्या नामादिदृष्टयः ।। २१ ।।

**अष्टमः प्रपाठकः**

अथो दहरविद्योक्ता ब्रह्मतत्स्थगुणाश्रया ।
सा प्रजापतिविद्या या ह्यङ्गं शुद्धात्मगोचरा ।। २२ ।।
अथ प्रपत्तिमन्त्राश्च ब्रह्माकाशव्यपाश्रयाः ।
अकृतब्रह्मलोकाप्त्यै पुनर्जन्मनिवृत्तये ।। २३ ।।
सन्संप्रदायलब्धेऽर्थे यथाशास्त्रानुवर्तनात् ।
अनावृत्तिर्ब्रह्मलोकसंपत्तिः शान्तिरुच्यते ।। २४ ।।
एवमत्रोक्तविषयनामनिर्देशनं कृतम् ।
त्रयोदश चतुर्विंशत्याढ्याश्चैकोनविंशतिः ।। २५ ।।
सप्ताधिका दश चतुर्विंशतिश्चापि षोडश ।
षड्विंशतिः पञ्चदश खण्डा अष्टस्विह क्रमात् ।। २६ ।।

## ४. मन्त्रगताः विशेषशब्दार्थाः

**अगदः** - व्याध्यादिरहितः । (आ.भा.३-१६-२)

**अणीयान्** - अतिशयेन अणुः अतिसूक्ष्मतया अवस्थानात् इन्द्रियादिना द्रष्टुमतीव अयोग्य इत्यर्थः । (आ.भा.३-१४-३)

**अनसूरिः** - असूरिः न भवतीति अनसूरिः, विपश्चित् । (प्र.४-३-७)

**अनादरः** - अवाप्तसमस्तकामत्वेन आदर्तव्याभावात् आदररहितः । (प्र.३-१४-२)

**अन्वाहार्यपचनः** - दक्षिणाग्निः । (प्र.४-१२-१)

**अपानः** - मुखनासिकेन यं वायुमन्तराकर्षति सः अपानाख्यवृत्तिविशेषः । (प्र.१-३-३)

**अभिविमानः** - सर्वाभिव्याप्ततया विगतमानः । (प्र.५-१८-१) प्रत्यगात्मतया अभिविमीयते अहमिति ज्ञायते इत्यभिविमानः । इति शाङ्करभाष्यम् ।

**अभ्याशः** - क्षिप्रम् । अभि आङ् पूर्वात् अश्नातेः असुनि अभ्याश इति रूपम् । (प्र.१-३-१२)

**अमानवः** - मानवभिन्नः, असंसारी । (प्र.५-१०-२)

**अर्धम्** - स्थानम् । (प्र.५-३-४)

**अविदि** - अलाभः । विदिः लाभः, सा न भवतीति अविदिः । (प्र.१-११-२)

**शौवः** - श्वदृष्टः शौवः, उद्गीथः । (प्र.१-१२-१) टिलोपश्छान्दसः । दृष्टं साम इत्यनेन अण् प्रत्ययः ।।

**आकाशः** - (काशृ दीप्तौ इति धातोः कर्तरि अच् प्रत्ययः ।) आसमन्तात् काशते प्रकाशते इति आकाशः । आकाशपदेन परमात्मा गृह्यते न तु भूताकाशः। (आ.भा.१-९-१)

**परोवरीयान्** - परश्चासौ वरीयांश्च, वरीयसामपि वरः, पराश्चासौ वरीयांश्चेति वा परोवरीयान् (सु.१-९-२)

**आखणम्** - मृत्पिण्डः । आखन्यते इति आखणम् । आखणमिति छान्दसं णत्वम् ; नपुंसकत्वञ्च (प्र.१-२-७)

**आटकी** - अनुपजातपयोधरादिस्त्रीव्यञ्जना (प्र.१-१०-१)

**आपूर्यमाणपक्षः** - आपूर्यते चन्द्रमाः कलाभिः यस्मिन् पक्षे सः । (सु.४-१५-५)

**आस्तावः** - आस्तुवन्ति अस्मिन् इति आस्तावः (प्र.१-१०-८) स्तोत्रस्थानम् । आ उपसर्गपूर्वकष्टुस्तुतौ इति धातोः हलश्च (३-३-१२१) इति सूत्रेण घञि आस्तावः इति रूपम् ।

**इभ्यग्रामः** - गजारोहाणां ग्रामः । (प्र.१-१०-१) हास्तिपकानां ग्रामः (सु.)

**इषीकातूलः** - इषीकायाः मुञ्जान्तर्वर्तितृणविशेषः । (प्र.५-२४-३)

**इष्टम्** - यागादि कर्म । (प्र.५-१०-३)

**उत्** - सर्वपापोद्गतत्वात् उन्नामकः - परमात्मा इत्यर्थः । (प्र.१-६-७)

**उदक्प्रवणः** - उत्तरमार्गप्रतिपत्तिहेतुः । (प्र.४-१७-९) उदक् - ऊर्ध्वलोकः, तत्प्रवणत्वं तद्धेतुत्वम् इति माध्वाः ।

**उद्वायति** - उद्वासनं प्राप्नोति । विनश्यति इत्यर्थः । (प्र.४-३-२)

**उपद्रवः** - अपराह्णात् ऊर्ध्वं अस्तमयात् प्राक् सायाह्ने यत् आदित्यस्य रूपम् सः उपद्रवः । (सु.२-९-७)

**उपसरणम्** - उपासनम् । (प्र.१-३-८)

**उलूलवः** - (उलूलवः उरूरवाः विस्तीर्णरवाः महाध्वनियुक्ताः । उलूलवाः इति छान्दसं रूपम् । (प्र.३-१९-३) उत्सवकालीनाः शब्दविशेषा देशविशेषे प्रसिद्धाः (आनन्दगिरिः)

**असत्** - अव्याकृतनामरूपम् । (प्र.३-१९-१)

**वास्तेयम्** - वस्तौ भवं वास्तेयम् । वस्तिः मूत्रस्थानम् । (आ.भा.३-१९-२)

**ऊष्माणः** - शषसह ऊष्माणः । (प्र.२-२२-३)

**ओम्** - रक्षणगतिकान्त्यर्थक अवधातोः 'अवतेष्टिलोपश्च' (उ.१-१-४२) इति मन्प्रत्ययस्यैव टि लोपः । ज्वरत्वर......इत्यूठौ गुणः ओम् इति रूपसिद्धिः । ओमित्येतदक्षरं परमात्मनः प्रियं नेदिष्ठं अभिधानम् । प्रणवः ब्रह्मणः अभिधा । (१-१-१)

**कः** - प्रजापतिः । (प्र.४-३-६)

**देवः** - द्योतनस्वभावः । (प्र.१-१२-५) दीव्यति इति देवः । दिवुक्रीडा कान्ति गतिषु इति धातोः अच् ।

**कपूयचरणाः** - कुत्सितकर्माणः । (५-१०-७)

**महाश्रोत्रियाः** - अतीवश्रुताध्ययनसम्पन्नाः । (प्र.५-५-१)

**अनुशयः** - भुक्तशिष्टं कर्म । (५-१०-७)

**कप्यासम्** - १) कं - जलम् पिबतीति कपिः आदित्यः तेन अस्यते क्षिप्यते विकास्यते इति कप्यासम् । पुण्डरीकम् ।
२) कं पिबतीति कपिः - नालम्, तस्मिन् आस्ते इति कप्यासम् ।
३) कं जलम् । आस उपवेशने इति धातुः अपिपूर्वकः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अकारलोपः । के जलेऽपि आस्ते इति कप्यासम् । (प्र.१-६-७)

**जलान्** - जायते इति जम्, लीयते इति लम् अनिति इति अन् । (३-१४-१) तज्जं च तल्लं च तदनं चेति तज्जलान् ।

**जुहूः** - जुह्वति प्राच्यां दिशि कर्मकारिणः इति जुहूः । (आ.भा.३-१५-२)

**ज्यायान्** - अतिशयेन महान् । पृथिव्यादिभ्योऽपि परममहत्परिमाणवान् हृदयमध्ये वर्तमानः स्वस्वरूपेण निरतिशयपरिमाणवान् इत्यर्थः । (आ.भा.३-१४-३)

**ज्येष्ठत्वम्** - वृद्धत्वम् । 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशः । (प्र.५-१-१)

**तुरम्** - शीघ्रम्, तूर्णम् । (प्र.५-२-७)

**दुर्निष्प्रपतरम्** - दुःखनिष्क्रमणतरम् । रवलन्तात् दुर्निष्प्रपतशब्दात् आतिशायनिके तरप् प्रत्यये छान्दसे तशब्दलोपे दुर्निष्प्रपतरम् इति रूपम् । यद्वा 'आतो युच्' 'छन्दसि गत्यर्थेभ्यः' इति छन्दसि विशेषविहितखलर्थयुजन्त एवायं शब्दः । रेफरूपवर्णविकारश्छान्दसः । (प्र.५-१०-६)

**अभ्याशः** - अभ्यागन्तारः । अभि - आङ्पूर्वात् अशेर्धातोः क्विबन्तात् बहुवचनान्तः अयं शब्दः । (प्र.५-१०-७)

**देवपथः** - देवैः आतिवाहिकैः नीयमानः पन्थाः । देवपथः । (प्र.४-१५-६)

**देवसुषयः** - पञ्च पञ्चसंख्याकाः देवसुषयः देवानां सुषयः देवसुषयः। स्वर्गलोकप्राप्तौ साधनलक्षणानि द्वारच्छिद्राणि देवैः प्राणादित्यादिभिः रक्ष्यमाणत्वात् देवसुषयः इति कथ्यन्ते । (आ.भा.३-११-१)

**धनसनयः** - सनिः लाभः धनानां सनिः येषां ते धनसनयः । (प्र.१-७-६)

**धर्मस्कन्धाः** - धर्मसाधकमार्गाः । आश्रमरूपमार्गाः । (प्र.२-२३-१)

**निधनम्** - अस्तं गच्छति यद्रूपं सवितुः तत् निधनम् । (सु.२-९-८)

**निनदम्** - रथघोषम् । (प्र.३-१३-८) णद - अव्यक्ते शब्दे इति धातोः नौ गदनद......(पा.सू.३-३-६४) इति सूत्रेण अप् ।

**निष्कः** - कण्ठाभरणम् । (प्र.४-२-१)

**निहवः** - आह्वानम् । (प्र.१-१३-२) 'ह्वेञ् स्पर्धायां शब्दे च' इति धातोः 'ह्वः सम्प्रसारणं च न्यभ्युपविषु' (पा.सू.३-३-७२) इति सूत्रेण अप्, वस्य सम्प्रसारणमुकारः पूर्वरूपं गुणावादेशौ निहवः इति रूपम् ।

**पञ्चविधं साम** - हिङ्कार - प्रस्ताव - उद्गीथ - प्रतिहार - निधनम् इति पञ्चविधं साम । (२-१-१)

**पड्वीशशङ्कुः** - पादबन्धनकीलकः । (प्र.५-१-११)

**परार्ध्यः** - परस्य ब्रह्मणः अर्धं स्थानमर्हति इति परार्ध्यः । (प्र.१-१-३)

**परिघः** - लोकद्वारार्गलम् । (प्र.२-२४-६) परि उपसर्गपूर्वक हन धातोः 'परौ घः' (पा.सू.३-३-८४) इति सूत्रेण अप् प्रत्ययः, घादेशश्च भवति ।

**पशव्यम्** - पशुहितम् । (प्र.२-२२-१)

**पारिप्लवः** - अश्वमेधे जामितापरिहाराय आख्यानानि शंसन्ति इति प्राप्तमाख्यानकथनरूपं कर्म पारिप्लव उच्यते ।

**पूर्तम्** - खातादि कर्म । (प्र.५-१०-३)

**प्रणाय्य** - अन्ते वासी । योग्यशिष्यः । 'प्रणाय्योऽसंमतौ' (पा.सू.३-१-१२८) इति सूत्रेण निपातितः ।

**प्रजापतिः** - प्रजानां पालनात् प्रजापतिः । (प्र.१-१२-५)

**प्रतिहारः** - मध्यन्दिनादूर्ध्वं अपराह्णात् परिसमाप्यमानात् प्राक् यद्रूपमादित्यस्य सः प्रतिहारः । (सु.२-९-६)

**प्रस्तावः** - प्रथमोदयकालावच्छिन्न आदित्यः प्रस्तावः । (प्र.२-९-३)

**प्राणः** - प्राणिति इति यत् - प्राणनव्यापारं मुखनासिकाभ्यां वायोर्निःसरणलक्षणं करोति यत् स एव प्राणः । (सु. १-३-३)

**व्यानः** - प्राणापानयोः मध्ये विद्यमानः वृत्तिविशेषः व्यानः इत्यर्थः । यद्यपि निःसारणमाकर्षणं च प्रयत्नविशेषः पुरुषधर्मः न वायोर्धर्मः, तथापि तत्प्रयोज्यो वायोः वृत्तिविशेषस्तेन लक्ष्यते इति न क्षतिः ।। (प्र.१-३-३)

**प्राणशरीरः** - सर्वेषां प्राणानां धारकः । (प्र.३-१४-२)

**प्रादेशमात्रः** - १) द्युलोकादिप्रदेशसम्बन्धिनी प्रादेशी । प्रादेशी मात्रा यस्य सः प्रादेशमात्रः (प्र.५-१८-१) । प्रदेशादन्यः प्रादेशः द्युप्रभृतिपृथिव्यन्तः, स एव अस्य मात्रा शरीरतया अवच्छेदकीभूयज्ञापको भवति तदयं प्रादेशमात्रः । द्युप्रभृतिपृथिव्यन्तशरीरकम् । (सु.)

**बभसः** - भक्षणशीलः, असुरसंहारकः । (प्र.४-३-७)

**वस्तिः** - मूत्राशयः । (५-१५-२)

**बहुदायी** - अर्थिभ्यः बहुदातुं शीलमस्य स बहुदायी । (प्र.४-१-१)

**बहुपाक्यः** - बहु अस्य गेहेऽन्नं पक्तव्यं यस्य सः बहुपाक्यः । (प्र.४-१-१)

**ब्रह्मपथः** - प्राप्यस्य ब्रह्मणः प्रापकः पन्था इति ब्रह्मपथः । (सु.४-१५-६)

**ब्रह्मसंस्थः** - परे ब्रह्मणि निष्ठावान् (सु.२-२३-१)

**भामनीः** - सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तः । (प्र.४-१५-४)

**भारूपः** - अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्तः । (प्र.३-१४-२)

**मटची** - अश्मवृष्टिः, दुर्भिक्षम् । (प्र.१-१०-१) घनोपलस्तु करकः पुञ्जिका मटचीति च । इति वैजयन्ती ।

**मद्गुः** - मद्गुः, जलपक्षिविशेषः । (प्र.४-७-१)

**मनः** - मनुते इति मनः । अन्तःकरणम् (आ.भा. ३-१८-१)

**मनोमयः** - परिशुद्धमनोमात्रग्राह्यः । विवेकादिसाधनसप्तकानुगृहीतपरमात्मोपासन-निर्मलीकृतमनोमात्रग्राह्यः इत्यर्थः । (प्र.३-१४-२).

**महाशालाः** - महागृहस्थतया विस्तीर्णशालासम्पन्नाः । महत्यः शालाः येषां तथाभूताः । (प्र.५-११-१)

**मेघः** - मिह - सेचने इति धातोः पचाद्यच् प्रत्यये न्यङ्क्वादित्वात् कुत्वे मेघ इति रूपम् मेघशब्देन वर्षोन्मुखावस्था उच्यते । (प्र.५-१०-६)

**यज्ञः** - यत्पुनाति इति पदद्वयगतयोः यकारनकारयोः यज्ञशब्दे प्रत्यभिज्ञानात् ञकारस्य नकारविकारत्वात् यज्ञशब्दस्य युत्पुनातीति निर्वचनमिति भावः । (प्र.४-१६-१)

**रमणीयचरणाः** - चर्यते इति चरणं कर्म । रमणीयकर्माणः भुक्तशिष्टपरिपक्वसुकृत-कर्मयुक्ताः । (प्र.५-१०-७)

**राज्ञी** - वसुधानकोशस्य या प्रतीचीदिक् सा राज्ञी । राज्ञी वरुणेन अधिष्ठितत्वात् । (सा.भा.३-१५-२)

**लम्भुकः** - लब्धा । (प्र.५-२-८)

**वरुणः** - व्रियमाणत्वात् वरुणः, परमात्मा (प्र.१-१२-५) । यः स्थितः सर्वमावृत्य वरुणः स तु कथ्यते इति निरुक्तिः ।

**वर्तनी** - प्रवृत्तिसाधनभूतः वाङ्मनसमयः मार्गः । (प्र.४-१६-१)

**वसुधानः** - कर्मफलाख्यं वसु धीयते अस्मिन् इति वसुधानः । (प्र.३-१५-१)

**वादकथा** - तत्त्वनिर्णिनीषु कथा वादः । तदुक्तं न्यायदर्शने 'तिस्रः कथा भवन्ति वादो जल्पो वितण्डा चेति' । तासाम् प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः वादः (१-२-१) ।

**शान्तः** - रागद्वेषरहितः । (३-१३-८)

**शूद्रः** - 'शुचशोके' इति धातोः 'शुचेर्दश्च' (उ.सू.१७६) इति सूत्रेण रक् प्रत्यये, शुचेश्चकारस्य दकारे 'अमितम्योदीर्घश्च' (उ.सू.१७३) इति सूत्रेण धातोः उकारस्य दीर्घादेशे च शूद्रशब्दः निष्पन्नः भवति । (प्र.४-२-४) अत्र शूद्रशब्दस्य न रूढ्या वर्णविशेषोऽर्थः, चतुर्थवर्णस्य ब्रह्मविद्यायामनधिकारात् इति द्रष्टव्यम् ।

**श्रद्धादेयः** - श्रद्धापुरस्सरं देयमस्य सः श्रद्धादेयः । (प्र.४-१-१)

**श्रेष्ठत्वम्** - प्रशस्ततमत्वम् । 'प्रशस्यस्य श्रः' (पा.सू.५-३-६०) इति सूत्रेण प्रशस्यशब्दस्य श्रादेशः (प्र.५-१-१)

**वसिष्ठः** - अतिशयेन वसुमान् वसिष्ठः । (प्र.५-१-१)

**संयद्वामः** - संयन्ति - सङ्गतानि वामानि - वननीयानि प्रार्थनीयानि यस्मिन् सः संयद्वामः । (प्र.४-१५-२)

**सत्यसङ्कल्पः** - अप्रतिहतसङ्कल्पः । (प्र.३-१४-२)

**सन्देहः** - मध्यकायः । दिहेरुपचयार्थत्वात् मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्सन्देहः इति शाङ्करभाष्यम्। मध्यकायः । मध्यकायो हि उत्तरापरकाययोः क्वानुप्रविष्ट इति सन्दिह्यमानत्वात् सन्देह इत्युच्यते । (प्र.५-१५-२)

**सप्तविधं साम** - हिङ्कार - प्रस्ताव - ओङ्कार - उद्गीथ - प्रतिहार - उपद्रव - निधनाख्य भेदेन साम्नः सप्तविधत्वम् । (२-१०-१)

**सर्वकर्मा** - क्रियते इति कर्म, सर्वं जगत् यस्य कर्म असौ सर्वकर्मा सर्वा वा क्रिया यस्य आराधनमसौ सर्वकर्मा । (प्र.३-१४-२)

**सर्वकामः** - काम्यन्ते इति कामाः, भोग्यभोमोपकरणादयः ते परिशुद्धास्तस्य सन्ति इत्यर्थः । (प्र.३-१४-२)

**सर्वगन्धः** - सर्वे पुण्यगन्धाः सन्ति यस्य सः सर्वगन्धः । (आ.भा.३-१४-२)

**सर्वरसः** - सर्वः निरवशेषः दिव्यो गन्धः यस्य सः । (आ.भा.३-१४-२)

**सर्वधातमम्** - सर्वधारकम् । (प्र.५-२-७)

**सहमाना** - वसुधानकोशस्य या दक्षिणा दिक् सा सहमाना नाम, दक्षिणदिग्वर्तिन्यां यमपुर्यां सर्वे प्राणिनः पापकर्माणि सहन्ते इति दक्षिणा दिक् सहमाना । (सा.भा.३-१५-२)

**साम** - साम संमितम् ऋचा । स्यतेर्वा, ऋचा समं मेने इति नैदानाः । (नि.७-३-१२) तद्धि यावती ऋक् तावदेव परिमाणते इति ऋचा संमितत्वात् सा, संमानशब्दस्य निपातः । (विवृतिः) (१-६-१)

**सुभूता** - वसुधानकोशस्य या उदीची दिक् सा सुभूता नाम, सुष्ठु भूतिमद्भिः ईश्वरकुबेरादिभिः अधिष्ठिता । (३-१५-२)

**स्पर्शाः** - कादयो मावसानाः स्पर्शाः । (प्र.२-२२-३)

**स्वरः** - गन्ता । स्वृ शब्दोपतापयोः इत्यस्माद्धातोः कर्तरि अचि स्वरः इति रूपम् । (प्र.१-३-२) धातूनामनेकार्थकतया स्वृ-धातोः गमनार्थकात् अचि स्वर इति रूपम् । यद्वा स्वयं राजते इति स्वरः । (सु)

**स्तोत्रम्** - प्रगीतमन्त्रसाध्यम् स्तोत्रम्, अप्रगीतमन्त्रसाध्यं शस्त्रम् ।

**स्तोभाः** - सामवेदे ऋगक्षरव्याप्तसामभागपूरणार्थाः हा उ हा उ इत्यादयः शब्दाः स्तोभाः ।। (१-१३-१)

**हारेत्वा** - हारसहितः इत्वा - रथः, अश्वतरीरथः । (प्र.४-२-३)

**हादुनयः** - मेघगर्जितानि । (प्र.५-५-१)

**पर्जन्यः** - वृष्टिप्रवर्तको देवः । (प्र.५-५-१)

**हिरण्मयः** - रमणीयः । (प्र.१-६-६) सुवर्णनिर्मितप्रतिमा इव तेजस्वी (सायणभाष्यम्) 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्य-धैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' (पा.सू.६-४-१७४) इति सूत्रेण हिरण्मयशब्दः निपातितः ।

**हिरण्यदंष्ट्रः** - कमनीयदंष्ट्रायुक्तः, हिरण्यविदारकदंष्ट्रायुक्तः इति वा । (प्र.४-३-७)

**होतृषदनम्** - यत्र स्थित्वा होता शंसति तत्स्थलं होतृषदनम् । सीदन्ति अत्र इति सदनम् । 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः अधिकरणे ल्युट् । 'पूर्वपदात्' (पा.सू.८-३-१०६) इति सूत्रेण पूर्वपदस्थान्निमित्तात्परस्य सस्य षत्वं स्यात् । (१-५-५)

# ५. भाष्यकर्तॄणां चारित्रम्

**भारद्वाजरामानुजाचार्यः -**

अयमान्ध्रप्रदेशे विजयवाडाप्रान्तवर्ति मङ्गलगिरिनामकक्षेत्रे वसन् श्रीवैष्णवसम्प्रदायप्रवर्तक आसीत् । नियोगिब्राह्मणाः एतद्वंशीयाः वैष्णवेष्टिसंस्कारेण भगवद्रामानुजसम्प्रदायान्तःपातिनः संवृत्ताः इति प्रसिद्धिः । पूर्वं तुर्लपाटि इति वंशनाम्ना प्रसिद्धानां एतदीयानां अनन्तरं श्रीरामानुजसिद्धान्तानुवृत्तिवशात् श्रीभाष्यम् इति वंशनामप्राप्तिरिति ज्ञायते । एवं एषः श्रीभाष्यं रामानुजार्य इति च प्रसिद्ध्यति । जगन्नाथार्यस्य पुत्रोऽयं स्ववंशीयादेव श्रीभाष्यंनृसिंहार्यात् विद्यामध्यगीष्ट । स्वकुलगुरोः श्रीवत्सगोत्रोद्भवात् नल्लान् चक्रवर्ति श्रीनिवासाचार्यवर्यात् पञ्चसंस्कारानविन्दत । दशोपनिषदामपि प्राचीनविशिष्टाद्वैतभाष्यानुसारेण प्रतिपदार्थदीपिकाख्यां सङ्ग्रहटीकां विरचितवानसौ औपनिषदार्थजिघृक्षूणां बालानां मार्गप्रदर्शको भवतीति अभिनन्द्यमिदम् । एतत्कर्तृकाः इतराः ग्रन्थाः स्वेनैव ईशावास्यटीकादौ एवं निर्दिष्टाः १) परमवैदिकसिद्धान्तरत्नाकरः २) सर्ववेदान्तसारार्थः ३) शिष्टाद्वैतिजनाचारः ४) शिष्टश्रीवैष्णवाचारः ५) सीताकल्याणसर्गव्याख्यानम् ६) श्रीरामजननश्लोकव्याख्या ७) श्रीकृष्णजननश्लोकव्याख्या ८) विष्णुपुराणप्रथमश्लोकव्याख्या ९) भावार्थविधिः (ज्यौतिषः) १०) आन्ध्रदेशीयविप्रचरित्रम् ११) उपमावादः १२) दशोपनिषद्व्याख्या १३) पञ्चमोपायबोधिका (आदर्शः) प्रायः सर्वे ते ग्रन्थाः मुद्रिताः । परमवैदिकसिद्धान्तरत्नाकराख्यग्रन्थस्तु श्रीवैष्णवसम्प्रदायाचारादिप्रबोधकः प्रामाणिकः प्रथते । अस्य जीवनकालस्तु क्रिस्त १७९० प्रभृति १८८० पर्यन्तमिति ज्ञायते ।।

**श्रीरङ्गरामानुजमुनिः -**

चतुष्षष्ठिप्रबन्धनिर्माता दशोपनिषद्भाष्यकारः इति अस्य महती प्रशस्तिः । विशिष्टाद्वैतमतरीत्या उपनिषदां भाष्यमनेन विरचितम् इति अस्य वैभवं निरतिशयम् । जन्मस्थानं तिरुपतिः, लक्ष्मीपुरशाखीय नल्लान् वंश्यः, छन्दोगः, श्रीवत्सगोत्रोद्भवः अयम् । विद्यागुरुः वात्स्य अनन्ताचार्यः, परमगुरुस्तावत् ताताचार्यः । सन्न्यासदीक्षागुरुस्तावत् श्रीज्ञानाब्धिब्रह्मतन्त्रपरकालमुनिः । पूर्वाश्रमस्य नामतावत् वरदविष्ण्वाचार्यः । सोऽयं आचार्यः केवलं भिक्षाकाले श्रीदेवाधिराजदिव्यालयसन्निधिवीथीं प्रति गच्छन् अन्यदा श्रीदेशिकदीपप्रकाशमन्दिरसमीपे आश्रमे वसन् विरचितवेदान्तग्रन्थनिर्माणः महाविरक्त इति वदन्ति । अस्य जीवनकालस्तु १६७०-१७५० इति ज्ञायते । अस्य ग्रन्थेषु

अप्पय्यदीक्षितः, दोड्डयाचार्यश्च उल्लेखितौ । दीपप्रकाशसन्निधौ ग्रन्थरचनानिर्माणकाले कदाचित् महाचार्यः एतस्य सविधमेत्य 'अहो मकरन्दास्वादमहिमा' इति शश्लाघ इति, तच्छ्रुत्वा *'श्रीमद्भिः मक्षिकासु भर्त्सितासु मकरन्दास्वादे कोऽन्तरायः'* इत्यनेन प्रत्युक्तमिति किं वदन्ती ; एतान् श्लाघितवन्तः दोड्डयाचार्याः न, किन्तु सुरपुरं वेंकटाचार्याः इति केचिद्वदन्ति ।

**अस्य सम्प्रत्युपलभ्यमानाः कृतयस्तावत् -**

१) केन २) कठ ३) प्रश्न ४) मुण्डक ५) माण्डूक्य ६) तैत्तिरीय ७) ऐतरेय ८) छान्दोग्य ९)बृहदारण्यक १०) मन्त्रिका ११) अथर्वशिखा १२) कौषीतकी १३) श्वेताश्वतर १४) अग्निरहस्यानां भाष्याणि १५) श्रीभाष्यव्याख्यामूलभावप्रकाशिका १६) श्रुतप्रकाशिका-व्याख्या भावप्रकाशिका १७) विषयवाक्यदीपिका १८) शारीरकशास्त्रार्थदीपिका २९) न्यायसिद्धाञ्जनटीका २०) तिरुप्पल्लाण्डु २१) तिरुप्पावै २२) तिरुवाय्मोळि इति द्रमिडप्रबन्धानां संस्कृतानुवादश्च । इमाः मुद्रिताः ।

**अमुद्रिताः कृतयः -**

१) कण्णिनुण्शिरुत्ताम्बु व्याख्या २) रामानुजसिद्धान्तसारसङ्ग्रहः ३) पुरुषसूक्तभाष्यम् ४) तत्त्वनिष्कर्षः ५) महोपनिषद्भाष्यम् ६) रहस्यत्रयव्याख्या तात्पर्यकौमुदी ७) प्रतितन्त्रपरिष्क्रिया ८) ईशावास्यव्याख्या भावदीपिका[१] ।

**रामानन्दमुनिः -**

ग्रन्थेऽत्र मुद्रितस्य आनन्दभाष्यस्य सरससरलशैलीसम्पन्नस्य लेखकोऽयमाचार्यः प्रयागक्षेत्रे लब्धजन्मा, काश्यामासीत् अध्यात्मतत्त्वप्रवचनं कुर्वाणः, इति ज्ञायते । क्रिस्तशताब्देषु १३००-१५०० मध्यकालो अस्य स्थितिरिति सम्भाव्यते । श्रीरामचन्द्रस्य अपरावतार इति शिष्यैः सम्भावितवैभवोऽयं गुरुवरः बोधायनश्रीवैष्णवसम्प्रदायानुसारीति प्रसिद्धः । विद्यागुरुः सन्यासाश्रमप्रदश्च अस्य श्रीराघवानन्दयतिवरः । एतत्सम्प्रदायनिष्ठाः श्रीराममेव परं दैवं मन्यमाना आराधयन्ति । वादीभपञ्चानन इति, वैराग्यवारिधिरिति च अयं विपुलां प्रशस्तिमविन्दत ।

---

१. **आधारग्रन्थाः -**

1. **केनाद्युपनिषद्भाष्यम्** - उत्तमूर् वीरराघवाचार्यसम्पादितम्, तिरुपति - १९७२ ।
2. **शारीरकशास्त्रार्थदीपिका** - व न कृष्णमाचार्यसम्पादिता, कुम्भघोण - १९१५ ।

प्रसिद्धाः गोस्वामितुलसीदासः, मीराबाई इत्याद्याः बहवोऽस्य भक्ताग्रगण्याः शिष्याः । सर्वं भारतवर्षं अटाट्यमानोऽसौ श्रीवैष्णवसम्प्रदायप्रचारं भूयसा व्यधित । दशोपनिषदामपि भाष्यं प्रणीतवानेषः ब्रह्मसूत्राणां भगवद्गीतायाश्च भाष्यमररचत् यदद्य तत्सम्प्रदायस्थैः परमप्रमाणतया अधीयते ।।

**गोपालानन्दयोगी -**

इडारदेशे टोरडाग्रामे शुक्लयजुर्वेदीयमाध्यन्दिनशाखायां ब्राह्मणकुले अस्य महामुनेः योगिराजस्य जन्म आसीत् । पूर्वाश्रमस्य नाम खुशालभट्टः इति । कुशलाम्बामुक्तारामौ अस्य पितरौ । सकलशास्त्रपारङ्गतप्रज्ञोऽयम् ; स्वामिसहजानन्दसकाशात् लब्धसन्न्यासदीक्षः । स्वामिनारायणसेवाहेवाकस्सन् वडतालक्षेत्रे समाधिम् अविन्दत । निसर्गत एव विरक्तोऽयम् । बाल्ये एव अस्य योगप्रवणतां दृष्ट्वा सर्वे एनं योगीन्द्रः इति प्रथयन्तिस्म । महायोगी अयं योगाभ्यासेन भगवत्साक्षात्कारकारीति जनश्रुतिः । अस्य जीवनकालस्तु क्रि.श. १७८१ प्रभृति १८५२ पर्यन्तम् । अस्य च योगशक्त्या जलसमृद्धिमान् अकारि । सकलप्राणिवर्गस्य शान्तिं व्यतेने च । श्रूयते च -

"उग्रानावृष्टिपीडां क्वचन जनपदे सम्प्रवृद्धां चिराद्यो
योगैश्वर्यप्रभावात् सपदि समधिकोद्भूतवृष्टिप्रपातैः ।
सर्वांशेनापनीय व्यतनुत सकलप्राणिवर्गस्य शान्तिं
गोपालानन्दनामा स दिशतु कुशलं नः सदात्राप्यमुत्र" ।।

इति । स्वयोगमहिम्ना कश्चित् मूकमपि पारसीकप्रभोः बालं वाचालं कृतवानिति च प्रसिद्धिः ।

अस्य कृतयस्तावत् -

१) दशोपनिषद्भाष्यम्-सुबोधिनी २) ब्रह्मसूत्रदीपिका ३) गीताभाष्यम् ४) श्रीकृष्णाभिप्रायबोधिनी (भागवतैकादशस्कन्धव्याख्या) ५) श्रुत्यर्थदीपिका (वेदस्तुति-व्याख्या) ६) अन्वयार्थप्रकाशिका ७) शुकाभिप्रायबोधिका (भागवतद्वितीयस्कन्धव्याख्या) ८) निगूढार्थप्रकाशिका (भागवतदशमस्कन्धव्याख्या) ९) धर्मदेवपूजाविधिः १०) भक्तिसिद्धः ११)विवेकदीपः १२) विष्णुयागपद्धतिः १३) भक्तिदेवीपूजाविधिः १४) हरिभक्तिनामरत्नावळी १५) पुराणोक्तश्रीकृष्णपूजा १६) हनुमत्पूजाविधिः इत्यादयः बहवोऽस्य प्रबन्धाः पाण्डित्यप्रकर्षप्रख्यापकाः समुल्लसन्ति । तथा हिन्दी-गुजरातीभाषायां विरचिताः बहवो ग्रन्थाः समुल्लसन्ति[१] ।।

---

१. आधारग्रन्थः - **ब्रह्ममीमांसा** - मुक्तानन्दमहामुनिविरचिता । तिरुनांगूर् प्र.भ. अण्णङ्गराचार्येण सम्पादिता । श्रीस्वामिनारायणमन्दिरम्, वडताल् १९५२ । प्रस्तावना पुटसंख्या ५२ ।

## ६. सङ्केताक्षरसूचनी

| | |
|---|---|
| अ.को. | अमरकोशः |
| अ.सं. | अहिर्बुध्न्यसंहिता |
| अत्रि.स्मृ. | अत्रिस्मृतिः |
| अथर्व.शि. | अथर्वशिखोपनिषत् |
| ई.उ. | ईशावास्योपनिषत् |
| उ.सू. | उणादिसूत्रम् |
| ऋ.सं. | ऋग्वेदसंहिता |
| ऐ.उ. | ऐतरेयोपनिषत् |
| ऐ.ब्रा. | ऐतरेयब्राह्मणम् |
| क.उ. | कठोपनिषत् |
| कठ.सं. | कठसंहिता |
| कू.पु. | कूर्मपुराणम् |
| केन.उ. | केनोपनिषत् |
| कौ.उ. | कौषीतक्युपनिषत् |
| गौ.ध.सू. | गौतमधर्मसूत्रम् |
| छां.उ. | छान्दोग्योपनिषत् |
| जितं.स्तो. | जितन्तेस्तोत्रम् |
| जै.ब्रा. | जैमिनीयब्राह्मणम् |
| तां.ब्रा. | ताण्ड्यब्राह्मणम् |
| तै.उ.आन. | तैत्तिरीयोपनिषत् आनन्दवल्ली |
| तै.उ.भृ. | तैत्तिरीयोपनिषत् भृगुवल्ली |
| तै.उ.शि. | तैत्तिरीयोपनिषत् शिक्षावल्ली |
| तै.आर. | तैत्तिरीयारण्यकम् |
| तै.ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै.सं. | तैत्तिरीयसंहिता |
| द.स्मृ. | दक्षस्मृतिः |
| ना.शि. | नारदीयशिक्षा |
| धा.पा. | धातुपाठः |
| न्या.सि. | न्यायसिद्धाञ्जनम् |

| | |
|---|---|
| **प.स्मृ.** | पराशरस्मृतिः |
| **पा.सू.** | पाणिनीयसूत्रम् |
| **पाद्मोत्तर.** | पाद्मोत्तरपुराणम् |
| **पू.मी.सू.** | पूर्वमीमांसासूत्रम् |
| **प्र.उ.** | प्रश्नोपनिषत् |
| **बृ.उ.** | बृहदारण्यकोपनिषत् |
| **बृ.उ.मा.पा.** | बृहदारण्यकोपनिषत् माध्यन्दिनपाठः |
| **ब्र.सू.** | ब्रह्मसूत्रम् |
| **भ.गी.** | भगवद्गीता |
| **महा.ना.उ.** | महानारायणोपनिषत् |
| **महा.भा.शां.** | महाभारतशान्तिपर्व |
| **म.स्मृ.** | मनुस्मृतिः |
| **महो.** | महोपनिषंत् |
| **मुद्ग.उ.** | मुद्गलोपनिषत् |
| **मुं.उ.** | मुण्डकोपनिषत् |
| **यो.द.** | योगदर्शनम् |
| **रा.बा.** | रामायणं बालकाण्डः |
| **रा.सुं.** | रामायणं सुन्दरकाण्डः |
| **वा.** | वार्तिकम् |
| **वा.धर्म.** | वासिष्ठधर्मसूत्रम् |
| **वि.पु.** | विष्णुपुराणम् |
| **शत.ब्रा.** | शतपथब्राह्मणम् |
| **शत.ब्रा.मा.पा.** | शतपथब्राह्मणम् माध्यन्दिन पाठः |
| **श्लो.वा.** | श्लोकवार्तिकम् |
| **श्वे.उ.** | श्वेताश्वतरोपनिषत् |
| **सा.सं.** | सामसंहिता |
| **सु.उ.** | सुबालोपनिषत् |
| **स्तो.र.** | स्तोत्ररत्नम् |

# ७. ग्रन्थसूचनी

## [मूलग्रन्थाः]

**दशोपनिषदः** - यनदलवेङ्कटाचार्येण सम्पादितम्, विवेककलानिधिप्रेस्, यनमदल, १८७६, १८८०, आन्ध्रीलिपिः ।

**अष्टोत्तशतोपनिषदः** - आदिकलानिधिप्रेस्, मद्रास् १८८३, आन्ध्रीलिपिः ।

**द्वादशोपनिषदः** - धर्माधिकारीचक्रवर्ति अय्यङ्गार्येण सम्पादितम्, विद्यातरङ्गिणीप्रेस् मैसूरु १८९१, आन्ध्रीलिपिः । मद्रास् १८९६, ग्रन्थलिपिः ।

**अष्टोत्तशतोपनिषदः** - वेङ्कटकृष्णशास्त्रिणा सम्पादितम्, मद्रास्, १८९६, ग्रन्थलिपिः ।

**दशोपनिषदः** - शात्तनूर् कल्याणसुन्दरशास्त्रिणा सम्पादितम्, वाजपेयकृष्णशास्त्री, मद्रास्, १९०३, आन्ध्रीलिपिः ।

**अष्टोत्तरशतोपनिषदः** - सिद्धान्तसुब्रह्मण्यशास्त्रकृत - ईशावास्यतात्पर्यसङ्ग्रहः, महावाक्यरत्नावली च स्तः । वाविळ्ळरामस्वामि अण्ड्, सन्स्, श्रीरामप्रेस्, मद्रास्, १९२८, आन्ध्रीलिपिः ।

**अष्टाविंशत्युपनिषदः** - ईशादिमुक्तिकोपनिषत्पर्यन्तम् । वासुदेवलक्ष्मणशास्त्रीपन्सीकरेण सम्पादितम् । तुकाराम् जावजी निर्णयसागरप्रेस्, बम्बई, १९२८ देवनागरीलिपिः ।

**ईशादिविंशदुत्तरशतोपनिषदः** - काव्यतीर्थनारायणरामाचार्येण सम्पादितम् । ईशादिमुक्ति-पर्यन्तम् । निर्णयसागरप्रेस्, बम्बई, १९४८, देवनागरीलिपिः ।

**अष्टादशोपनिषदः** - वैदिकवाङ्मयान्तर्गतसमानस्थलनिर्देशैः अर्थव्याकरणावबोधकटिप्पणीभिश्च सनाथीकृतम् । वि.प्र.लिमये तथा रं.द.वाडेकर् इत्येताभ्यां सम्पादिताः, वैदिकसंशोधन-मण्डलम्, पुणे-२, १९५८, देवनागरीलिपिः ।

**पञ्चत्रिंशदुपनिषदः** - ईशादि आत्मबोधोपनिषत्पर्यन्तम् । गङ्गाविष्णुश्रीकृष्णदासः, बम्बई, १९६६, देवनागरीलिपिः ।

**उपनिषत्सङ्ग्रहः** - भागद्वयोपेतः, प्रथमभागे ईशादिविंशोत्तरशतोपनिषदः, द्वितीये च योगाद्यष्टोत्तरषष्ट्युपनिषदः । जगदीशशास्त्रिणा सम्पादितम् । मोतिलालबनारसीदास्, बङ्गलोरोड्, जवाहरनगर, दिल्ली - ७, १९७०, १९८०, देवनागरीलिपिः ।

[भाष्यग्रन्थाः]

**दशोपनिषद्व्याख्या - प्रतिपदार्थदीपिका** । भारद्वाजरामानुजाचार्यविरचिता । विवेककलानिधिप्रेस्, मद्रास्, १८७५ - आन्ध्रीलिपिः ।

**दशोपनिषद्भाष्यम्** - शङ्कर - रङ्गरामानुजभाष्यसहितम् । आनन्दगिरिटीकासमेतं । गोमठं श्रीनिवासाचार्येण सम्पादितम् । वेदान्तविद्याविलास प्रेस्, मद्रास् १८६९ ।

**उपनिषद्भाष्यम्** - रङ्गरामानुजभाष्यम् । छान्दोग्य-सुबाल-श्वेताश्वतर-कौषीतकी-अथर्वशिखा-मन्त्रिका-अग्निरहस्योपनिषदः । व.न.कृष्णमाचार्येण सम्पादितम् । वैदिकवर्धनीसभा, उप्पिलि अप्पन् सन्निधिः, १९१३, ग्रन्थलिपिः ।

**दशोपनिषद्भाष्यम् - सुबोधिनी** - गोपालानन्दस्वामिविरचितम् । एम्बार् कृष्णमाचार्येण संपादितम् । निर्णयसागरप्रेस् बम्बई, १९३२, देवनागरीलिपिः ।

**दशोपनिषदः** - उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः । अडयार पुस्थकालयस्थपण्डितैः सम्पादिताः । अडयारलैब्ररि, थियसाफिकल् सोसैटि, मद्रास् १९३५ ।

**धर्मकोशः** - उपनिषत्काण्डम् - लक्ष्मणशास्त्रिजोषिणा सम्पादितम् । प्रज्ञापाठशालामण्डल, वायि, सतारा १९४९ ।

**छान्दोग्योपनिषद्भाष्यम्** - शंकरभाष्यं तथा आनन्दगिरिटीका । आनन्दाश्रमसंस्कृतग्रन्थमाला, पूना ।

**छान्दोग्योपनिषद्भाष्यम् - आनन्दभाष्यम्** । रामानन्दाचार्यविरचितम् । श्रीरामानन्दवेदान्तप्रचारक समिति आहमदाबाद्, १९६९ ।

**छान्दोग्योपनिषद्भाष्यम्** - श्रीरङ्गरामानुजमुनिविरचितम्; जि.एस्.गोखले महोदयेन संशोधितम्, आनन्दाश्रमसंस्कृतग्रन्थमाला, पूना - १९१० ।

**ईशावास्य इत्यादि उपनिषद्भाष्यम्** - मध्वाचार्यविरचितम् । वादिराजकृतटीकया, तथा जयतीर्थकृतटीकया च संवलितम् । श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितिः, उडुपिः, १९५४ ।

**छान्दोग्योपनिषद्भाष्यम्** - श्रीरङ्गरानुजुनिविरचितम् । सम्पादककृतभाष्यपरिष्कारसमेतम् । उत्तमूर् वीरराघवाचार्य सम्पादितम्, श्री वेङ्कटेश्वरप्राच्यग्रन्थमाला, तिरुपति, १९५१ ।

**ईशादिदशोपनिषदः** - शङ्करभाष्ययुक्ताः । मोतीलाल बनारसीदास्, बंग्लोरोड्, जवाहरनगर्, दिल्ली - ७, १९६४, १९७८ ।

**सर्वमूलग्रन्थाः** - श्रीमध्वाचार्यविरचितप्रस्थानत्रयव्याख्यारूपं प्रथमं सम्पुटम् । पाठान्तरविशेषटिप्पण्यादिभिः उपोद्बलितम् । बन्नञ्जे गोविन्दाचार्येण सम्पादितम् । अखिलभारतमाध्वमहामण्डलम्, पूर्णप्रज्ञनगरम्, बेङ्गलूरु, २८,१९६९, देवनागरीलिपिः।

**ईशादिद्वादशोपनिषत्** - ब्रह्मचारी रामानन्दसम्पादितम् । स्वामीविद्यानन्दगिरिजा महाराजविरचित हिन्दी व्याख्यायुता, श्रीकैलासविद्याप्रकाशन, हृषीकेश, १९०,१९७६ ।

**छान्दोग्योपनिषद्भाष्यम् - मिताक्षरा** - नित्यानन्दस्वामिविरचिता । आनन्दाश्रमसंस्कृत-ग्रन्थावलिः, पूना, १९१५ ।

**छान्दोग्योपनिषतत् - शाङ्करभाष्यम्** - श्रीनरेन्द्रपुरीश्रीमदानन्दगिर्याचार्यद्वयकृतटीकाभ्यां तथा षष्ठ सप्तम अष्टम अध्यायभाष्याणां श्रीमदभिनवनारायणेन्द्रसरस्वती विरचितटीकया च समलङ्कृतम् । एस्. सुब्रह्मण्यशास्त्रिणा सम्पादितम् । महेश-अनुसन्धान-संस्थानम्, श्रीदक्षिणामूर्तिमठ, डि.४९/९,मिश्रपोखरा, वारणासि, १९७९ ।

**छान्दोग्योपनिषद्दीपिका** - सायणाचार्यविरचिता । सद्गुरु इन्टर् नेशनल् वेदमिशन्, ५२/५, तुलसीनिवास, 'डि' रोड्, चर्चगेट्, बम्बई - २०, १९८९

[कर्णाटभाषायाम् अनुवादितग्रन्थाः]

**छान्दोग्योपनिषत्** - अनु-आदि देवानन्दः । शाङ्करभाष्यानुसारी प्रतिपदार्थः तात्पर्यं च । श्रीरामकृष्णाश्रम, मैसूरु-२, १९८० ।

**छान्दोग्योपनिषत्** - शाङ्करभाष्यसमेता, अनु - सच्चिदानन्देन्द्रसरस्वतीस्वामी, अध्यात्मप्रकाशकार्यालयः, होळेनरसीपुरः, कर्णाटक, १९५६, १९८६ ।

[द्राविडी]

**उपनिषत्सारम्** - उत्तमूर् ति.वीरराघवाचार्यः, ईशेत्यादि उपनिषदां सारः तळिभाषायाम् । विशिष्टाद्वैतप्रचारीणी सभा, मद्रास् १९७० ।

**उपनिषदर्थसङ्ग्रहः** - उत्तमूर् ति.वीरराघवाचार्यकृतद्राविडीव्याख्यासमेतः । ईशावास्येत्यादि उपनिषदर्थसङ्ग्राहकश्लोकरूपः । उप्पिलि अप्पन् सन्निधिः, १९७७ ।

[हिन्दी]

**छान्दोग्योपनिषत्** - शाङ्करभाष्यसमेता, हिन्दी अनुवादः, गीताप्रेस्, गोरखपुर्, १९३३ ।

**उपनिषन्मन्धाकिनी** - अनुः - देवदत्तशास्त्री, ईशादिदशोपनिषदां अनुवादः, किताब्महल्, ५६ - जीरोरोड्, हलहाबाद् ।

[आंग्लानुवादः]

**छान्दोग्योपनिषत्** - अनु - मित्र, बिब्लियोतिक इण्डिका, मुम्बई - १८९१, १९०७ ।

**छान्दोग्योपनिषत्** - अनु - रोर, मद्रास् , १९०६, १९३१ ।

**दि द्वेल् प्रिन्सिपल् उपनिषत्स्** - अनु - राजेन्द्रलाल, थियसाफिकल् सोसाइटि । अडयार-मद्रास् - १९३२ ।

**दि-प्रिन्सिपल् उपनिषत्स्** - अनु - एस्.राधाकृष्णन्, आक्स्फर्ड यूनिवर्सिटि प्रेस्, जयसिंह रोड्, नईदिल्ली १९५३, १९६८, १९६९, १९७४, १९८९ ।

**दि उपनिषत्स्** - स्वामी निखिलानन्दः, शाङ्करभाष्यानुसारीटिप्पणी प्रतिपदार्थश्च । रामकृष्णवेदान्त-सेन्टर् न्यूयार्क १९५६, १९७५ ।

**दि-उपनिषत्स्** - श्री आरविन्दो, आरबिन्दो आश्रम, पब्लिकेषन्स् डिपाट्मेण्ट्, पाण्डिचेरी-१९७१,८१,८६ ।

**छान्दोग्योपनिषत्** - स्वामी स्वाहानन्द, ११,रामकृष्णमठरोड्, रामकृष्णमठ, मद्रास्, १९७५ ।

**दि उपनिषत्स्** - स्वामी प्रभवानन्द, श्रीरामकृष्णमठ, मद्रास् - १९७९ ।

**दि फिलासफि आफ् दि उपनिषत्स्** - पाल्ड्यूसन्, ओरियण्टल् बुक्स् रिप्रिण्ट् कार्पोरेषन्स् ५४, रानि झान्सि रोड्, न्यूदिल्ली १९७९ ।

**सिक्सटि उपनिषत्स् आफ् दि वेद** - जर्मनीभाषानुवादः पाल्ड्यूसन्, तस्य आंग्लानुवादः वि.एम् .बेडेकर तथा जि.बि.पाल्सुले । मोतिलाल् बनारसीदास्, बंग्लोरोड्, जवाहरनगर, दिल्ली १९८० ।

**रामानुज आन् दि उपनिषत्स्** - एस्. एस्. राघवाचार्यः, श्रीभाष्यादिग्रन्थोदाहृत उपनिषन्मन्त्राणां अभिप्रायः । एम्. रङ्गाचार्य मेमोरियल् ट्रस्ट्, विद्याप्रेस्, मद्रास् १९७२ ।

**टि टेन् प्रिन्सिपल् उपनिषत्स्** - पुरोहितस्वामी तथा डब्ल्यु । बिःईट्स्, फेबर अण्ड् फेबरलिमिटेड्, लण्डन् - १९७५ ।

**छान्दोग्योपनिषत्** - अनु - गम्भीरानन्दः, प्रतिपदार्थः विस्तृतव्याख्यानं च । अद्वैताश्रमः । मायावरम्, यूनियन् प्रेस्, कल्कत्ता, ५, देहली एण्टलि रोड्, कल्कत्ता १९८३ ।

**छान्दोग्योपनिषत्** - स्वामीकृष्णानन्दः डिवैन् लैफ् सोसाइटि, शिवानन्दनगर, उत्तरप्रदेश, १९८४ ।

**ट्वेल् एसेन्षियल् उपनिषत्स्** - ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-ऐतरेय-छान्दोग्य-बृहदारण्यक-गोपालतापिन्युपनिषदः । अनुः - त्रिदण्डी श्रीभक्तिप्रज्ञानन्दयतिः, श्रीगौडीयमठरोड् मद्रास् - १४,१९८४ ।

**उपनिषद् ड्रामा** - स्वामी शिवानन्द, ए.डिवैन लैफ् सोसाइटि पब्लिकेषन्स्, शिवानन्दनगर्, यु.पि.१९८५ ।

**दि उपनिषत्स्** - के-पि-बहादूर्, स्टर्लिङ्ग पब्लिकेषर्स् प्रैवेट् लिमिटेड् १-१०, ग्रीन् पार्क, नईदिल्ली, १९८९ ।

**दि उपनिषत्स्** - टि.एम्.पि.महदेवन्, जिए-नटेशन् अण्ड् कम्पनि, मद्रास् ।

## तालपत्राणि

### अडयार लैब्ररि, मद्रास्

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २५ ४३ - ग्रन्थलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २६ ४ - ग्रन्थलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २६ २२ - ग्रन्थलिपिः ।

### सेन्द्रल् लैब्ररि, बरोड

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ३९२० - देवनागरीलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १०,००० - ग्रन्थलिपिः ।
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ११४९३ - ग्रन्थलिपिः ।

### प्राच्य-विद्या-संशोधनालयः मैसूरु

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १४१८ आन्ध्रीलिपिः, असमग्रम्
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १७३५ ग्रन्थलिपिः, असमग्रम्
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - २०९६ ग्रन्थलिपिः, असमग्रम्
छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ३३५७ ग्रन्थलिपिः, असमग्रम्

**गवर्नमेन्ट ओरियण्टल् म्यानुस्क्रिप्ट्स लैब्ररि मद्रास्**

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ४६८ - ग्रन्थलिपिः ।

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ६९६ - ग्रन्थलिपिः ।

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ४५७७ - ग्रन्थलिपिः ।

**संस्कृत-संशोधन-संसत् मेलुकोटे**

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - १०७ - आन्ध्रीलिपिः ।

छान्दोग्योपनिषद्भाष्यम् - श्रीरङ्गरामानुजविरचितम् - ४४०B - आन्ध्रीलिपिः ।



**पाठभेदार्थं स्वीकृताः ग्रन्थाः तथा संस्कृत संशोधन संसदः हस्तप्रतिविभागेन स्वीकृते तालपत्रे । तेषां च सङ्केतः एवं दत्तः ।**

| तालपत्रे | संख्या | लिपिः | सङ्केतः |
|---|---|---|---|
| १. छान्दोग्योपनिषद्भाष्यम्<br>श्री रङ्गरामानुजविरचितम्<br>सस्कृत संशोधन संसत्<br>मेलुकोटे | १०७ | आन्ध्रीलिपिः | अ |
| २. छान्दोग्योपनिषद्भाष्यम्<br>श्री रङ्गरामानुजविरचितम्<br>सस्कृत संशोधन संसत्<br>मेलुकोटे | ४४० | आन्ध्रीलिपिः | आ |

| ग्रन्थाः | लिपिः | सङ्केतः |
|---|---|---|
| १. छान्दोग्योपनिषत्<br>श्री रङ्गरामानुजभाष्येपेतम्<br>आनन्दाश्रमसंस्कृतग्रन्थावलिः - ६३<br>पूना - १९१० | देवनागरीलिपि | क |
| २. छान्दोग्योपनिषद्भाष्यम्<br>श्री रङ्गरामानुजविरचितम्<br>उत्तमूर् वि. वीरराघवाचार्यैः सम्पादितम्<br>श्री वेङ्कटेश्वर प्राच्यग्रन्थमाला - ३६<br>तिरुपतिः - १९५२ | देवनागरीलिपि | ख |
| ३. दशोपनिषद्भाष्यम् - सम्पुटम् - II<br>व.न. कृष्ममाचार्यैः सम्पादितम्<br>वैदिकवर्धनी मुद्राक्षरशाला<br>उप्पिलि अप्पन् सन्निधिः - १९१३ | ग्रन्थलिपिः | ग |

❀ ❀ ❀